तिर्यगूर्ध्वाधःपातनानि तु पातनभेदाः पातनप्रकारत्वेन निर्दिश्यन्त एवात्र। (पृ. ४६-४८) बोधनापरपर्यायं वीर्याधानं स्वेदभेदो निरोधनेऽन्तर्भवति। मुखीकरणं च दीपनस्यैवावान्तरभेदश्चारणसंस्कारोपयोगी । इति नवभिरेव तदर्निर्दिष्टानां चरितार्थता संपन्ना । अनुवासनं चातपस्वेदात्मको दीपनभेद एवेति कथयन्ति पृथग्लक्षितं तत्। यत्तु परिभाषाध्याये स्वेदनं सन्न्यास इति संस्कारद्वयमन्यदेव निरुक्तं, तन्नियमनस्यैव रूपभेदः ॥

वस्तुतः संस्काराणाममीषां स्वरूपं त्रिधा परिगणयितुं शक्यते— स्वेदनं मर्दनं पातनं चेति। अन्ये सर्वे भेदा अत्रैवान्तर्भवन्ति। संस्कारव्यापारस्यैकरूपत्वेऽपि कस्यचित्संस्कारस्य पूर्वभाविनां पश्चाद्भाविनां च, संस्कारोपयोगिद्रव्यभेदश्चोपजीव्य नामभेदः सुवचः। इतीयान्शोधनाङ्गसंस्कारपरामर्शः।

अथ वेधार्थाः संस्काराः। ते च नवधा कथ्यन्त आनन्दकन्दे।

| | | |
|---|---|---|
| चारणं | बाह्यद्रुतिः | अनुसारणं |
| जारणं | रञ्जनं | प्रतिसारणं |
| गर्भद्रुतिः | सारणं | वेध इति। |

रसरत्नाकरे चैवमेव। रसार्णवे तु—

| | | |
|---|---|---|
| चारणं | द्रावणं | सारणं |
| जारणं | रञ्जनं | क्रामणं इति |

वेधस्तु लक्ष्यं फलमिति न संस्कारकोटौ गणना कृता तत्र। रसहृदये रसेन्द्रचिन्तामणौ च दश निर्दिश्यन्ते—

| | | |
|---|---|---|
| गगनग्रासप्रमाणं | बाह्यद्रुतिः | रञ्जनं |
| चारणं | जारणं | क्रामणं |
| गर्भद्रुतिः | सारणं | वेधः |
| | | भक्षणमिति। |

रसपद्धतौ तु चारणा जारणा सारणा मुखबन्धो वेधश्चेति पञ्चैव। रससारे जारणं रञ्जनं सारणं चेति चत्वारः संस्काराः। अत्रेदमवधेयं समन्वये। अभ्रकस्य चतुष्षष्टितमांशादारभ्य चतुःषष्टिगुणपर्यन्तं क्रमेण चारणाक्रम एव गगनग्रासप्रमाणमिति व्यपदिश्यते यश्च संस्कारश्चारणस्वरूप

एव। क्रामणं मुखबन्धश्च वेधाङ्गे। भक्षणं तु रसस्य सेवनप्रकारः, न तु पृथक्संस्कारः। मारणं त्वन्यः कोऽपि संस्कारो रसायनोपयोगी क्वचिच्च वेधोपयोगी।

वस्तुतस्तु जारणसारणवेधाख्यास्त्रय एव संस्काराः प्रधानाः। चारणगर्भद्रुतिबाह्यद्रुतिरञ्जनाख्या जारणावान्तरप्रक्रियाभेदाः, अनुसारण-प्रतिसारणे सारणाख्यावृत्त्या संपद्यमाने, क्रामणं वेधप्रक्रियान्तर्गतमिति समासः।

अथैतेषां संस्काराणां पृथग्विवेचना क्रियते। तप्ते खल्वे चूर्णगृह-धूमादीन्पृथग्रसषोडशांशान् दत्वा रसं च शोध्यं तत्र क्षिप्त्वा धान्याम्लेन दिनत्रयं मर्दयेदुष्णारनालेन प्रक्षालयेच्च, येन स्वेदनं मर्दनं च। स्थूला मला अपयान्ति। ततः प्रत्येकं रसषोडशांशान् पटु-राजी-त्रिकटुकादीन्धान्याम्लपिष्टान्वस्त्रेऽङ्गुलिमात्रं प्रलिप्य, तन्मध्ये रसं निक्षिप्य दोलामाबध्य धान्याम्लपूरिते ताम्रजे पात्रे स्वेदयेत्पूर्णं दिनमेकं; तत उद्धृत्य रसं शरावके निक्षिप्य उष्णारनालेन प्रक्षालयेत्। पुनः पूर्ववत्स्वेदयेत्क्षालयेच्च। एवं एकविंशतिवारकरणेन स्वेदनाख्यः संस्कारः कृतो भवति। अनेन यौगिको विषाख्यो नैसर्गिकाश्चान्ये दोषाः शिथिलतामुपयान्ति। [पृ. ४४-४५]

शिथिलितस्य बहिर्मलस्य प्रणाशाय मर्दनाख्यो द्वितीयः संस्कारः क्रियते। स्थूलमलापोहनायोपदिष्टैश्चूर्णादिभिः साकं त्रिफलाराजवृक्षादीनां प्रत्येकं रसषोडशांशानां योगेन रसस्य तप्तखल्वे मर्दनं; दिवारात्रं, तत उष्णारनालेन क्षालनञ्चेत्येतत्कर्म एकविंशतिवारं करणान्मर्दनाख्यः संस्कारः संपादितो भवति। अयमेव च संस्कारः पश्चात् रसे स्वर्णरजताभ्रकादीनां जारणात्परं जीर्णग्रासस्य रसमयतासिद्ध्यै रसस्य पुनर्ग्रासग्रहणपाटवसिद्ध्यै चोपदिश्यते। [पृ. ४५-४६]

मूर्च्छनमपि मर्दनस्वरूपमेव। तथाऽपि मूर्च्छने सहोपयोज्यानि राजिकादीनि द्रव्याणि भिन्नानि। मर्दने सामान्येन मर्दनं, मूर्च्छने तु रसो नष्टपिष्टः— नष्टस्वरूप औषधतुल्यो— यथा भवति तथा खल्वे पेषणमिति विशेषः। एवं नष्टपिष्टतामापादितं रसं, मूषायां निक्षिप्य मुखं

निरुध्य, भूधरयन्त्रे निधायोपरि कुक्कुटकपोतान्यतरपुटविधानेन स्वेदात् पुनः रसस्य स्वस्वरूपप्राप्तिः भवति। ततः पुनः राजिकाद्योषधिभिरेव मर्दनं भूधरे पाकश्चैकविंशतिवारं क्रियते येन मूर्च्छनाख्यः संस्कारः संपादितो भवति। भूधरयन्त्रे पाकश्च उत्थापनाख्यः संस्कारो भवति मूर्च्छितस्य नष्टस्वरूपस्य पुनः स्वरूपप्राप्तावुपकारी। उत्थापितं च रसं काञ्जिकेनोष्णोदकेन वा क्षालयेत्। [पृ. ४६]

मूर्च्छनं उत्थापनं च

कचिन्मर्दनादिष्टभेषजैरपि मूर्च्छनोपदिश्यते [पृ. ४९०]। क्वचिच्च-विषवह्निमलादीनां पृथक्पृथग्दोषविनाशाय चित्रक-त्रिफला-कुमार्यादिभिः पृथक् मूर्च्छना अभिधीयते [पृ. ३८५]। रसहृदयादावपि भूयांसः प्रकाराः मूर्च्छनायामभिधीयन्ते। अत्र च विशेषः कश्चिद्रससारे दृश्यते यथा—

> विषैस्त्रिफलया पूर्वं त्रिविषोपविषैस्तथा।
> कर्कोटीक्षीरकन्दाभ्यां चित्रकैर्गृहकन्यया॥
> एकैकेनापि संमर्द्य याममेकं तु पारदम्।
> किन्नरं यन्त्रमादाय ओषध्या लेपयेत्तलम्॥
> नवसारयुतं तोयं यन्त्रमध्यगतं न्यसेत्।
> दद्याद्रसोपरि श्रावं सन्धिलेपं दृढं मृदा॥
> लवणेन च संपूर्य द्वारं संरुध्य यत्नतः।
> चुल्लिकोपरि संस्थाप्य दीपाग्निं ज्वालयेद्बुधः॥
> यामैकाच्च समुत्तार्य कर्तव्यः शीतलो रसः। इति।

[पञ्चमे पटले]

अदसीयकिन्नरयन्त्रस्वरूपं स्पष्टतया न कुत्राप्युपलभ्यते। अतस्तदधिकृत्य भूयो गवेषणा कर्तव्या भवति।

मूर्च्छना त्वन्योपदिश्यते 'मूर्च्छित्वा हरति रुज'मित्यादिना प्रचुष्यमाणा। सा तु रसे विशिष्टगुणस्वरूपाधानार्था, न तु शोधनार्था। [पृ. ४०५] यस्याः स्वरूपं पृथक्तया द्विवेचयामः। उत्थापनं अनन्तरमेवाभिधास्य-

मानेन पातनाविधानेनापि संपादयितुं शक्यते, यदा न तस्य पृथक् संस्कार-कोटौ गणना।

स्वेदनाद्याश्चेमे संस्काराः केषुचिद्ग्रन्थेषु त्रिवारं, क्वचित्सप्तवारं च करणीया इत्यभिधीयते। तद्विधानं तु भेषजयोगेषु योजनाय रससाधने प्रयुज्यते प्रायः। वेधान्तसंस्काराङ्गत्वेन त्रिवारं सप्तवारं वा तत्करणं सोद्दिष्ट-फलदं भवेदिति ध्येयम्।

आभ्यां संस्काराभ्यां, रसस्य स्वरूपनाशं यावन्मर्दनेन आगुणः अति-सूक्ष्मतया रसस्वरूपविभेदेन, तद्गतदोषाणां औषधिकल्केषु योगे संपन्ने स्वेदात्तेषां पृथक्करणं संपद्यते। वारिगिरिभूमिजकञ्चुकनाशने फल-मनयोरभिधीयते।

पातनं त्रिविधमभिधीयते ऊर्ध्वाधस्तिर्यक्पातनाख्यप्रकारभेदेन। ऊर्ध्वपातनं च— पाठादीनां रसैः पिष्टं पादांशशुद्धताम्ररजोयुक्तं रसमूर्ध्व-पातनयन्त्रे दत्त्वा दिनमेकं विपचेत। ततः स्वाङ्ग-

पातनम्।

शीते यन्त्रे ऊर्ध्वलग्नं रसमादाय पुनश्चतुर्थांशताम्र-रजोयोगेन पाठादीनां स्वरसैः पिष्ट्वा ऊर्ध्वपातन-विधानेन विपचेत्। एवं सप्तधा ऊर्ध्वपातनेन मर्दनेन च नागवङ्गाख्य-यौगिकदोषापकरणं क्रियते। यतः नागवङ्गाद्या लोहा रसे मिश्रिताः, ताम्र-संपर्केण रसात्पृथक्कृताः, अधः पातनायन्त्रे तिष्ठन्ति, रसश्चाग्नितापमसह-मानः ऊर्ध्वमुत्पतति शीते चोर्ध्वतले लगति इति यौगिकदोषपृथक्करणं सम्यग्जायते। [पृ. ४७)। क्वचिदर्धांशताम्ररजोयोगेनोर्ध्वपातनमुपदिश्यते, क्वचिच्चायोरजोयोगेनेति विशेषः। क्वचिच्च विद्याधरे डमरुयन्त्रे चक्र-यन्त्रे दीपिकायन्त्रे वा पातनमुपदिश्यते।

अधःपातनं च त्र्यूषणादीन् पृथक् सूतसमांशान् तप्ते खल्वे पिष्ट्वा रसञ्च दत्त्वा मर्दयेत्। तं कल्कमधःपातनयन्त्रस्योर्ध्वतले प्रलिप्य ऊर्ध्व-भाण्डोपरि लघुपुटं दद्यात्, यत उत्थितं तापमसहमानो रसः शीतस्थला-न्वेषी यन्त्राधो लगति। सप्तवारं चैवं पातनं कुर्यात्।

तिर्यक्पातनं च समधान्याभ्रयोगेन नष्टपिष्टतां यावत् धान्याम्लेन मर्दि तस्य रसस्य तिर्यक्पातनयन्त्रगतस्य चण्डाग्निना पाकः क्रियते। पाति-

तथ्च रसस्य पुनरेवं अभ्रकमेलनेन पातनं त्रिवारं क्रियते। अनेन रसस्याग्निसहता संपद्यते। (पृ. ४६-४८)। एवं पातनेषु ताम्राभ्रकस्थाने शुद्धानां माक्षिकविमलस्वर्णरजतकान्ततीक्ष्णानामन्यतमस्य पादांशेन योगात्पातनं संयुक्ततत्तद्द्रव्यविशेषगुणाधायकत्वेन विशेषतया कीर्त्यते आनन्दकन्दे। रसहृदये रससारे च पातनमेकविधमेव पठ्यते ऊर्ध्वपातनाख्यम्। क्वचिच्च ऊर्ध्वपातनं त्रिवारं अधःपातनं सप्तवारं च करणीयमिति विशेषो दृश्यते। भेषजयोगोपयुक्ता अन्ये च पातनाप्रकारा बहव आनन्दकन्दे (पृ. ३८५) पठ्यन्तेऽन्यत्र च ...जयोगग्रन्थेषु।

स्वेदनान्मर्दनात्पातनाच्च कदर्थितस्य नष्टवीर्यस्य अत एव षण्डस्य रसस्य वीर्यानयनाय निरोधनं क्रियते। तच्च घटयन्त्रे आप्यायनाख्ये

निरोधनम्।

सलवणजलमध्ये रसं निक्षिप्य घटमुखं निरुध्योर्ध्वं लघुपुटनेन स्वेदात्संपाद्यते। तच्च सप्तवारं करणीयम्। सृष्ट्यंबुजाख्यवस्तुद्वययोगेन रोधनं रसहृदयेऽभिधीयते। तत्र सृष्टिर्नाम गोऽजाविमूत्रं नरशुक्रं नारीशोणितञ्चेति त्रयं वा स्त्रीपुंसोः शुक्रयुगलमप्रसूतारजस्तथा वेति मतद्वैविध्यं वर्तते। स्त्रीशुक्रस्य पृथगनुपलभ्यस्य संपादनं तु चिन्त्यमेव। अत एव सृष्ट्यंबुजशब्दस्य लवणार्थकत्वं चूडामणिरभिदधाति। रसपद्धतौ तु काचकूप्यां नारिकेलान्तर्वा सलवणजलं रसं निरुध्य भूमौ त्रिदिनं रोधनमेव निरोधनाख्ययाऽभिधीयते। सौषधस्य भाण्डस्य भूमौ निखनितस्योपरि स्वेदः स्वेदनाख्यया, मन्दाग्नियुतचुल्यन्तःक्षेपेण स्वेदः सन्यासाख्यया च निरोधनस्यान्यौ प्रकाराविमावभिधीयेते परिभाषाध्याये। रससारे चास्य वीर्यानयनं बोधनमिति च सार्थकं नाम दीयते। तत्र च काचकूप्यां सटङ्कणस्य रसस्य निरोधः, भूगर्भे निधानमूर्ध्वं करीषाग्निना पाकः इति विधानं पठ्यते; यच्च रसहृदयव्याख्याता चतुर्भुजमिश्रो नियमनाख्यया वदति। वस्तुतश्चतुर्भुजमिश्रोक्तिश्चिन्त्यैवात्र। नियमनं च निरोधभेद एव।

नियमनम्।

स्वेदनद्रवस्य स्वेदने सहोपयोज्यस्य ओषधिकल्कस्य च भिन्नता विशेषः। नियामकं यन्त्रं न यन्त्राध्याये विव्रियते। परं परिभाषाध्याये 'क्रियते यो घटे स्वेदः प्रोक्तं नियमनं हि तत्' इति निर्देशेन घटयन्त्रमेव नियामकयन्त्र

तयाऽभिप्रेतं स्यादिति भाति। रसपद्धतावन्यत्र च घटयन्त्रे स्वेदनमेव नियमनं इति निर्दिश्यते। यथा—

"यद्वा मृण्मयभाजनान्तरगतं पूर्वोक्तवारा रसं
रुद्ध्वा भूवलये तुषानलपुटैरूर्ध्वं नियच्छेद्रसम्।
भूगे पूरितपूर्ववारिणि रसं निक्षिप्य वस्त्रावृतं
भाण्डे योजितलोहखर्परमुखे चोर्ध्वं पुटे रोधयेत्॥" इति।

रससारे तु नियमनमन्यविधमुपदिश्यते। यथा—

रक्तसैन्धवखोटेन (व्योषैश्च) मूषाद्वन्द्वं प्रकल्पयेत्।
तत्संपुटे रसं क्षिप्त्वा नवसारं सनिंबुकम्॥

संपुटस्य प्रयत्नेन लेपयेत्सन्धिमुत्तमाम्।
वस्त्रमृत्स्नां समादाय वेष्टयेत्तत्प्रयत्नतः॥

छायाशुष्कं च तत्कृत्वा भूगर्ते स्थापयेत्ततः।
अष्टाङ्गुलप्रमाणेन मूषोर्ध्वं तत्र पूरणम्॥

त्रिसप्तदिनपर्यन्तं करीषाग्निं च कारयेत्।
दिने दिने प्रकर्तव्या मूषा सैन्धवनूतना॥

स्वेदयेत्तत्प्रयत्नेन भूगर्भे स्थापयेत्ततः।
अथवा कूपिकामध्ये सूतं सैन्धवसंयुतम्॥

भूगर्भे च ततः स्थाप्यमेकविंशद्दिनावधि।
अयं नियामको नाम्ना महासुखकरो रसे॥ इति।

अत्रापि प्रकारममुं निरोधकाख्यया व्यवहरति चतुर्भुजमिश्रो रसहृदयव्याख्याता इमानेव श्लोकान्पठित्वाऽन्तिममर्धं "अयं निरोधको नाम्ना" इति भिन्नेन पाठेनोदाहरन्। चिन्त्य एव पाठभेदः। रसार्णवे तु रसे स्वर्णं दत्वा मर्दयित्वा नियामकगणेन पिष्ट्वा स्वेदनमुपदिश्यते।

पातनेन रोधनेन च रसे सञ्जायमानं तारल्यं, स्वाभाविकीं वह्निसहतां धूमगतिं कणिकाबुद्बुदाभतां चायमपाकरोति संस्कारः।

दीपनमनुवासनं च संस्कारद्वयं जारणकर्मणि बहूपकुरुतः। रसस्य जारणीयग्रासग्रहणपाटवं, तज्जरणाय दीपनञ्चाभ्यां संपद्यते। एवं संस्कृतो रसो दीपितो ग्रासं प्रतीक्षते। स्वर्णपुष्प्यादिद्रव्य-कल्केनाम्लगणपिष्टेन साकं मर्दितस्य पारदस्य दोलायन्त्रे स्वर्णपुष्प्यादिद्रवे स्वेदो रसदीपनाय प्रभवति। क्वचिच्च दीपनद्रवे स्वेदमात्रं, क्वचिच्च दीपनद्रवैर्मर्दनमात्रमिति संस्कारव्यापारेषु विशेषोऽभिधीयते। चारणसंस्कारमध्योपदिष्टो मुखीकरण-संस्कारश्च दीपनभेद एव।

दीपनम्।

दीपितस्य रसस्य मृत्पात्रस्थस्य सजंबीररसस्य सप्तदिनानि यावद्घर्मे भावनाऽनुवासना भवति। अयं च दीपन एवान्तर्भवति। क्वचिच्च दीपनाख्ययाऽस्यैव व्यवहारः। अत एव रसहृदये रसपद्धतौ चास्य पृथग्गणना न क्रियते। प्रतिदिनं भावनाद्रवस्य नूतनस्य दानमावश्यकम्।

अनुवासनम्।

इत्येते नव संस्काराः शोधनार्थाः कीर्त्यन्ते। अथ चैतान्नव संस्कारान्कर्तुमशक्तः स्वेदनमर्दनपातनाख्यैस्त्रिभिः संस्कारैः, अथवा मर्दनपातनाभ्यामेव रसं रसायनयोगेष्वप्रयोगार्हतया शोधयितुं शक्नोति इति प्रकाशयितुमेव, पश्चात् रसायनार्हरससंस्कारविधानकाले (पृ. १३८) विशिष्टरस-संस्कारोपदेशकाले (पृ. ३८५) च रसशोधनाय बहवः प्रकारा उपदिश्यन्ते।

अत्र केचिदेवं संशेरते। उक्ते संस्कारनवके ग्रासग्रहणपाटवसाधकं दीपनमनुवासनं च विनाऽन्ये सप्त रसगतनैसर्गिकौपाधिकयौगिकादिबहुविधदोषापसारणाय क्रियन्ते। तेषां करणे यद्यशक्तिस्तर्हि संस्कारत्रिकेणापि इष्टापूर्तिरभिमतेति प्रागनुमतञ्च। एवमेव क्वचिद्धिङ्गुलाकृष्टं रसं संस्कारनवकसंस्कृतादप्युत्तमतयाऽभिप्रयन्ति केचित्। यथा चानन्दकन्द एव हिंगुलाद्रसाकर्षणविधौ (पृ. ३८६) लघुनैव प्रकारेण रसस्य दोषकञ्चुकवर्जनं उपदिश्यते। रसेन्द्रसारसङ्ग्रहे च—

वेधान्तसंस्कार-सिद्धौ स्वेदादिसंस्कार-नवकस्य नान्तरीयकत-विमर्शः।

"अथ वा हिंगुलात्सूतं ग्राहयेत्तन्निगद्यते।"

"कञ्चुकैर्नागवङ्गाद्यैर्निर्मुक्तो रसकर्मणि ॥
विना कर्माष्टकेनैव सूतोऽयं सर्वकर्मकृत् ।"

इति कर्माष्टकेन समकक्षतामारोपितं हिङ्गुलाद्रसाकर्षणविधानम् । परं हिङ्गुलादाकृष्टस्य शुद्धौ योगवाहित्वे च मतभेदोऽपि दरीदृश्यते । यदि हिंगुलं कृत्रिमं अशुद्धरसगन्धकयोगमूर्च्छनात्संपाद्यते, तर्हि रसगन्धकगतदोषाणामपसारणमशक्यसंपादनमिति, कृत्रिमहिंगुलाकृष्टस्य दोषकञ्चुकवर्जितता न निश्चिता इति केचनाभिप्रयन्ति । ते हि तदुत्थस्य रसस्य पुनः शोधनमभिमन्वते । खनिजहिङ्गुलादुत्थितस्यैव रसस्य सर्वथाकृत्स्नं शुद्धत्वं चोपदिश्यते न तु कृतकहिंगुलादिति च केचिदत्र समादधते । अन्ये तु रसगतान्सर्वान्दोषानपनेतुं गौरीतेजो गन्धक एक एव शक्नोति इति तत्संयोगेन मूर्च्छितात्खनिजात्कृत्रिमाद्वा हिंगुलादाकृष्टो रसः सर्वथा शुद्ध एवेति विवदन्ति । अपरे तु प्राज्ञमानिनः, उपलभ्यमानमशुद्धमेव रसं शुद्धेन गन्धकेन मूर्च्छित्वा रससिन्दूरविधानेन सिन्दूरितं हिंगुलं संपाद्य पुनस्तस्मात्पातयन्ति रसं अधिकशुद्धिसंपादनसंभावनया । अपरे च नव्यैर्वैज्ञानिकरीत्या त्रिधा सप्तधा वा तिर्यक्पातनेन शोधितं, तैः केवलं रसपरमाणुमात्रघटिततयोद्घुष्यमाणं पारदं दोषकञ्चुकवर्जितं स्वीकुर्वन्ति, गुणाधानाय योगानुसारेण दीपनमनुवासनं वा समाचरन्ति । कुत्रचित्त भेषजयोगग्रन्थेषु रसपुष्पात्तथा रसकर्पूराच्च हिंगुलाकृष्टविधानेनोद्ध्रियमाणो रसोऽनल्पवीर्यतया तीक्ष्णतया च क्वचनोत्तमभेषजयोगेषु ग्राह्यतयोपदिश्यते ।

अत्र चिन्त्यमेतत् । एवं बहुभिः प्रकारैः साध्यमानो रसः किमु एकगुण एव ? किमु तत्र दोषशुद्धिरेकप्रकारिका ? किमु ते सर्वे रसाः समानाः वीर्ये दोषराहित्ये वेधरसायनबन्धाद्युपयोगित्वे च ? अल्पसंख्याकै रससंस्कारैः सिद्धे रसे सर्वफलदे सर्वकर्मकरणयोग्ये च कुतो वा बहुसाधनसंपदेकसाध्ये बहुतरश्रमदे संस्कारनवकेऽभिमानः ? इति ।

अत्र ब्रूमः । विषयमिमं द्वेधा विभजामः । रसशोधनं रससंस्कार इति च । उभावपि भिन्नप्रस्थानौ । रसशोधनं तु अन्यलोहोपरसादिद्रवद्रसस्य तद्गतदोषापनुत्त्यर्थं क्रियते । तदधिकृत्य भूयानुपदेशग्रामो नव्य-

ग्रन्थेषु क्वचिच्च प्राचीनेषु ग्रन्थेषूपलभ्यते । सुलभास्सुकराश्च मार्गा उपदिश्यन्ते । रससंस्कारस्तु प्रस्थानमन्यदेव । संस्कारशब्दश्च तत्रैवोपयुज्यते यत्र न केवलं बाह्या शुद्धिरिष्यते, परमन्तरात्मनि गुणाधानमपि चौलोपनयनादिवत् । अत्र न केवलया बाह्यशुद्ध्या अभीप्सितोऽर्थः सेत्स्यति । अतः संस्काराणां बहुविधानां आचार्योपदिष्टमार्गेणैवानुष्ठानं फलदं स्यात्, यत्र विचिकित्सा निरर्थिका । सिद्धार्थोपबृंहणतयैव हि तत्र गवेषणा फलं दद्यात् । यत्र योगे शुद्धस्य रसस्य दानमुपदिश्यते, तत्र पूर्वोक्तेन लघुना प्रकारेण शोधितस्य रसस्य दानं न दोषाय । यदि तत्रैव संस्कृतो रसो दीयेत, गुणानल्पता सिद्ध्येत् । यत्र संस्कृतस्यैव दानमिष्यते, तत्र लघुप्रकारशोधितरसदाने न सिसाधयिषितार्थसिद्धिः । अत एव वेधान्तसंस्कार प्रतिपादकेषु तन्त्रेषु संस्कारनवकमधिकृत्योपदेशः पूर्णो दृश्यते । यत्र केवलं भेषजयोगा उपदिश्यन्ते, तत्र शोधनप्रकाराः कतिचनैवोपदिश्यन्तेऽल्पश्रमसाध्याः । इति समाधिः । वस्तुतः स्वेदादीनाममीषां नवानां संस्काराणामुत्तमगुणाधायकता युक्तियुक्तैवेति तत्त्वविदोऽभ्युपगच्छेयुरेव ।

हिङ्गुलोद्धृतस्यापि रसस्य यदि वेधान्तकर्मण्युपयोग इष्यते तर्हि स्वेदाद्या नव संस्काराः करणीया एवेत्यत्र न सन्देहः । केवलपातनेन तादृशस्य गुणाधानस्यासंभाव्यमानत्वात् । कृते संस्कारनवके स रसो न केवलं वेधे, योगेषु चाचिन्त्यप्रभावो विलसेदेव । नव्यैर्वैज्ञानिकैः पातनेन सर्वशुद्धतयाऽभिमते पारदेऽपि कामं रसतन्त्रख्याता नागवङ्गौपाधिका दोषाः नश्यन्तु नाम; नैसर्गिकास्तु नैवापेयुरिति तस्य स्वेदाद्याः शुद्धिप्रकाराः करणीया एव । हिंगुलोत्थिते रसेऽपि समानोऽयं न्यायः । अन्यच्च, रसकर्पूरात्, रसपुष्पात्, हिंगुलाद्वा संपन्नो रसो नैकगुणो भवितुमर्हति । गन्धकलवणादिविविधमूर्च्छनोपयोगिद्रव्यसंपर्कवशादाहितानां गुणभेदानामनिवार्यत्वात् । कदाचिन्नव्यवैज्ञानिकरीत्या विविधविभिन्नखनिजेभ्यो युक्त्या पातितो रसो रसाणुमात्रघटित इति न तद्रीत्या भूयान्विभेदो द्रव्ये संभाव्येत । परं संपर्कवशादाधीयमानो गुणभेदो रसगतो नापलपितुं शक्यते । योगानुसारेण तेषामुपयोगनिर्देशो, न तु सर्वत्र सर्वस्य । अत एव रसतन्त्रेषु मुख्यतया रसग्रहणाय, केवलरसखनिं दर्दुराख्यं रससिन्दूरं हिंगुलं वा श्रेष्ठं उपदिशन्ति । अथवा यदि रसमूलखनिपरिज्ञानमसंभवि, तर्हि

संस्काराष्टककरणं विना वेधोपयोगिता, स्वेदनपातनमर्दनाग्न्यान्विना योगो-
पयोगितया रसशुद्धिर्वा न संभवेदित्यध्यवसेयम् ।

अथानुवासनान्तसंस्कारसंसिद्धे रसेऽभ्रकाद्या धातुलोहोपरसादयः
चार्यन्ते जार्यन्ते च ग्रासात्मकतया। तेषां ग्रासात्मकानामभ्रकादीनां ग्रहणाय
रसे मुखमुत्पाद्यते। तच्च मुखीकरणं दीपनभेदः

चारणं जारणं च। संस्कारः, गन्धकस्येष्टकायन्त्रे रसे जारणेन, रसेन
साकं भूनागस्य पुटनेन, दीपननया दोलास्वेदेन,
गन्धकाभ्रकयोरिष्टकायन्त्रेण जारणेन वा संपाद्यते। एवं मुखीकृते रसे
चारणं समुखचारणमित्यभिधीयते। गन्धकस्य तुलायन्त्रे जारणेन रसे
वासनामुखता संपद्यते, यस्मिंश्चारणं वासनामुखचारणमित्यभिधीयते विशे-
षेण। विनाऽपि मुखीकरणं वज्रवैक्रान्तभस्मसहितस्य रसस्य दिव्यौषधीभिः
पेषणेन ग्रासग्रहणपाटवं संपाद्यते। एवं निर्मुखे चारणं निर्मुखचारणमित्यभि-
धीयते। एवं समुखनिर्मुखवासनामुखात्मना चारणीधा रसस्त्रेधाऽभिधीयते।
[पृ. ५०. ५३] रसे गन्धकस्य तुलायन्त्रे जारणेन जायमाना वासनामुख-
ताऽपि समुखतायाः अभिन्ना इति प्रायोऽन्येषु ग्रन्थेषु नास्याः पृथगुपदेशः।
एवं रसे मुखीकरणाय च बहवः प्रकारभेदा उपदिष्टा अन्यत्रोपलभ्यन्ते।

रसे अभ्रकं, गन्धकः, कान्तसत्त्वं, तीक्ष्णं, द्वन्द्वानि, बीजानि, पक्व-
बीजानि, रञ्जकबीजानि, सारणबीजानि— इत्येतानि जार्यन्ते रसस्य
बलाधानाय रागग्रहणाय वेधपाटवसिद्ध्यै च। एतेषु कस्यचिद्बलाधाने,
कस्यचित्स्थिररागग्रहणे, कस्यचिद्वेध इत्येवं विशिष्य प्रतिद्रव्यं शक्तिं निर्दि-
शन्त्याचार्याः। तेषां चारणे जारणे च क्रम एषोऽनुसन्धीयते। तत्र प्रथम-
मभ्रकचारणा निर्दिश्यते।

चारणीयोऽभ्रको प्रथममभिषेकाख्येन संस्कारेण संस्कार्यः। [पृ. ५३]
संशुद्धे द्रुते च गन्धके शुद्धमभ्रकं समांशं दत्वा विमर्द्य पिष्टीकुर्यात्
दशनिष्कके चारणीये रसे द्विनिष्कमितां गन्धका-

चारणक्रमः। भ्रकपिष्टिं दत्वा मर्दयित्वा, तदुपरि हेमकर्मणि
लक्ष्ये नागपिष्ट्या, रजतकर्मणि वङ्गपिष्ट्या, देह-
सिद्धौ ताम्रपिष्ट्या च वेष्टयेत्। तां पिष्टिं त्रिद्रुते गन्धे दिवसत्रयं विपचेत्

एष तु गर्भक्रमनामकः प्रकारः। दीपिकायन्त्रेण पुनरधः पातितं पिष्टीगतं रसं, पूर्ववद्गन्धाभ्रकपिष्ट्या सह विमर्द्य विद्रुते गन्धे दिनत्रयं विपचेत्। एष तु पिष्टीक्रमनामकः प्रकारः। ततो दीपिकायन्त्रे पुनरधः पातितं रसं, चारणीयमर्भाभिपक्कं रसाच्चतुष्षष्टितमांशं अभ्रकं च दिनं दिव्यौषधैर्विमर्द्य चारणायन्त्रे चपककल्कवे जंबीररसान्विते निधाय दिनमेकमातपे तीव्रे स्थापयेत्। अयं च ग्रासक्रमः। एवं गर्भपिष्टीग्रासक्रमात्मकावस्थात्रय-निर्वर्त्यं चारणम्।

एवं चारिताभ्रकं सूतं त्रिक्षारपञ्चलवणभूखगाम्लवेतसैः रसषोडशांशैः सह जंबीरवारिणा याममात्रं विमर्द्य बिडान्विते कच्छपयन्त्रे निक्षिप्य दिनमेकं विपचेत्। तेन रसो जीर्णग्रासो भवति।

जारणम्।

जीर्णाद्ग्रासाच्छिष्टं मलभूतं किट्टमपाकर्तुं, इष्टिकागृहधूम सैन्धवान् रसषोडशांशान् दत्वाऽम्लवर्गेण मर्दयित्वा प्रक्षाल्य वस्त्रेण शोषयेत्। एवं जीर्णे ग्रासे पुनर्ग्रासग्रहणाय पिण्डीभूतं तं रसं वस्त्रे पोट्टलीकृत्याम्लवर्गेण भरिते भाण्डे दोलायन्त्रे स्वेदयेत्। यदि वस्त्रेण गालितेऽजीर्णो ग्रासो दृश्यते, पुनः कच्छपयन्त्रे रसस्य पाक इष्यते। एवं चारितस्याभ्रकस्य जारणं संपद्यते।

एवं चतुष्षष्टितमांशेऽभ्रके जीर्णे, पुनर्द्वात्रिंशतांशेनाभ्रकग्रासश्चार्यते जार्यते च। एवं पुनः षोडशांशेनाष्टमांशेन चतुर्थांशेनार्धांशेन च ग्रासश्च चारणा जारणा निर्वर्त्यते। ततश्च क्रमेण रसात् द्विगुण चतुर्गुणाष्टगुण षोडशगुण द्वात्रिंशद्गुण चतु-ष्षष्टिगुणाभ्रकस्य चारणा जारणा च निर्वर्त्यते। चतु-ष्षष्टितमांशेऽभ्रके जीर्णे रसो दण्डधरो भवति, वस्त्रान्न क्षरति च। द्वात्रिंशांशे तु जलौकाभः, षोडशांशे काकविष्ठातुल्यः, अष्टमांशे दधितुल्यः, चतुर्थांशे नवनीतसमः, द्वितीयांशे गोलाभश्च भवति। जीर्णस्याभ्रकस्य सितपीतासितादिवर्णभेदे रसेऽपि तद्वर्णसङ्क्रान्तिर्भवति।

अभ्रकग्रास-प्रमाणम्।

एवं गन्धकस्याभ्रकस्य चारणेन जारणेन च रसस्य उत्पतनशीलता अग्नितापासहिष्णुता गौरवं चापाक्रियते। रसो रागग्राही लघुर्निर्दुष्टश्च जायते। जारणीयेषु अभ्रकादभ्रकसत्वं वरीयः तदभावे कान्तसत्वं तीक्ष्णं

वा जारणीयम्। तदपेक्षया द्वन्द्वानि ततः पक्वबीजानि बीजानि च। जारणाक्रमस्तु पूर्वोक्त एव।

एवं जीर्णे ग्रासे प्रतिग्रासं शिलाकुचकमाक्षिकादिना सह चणकाम्लेन मर्दितं रसं अपामार्गादिकल्केन लिप्तायां मूषायां निक्षिप्य रुद्ध्वा स्वेदयेत्, येन गर्भस्थो ग्रासो द्रुतो विलीनो रसगतो भवति। य एष गर्भद्रुतिनामकसंस्कारः। (पृ. ८६) अथवा जारणीयानां बीजानां — यथा गर्भद्रुतिः सुकरा भवेत्तथा जारणापूर्वमेव संस्कारः कर्तुं शक्यते। [पृ. ८३-८४] अथवा जारणीयानभ्रकस्वर्णरत्नादीन्बहिरेव द्रवीकृत्य द्रुतानामेव तेषां जारणा कर्तुं शक्यते। पृथग्वा द्रुतानां मेलनेन द्वन्द्वीकृत्य वा। [पृ. ८७-८८]।

**गर्भद्रुतिः बाह्यद्रुतिश्च।**

एवं चारणं जारणं गर्भद्रुतिः बाह्यद्रुतिश्चेति चत्वारः संस्कारा व्याख्याताः।

विशेषश्चात्र। जारणा द्विविधाऽभिधीयते बालजारणा वृद्धजारणा चेति। वृद्धजारणा च बद्धजारणेत्यप्यभिधीयते यतो बद्धस्यैव रसस्य जारणा तत्र प्रकीर्त्यते। बालजारणा चाबद्धस्यैव रसस्य क्रियते। जारणे च द्वेधा क्रमोऽनुसन्धीयते।

"गगनं जारयेत्पूर्वं सर्वसत्वान्यतः परम्।
द्वन्द्वानि सर्वलोहानि पक्वबीजानि भैरवि!।
पद्मरागादि रत्नानि जारयेच्च यथाक्रमम्॥" [पृ. ९०]

इति कश्चन क्रमोऽनुसन्धीयते। पश्चाच्च

"गन्धकं जारयेदादौ सर्वसत्वान्यतः परम्।
ततः सर्वाणि लोहानि द्वन्द्वानि विविधानि च।
पक्वबीजानि रत्नानि द्रुतिसत्वे च जारयेत्॥" [पृ. १०४]

इति च कश्चन क्रमो विधीयते। पूर्वत्र गगनजारणा प्रथमं क्रियते उत्तरत्र तु गन्धकजारणा प्रथममित्यनयोर्भेदः। अत्र च रसकामधेनुकारो

ऽमुमेव सन्दर्भमुदाहरन्, पूर्वतनस्य क्रमस्य बालजारणापरत्वेन उत्तरतनस्य च वृद्धजारणापरत्वेन च समन्वयमभिलपति। विमर्शयोग्योऽयं विषयः।

जारणाया अन्यत् भेदकमुपाधिद्वयमपि वर्ण्यते— अभ्रकादिबीजानां जारणेन बीजैः रत्नैश्च साध्या जारणा भूचरीति, रत्नजारणया रत्नकरत्नबीजजारणेन च साध्या खेचरीति च।

रसेऽभ्रकादीनां ग्रासचारणात्परं चारितमभ्रकादिकं गालनेन न पृथक्कर्तुं शक्यते। परं पातनेन पृथक्करणं शक्यसंपादमेव। जारणे च संपन्ने ग्रस्तं वस्तु पातनेनापि न पृथक्कर्तुं शक्यते। गर्भद्रुत्या द्रुते ग्रासे जीर्णग्रासप्रयुक्तमानाधिक्यमपि न संभवति।

जारणस्य चेदं लक्षणं रसेन्द्रचिन्तामणौ पठ्यते। 'जारणा नाम गालनपातनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थाप्रतिपन्नत्वं' इति। आयुर्वेदप्रकाशकारेण तदेव लक्षणं व्याकुर्वता च जारणस्वरूपमित्थमभिधीयते— जारणा हि नाम गालनपातनव्यतिरेकेण ग्रस्तघनहेमादिरसस्य पूर्वावस्थाप्रतिपन्नत्वं' इति। अर्थाच्च वस्त्रपावनेन, ऊर्ध्वाधस्तिर्यक्पातनेन वा जीर्णस्याभ्रकादेः पृथक्करणं न शक्यते। न तावताऽपि समीहितार्थलाभः। जीर्णस्य द्रव्यस्य मानमपि नाधिकतयोपलभ्येत। अत एवोच्यते आयुर्वेदप्रकाशे—

"अधिकस्तोलितश्चेत्स्यात्पुनः स्वेद्यः समावधि" रिति।

यथा बहु मिष्टं भुक्तवतो भुक्ते जीर्णे न स्वाभाविकमानवृद्धिरुपलभ्यते। परिभाषाध्याये च—

"ग्रासः पिण्डः परिणामस्तिस्रश्चाख्याः पराः पुनः"

इति प्रतिपादिताश्च त्रयो भेदाः— ग्रासश्चारणं, पिण्डः गर्भद्रुत्या रसमयतापादनं, परीणामः ग्रस्तघनहेमादीनां पृथक्करणानर्हतया रसात्मकतापादनं— इत्यर्थकतया व्याख्येयाः।

जारणा च पुनर्द्विविधा भेषजयोगोपयोगिनी, वेधोपयोगिनी चेति। भेषजयोगोपयोगिनी च मूर्च्छित्वा हरति रुजमित्यादिन्यायानुसारेण केवलरोगहननेच्छया, क्वचिच्च रसायनेच्छया गन्धतालमल्लशिलास्वर्णरजतादीनां

जारणेन संपाद्यते। सा च मूर्च्छनाधिकारे (पृ. ४०५) जारितरससारण-विधानाधिकारे (पृ. १४१) च प्रपञ्च्यते। वेधोपयोगिनी तु पूर्वमेव प्रपञ्चिता।

चारणीया जारणीयाश्चात्र महारसोपरसादयः शुद्धा एव स्वीकार्याः, अन्यथाऽव्यापकः पतङ्गी रसो रसायने वेधे वा नोपयोगी भवति। अभ्रकादभ्रकसत्वस्य तस्मादभ्रकद्रुतेः, ततो द्वन्द्वस्य बीजानां चोत्तमता स्मर्यते। अभ्रकादीनां चतुष्षष्टितमांशादारभ्य समांशपर्यन्तं चारणं जारणं च वेधपाटवसिद्ध्यै चावश्यकत्वेन कीर्त्यते। ततो यथोक्तं शतसहस्रलक्ष-नियुतकोटिवेधादिसमीहितफलानुसारेण द्विगुणादि चतुष्षष्टिगुणावधि चारणं जारणं चोपदिश्यते। (पृ. १०३)

अभ्रकसत्वस्य च रसेन मेलनार्थं माक्षिकसंयोगो महोपकारको भवति। अत एव केवलाभ्रकजारणाद्द्वन्द्वजारणाया वरीयस्त्वं प्रख्याप्यते। यतो द्वन्द्वानि अभ्रकस्य हेम-रजत-वङ्ग-नाग-ताम्र-तीक्ष्णाख्यलोह-षट्केन साकं, ताप्य-रसक-सस्यक-शिला-तालकादि- विविधधातुवर्गमेलना दृढध्मानेन संपाद्यते। माक्षिकाद्यरिवर्गमेलनाद्रसे गर्भद्रुतिः सुकरा भवन्ति। (पृ. ६२)।

द्वन्द्वीभूतानां चाभिषेको हेमकर्मणि नागद्रवे, रजतकर्मणि वङ्गद्रवे च विधीयते। देहवेधे च नायं अभिषेको युक्तः, शुद्धे रसे पुनर्नाग-वङ्गजौपाधिकदोषसंपर्कभयात् इति रसहृदयकार आशंसते।

अथ बीजानां स्वरूपविवरणं क्रियते। बीजेषु विशिष्य हेमबीजं रजत-बीजं च प्रधाने। अत्र च स्वर्णेन रजतेन वा संयोजितानामन्येषां महारसोपरसादीनां माक्षिकरसकादियोगेन ध्मानात्स्वर्णरजतावशेषं यथा-इतरेषां क्षयापादन संपाद्यते। द्वन्द्वेषु तु केवलं मेलनमात्रम्। अतो द्वन्द्वापेक्षया बीजानामुत्तमता शास्त्रेषु निरूप्यते। एतानि बीजानि हेमबीजं रजतबीजं वङ्गबीजं नागबीजं चेति चतुर्धा कथ्यन्ते। तत्र वङ्गनागबीजे तारकनकबीजयोरन्तर्हित एव। यतो नागे वङ्गे वाऽभ्रकरसकादीनां निर्वहणेन ध्मानान्नागे वङ्गे वाऽवशिष्टे तयोः स्वर्णे रजते वा यथायोगं निर्वहणं स्वर्णरजतावशेषतया क्रियते। पर नागवङ्गसंयोगान्न तयोर्बीजयोः

रसायनोपयोगिता, परं लोहवेधमात्रे उपयोगः इति विशेषदर्शनार्थं नामभेदः। [पृ. ७६]

काष्ठौषध्यो नागे वङ्गेऽथ वङ्गमपि शुल्बे।
शुल्बं तारे तारं कनके कनकं च लीयते सूते॥

इति गोविन्दभगवत्पादोपदिष्टरीत्या सर्वेषां धातूपधातूनां हेम्नि निर्वहणेन विलयनं संपाद्यतेऽनेन बीजविधानेन। तादृशे च हेमबीजे रसे जार्यते इति महान्गुणोऽनेन रसस्य संपद्यते।

रसस्य भ्रम-चिटिचिटि-मण्डूकगति-सकंपाख्याश्चतस्रोऽवस्थाः बीजजारणान्तेन रससंस्कारेणापयान्ति। रसो निष्कम्पो भवति।

रसहृदये जारणाक्रमस्त्वित्थं वर्ण्यते। चारितग्रासं रसं लवणक्षाराम्लसुरभिमूत्रकृतलेपे वस्त्रे भूर्जपत्रान्तर्निक्षिप्य दोलां बध्वा सौवीरक्षारजल मूत्रान्यतमद्रवैरापूरिते कुंभे दोलायन्त्रे पचेत्, येन चारितो ग्रासो जीर्यते। तत उद्धृत्योष्णेन काञ्जिकेन प्रक्षाल्य, वस्त्रेण गालयित्वा तद्गतजलांशशोषणायोष्णे लोहपात्रे दत्वा मर्दयेत्। पश्चाच्च चतुर्गुणेन वस्त्रेण पीडयेद्गालयेच्च। यत्रजीर्णो ग्रासो वस्त्रगालनेन पृथग्भूतोऽग्रस्तो लक्ष्येत, तर्हि जीर्णग्रासप्रमाणाज्ञानात्पातनायन्त्रे पातयेत्। येनाजीर्णो ग्रासः पृथक्क्रियेत।

जारणे ग्रन्थान्तरसंवादः।

अनेन क्रमेण चतुष्षष्टितम-चत्वारिंशत्तम-त्रिंशत्तम-विंशतितमांशान् यावच्चतुरो ग्रासान् दोलायन्त्रे जारयेत्। ततः षोडशांशप्रभृति अर्धांशपर्यन्तं ग्रासं कच्छपे यन्त्रे जारयेत्। षोडशांशादारभ्य विना गर्भद्रुतिं ग्रासचारणं न साधयितुं शक्यते। यतः षोडशांशे जीर्णमात्र एव कठिनो रसः छुरिकया विच्छिद्य पृथक्कर्तव्यो भवति। गर्भद्रुत्या द्रुते द्रव्ये वस्त्रगालनेनानवशिष्टे, ग्रासं समरसतां यातमवगच्छेदिति।

रससारे तु जारणाक्रमोऽन्यविध उपदिश्यते। रसे चतुष्षष्टितमांशं ग्रासं, द्वात्रिंशांशं क्षाराम्लबिडादिकं च दत्वा, टङ्कणहयलालादिद्रावकद्रव्यसहितं तं रसं यामद्वयं तप्ते खल्वे विमर्दयेत्। येन ग्रासो द्रुतो रसेन

संमिलितो भवेत्। ततः सोमानले यन्त्रे स्वेदयन्त्रे दोलायन्त्रे वा स्वेदनेन ग्रासो जीर्यते।

एवं चतुष्षष्टितमांशतो द्वौ ग्रासौ, चत्वारिंशांशेन चत्वारो ग्रासाः, त्रिंशांशकेन षट्, विंशांशकेनाष्टौ इति चतुर्विधा ग्रासाः स्वेदयन्त्रे जार्यन्ते; षोडशांशेन दश ग्रासाश्चक्रयन्त्रे कच्छपे वा; द्वादशांशेन दश स्थलकच्छपे चक्रयन्त्रे वालुकायन्त्रे कूपीयन्त्रे वा; अष्टमांशेन नव जलकूर्मे स्थलकूर्मे वा; पादांशेन षोडश मूषायन्त्रे पुटनेन च इत्येवं ग्रासमानानुसारेण जारण-प्रकारेषु भेदो निरूप्यते रससारे। अनेन क्रमेणाभ्रकादीनां जारणा याव-न्मानेनापेक्ष्यते तावत्साधयितुं शक्यते।

जारणायामुपयुज्यमानानां धातूपधातुरत्नादीनां जारणवशाद्रसे दृश्य-माना विभिन्ना विशेषा निरूप्यन्ते रससारे। नागजारणाद्रसे स्नेहो जायते, अभ्रकजारणाद्रसस्य बलं पक्षच्छेदश्च, तीक्ष्णजारणेन रागः, ताम्रजारणेन स्नेहबलरागाश्चेति। एवं नागेन जारितः सूतः खोटभावं द्रुतं व्रजति, लोहतां च परित्यजति।

जारितबीजवशाद्वेधे च विशेष एवं लक्ष्यते। यदि कठिनानि बीजानि जार्यन्ते तर्हि नागं वङ्गं च वेधयितुं प्रभवति रसः। मृदुषु बीजेषु जीर्णेषु आरं शुल्बं च विध्यति। रागाधिकेषु बीजेषु जीर्णेषु तारं विध्यति स्वर्णतया परिणमयति च। रसोपरसादयो मौक्तिकवज्रादीनि रत्नानि श्वेतानि यदि जार्यन्ते तर्हि तस्य रसस्य तारकर्मण्युपयोग उपदिश्यते। एवं तत्र तत्र खोटबन्धरञ्जनादिबहुविधसंस्कारविशेषोपकारका जारणभेदा उपदिश्यन्ते।

**रञ्जनम्।**

द्वेधा रञ्जनमुपदिश्यते रक्तरञ्जनं श्वेतरञ्जनं चेति। रक्तरञ्जनं हेम-कर्मणि, श्वेतरञ्जनं रजतकर्मणि चोपयुज्यते। हेमकर्मणि नागबीजं, रजत-कर्मणि वङ्गबीजं च रञ्जनविधानेन रञ्जयित्वा, रञ्जितस्य बीजस्य रसे चतुष्षष्टितमांशमारभ्य षड्गुणं यावज्जारणेन रसे राग आधीयते। रसरञ्जक-बीजयोगा नैकेऽभिधीयन्ते।

रससारे तु रंगाकृष्टिविधानं नाम पृथक् रञ्जकवस्तुनिर्माणविधि-रभिधीयते— यच्चात्रैव परिशिष्टे [पृ. ६५६] प्रदीयते। रङ्गाकृष्टिविधानेन

गन्धकविद्रुमादीनां रागमाकृष्य, तेन रागेण शतवारं सहस्रवारं वा यथायोगं जारणेन रसस्य नियतरागतासिद्धिर्भवतीति प्रपञ्च्यते रससारे। रागस्वरूपविज्ञानं, खनिजेभ्यो वस्तुभ्यः स्थिराणां रागाणां प्राप्तिः, अखनिजेभ्यः खनिजानां रञ्जनसाधनानां रागस्थिरीभावे श्रेष्ठता इत्यादि विषयजातं हिमवत्पर्यन्तवासिभ्यो बौद्धेभ्योऽवगतं प्रथमत इत्यत्र रससारगतो रङ्गाकृष्टिविधिः प्रमाणीभवति। आधुनिकाश्चैतिहासिका भारते स्थिररञ्जनसाधनपरिचये बौद्धानेवाग्रगण्यानभिमन्वते।

अभ्रकादीनां रञ्जितबीजानां जारणेन रसे जायमाना गुणभेदा एवं निरूप्यन्ते। कृष्णाभ्रके जीर्णे कृष्णां छायां प्राप्नोति रसः। एवं सिताभ्रके सितां, पीते पीतां, रक्ते रक्तां चेति जारितवस्त्वनुरूपिणी छाया रसे संपद्यते। ताम्रजारणे तीक्ष्णजारणे च रसरक्तिः स्थिरा भवति· रसश्च रागं शीघ्रं गृह्णाति। अतः तीक्ष्णताम्रयोरेकत्र मिलितयोः पृथग्वा रक्तरञ्जनविधिना रञ्जितयोः जारणं रसे स्थिररागसिद्ध्यै प्रभवति। उपरसेषु च, रञ्जिते गन्धके जीर्णे रागो बहिःप्रदेशमात्रव्यापी भवति; मनःशिलातालकजस्तु रागश्चञ्चलो भवति; माक्षिकसत्वेन रसकसत्वेन वा जायमानो रागः स्थिरत्वाच्छ्रेष्ठतया गण्यते।

एवं जारणेन बन्धं प्राप्ते रसे, देहलोहवेधसिद्ध्यै सर्वत्र प्रसृमरशक्तिःसंपादनाय सारणा क्रियते। सारणार्थं साधनतया विशिष्टं वज्रबीजविधानं सारणोपयोगितैलविधानञ्चोपदिश्यते। [पृ. ९२.]

सारणा। गोस्तन्याकारान्धमूषा अन्या च नालमूषेति मूषाद्वयं सारणायन्त्राख्यया व्यवह्रियते। (पृ. ५१५)

गोस्तन्याकारायां मूषायां रसं ससारणातैलं निक्षिप्य, नालमूषायां बीजं द्रावयित्वाऽस्मिन् ढालयेत्। ततश्चोद्धृत्य जारणाविधानेन पुनर्जारयेत् इति सारणायाः क्रमः। अत्र बीजस्य रसाच्चतुष्षष्टितमांशादारभ्य षड्गुणं यावत्प्रक्षेपः क्रमेण विधीयते।

रसहृदये तु विशेष एवमभिधीयते सारणाविधौ। सतैले रसे द्रुतस्यात्युष्णस्य बीजस्य सद्य एव निर्वापादुच्छलनं भवेदिति भिया सद्य एव

सारणातैलसिक्तेन पटेन रसस्योपर्याच्छादनं विधीयते। प्रकारान्तरमपि सुकरं तत्रैवोपदिश्यते— यत् धत्तूरकुसुमाकारायां मूषायां सतैलं रसं निक्षिप्य, तस्या मूषाया अन्तरन्यां तादृशीं तन्वीं मूषां साधश्छिद्रां सुपिधेयां निक्षिप्य, तस्या मध्ये द्रुतं बीजं ढालयेत्, तैलार्द्रपटेनाच्छादयेच्चेति।

रससारे तु सारणायन्त्रविधानमेवमुपदिश्यते—

"मूषोर्ध्वं संपुटं दत्वा सन्धिलेपं च कारयेत्।
सच्छिद्रे संपुटे नालमुन्मत्तकुसुमप्रभम्॥
अतियत्नेन तां मूषां करीषाग्नौ निधापयेत्।
हेमरक्तसमं नागं गालयित्वा विचक्षणः॥
मूषानाले विनिक्षिप्तं इत्थं सरति सूतकः।
सप्तवारं प्रकर्तव्यं सारणं च महारसे॥" इति।

क्वचिच्च बीजजारणकालेऽरुणसितरञ्जनोपयोगितया नागवङ्गयोरपि दानमुपदिश्यते।

प्रतिसारणं
[अ]नुसारणं च।

सारणस्यैव द्विवारं करणं प्रतिसारणं इति, त्रिवारं करणं अनुसारणमिति च व्यपदेश आनन्दकन्दे दृश्यते। अन्यत्र रसहृदयादौ द्विगुणबीजजारणेन प्रतिसारणमिति, त्रिगुणबीजजारणेनानुसारणमिति च व्यपदेशो भूयसा दृश्यते। प्रतिसारणेऽनुसारणे च कृते कच्छपयन्त्रादौ जारणं कार्यमेव। सारणाकाले सारणायन्त्रस्य ससारणातैलरसस्य बीजप्रक्षेपात्पूर्वं करीषाग्नौ तापः कार्यः सारणायास्सुकरतासिद्धये।

शृङ्खलिकाक्रमः।

शृङ्खलिका नाम कश्चन व्यपदेशः— एकवारं सारणं, सारितबीजस्य जारणमिति सारणजारणाख्यक्रियासमुच्चयस्य निर्देशकः प्रयुज्यते तत्र तत्र। अनेन क्रमेण दशशृङ्खलिकाविधानमिति [पृ. ४४५] सप्तशृङ्खलिकाविधानमिति च प्रयोगा बहवो रसतन्त्रेषु दृश्यन्ते। शृङ्खलिकाया अपरं नाम सङ्कलिकेति। शृङ्खलिकाविधाने कश्चन रुचिरः प्रकारभेदो रसहृदये दृश्यते।

तत्र प्रथमं सारणा ततः प्रतिसारणा ततोऽनुसारणा एवं पुनरनुसारितस्य सारणा प्रतिसारणाऽनुसारणा च, एवं पुनः सारणा प्रतिसारणाऽनुसारणा चेति त्रिः सारणात्रयस्य कल्पनान्नवशृङ्खलिकाविधिः वेधे शतसहस्रायुत-कोट्यादिवेधोपयोगी विधीयते सारणात्रयोर्ध्वे। प्रतिसारणाभेदं च जारणा करणीया। शृङ्खलिकाश्च रसस्य वेधे सामर्थ्यमभिवर्धयन्ति।

सारणानन्तरं मुखबन्धः रसस्य खोटबन्धश्च विधीयते। [पृ. ९३] बालजारणायां खोटबन्धः सारणानन्तरं क्रियते, वृद्ध (बद्ध) जारणायां तु जारणातः पूर्वमेवेत्ययं विशेषः। [पृ. ४४२] बद्ध-

बन्धः।

जारणोपयोगिनो बन्धविशेषास्तु अमृतीकरणविश्रान्तौ त्रयोविंशचतुर्विंशोल्लासयोः कीर्त्यन्ते। रसस्य खोटत्व-सिद्धौ वेधोपयोगिता भवति॥

वेधश्च द्विविधो लोहवेधो देहवेधश्चेति। तत्र लोहवेधः देहवेधार्थं सिद्धस्य रसस्य सिद्धसौष्ठवं परीक्षितुं प्रवर्तितोऽपि, देहवेधानुपयोगितया लोहवेधमात्रसाधकतया च रसतन्त्रप्रवर्तकैः बहुधा-

वेधः।

ऽऽविष्कृतः। आनन्दकन्दे तु तस्य लोहवेधमात्रोपयो-गितयोपदेशोऽत्यल्प एव। उपदिष्टाश्च लोहवेधोपयो-गिनो योगाः देहवेधसिद्धिपरीक्षार्थका एव।

प्रतिक्षणं शीर्यते नश्यति इति शरीरमिति पदविदः। शरीरगताः अणुशो विभिन्नास्सर्वे भावा नश्वराः, प्रतिक्षणं नश्यन्ति। आपूर्यते च शरीरं प्रतिक्षणं नवनवतयोत्पद्यमानैर्भावैः। तदेत-

वेधसिद्धिस्वरूपम्।

दुज्जीवनं नाम। तदिदं न स्थूलदृशां प्रत्यक्षम्। यदा शारीरभावनाश आपूर्यमाणापेक्षयाऽधिको भवति तदा जरा मरणं चान्ततः; यदा न्यूनो भवति तदा पुष्टिर्यौवनं च भवति। अजरामरणं हि शरीरं सपाद्य जीवन्मुक्तिमभीप्सता। ततः शारीराणां अणु-मात्राणां सर्वेषां भावानां विशरणं यथा न भवति तथा प्रवृत्तिः कार्या मुमुक्षुणा। ततश्च प्रत्यणु विशरणविघटनं कर्तव्यमापतति। न हि क्वचिच्छरीरैकदेशे विशरणविघटने पिण्डस्थैर्यं संपद्येत। प्रत्यणुविशरण-विघटनं च तदैव संभवते, यदा शरीरघटकानामणूनां स्वभावनियतो

पिशरणस्वभावो विहन्येत, स्वभाव एव विपरिणम्येत। तादृशाणु-स्वभावविपर्यास एव वेधान्तानां संस्काराणां परमं लक्ष्यम्।

लोहवेधे च सिद्धिरीदृश्येव। प्रतिलोहं लोहस्वरूपगुणघटकानां लोह-परमाणूनां स्वभावो नियतसिद्धः। अतो लोहस्य लोहान्तरतापत्तिः न संभाव्यते। जघन्यास्ताम्रवङ्गनागादयो लोहाः स्वर्णापेक्षया नश्वरस्वभावाः। अत एव स्वर्णमनर्घं भवति। ताम्रवङ्गादीनां स्वर्णाद्युत्तमलोहता तदैव संभवेत्, यदैतल्लोहघटकानां परमाणूनां स्वरूपगुणपरिवर्तनं संपद्येत। स्वरूपपरिवर्तनं च क्वचिदेकदेशे संपद्यमानं न फलाय कल्पेत। अतः सेवनकाल एव सर्वं लोहावयवं शरीरावयवं वाऽऽक्रम्य तत्स्वरूपगुणपरिवर्तनं संपाद्यते-ऽनेन वेधाख्येन संस्कारेण।

लोहवेधे देहवेधे वा वेधिरसस्य प्रत्यवयवं क्रामणाय क्रामणयोगाः उप-दिश्यन्ते। तत्र देहवेधे दिव्यौषधयो गन्धकं वा मुख्यतया क्रामणायोपयुज्यन्ते [पृ. ९४] लोहवेधे तु कर्कटमण्डूकादीनां वसा,

क्रामणम्।

भेकमहिष्यादीनां मलं स्त्रीस्तन्यं रक्तं चान्यदन्यदेवं-विधमुपदिश्यते इति विशेषः [पृ. ९५]। देहवेधार्थं शरीरशुद्ध्यर्थं दोषशोधका योगाः [पृ. १०६] शरीरस्य क्लेवीकरणायाभ्रक-कान्तहेमवज्ररससिद्धरसायनोपयोगः [पृ. १३७] पथ्यापथ्यविधानं च [पृ. ११३] उपदिश्यन्ते यथाक्रमम्।

दिव्यदेहसिद्धौ वेधिरसोपयोगमन्तरा प्रकारान्तराण्यप्युपदिश्यन्ते; यत्र प्राथम्यमावहति भूतकालान्तकरसोपदेशः। [पृ. १७२.]। यत्स्वरूपं तु न विविच्य वक्तुं शक्यते। सर्वसिद्धिप्रदाश्च घुटिकाः पञ्चदश कान्तहेम-वज्राभ्रकरसानां यथायोगं मेलनेन सिद्धाः उपदिश्यन्ते। [पृ. १६० श्रीशैले सिद्धिलाभ इत्यधिकारे [पृ. १७६] तीर्थक्षेत्रमाहात्म्यात्सिद्धिलाभ ब्रह्मवृक्षनिर्गुण्ड्यादिदिव्यौषधिरसायनानि च दिव्यदेहसाधकानि बहूनि सिद्धिप्रदैर्मन्त्रैस्साकमाख्यायन्ते। [पृ. २०४]

सत्स्वपि प्रशस्तेषु रसायनेषु, धर्म्यस्य आचारस्य देहसिद्धावतुल प्रभावो दृष्ट आचार्यैः। तदर्थमेव दिनचर्यायाः ऋतुचर्यायाः योगाचार

रसायनस्य च तावता विस्तरेण प्रतिपादनमुपलभ्यतेऽत्र। उषःपान-रसायनं चात्र विशिष्य दोषशोधकतया रसायनतयोपदिश्यते ।

एतावता वेधान्तानां संस्काराणामानन्दकन्दे प्रतिपादितानां ग्रन्थान्तर-संवादसमालोचनपूर्वकं स्वरूपपर्यालोचना कृता। वेधान्ताष्टादशसंस्कारकरणेऽशक्तस्य, अथवा दिव्यदेहत्वपर्यन्तां सिद्धिमप्रतीक्षमाणस्य वा रोगहनन-मात्रोपयोगिनो रसशुद्धि-मारण-बन्ध-मूर्च्छाप्रकाराः कतिचन सविशेष-मभिधीयन्ते त्रयोविंशोल्लासे। अमृतीकरणविश्रान्तावन्ते च द्वावध्यायौ परिभाषा-यन्त्र-मूषा-स्वरूपादिवर्णनपरौ प्रक्षिप्तौ भवत इतीदमुक्तं प्रागेव।

क्रियाकरणविश्रान्तौ च उपरसाः लोहा रत्नान्युपरत्नानि च स्वरूप-शुद्धिमारणसत्वपातनादिप्रक्रियाप्रदर्शनपूर्वकं वर्ण्यन्ते । दिव्यौषधि-महौषधिवर्णनपरौ च द्वावध्यायावन्ते प्रक्षिप्तौ। तत्र महारसा उपरसा इति च ग्रन्थान्तरेषु वर्गीकृतानां समेषामत्रोपरसा इत्येव गणना कृता। तत्रापि छगणवालुकाकाचाम्लवेतस-गोरोचन-सर्जगुग्गुलु-लाक्षादीनां अन्यत्र रसोप-रसमहारसवर्गेष्वगणितानां परामर्शोऽत्र विशेषः। लोहेषु अभ्रकसत्वस्य गणना तस्य लोहतापरिचयमन्यत्रादृष्टं प्रख्यापयति। सस्यकविमलयोर्ग्रन्था-न्तरेषूपरसतया प्रख्यातयोरत्र उपरत्नतया गणनं तु तयोः स्वरूपविनिर्णये भूयो विभ्रममावहति।

इत्येतावता आनन्दकन्दे प्रतिपादिताः सर्वेऽप्यंशा ग्रन्थान्तरसंवाद-पूर्वकं सङ्ग्रहेण समालोचिताः।

अथ रसशास्त्रे गवेषणा कथं कर्तव्या इत्यत्र किञ्चित्प्रस्तूयते। अत्र नव्यैरनेके मार्गाः प्रस्तूयन्ते। परं प्राच्यैः रसशास्त्रे विस्तारमाकलयद्भिः कीदृशः पन्थाः आदृत इति समीक्षणं प्राप्तकालम्।

**रसशास्त्रे गवेषणा।** सर्वरोगनिहन्तृत्वं देहदार्ढ्यप्रदत्वमेवमन्यान्यं च रसोपरसादिगतं प्रभावमाकलयन्तः प्राचीनाः तत्र द्रव्यगत-रस-वीर्य-विपाक-प्रभावानेव नियामकानि कारणानि ददृशुः; रसवीर्यादिभिरेव दोषदूष्यविकाराभिनिर्वृत्तिं चाभ्युपागमन्। अतश्चायु-र्वेदस्य त्रिदोषरस-वीर्य-विपाक-प्रभाव—सिद्धान्तमाधारीकृत्यैव सर्वत्र विस्तारः

समाकलित आचार्यैः । अतो द्रव्यगतरस-वीर्य-विपाक-प्रभावनिर्धारणं तु कथं संपाद्यमित्यत्र प्रथमं गवेषणा कर्तव्या भवति । विना त्रिदोषरसादि-समन्वयं, कृता गवेषणाऽऽयुर्वेददृशा निष्फलैव भवेत ।

रसशास्त्रविषयकान्वेषणारंभात्पूर्वं, अद्योपलभ्यमानं सर्वं रसशास्त्र-विषयकं साहित्यं एकत्र संपादनीयं भवति । तच्च द्विधा संपाद्यम् । प्रथमं तत्र तत्रोपपलभ्यमाना रसग्रन्थास्तथैव शोधयित्वा मुद्रापयितव्याः । अपरं च तथा संपादितानां ग्रन्थानां एकत्र विषयानुसारं समन्वयसङ्ग्रहाभ्यां प्रसिद्धिः । रसग्रन्थगता विषयास्त्रेधा विभक्तुं शक्यन्ते ।

१) रसोपरसलोहादीनां स्वरूपवर्णनं शोधनमारणादिप्रक्रिया च ।

२) वेधान्तसंस्कार-घुटिका-खेचर्यादिसिद्धिप्रतिपादको भागः ।

३) रसोपरसादिभेषजयोगप्रतिपादको भागः ।

तत्र तृतीयभागगतो विषयः प्रायस्सङ्कलित एव महामहिम्ना श्रीहरि-प्रपन्नशर्मणा स्वकीये रसयोगसागरे । तत्रासङ्कलितानां भेषजयोगानामन्यत्रो-पलभ्यमानानां परिशिष्टतया प्रकाशनं सुकरमेव । आद्यौ द्वौ विभागा-विदानीं विषयानुसारं सङ्कलनामर्हतः प्रथमम् । एष शास्त्रे गवेषणारूपः प्रथमः प्रकारः ।

द्वितीयस्तु कर्मपरिचयरूपः । द्रव्यसङ्ग्रहे, द्रव्यनिर्णये, शोधन-मारणादिविविधसंस्कारेषु शास्त्रोक्तमार्गेण परिचयस्य संपादनं, प्रक्रिया-निर्धारणं चेति गवेषणामार्गोऽयं श्रममधिकमनुभावयेदेव । यथा वा—

१) द्रव्यनिर्णये— शोधनाद्यर्थं आदेयस्य द्रव्यस्य, स्वरूप-निर्णये, कृत्रिमाकृत्रिमता-उत्तमाधमता-सांकर्यादि निर्णये च आयुर्वेदोप देशस्य परीक्षा, तत्प्रयोगपरिचयश्च । तत्र नव्यविज्ञानोपदिष्टानां प्रकाराणां चोपयोगितानुपयोगितानिर्धारणं च ।

२) द्रव्यशोधने— पूर्वोक्तप्रकारेण श्रेष्ठतया निश्चितस्य यौगिक-नैसर्गिकदोषापाकरणाय शास्त्रोक्तविधानेन शोधने क्रियमाणे, तत्रोपयुज्य-मानानां विविधानामोषधीनां, शोधनप्रक्रियाणां वा परस्परं तारतम्यविमर्शः ।

शोधने चलनि, मध्ये मध्ये द्रव्यगतकाठिन्यमार्दवादिस्वरूपे वर्णकाठिन्यादौ चान्तरावेक्षणं, भिन्नभिन्नाभिः प्रक्रियाभिः शोधने जायमानः स्वरूपगुणभेद-विमर्शः शोधनानन्तरं संपिपादयिषितानां मारणादिसंस्काराणां सौष्ठवापादने सौकर्ये श्रेष्ठत्वापादने चात्यन्तमुपयोगिनः शोधनप्रकारस्य विनिर्णयः, तत्र च नव्यपद्धत्या परीक्ष्य स्वरूपगुणभेदपरामर्शः इत्येतावान्विषयविमर्शो-ऽपेक्ष्यते ।

३) मारणविषये— ग्रन्थोक्तैर्भिन्नैः प्रकारैः, भिन्नभिन्नास्व-ग्निमात्रासु भिन्नभिन्नैः पुटविशेषैर्मारितानां, तत्र तत्रोल्लिखिताभिः परी-क्षाभिः, सुमारितामारितत्वादिनिर्धारणं फलदाने विशेषाः, मारणेन मूल-द्रव्ये जायमानपरिणामस्य विमर्शः, तस्य शरीरस्यान्तर्बहिर्वा परिमार्जने जायमानः शारीरो द्रव्यगतश्च परिणामः, नव्यपद्धत्या मारितामारितस्वरूप-परामर्शश्चेत्येते विचार्याः ।

४) सत्वपातनद्रुतिविषये— परीक्षितोत्तमखनिजद्रव्यादानेन-भिन्नभिन्नविधानैः सत्वपातने कृते कस्य वा प्रकारस्य अधिकोत्तमसत्व-पातनशक्तिः सुकरता चेति निर्धारणं, पतितस्य सत्वस्य स्वरूपनिश्चयः, द्रुतस्य सर्वदा द्रवतासंपादनं, नव्यपद्धत्या द्रुतस्य सत्वस्य च स्वरूप-विनिश्चयः,

५) दिव्यौषधिविनिर्णये— विनाप्यग्निवर्गसंपर्कं रसादिमारणे प्रसिद्धानां दिव्यौषधीनां स्वरूपशक्तिविनिर्णयः,

६) देहवेधधातुवेधविषये— तत्र लघूनामलघूनां बहु प्रका-राणां वेधविधानानां स्वरूपविमर्शः, देहवेधानुपयोगिनां धातुवेधप्रकाराणां विशेषाः, तत्र दिव्यौषधीनां प्रभावपर्यालोचना, वेधेन संपाद्यमानस्य स्वभाव-नियतस्वरूपपरिवर्तनस्य वस्त्वन्तरेऽपि प्रयोगौचितीविनिर्णयः, नव्य-विज्ञानप्रसिद्धस्य अणुविभेदस्य समन्वयविचिन्ता इत्येते विचार्याः ।

इत्येवं कर्मपरिचये गवेषणैव रसशास्त्रस्य गवेषणायां मुख्यं स्थान-मावहेत् । भौतिक-रसायनविज्ञानयोः भारतीयं स्वरूपमाविष्कर्तुमियं गवेषणा बहूपकुर्यात् ।

दक्षिणभारते चास्त्यायुर्वेदस्य कश्चन संप्रदायः अगस्त्य-श्रीमूलनाथ-यूहि-भोग-तेरयर्-कालाङ्गादिभिः सिद्धैराविष्कृतः द्रविडभाषामयेषु ग्रन्थेषु प्रतिपादितः। सर्वे चैते सिद्धाः शैवसामयिकाः। तान्त्रिकसमुदाचारा-विशिष्टतया च तत्संप्रदायस्य क्रिया-चर्या-योग-ज्ञानाभिधचतुर्विधसोपानाधिरूढैरेतैः, साक्षान्नन्दि-भगवन्मुखादवगतः संप्रदाय एष इति जोघुष्यते तैः। त्रिदोष-पञ्चभूत-रस-वीर्य-विपाकादिसिद्धा-न्तान्, लोकोत्पत्तिव्याध्युत्पत्तितन्निवृत्तिविषयेषु सर्वात्मनाऽनुसरन्तस्ते सिद्धाः, द्रविडदेशमात्रसुलभानां बहूनां दिव्यौष-धीनां साहाय्येन वेधान्तस्य रससंस्कारगणस्य करणे लघून्सुलभांश्च प्रकारान्ददृशुः।

**रसशास्त्रगवेषणायां द्रविडसंप्रदायस्य मुख्यं स्थानम्**

अथ च किञ्चिद्द्रविडसंप्रदायस्य स्वरूपं पर्यालोचयामः। सङ्गृह्णीमश्च तद्गतान्विशेषान्। धातु-मूल-जीवात्मना त्रिधा भिद्यते कृत्स्नो हि लोकः। धातवो हि द्वादशोत्तरद्विशत (२१२) संख्याकाः ये षोढा वर्गीक्रियन्ते, लवणानि पाषाणा उपरसाः लोहाः रसो गन्धकश्चेति। लवणानि नाम ते ये जले विली-यन्ते, अग्नावुत्पतन्ति, स्फुटन्ति धूमायन्ते दह्यन्ते च। पाषाणा नाम ते येऽग्नौ धूमायन्ते, जले न विलीयन्ते। उपरसाश्च न जले विलयनशीला न वाऽग्नौ दह्यन्ते धूमायन्ते उत्पतन्ति वा। लोहाश्च अग्नौ द्रवन्ति स्थिरीभवन्ति च ततः, न जले विलीयन्ते वा। रसश्च मृदावग्नावप्युत्पतनशीलः अंण्वाकारतया विभजनशीलः सप्तभिः कञ्चुकैरावृतः पौरुषसत्वसमेतश्च। गन्धकस्तु वह्नौ धूमायते, दह्यते, उदुत्पतति च, जले न विलीयते, स्त्रीसत्वसंयुक्तश्च भवति। लवणानि पञ्चविंशतिः, पाषाणाश्चतुष्षष्टिः, उपरसा द्वादशोत्तरशतं, लोहा नव, रस एको, गन्धक एक इत्याहृत्य ते द्वादशोत्तरद्विशतसंख्याका भवन्ति। मूल-वर्गस्तु ओषधिवर्गाभिधः– षोढा विभिन्नो मधुरादिषड्साधारतया, पुन-ष्षोढा, वृक्ष-गुल्म-लता-रस-नीरस-सक्षीर भेदेन। ते च त्रिशतोत्तरत्रि-सहस्रसंख्याका उत्पत्तिवैचित्र्येण। जीववर्गस्तु उत्पत्तिवैचित्र्येण चतुरशीति-लक्षसंख्याकस्वरूपभेदयुक्तः योनिभेदेषु चतुर्षु, षड्भिर्बीजविशेषैरुत्पन्नः।

**द्रविडसंप्रदाय-समीक्षा।**

अमीषां धातूनां प्रत्येकं स्वभावनियतो गुणविशेषः पृथक् जागर्त्येव । सिद्धस्तु तादृशस्वाभाविकगुणस्वरूपपरिवर्तने प्रयतते । यथा वा— लवण-वर्गो जले विलयनशीलोऽग्नावुत्पतनशीलश्च, यस्य जलेऽविलयोऽग्नौ विद्रुत्य जलाकारता च संपाद्यते । पाषाणाश्चाग्नौ क्षयिष्णवः जलेऽविल-यनशीलाश्च, येषामग्निसहता जले विलयनं च संपाद्यते । उपरसाश्च स्वभा-वतो नाग्नौ क्षीयन्ते न वा जले विलीयन्ते, अतस्तेषां लवणस्वरूपविनिमयः कर्तव्यः । एवं स्वाभाविकस्वस्वरूपविनिमय एव सिद्धैः क्रियते । बद्धस्य धातोः पुनर्मारणं क्षारीकरणं वा क्रियते देहोपयोगसिद्ध्यै ॥

धातूनां बन्धे ततो मारणे च ओषधीनामुपयोग उपदिश्यते । तासां चौषधीनां ग्रहनक्षत्रसंपर्कवशादुत्तमगुणाधायकता विशिष्टा दृश्यते । एवं स्वभावविरुद्धगुणपरिवर्तनेनाधमानां धातूनामुत्तमता संपद्यते, तथैव शीर्यतः शरीरस्य धारणं च । स्वभावविनिमयेन शरीरे तेषां धातूनां क्रामणं सुकरं भवति । नश्वरस्य कायस्य स्थैर्यं कामयन् सिद्धपुरुषो वेधान्तां सिद्धिं तत्रो-पयोगिनीं विज्ञाय, तत्सिद्धिपरीक्षायै धातुवेधे (वादे) प्रावर्तत । स्वर्ण-करणं च तेन, विनैव याच्ञां, धनसंपादने श्रमं वा, शरीरधारणो-पयोग्याहारादिवस्तुसंपादनाय स्वीकृतमेव । ताल-मनःशिला-माक्षिक-स्वर्ण-रसादीनामन्योन्यबन्धसामर्थ्यं, तेन रसे वेधशक्त्युत्पत्तिं च ज्ञातवद्भिः सिद्धैः स्पर्श-नाडीवेधपर्यन्ता सिद्धिः प्राप्ता । वेधिरससंपन्ना गुटिका आस्ये मणिबन्धे कण्ठे च धरतां तेषां मनोविजितिः, सर्वसिद्धिप्राप्तिश्च सुलभा सुकराऽभूत् । येन सच्चिदानन्दात्मकशिवतत्त्वस्फुरणं च जातं तेषाम् ।

धातु-तदाकरगवेषणपराः सिद्धाः, क्वचिच्च देशविशेषे जलस्यौषधि-विशेषस्य वा धातुसंपर्काद्देहोपयोगितां पश्यन्तः, कृत्रिमधातुनिर्माणेऽपि प्रयतन्तस्तत्रापि सिद्धिमापुः । धातुषु कस्यचिद्भावस्य संश्लेषणेन विश्लेषणेन वा जायमानान्भेदानसकृदालोकयन्तः कृत्रिमानेव धातून्, युक्त्या स्वाभीष्ट-सिद्धिसाधकान्संपादयामासुः । क्वचिच्च कृत्रिमाद्धातोरकृत्रिमस्य ज्यायस्त्व सिद्ध्या परीक्ष्य, तदाकरान्वेषणे प्रयत्नमकुर्वन्त ।

तान्त्रिकसमुदाचारसहजपरिभाषाजटिलतया, उपदेशपरंपराया लुप्त-त्वेन चाप्रत्वे तेषां बहवो ग्रन्था दुरूहार्था भवन्ति, अत एव लुप्तप्रचारा अपि ।

सन्ति चाङ्गुलिगणनीयाः कतिपये तत्संप्रदायविदः। 'यूरेनियं' प्रभृतीनां नव्यवैज्ञानिकावगतानां बहूनां धातूनां स्वरूपपरिचयः, तन्मूलकधातुदेह-वेधाणुविभेदादिप्रक्रियाजातोपदेशश्च सिद्धग्रन्थेषु तत्र तत्र प्रतिपाद्यते, यत्र भूयान्विमर्शश्चोपलभ्यते। परं क्रिया-चर्या-ज्ञानयोगादिबहुविधविषया-न्तरसाहचर्यवशान्न तेषां विषयाणां सुकरोऽवगमः। अतस्तत्रापि विषयानु-सारं ग्रन्थसङ्कलनेन मार्गशोधनं भूयसा कर्तव्यमापतति।

द्राविडसंप्रदाये गवेषणायां कृतायां, तल्लब्धज्ञानाधारेण रसशास्त्रस्य प्रतिसंस्कारश्च संपादनीयः। तादृशे प्रतिसंस्कारे कृत एव गवेषणाऽपि पूर्णा भवेत्। तत्र शैवसंप्रदायविद्भिरायुर्वेदविद्भिः आयुर्वेदीयद्राविड-संप्रदायविद्भिश्च संभूय बहु श्रान्तव्यमासिद्धिलाभम्।

एतादृशे गवेषणाप्रसङ्गे, प्रथमसंपाद्ये रसशास्त्रविषयकसाहित्यस्य प्रकाशने बहूपक्रियते सरस्वतीमहालयग्रन्थागारनिर्वाहाधिकृतैः मद्रासराज्या-धिकृतैश्चास्यानन्दकन्दस्य प्रकाशनेन। सन्त्यन्ये च बहवो ग्रन्थाः सरस्वती-महालयग्रन्थागारे रसतन्त्रप्रस्थाने प्रकाशनीयाः, येषामचिरेण प्रकाशने तद-धिकारिणामतुलं उत्साहो दिने दिने समेधत एव।

अस्य ग्रन्थस्य संपादनेनायुर्वेदस्य परमां सेवामाचरितुमवकाशं दत्तवते सरस्वतीमहालयमाननीयसचिवाय श्रीगोपालार्यमहोदयाय, गवेषणाचार्याय श्रीवासुदेवशास्त्रिमहोदयाय, समये समये पर्यालोचनाय स्वकीयग्रन्था-गारगतरसग्रन्थजातप्रदानेन, अनर्घेणोपदेशजातेन च बहूपकृतवते मम प्रयोगाचार्याय श्री वा. बा. नटराजशास्त्रिमहोदयाय, महान् कृपया तस्मि-न्ग्रन्थसंपादने द्रविडभाषानुवादे (प्रूफ्) पत्रशोधने च श्रमस्वीकरणेन मह्यं बहूपकृतवते श्रीरङ्गस्थ श्रीविलासमुद्रणालयाधिपतये पण्डित श्री सुन्दर-राजाचार्यमहोदयाय च मदीयां हार्दीं कृतज्ञतां निवेदयन्, सर्वगतं धिषणोन्मेषमनारतमाशंसद्भ्यो गुरुचरणेभ्यो मदीया अनन्ताः सविनति-नतिततीः समर्पये।

भारत आयुर्वेदशाला
तेप्पकुळं, तिरुचिरापल्ली
१६—३—१९५२

इत्थं
भिषजां विधेयः
शे. वे. राधाकृष्णशास्त्री।

॥ श्रीः ॥

# ॥ आनन्दकन्दस्य विषयानुक्रमणिका ॥

## अमृतीकरणविश्रान्तिः ।


पृष्ठसंख्या

प्रथम उल्लासः ।

रसोत्पत्तिः, तत्पर्यायाः रसदोषाः, रसावस्थाः, रसगतयश्च 1-6

द्वितीय उल्लासः ।

रसोपदेशक-शिष्यलक्षणं, काकिनीलक्षणं, रसशालानिर्माणं, रससन्ध्याविधिः, रसपूजाफलं, रसस्तोत्रं च । 7-31

तृतीय उल्लासः ।

रसदीक्षाक्रमः, दीक्षाभेदाश्च । 32-43

चतुर्थ उल्लासः ।

रसस्य स्वेदन-मर्दन-मूर्च्छन-उत्थापन-पातन-निरोधन-नियामन-दीपनानुवासन-चारण-जारण-गर्भद्रुति-बाह्यद्रुति-रञ्जन-सारण-प्रतिसारणानुसारण-वेधाख्याष्टादशसंस्कारविवरणं, तदर्थकबीजद्रुतिसत्वपातनाद्युपदेशश्च । 43-96

पञ्चम उल्लासः ।

भूचरी-खेचर्यादिविशेषजारणाप्रकाराः । 97-105

पृष्ठसंख्या

**षष्ठ उल्लासः।**

देहवेधक्रमः, तदर्थं शरीरशुद्धिः क्षेत्रीकरणं, रससेवायां पथ्यापथ्यं, अपथ्यजनितविकारप्रशमनोपायः, सप्तधातुवेधस्वरूपं च। — १०५-११७

**सप्तम उल्लासः।**

पद्मरागादिरत्नोत्पत्तिः, वज्रभेद-संस्कार-रसायनद्रुति-भस्मादिप्रकाराः, स्वर्णकान्ताभ्रकानां स्वरूपगुण-शोधनमारणद्रुत्यादिप्रकाराश्च — ११७-१३५

**अष्टम उल्लासः।**

रसायनसेवाक्रमः। — १३६-१३८

**नवम उल्लासः।**

रसायनार्हरससंस्कारः, क्षेत्रीकरणाय रसायनप्रकाराश्च। — १३८-१५७

**दशम उल्लासः।**

पञ्चदशगुटिकानिर्माणविधिस्तदुपयोगविधिश्च। — १५८-११७

**एकादश उल्लासः।**

जीवत एव दिव्यदेहसिद्ध्यै भूतकालान्तकरसः। — १७२-१७५

**द्वादश उल्लासः।**

श्रीशैले सिद्धिलाभप्रकाराः। — १७६-१९४

**त्रयोदश उल्लासः।**

गन्धकः, तत्संस्कारा गुणाश्च — १९५-१९८

**चतुर्दश उल्लासः।**

विषं, तत्संस्कारा गुणाश्च। — १९९-२०३

**पञ्चदश उल्लासः।**

दिव्यौषधिरसायनानि। ब्रह्मवृक्ष-मुण्डी-देवदाली-श्वेतार्क-हस्तिकर्णी-रुदन्ती-निर्गुण्डी-शुनकशाल्मली-

पृष्ठसंख्या

पथ्या- धात्री- त्रिफला- शुण्ठी- पिप्पली- चित्रक- भल्लातक-भूकदंब-पुनर्नवा-भृङ्गराज-कुमारी- नीली- मुसली-इन्द्रवल्ली-ज्योतिर्द्रुम-अश्वगन्धा-ज्योतिष्मती-गुग्गुलु-विजया-कञ्चुकी-कुक्कुटी- सोमलता- गुडूची-तुवरक-सोमराजी-वृद्धदारक-वज्रवल्ली-तिलक्षीरिणिका-ब्राह्मीकल्पाः। २०४-२६३

षोडश उल्लासः।

अङ्कोलकल्पः, अन्ये मूलिकाकल्पाः, अभ्यङ्गरसायनं, उद्वर्तनरसायनं, केशरञ्जनकल्पः, दिव्यौषधिग्रहणयोग्यस्थलनिर्देशः तद्ग्रहणविधिश्च। २६३-२७५

सप्तदश उल्लासः।

उषःपानरसायनं, तत्र पथ्यापथ्यं जलाजीर्णलक्षणं तत्परिहारः, नासाजलपानरसायनं च। २७६-२८४

अष्टादश उल्लासः।

सदाचाररसायनम्। प्रबोध-विण्मूत्रोत्सर्जन-शौचाचमन-दन्तशोधन-जिह्वाविलेखनाञ्जन-नस्य-गण्डूष-धूमपान-तांबूल-चर्वण-नेत्रप्रक्षालन- व्यायामोद्वर्तनाभ्यङ्गस्नान- नित्यकर्म- देहकेशधूपन- गन्धानुलेपन-पुष्परत्नकञ्चुकोष्णीषपादत्रधारण- भोजनानुपान-शय्या-कामसेवा-निद्रा-सेवनप्रकाराः। २८५-३२८

एकोनविंश उल्लासः।

ऋतुचर्या। कालविभागः-हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदाख्यर्तुषट्कस्य स्वरूपं तत्र चर्या, अन्नपाकक्रमो धातुमलाद्युत्पत्तिक्रमः पाचकाग्निस्वरूपं च। ३२८-३४८

पृष्ठसंख्या

विंश उल्लासः ।

योगरसायनं जीवन्मुक्तलक्षणं, योगसिद्धिः-आसन-प्राणायाम-प्रत्याहार-ध्यान-धारण-समाध्याख्यषड्विधयोगाङ्गस्वरूपम्, योगाभ्यासफलञ्च । ३४८-३६६

एकविंश उल्लासः ।

योगसिद्धिदकुटीनिर्माणविधिः—अमरीकल्पश्च । ३६६-३७५

द्वाविंश उल्लासः ।

वन्दाककल्पः । अश्विन्यादिषु नक्षत्रेषु वन्दाकविशेषाहरणस्य फलञ्च । ३७६-३८३

त्रयोविंश उल्लासः ।

विशिष्टा रससंस्काराः । रसस्य शोधनविधिः, भस्मविधिः, गन्धपिष्टी— तत्स्तंभन-जारण-मारणानि, रसबन्धाः- वैक्रान्त- गन्धक- मूलिकाबन्धाः, रसमूर्च्छना, मूलिकाबन्धाः, उदकबन्धाः, रसमूर्च्छना, मूलिकाबन्धाः, घुटिकायोगाः, रसायनकल्पाः, वज्रजारणाविधिः द्रुतिबन्धः, अन्ये वेधोपयोगिनो बन्धाः, वज्रहेमद्वन्द्वमेलापनं च । ३८३-४५९

चतुर्विंश उल्लासः ।

वैक्रान्त-कान्त-चपल-गन्धक-तालकाद्यै रसबन्धः, निगलबन्धः, जलूकाबन्धश्च । ४५९-४८०

पञ्चविंश उल्लासः ।

परिभाषाः । वैद्यभाग-कज्जली-पङ्करस-पिष्टी-कृष्टी-वरलोह-रक्ती-दल-अयोनाग-शुल्बनाग-पिञ्जरी- चन्द्रार्क-निर्वापण-भस्मलक्षण-बीज-उत्तारण-ताडन-धान्याभ्र-सत्व-एककोलीसक-कोकिल-हिंगुलाकृष्टरस-घोषाकृष्ट-

पृष्ठसंख्या

वङ्ग-शुद्धनाग-वरनाग-उत्थापन-ढालन-चपल-धौत-
[illegible]-पतङ्गीराग-आवाप-अभि-
षेक-निर्वाप-शुद्धावर्त-रेखावर्त-स्वाङ्गशीत-बहिःशीत-
स्वेदन-मर्दन-मूर्च्छन-नष्टपिष्टि-उत्थापन-पातन-
निरोध-नियमन-दीपन-ग्रास-जारणा-चारणा-गर्भ-
द्रुति-बाह्यद्रुति-बिड-रञ्जन-सारणा-वेध-उत्पाटन-
[illegible] परिभाषाविवरणम् । ४८१-४९४

षड्विंश उल्लासः ।

यन्त्राणि । [illegible]-पातन-कच्छपा-न्तराळिक-
नालिका-गर्भ-पालिका-घटी-इष्टिका-विद्याधर-डमरुक-
नाभि-अम्ल-तुला-स्थाली-कोष्ठिका-वालुका-लवण-धूप-
कन्दुक-ढेकी-सोमानल-नालिका-पाताल-दीपिका-गंगा-
सागर-भट्टी-दोला-कोष्ठी-गर्भ-हंसपाक-मूषा-स्तन-नाग-
मयूर-चक्र-खेचर-कापालि-वालुका-लवण-भूधर-
नलिका-पुट-पाताल-धूपान्तःपातनाख्ययन्त्रविशे-
षाणां, वज्र-योग-वज्रद्रावण-गार-स्वर्ण-रूप्य-
बिड-वृन्ताक-गोस्तनी-मल्ल-पक्व-गोल-मञ्जु-
मञ्जूषा-मुसल-प्रकाशान्ध-भस्माख्य-मूषाविशेषाणां
आकर-पाताल-गाराख्यकोष्ठीविशेषाणां, महा-गज-
वाराह-कुक्कुट-कपोत-गोवर-भाण्ड-वालुका-भूध-
राख्यपुटविशेषाणां कूपिकादीनाञ्च स्वरूपम् । ४९५-५२१

# क्रियाकरणविश्रान्तिः ।



प्रथम उल्लासः ।

उपरसाः । गन्धक-तालक-शिला-माक्षिक-अभ्रक-हिंगुल-
गैरिक-चपल-शिलाजतु-भूनाग-हरिद्राश्म-अग्निजार-

पृष्ठसंख्या

खर्परी-तुत्थ- कङ्कुष्ठ- गिरिसिन्दूर- टङ्कण- कंपिल्लक-
वत्सनाभि- कासीस- गौरीपाषाणक- तुवरी- फटकी-
पोदारशृङ्गी-सिन्दूर-रसाञ्जन-नीलाञ्जन-सौवीराञ्जन-
स्रोतोऽञ्जन- अहिफेन- पुष्पाञ्जन- शङ्ख- शुक्ति-कपर्द-
साबुणि- नवसार- सौराष्ट्री- आखुपाषाण- सर्जरस -
गुग्गुलु- यवक्षार- सर्जक्षार- लवणक्षार-वज्रकक्षार-
सामुद्रलवण-सैन्धव-काचलवण- बिडलवण- सौव-
र्चल-अम्लवेतस-काच-च्छगणाङ्गारसिकताख्याः । ५२२-५६२

द्वितीय उल्लासः ।
स्वर्णस्य शोधन-मारणप्रकाराः ५६२-५६७

तृतीय उल्लासः ।
रजतस्य शोधनमारणप्रकाराः । ५६८-५७१

चतुर्थ उल्लासः ।
ताम्रस्य शोधनमारणप्रकाराः । ५७२-५७८

पञ्चम उल्लासः ।
कान्ततीक्ष्णमुण्डलोहानां शोधनमारणप्रकाराः । ५७८-५८६

षष्ठ उल्लासः ।
वङ्गनागयोः शोधनमारणप्रकाराः । ५८७-५९१

सप्तम उल्लासः ।
पित्तल-कांस्य-वर्ताभ्रकसत्व-मण्डूराणां शोधनमारणं । ५९१-६०३

अष्टम उल्लासः ।
माणिक्य-मुक्ता-प्रवाल-मरकत-पुष्पराग-वज्र- नील-गोमे-
दक- वैडूर्याणां- सूर्यकान्त- चन्द्रकान्त- स्फटिक-
वैक्रान्त- राजावर्त- गरुडोद्गार-विमल- पेरोजाख्योप-
रत्नानां च शोधनमारणप्रकाराः । ६०३-६२७

विषयानुक्रमणिका ।


पृष्ठसंख्या

नवम उल्लासः ।

दिव्यौषधिप्रशंसा । सोमवल्ली-महिषवल्ली-स्थलपद्मिनी-गोनसा-उच्चटा-ईश्वरी-भूतकेशी-कृष्णलता-लशुनवल्ली-रुदन्ती-वाराही-सप्तपत्री-नागिनी-सर्पिणी-छत्रिणी-गोशृङ्गी-ज्योतिर्लता-रक्तवल्ली-पद्मवल्ली-शङ्खिनी-चाण्डाली-ताम्रवल्ली-पीतवल्ली-विजया-महौषधी-देवदाली-नवनीतकगन्धी-गरुडवल्ली-तुंबिनी-भूतुंबिनी-गन्धर्वी-व्याघ्रपादी-महौषधी-गोमारी-त्रिशूली-रुतसी-त्रिदण्डी-भृङ्गवल्ली-चमरिका-करवीरलता-वज्रवल्ली-वारवल्ली-रोहिणी-विल्विनी-गोरोचनलता-करीरी-अक्षरा-अपत्रा-कुटजवल्लि-मूलकन्दा-ब्राह्मणी-मुनिवल्ली-निंबवल्ली-तिलकन्दा-अतसीवल्ली-बोधिलता-मद्यगन्धा-कूर्मलता-माधवी-विशाला-महानागा-मण्डूकलता-उदुंबरलता-चित्रवल्लीस्वरूपवर्णनम् । ६२८-६४१

दशम उल्लासः ।

महौषध्यः । हिमजा-कारवी-कटुतुंबि-ज्योतिष्मती-लिङ्गिनी-पातालगरुडी-गिरिकर्णी-आखुकर्णी-वाराही-देवदाली-ऐन्द्री-गोजिह्वा-काकतुण्डी-रक्तपादी-पुनर्नवा-अत्यम्लपर्णी-कर्कोटकी-शरपुङ्खा-भृङ्गराज-गुडूची-मूर्वा-शङ्खपुष्पी-काकजङ्घा-शतावरी-गोक्षुर-काकमाची-आदित्यभक्ता-नाकुली-क्षीरकन्द-सिन्दुवार-अरण्यकार्पासी-कोकिलाक्ष-बृहती-कण्टकारी-गुञ्जा-वृद्धदारक-बाकुची-अपामार्ग-प्रपुन्नाट-विषमुष्टि-काण्डीर-हस्तिकन्द-समुद्रशोषी-गोरक्षदुग्धी-भूपाटली-अष्टवर्ग-आदित्यपुत्र-हस्तिकर्णी-कपिकच्छू-कर्णस्फोटा-रुद्रजटा-नीलिका-कोशातकी-जीवन्ती-जतुका-मुण्डी-

## आनन्दकन्दस्य विषयानुक्रमणिका ।

पृष्ठसंख्या

विष्णुक्रान्ता- कुमारी- भूम्यामली- वह्निचूडा- ब्राह्मी तण्डुलीयक-पाषाणभेद-हस्तिशुण्डी-क्षुद्राम्लिका ग्रन्थि-दण्डी-ताली-खवल्ली-सहदेवी-लक्ष्मणा-मूलकन्द-नील-कन्द- विष्णुकन्द- त्रिकर्णिका- नागदन्ती- द्रोणपुष्पी-अमृतस्रवा-पुत्रदात्री-शाल्मलीकन्द-आवर्तकी अम्ल-पत्र्याख्याष्टाशीतिमहौषधीनां स्वरूपगुणवर्णनम् । ३४१ ६६७

परिशिष्टम् ।

रसनियामिकाः, निर्जीवकर्यः रसमारिकाः, (दिव्यौ-षधिवीजानि) रसवन्धकर्यो रसद्राविकाः रसक्रामिकाः रासायनिकाश्चौषध्यः । पञ्चरत्नं, क्षीरवर्गः, क्षार-वर्गः, तैलवर्गः, अम्लवर्गः, अम्लवेतससन्धान-क्रमः, मलवर्गः, मूत्रवर्गः, रक्तवर्गः, श्वेतवर्गः पीतवर्गः, कृष्णवर्गः, वसावर्गः, पित्तवर्गः शोधन-त्रयम्, मधुरत्रयम् मित्रपञ्चकम्, लोहपर्पटी, तुल्या-यन्त्रं, नियामकयन्त्रं, विद्याधरयन्त्रं, सारणायन्त्रं, आवर्तितलोहादिस्वरूपं, आवर्तितलोहाधिशुद्धि-लक्षणं, प्रतीवापनिवापाभिषेकसमयनिर्देशः, मृत-रसपरीक्षा, रसबन्धप्रकाराः, सृष्टिः, वासनामुख-चारणाप्रकाराः, ग्राह्याग्राह्यरसलक्षणं, सिद्धसार-गर्भसार-परमानन्दमूर्ति-पाताल-आकाश-रञ्जक-करु-णाकर-वारुणी-ज्योतिस्साध्य- स्थलकूर्म- जलकूर्म-यन्त्रलक्षणं, पञ्चमृत्तिकाः हठमुद्रा, महामुद्रा, कूपि-कापाकविधिः, चुल्लीविधानं, भावनामाला, बिड-माला, स्नेहाम्लादीनां गुणाः, तैलपातनविधिः, शुक्तं, अम्लकाञ्जिकवर्गः, लवणवर्गः त्रिगन्धकं, रङ्गाकृष्टिः, तारारिष्टं, कपालीयोगाः, मूर्तिबद्ध-पट्ट-बद्ध-खोटबद्ध-नागजीर्णशुद्ध- आरजीर्णशुद्ध- रसक-जीर्णशुद्ध-रसलक्षणं च । ६६९ ७०१

॥ श्रीः ॥

महाभैरवोक्तः

# ॥ आनन्दकन्दः ॥

---

अमृतीकरणं नाम प्रथमा विश्रान्तिः ।

---

कैलासशिखरासीनं कालकन्दर्पनाशनम् ।
प्रसन्नं परमेशानं जगदानन्दकारणम् ॥ १ ॥
प्रणम्य परया भक्त्या भैरवी स्तुतिमातनोत् ।

देव्युवाच—

देवदेव महादेव जन्मदारिद्र्यनाशन ॥ २ ॥
प्रसीद करुणामूर्ते प्रसन्न परमेश्वर ।
दिव्यागमरहस्यानि कुलकौळादिकानि च ॥ ३ ॥
जाने तव प्रसादेन मायामङ्गळविग्रह ।
श्रोतुमिच्छामि सर्वेश तव दिव्यरसायनम् ॥ ४ ॥
जराजन्मामयघ्नं च खेचरत्वादिसिद्धिदम् ।
दारिद्र्यदुःखशमनं ब्रह्मत्वादिवरप्रदम् ॥ ५ ॥

ईश्वर उवाच—

साधु साधु महाभागे सर्वलोकोपकारिणि ।
तत्सर्वं जायते सूताच्छुद्धात्मात्प्राणवल्लभे ॥ ६ ॥
सर्वलोकोपकारार्थं गुह्यात् गुह्यतमं हितम् ।
रसेन्द्रस्य समुत्पत्तिं लक्षणं च सुरार्चिते ॥ ७ ॥
तत्सर्वं संप्रवक्ष्यामि शृणु भैरवि सम्प्रति ।

## रसोत्पत्तिः ॥

सुरेन्द्रैर्मुनिभिर्दिव्यैः गन्धर्वोरगकिन्नरैः ॥ ८ ॥
प्रार्थितोऽहं भवत्यां तु कुमारोत्पत्तिमिच्छुभिः ।
तारकासुरनाशाय लोकानां रक्षणाय च ॥ ९ ॥
तदा हिमालयगिरेः गुहायां सुचिरं प्रिये ।
संक्रीडमानयोः कालो गतो नः पुत्रलिप्सया ॥ १० ॥
त्रिजगत्क्षोभि सुरतं त्याजितुं प्रेषितः सुरैः ।
कपोतरूपमास्थाय वह्निः प्रागाद्गवाक्षतः ॥ ११ ॥
तं दृष्ट्वा लज्जया देवि विसृष्टं सुरतं मया ।
निक्षिप्तं वदने वह्नेरावयोस्तेज उज्ज्वलम् ॥ १२ ॥
तेन दन्दह्यमानोऽग्निर्गङ्गायां तन्न्यमज्जयत् ।
तेन गङ्गाऽपि संतप्ता तद्बहिर्विससर्ज च ॥ १३ ॥
तत् द्विधाऽभूद्बहिः प्राप्य चैकं स्कन्दप्रसूतये ।
अन्यच्छुद्धरसो जातो ह्यापदंबुधिपारदः ॥ १४ ॥
शतयोजननिम्नेषु पञ्चकूपेषु संस्थितः ।
तन्मला धातवो जाता मणयो दिव्यवस्तु च ॥ १५ ॥
तत्तत्क्षेत्रविशेषेण नामवर्णादिकान् गुणान् ।
भिन्नः प्राप्तो रसेन्द्रोऽयं जन्मदारिद्र्यभंजनः ॥ १६ ॥
ते कूपाः प्रळये पञ्च संज्ञा जातादि वै मुखाः(?) ।
ससंचवर्णा निवृत्त्या निक्षिप्ता नियुतानि हि(?) ॥ १७ ॥
पञ्चवर्णानि देवेशि ! सर्वसत्वयुतानि च ।
पूर्वस्यां पारदः श्वेतो नानावर्णैर्गदापहः ॥ १८ ॥
चञ्चलो दक्षिणस्यां तु रसेन्द्रो नीलवर्णवान् ।
दोषहीनोऽतिरूक्षश्च सुतरां चपलः प्रिये ॥ १९ ॥
तेन जाता भुजङ्गेन्द्रा जराजन्मगदोज्झिताः ।

पश्चिमस्यां तु सूताख्यः पीतवर्णोऽतिरूक्षकः ॥ २० ॥
सर्वदोषयुतोऽसौ तु शुद्धोऽष्टादशकर्मभिः ।
सर्वसिद्धिप्रदो देवि देहलोहादिसिद्धिदः ॥ २१ ॥
उत्तरस्या दिशो रक्तः सर्वदोषविवर्जितः ।
रसायनं तु तेनैव देवा जन्मजरोज्झिताः ॥ २२ ॥
मध्ये तु मिश्रको ज्ञेयः सर्ववर्णसमन्वितः ।
बहिश्चन्द्रार्कसच्छायो रसो दोषसमन्वितः ॥ २३ ॥
स चाष्टादशसंस्कारैः शुद्धस्सिद्धिप्रदो भवेत् ।
अमराणां स्वरूपं तु रसेन्द्रो हि महेश्वरः ॥ २४ ॥
पूरयामासतुस्तौ च स्तोकतो ह्यतिदुर्लभौ ।
अन्येषु सर्वकार्येषु सिद्धिदोऽपि हि कर्मभिः ॥ २५ ॥
अष्टादशभिरत्यन्तं शुद्धः सिद्धिप्रदो द्रुतम् ।
रसावतारं यो वेत्ति स तु धार्मिकसत्तमः ॥ २६ ॥
आयुष्यसुखसंतानश्च्चारोग्यमवाप्नुयात् ।

रसपर्यायाः—तन्निरुक्तिश्च ॥

जन्मरोगजरामृत्युदारिद्र्यांभोनिधेः परम् ॥ २७ ॥
पारं ददाति तेनैव पारदः परिकीर्तितः ।
रसोपरसलोहादिकर्तृत्वाच्च रसेन्द्रकः ॥ २८ ॥
मम प्रत्यङ्गसूतत्वात् सूत इत्यभिधीयते ।
सूते यस्मात्सर्वसिद्धिं तस्मात्सूत इति स्मृतः ॥ २९ ॥
मम देहरसो यस्मात् रसस्तस्मात्प्रकीर्तितः ।
जरामरणदारिद्र्यरोगनाशाय शस्यते ॥ ३० ॥
तस्माद्रस इति प्रोक्तो धातुत्वाच्च वरानने ।
सर्वधातून्रसत्येषः तस्माच्च रस ईरितः ॥ ३१ ॥
मित्रकारी सवर्णत्वात्सर्वसिद्धिप्रदायकः ।

पारदो व्याधिसंहर्ता रसेन्द्रो रसकर्मणि ॥ ३२ ॥
धातुकर्मसु सूतस्स्यात् रसेन्द्रो रससाधने ।
सर्वकर्महितत्तया सर्वरूपतया प्रिये ॥ ३३ ॥
सर्वसिद्धिप्रदो देवि मिश्रकोऽयमुदाहृतः ।

रसगता दोषाः ॥

अमोघसिद्धिममलं सर्वसिद्धिप्रदं रसम् ॥ ३४ ॥
आलोक्य त्रिदशास्सर्वे ब्रह्मविष्णुपुरोगमाः ।
मामभिप्रार्थयामासुः स्तोत्रैश्च विविधैः प्रिये ॥ ३५ ॥
" रसेन्द्रदर्शनादेव नरपक्षिमृगादयः ।
सिद्धिं नानाविधां यांति तन्निवारय शंकर " ॥ ३६ ॥
तस्मात् त्रिधा कञ्चुकाभिर्दोषैश्चासौ नियोजितः ।
तदा प्रभृति दोषैश्च कञ्चुकाभिश्च वर्जितः ॥ ३७ ॥
शुद्धोऽष्टादशसंस्कारैस्सूतो भवति सिद्धिदः ।

रसावस्थाः ॥

धूमश्चिटिचिटिश्चैव मण्डूकप्लुतिरेव च ॥ ३८ ॥
सकंपश्च विकंपश्च पञ्चावस्था रसस्य तु ।

रसगतयः ॥

रसस्य गतयः पञ्च जले स्याज्जलवद्गतिः ॥ ३९ ॥
धूमे धूमगतिस्सूतः स्तरणे हंसवद्गतिः ।
किट्टे किट्टनिभा देवि पञ्चमी जीववद्गतिः ॥ ४० ॥
चतस्रो गतयो दृश्याः अदृश्या पंचमी गतिः ।
यन्त्रौषधाद्यै रोद्धव्याश्चतस्रो गतयः प्रिये ॥ ४१ ॥
ध्यानमन्त्रौषधाद्यैश्च रोद्धव्या पञ्चमी गतिः ।

नैसर्गिका दोषाः ॥

पार्थिवश्च तथैवाप्य आग्नेयश्चानिलस्तथा ॥ ४२ ॥

नाभसो गजचर्माख्यः पुण्डरीको विसर्पकृत्।
हारिद्रो रक्तचर्माख्यो नारङ्गो रक्तबिन्दुकः॥ ४३॥
असह्याग्निश्च मण्डूको मला नैसर्गिकाः स्मृताः।

### औपाधिका दोषाः॥

कालिका मलिनी चैव कपोती रक्तकञ्चुका॥ ४४॥
सलोमी गिरिजा चैव पिङ्गली सप्त कञ्चुकाः।
औपाधिका इमा ज्ञेयाः पारदे कीर्तिताः प्रिये!॥ ४५॥

### यौगिका दोषाः॥

विषं नागश्च वङ्गश्च यौगिकश्च त्रयः स्मृताः।

### दोषाणां स्वरूपम्॥

भौमः कुष्ठकरश्चाप्यो दोषोद्रेकं करोति सः॥ ४६॥
आग्नेयः कुरुते दाहं वायव्यश्शूलकृद्भवेत्।
बाधिर्यं नाभसो दोषो गजत्वग्गजचर्मकृत्॥ ४७॥
पुण्डरीको दद्रुकरो विसर्पश्च विसर्पकृत्।
हारिद्रः पाण्डुकृत् प्रोक्तो रक्तचर्माक्षिपाटलम॥ ४८॥
नारङ्गो दुम्बरं कुष्ठं रक्तबीजो मसूरिकाः।
असह्याग्निर्मोहकारी मण्डूकश्चर्मकीलकृत्॥ ४९॥
मलो मूर्च्छाकरो देवि! ख्याता दोषोद्भवास्तथा।
कालिका कृष्णवर्णं च मलिनी मलसंग्रहम्॥ ५०॥
कपोती स्वरसादं च विस्फोटं रक्तकञ्चुका।
सलोमी वमनं कुर्यात् गिरिजा जाड्यकारिणी॥ ५१॥
पिङ्गली नेत्ररूपघ्नी दोषाः कंचुकजास्स्मृताः।
विषं मृत्युप्रदो नागो जाड्यं वङ्गस्सुरार्चिते!॥ ५२॥

कुरुते पूतिगन्धत्वं गदा यौगिकसम्भवाः ।

**रसस्य स्थानान्तरगतिः ॥**

प्रथमार्तवसुस्नाता सुरूपा शुभलक्षणा ॥ ५३ ॥

शुद्धाम्बरधरा माल्यगन्धलिप्ता सुभूषिता ।

उत्तमाश्वसमारूढा रतिसङ्गविवर्जिता ॥ ५४ ॥

अभ्यर्च्य गणनाथं च भैरवं च गुरुं पुरा ।

रसेन्द्रभैरवं ध्यात्वा कूपस्थं पारदं प्रिये ! ॥ ५५ ॥

पश्येच्छीघ्रं ततो गच्छेत् न पुनः पृष्ठमीक्षयेत् ।

एकयोजनमात्रेण कुमारी हयसाधना ॥ ५६ ॥

तदानीमाहरेत्तु कुमारीसंजिघृक्षया ।

कूपमध्यात्समुत्पत्य सोऽनुधावति तां प्रति ॥ ५७ ॥

यावद्योजनमागत्य पुनः कूपे विशेत्क्षणात् ।

परितः कृतगर्तेषु तेषु तेषु च संस्थितम् ॥ ५८ ॥

तं रसेन्द्रं शुचिर्भूत्वा गृह्णीयाद्रसदेशिकः ।

गौरवादग्निवदनात् पतितो दरदाह्वये ॥ ५९ ॥

देशे स सूतो भूलीनः तन्त्रज्ञै रसकोविदः ।

निक्षिप्य मृत्तिकायन्त्रे पातनाख्ये समागतः ॥ ६० ॥

पारदो गृह्यते देवि ! दोषहीनस्स उच्यते ।

एवमेवं तत्र तत्र सिद्धविद्याधरैस्सदा ॥ ६१ ॥

निक्षेपितः पारदेन्द्रो विद्यते देवि ! सिद्धिदः ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ प्रथमोल्लासः ॥

# ॥ द्वितीयोल्लासः ॥

श्रीभैरवी—

रसोपदेशदातारं तच्छिष्यं काकिनीमिलयम् ।
रसपूजां तु पृच्छामि यथावत् कथयस्व मे ॥ १ ॥

श्रीभैरवः—

रसोपदेशकलक्षणम् ।

शृणु भैरवि ! तत्सर्वमपूर्वं कथयामि ते ।
आचार्यो ज्ञानवान्दक्षः शीलवान्गुणवान्शुचिः ॥ २ ॥
धर्मज्ञस्सत्यसन्धश्च रसशास्त्रविशारदः ।
वेदवेदान्ततत्वज्ञो निर्मलश्शिववत्सलः ॥ ३ ॥
देवीभक्तस्सदा शान्तो रसमण्डपकोविदः ।
मन्त्रसिद्धो महावीरो देवतायागतत्परः ॥ ४ ॥
रसदीक्षाविधानज्ञो मन्त्रौषधमहारसान् ।
रागसंख्यां बीजकल्पं द्वन्द्वमेलापनं बिडम् ॥ ५ ॥
रञ्जनं सारणां तैलं दळानि क्रामणानि च ।
वर्णोत्कर्षं मृदुत्वं च जारणं बालवृद्धयोः ॥ ६ ॥
खेचरीं भूचरीं चैव यो वेत्ति स गुरुर्भवेत् ।

शिष्यलक्षणम् ।

गुरुभक्तस्सदाचारो लोभमायाविवर्जितः ॥ ७ ॥
निस्पृहो निरहङ्कारो सत्यवाङ्नियमस्थितः ।
निरालस्यस्स्वधर्मज्ञः षट्कर्मनिरतस्सुधीः ॥ ८ ॥
डम्भहिंसादिनिर्मुक्तः शिवाचारेषु दीक्षितः ।
अत्यन्तसाधकश्शान्तो मन्त्रानुष्ठानतत्परः ॥ ९ ॥

दान्तश्शिष्यस्स विज्ञेयः शक्तिमान् गतमत्सरः ।

## काकिनीलक्षणम् ।

आकुञ्चितस्निग्धकेशा पद्मपत्रायतेक्षणा ॥ १० ॥
दीर्घोत्तुङ्गघ्राणकेशा विद्रुमाधरशोभिता ।
दाडिमीबीजदशना कम्बुग्रीवोन्नतस्तनी ॥ ११ ॥
शिरीषमालामृदुलबाहुपाशविराजिता ।
सङ्कीर्णोरस्थला निम्ननाभिः सूक्ष्मा चलाङ्गका ॥ १२ ॥
तलोदरी रोमराजिवलित्रयविभूषिता ।
विशालजघनोपेता रम्भोरुः सुभगा प्रिया ॥ १३ ॥
कादळोपमजङ्घा च पाटलांघ्रिसरोरुहा ।
शोणामलनखोपेता राजहंसगतिश्शुभा ॥ १४ ॥
कलकोकिलनिध्वानकलकण्ठादिमंजुला ।
पिप्पलच्छदसङ्काशस्मरमन्दिरमण्डिता ॥ १५ ॥
युवती श्यामला स्निग्धा सुरूपा शुभलक्षणा ।
चुम्बनस्पर्शनाश्लेषरतिकर्मविचक्षणा ॥ १६ ॥
बहुले या पुष्पवती पक्षे सा काकिनी स्मृता ।
स्वस्ववर्णसमुद्भूता ग्राह्या वाऽप्यन्यवर्णजा ॥ १७ ॥
रसकर्मणि दीक्षायां प्रयोगे च रसायने ।

## काकिनीत्वापादनम् ।

काकिन्यभावे तरुणी सुरूपाऽन्याऽथवा भवेत् ॥ १८ ॥
गन्धकं गोघृतोपेतं निष्कं त्रिस्सप्तवासरम् ।
प्रातर्दद्यात्तु सा नारी काकिनीसदृशा भवेत् ॥ १९ ॥
धार्मिकः पापभीरुश्च बलवान् ज्ञानवित्तमः ।

न्यायश्रेष्ठस्सर्वसमो रसागमविशारदः ॥ २० ॥
भूपतिश्चास्य मन्त्री च सर्वशास्त्रविशारदः ।
सर्वधर्मरतः श्रेष्ठो न्यायमार्गप्रवर्तकः ॥ २१ ॥

## रसशालानिर्माणम् ।

रसशालां प्रवक्ष्यामि रसेन्द्रस्य वरानने ।
निर्णयेच्च निरातंके देशे च निरुपप्लवे ॥ २२ ॥
आस्तिकप्राणिसुभगे धवधान्यसमाकुले ।
सौराज्ये पूर्णविभवे निरपाये ह्यनिन्दके ॥ २३ ॥
नगरे सर्ववर्णाढ्ये महामाहेश्वरावृते ।
तत्रापि विजये स्थाने पवित्रे च सुरक्षिते ॥ २४ ॥
सव्यालपशुपक्ष्यादिसंबाधपरिवर्जिते ।
समस्थले च प्राकारपरिघार्गळभूषिते ॥ २५ ॥
नारङ्गदाडिमडह(?)जंबीरफलपूरके ।
तालहिन्तालबकुलनारिकेलाम्लपाटले ॥ २६ ॥
अशोकजंबूपनससालपुन्नागमण्डिते ।
कपित्थपूगसरळदेवदारुसुबिल्वके ॥ २७ ॥
धात्रीन्यग्रोधवरणमधूकाम्रातमण्डिते ।
केतकीमल्लिकाजातीयूथिकामालतीयुते ॥ २८ ॥
मागधीकुन्दकुरवतिलके शतपत्रके ।
कुमुदोत्पलकल्हारपुण्डरीकांबुजोत्पलैः ॥ २९ ॥
हंससारसकारण्डचक्रवाकविराजितैः ।
सरोभिश्शीतळजले परितः परिवेष्टिते ॥ ३० ॥
शीतानिलाभिलुळितललितप्रसवाञ्चिते ।
चित्रोद्यानेऽतिरुचिरे रसशालां प्रकल्पयेत् ॥ ३१ ॥
षोडशस्तम्भरुचिरां चतुरश्रां समायताम् ।

मनोज्ञां देवदेवेशि! मत्तवारणसंयुताम् ॥ ३२ ॥
वातायनसमोपेतां कवाटार्गलरक्षिताम् ।
कक्षापताकासंयुक्तां सर्वोपकरणोज्ज्वलाम् ॥ ३३ ॥
समालिखितदिक्पालां समर्चितविनायकाम् ।
प्रतिष्ठितोमामाहेशां द्वारपालैश्च रक्षिताम् ॥ ३४ ॥
भेरीकाहलघण्टादिदिव्यवाद्यविनादिताम् ।
वास्तुलक्षणसंयुक्तां रसशालां प्रकल्पयेत् ॥ ३५ ॥
शालायां वेदिका कार्या सुदृढा दर्पणोपमा ।
इष्टकैः खचिता रम्या ससोपाना सलक्षणा ॥ ३६ ॥
कपिलागोमयालिप्ता हिरण्यकलशावृता ।

## रसेन्द्रपूजाविधिः ।

वेदिकायां रसेन्द्रस्य भद्रपीठं प्रकल्पयेत् ॥ ३७ ॥
भद्रपीठे लिखेत्सम्यक् सिन्धूरेण द्विहस्तकम् ।
षट्कोणं वसुपत्रं च तद्बहिश्चाष्टपत्रकम् ॥ ३८ ॥
कमलं चतुरश्रं च चतुर्द्वारोपशोभितम् ।
रसलिङ्गं न्यसेद्यन्त्रे पुष्पाद्यैश्च समर्चयेत् ॥ ३९ ॥

## रससन्ध्या ॥

अथ सन्ध्यां प्रवक्ष्यामि रसकर्मफलप्रदाम् ।
प्रविशेद्रसशालां च स्नातश्शुद्धोऽनुलेपितः ॥ ४० ॥
शुक्लमाल्याम्बरधरः संयतात्मा जितेन्द्रियः ।
यतवाग्गुरुभक्तश्च सत्यवादी दृढव्रतः ॥ ४१ ॥
उपविश्य समाचामेत् मृदुले चित्रकम्बले ।
वाङ्मयाश्रीयुतं तोयमात्मविद्याशिवात्मकम् ॥ ४२ ॥
तत्वं च शोधयामीति त्रिवारं विधिवत्पिबेत् ।
ध्यायेद्वरदगायत्रीं त्रिवारं प्रजपेत्प्रिये ॥ ४३ ॥

रसभैरवगायत्रीं शृणु भैरवि ! तत्वतः ।

“ ॐ रसेश्वराय विद्महे रसाङ्कुशाय धीमहि ।
तन्नस्सूतः प्रचोदयात् ॥ ”

कोटिसूर्यप्रतीकाशं दशकोटीन्दुसन्निभम् ॥ ४४ ॥

शुभ्रं पञ्चमुखं देवं त्रिणेत्रं चन्द्रशेखरम् ।
अष्टादशभुजं शान्तं पञ्चकृत्यपरायणम् ॥ ४५ ॥

शुक्लमाल्यांबरधरं नागयज्ञोपवीतिनम् ।
शुद्धस्फटिकसङ्काशं प्रेतारूढं रसेश्वरम् ॥ ४६ ॥

नीलकण्ठं च सर्वज्ञं सर्वाभरणभूषितम् ।
वरदं रसशास्त्रं च पारदं भुजगं सुधाम् ॥ ४७ ॥

शङ्खभैषज्यकोदण्डशूलखट्वाङ्गसायकम् ।
डमरुं करवालं च गदां पावकमीश्वरि ! ॥ ४८ ॥

आरोग्यं दिव्यमालां च ह्यभयं द्विनवैः करैः ।
रसाङ्कुशीं निजोत्सङ्गे बिभ्राणं वृषवाहनम् ॥ ४९ ॥

कपर्दभाररुचिरं मन्दहासाननं शिवम् ।
रसभैरवमाचिन्त्य तस्योत्सङ्गे रसांकुशीम् ॥ ५० ॥

अङ्कुशं चाक्षमालां च दधतीं दक्षहस्तयोः ।
पाशाभयं च बिभ्राणां दक्षिणेतरहस्तयोः ॥ ५१ ॥

चतुर्भुजां रक्तवर्णां त्रिणेत्रामिन्दुशेखराम् ।
रक्ताम्बरधरां देवीं कम्बुग्रीवां कृपामयीम् ॥ ५२ ॥

रत्नालङ्काररुचिरां मन्दहासविराजिताम् ।
ध्यायेद्रसाङ्कुशीं देवीं देवस्याभिमुखीं शिवाम् ॥ ५३ ॥

ततो भस्म समादाय वामहस्तेन धारयेत् ।
नैवाधःपतितं पात्रे गृहीत्वा गोमयं सुधीः ॥ ५४ ॥

विशोष्य प्रदहेत्कुण्डे क्रमेण धारयेत्प्रिये ! ।
पुनरुद्धारणं चैव सद्योजातादिभिर्भवेत् ॥ ५५ ॥
निरीक्षणं प्रोक्षणं च ताडनाभ्युक्षणं तथा ।
सद्योजातादिभिर्मन्त्रैरभिमन्त्र्य च तत्पुनः ॥ ५६ ॥
मूर्ध्नि वक्त्रे च हृदये गुह्ये चरणयोः क्रमात् ।
ईशानाद्यैः पञ्चमन्त्रैस्तत्तत्स्थानेषु निक्षिपेत् ॥ ५७ ॥
सर्वाङ्गोद्धूलनं कुर्यात् भस्मना पञ्चभिश्च तैः ।
संकल्पं विधिवत्कुर्यात् रसाचार्यो महेश्वरः ॥ ५८ ॥
प्राणायामत्रयं कृत्वा मूलमन्त्रेण पार्वति ! ।
प्रोक्षयेन्मन्त्रितं तोयं मूर्ध्नि वामकरस्थितम् ॥ ५९ ॥
आचम्य च पुनस्तोयं मूलमन्त्रेण मन्त्रितम् ।
त्रिधा दक्षिणहस्तस्थं पिबेदाचमनं ततः ॥ ६० ॥
अर्घ्यं मूलेन दत्वा त्रिः पुनराचम्य पार्वति ! ।
अष्टोत्तरशतं जप्त्वा मूलमन्त्रमुदारधीः ॥ ६१ ॥
समर्पयेच्च सूताय रससन्ध्येयमीश्वरि ! ।
त्रिकालमेवं कुर्वीत सन्ध्यां सर्वाघनाशिनीम् ॥ ६२ ॥

## रसांकुशरसांकुशी- मूलमन्त्रोद्धारः ॥

वक्ष्येऽहं मूलमन्त्रस्य शृणूद्धारक्रमं प्रिये ! ।
वाङ्माया कमला चाथ चतुर्थ्यन्तो रसेश्वरः ॥ ६३ ॥
ततो महाकालपदं महाबलपदं ततः ।
अघोरभैरवपदं वज्रवीरपदं ततः ॥ ६४ ॥
क्रोधकालपदं चैतत्सर्वं संबुद्धिसंयुतम् ।
कषष्टवर्गान्तयुतस्साद्यो(स्याद्रौ ?)दन्तस्सबिंदुकः ॥ ६५ ॥
इदं पञ्चाक्षरं कूटं ततः कर्णसंयुतः ।
सविसर्गोऽप्ययं कूटश्चतुर्वर्णात्मकः प्रिये ॥ ६६ ॥

रसेन्द्रभैरवस्यायं मन्त्रो द्वात्रिंशदर्णकः ।
गोपितस्सर्वतन्त्रेषु रहस्योऽत्यन्तदुर्लभः ॥ ६७ ॥
रसांकुशामन्त्रमहं वक्ष्यामि शृणु भैरवि ! ।
वाङ्माया भुवनेशी च रमा मकरकेतनः ॥ ६८ ॥
रसांकुशा चतुर्थ्यां च नमोन्तो द्वादशार्णकः ॥
मन्त्रो रसाङ्कुशायाश्च तव देव्याः प्रकीर्तितः ॥ ६९ ॥
रसभैरवमन्त्रस्य छन्दोऽनुष्टुप् प्रकीर्तितः ।
नन्दिकेश ऋषिः प्रोक्तो देवः श्रीरसभैरवः ॥ ७० ॥
रं बीजं लं भवेत्कीलं अन्त्यार्णश्शक्तिरीरितः ।
रसांकुशायास्स्कन्दस्स्यादृं बीजं कीलकं रसः ॥ ७१ ॥
नमश्शक्तिरिति ख्यातं रहस्यं मन्त्रमुत्तमम् ।

रसलिङ्गार्चना ।

रसलिङ्गार्चनं वक्ष्ये भैरवि ! शृणु तत्वतः ॥ ७२ ॥
वामपादं पुरस्कृत्य प्रविशेद्यागमन्दिरम् ।
आसने मृदुले स्थित्वा शुचिस्संयतमानसः ॥ ७३ ॥
प्राणानायम्य संकल्प्य श्रीगुरुं शिरसि स्थितम् ।
शुद्धस्फटिकसंकाशं प्रशान्तं वरदाभयम् ॥ ७४ ॥
स्मरेत्तन्नाम पूर्वं च तदनुज्ञामवाप्य च ।
दिवि स्थिताश्च ये भूताः भूमिस्था विघ्नकारिणः ॥
पाताळे ये महाभूताः ते नश्यन्तु शिवाज्ञया ।
अनेनैव च मन्त्रेण दिग्विदिक्ष्वक्षतान् क्षिपेत् ॥ ७६ ॥
पुष्पमस्त्राय फडिति निक्षिपेदन्तरिक्षके ।
सर्वशत्रुप्रमथनी चेति दक्षिणपार्ष्णिकाम् ॥ ७७ ॥
त्रिवारं घातयेद्भूमौ प्राणायामो भवेत्पुनः ।
रसेन्द्रभद्रपीठस्य दक्षिणे चतुरश्रकम् ॥ ७८ ॥

मण्डलं हस्तमात्रं च सार्धं कुर्यात्सुशोभनम् ।
त्रिकोणवृत्तषट्कोणचतुरश्रं भवेत्क्रमात् ॥ ७९ ॥

इन्द्रादिलोकपालांश्च तत्तत्क्रमपुरस्सरम् ।
प्रणवादिनमोऽन्तैश्च पूजयेत्कुसुमाक्षतैः ॥ ८० ॥

वाङ्मायाकमलाबीजैर्हृदयादीन्प्रपूजयेत् ।
प्राच्यामवाच्यां क्रमशः प्रतीच्योत्तरयोश्शिवे ! ॥ ८१ ॥

ईशानलासुरमरुत्कोणे नेत्रे प्रपूजयेत् ।
अस्त्रं सर्वासु काष्ठासु चतुर्थ्यन्तं फडन्तकम् ॥ ८२ ॥

छोटिका दर्शयेदष्ट पश्चादाधारमाहरेत् ।
तत्रैवावाहयेदग्निमण्डलं बीजमूलकम् ॥ ८३ ॥

अग्नेर्दश कलास्तत्र पूज्या गन्धाक्षतैः क्रमात् ।
ततः पात्रं समादाय भावयेत्सूर्यमण्डलम् ॥ ८४ ॥

मार्तण्डद्वादशकलास्तत्रार्च्याश्चन्दनाक्षतैः ।
गन्धोत्तमान्वितं तोयं पूरयेदर्घ्यपात्रकम् ॥ ८५ ॥

चिन्तयेदैन्दवं बिम्बं तत्कलास्तत्र पूजयेत् ।
मध्ये त्रिकोणमालिख्य शक्तिबीजं समुल्लिखेत् ॥ ८६ ॥

तत्र क्षिपेत् गन्धपुष्पं मूलमन्त्रं त्रिधा जपेत् ।
पूर्वादिदिक्षु चतसृषु चतुष्पात्राणि धारयेत् ॥ ८७ ॥

पूरयेत्पूर्ववत्तानि गन्धपुष्पाक्षतैर्यजेत् ।
प्रोक्षयेन्मूलमन्त्रेण मध्यपात्रोदकेन च ॥ ८८ ॥

पात्राणि निजगात्राणि पूजाद्रव्याणि सर्वतः ।
स्वाग्रतश्चतुरश्रं च मण्डलं परिकल्पयेत् ॥ ८९ ॥

पूर्ववत्पञ्चपात्राणि पूरयेच्छुद्धवारिणा ।
निक्षिपेन्मध्यमे सूतं रत्नं दक्षिणके क्षिपेत् ॥ ९० ॥

स्वर्णं तद्रागपात्रे च तत्समीपे कुशं न्यसेत् ।
रसपात्रसमीपस्थे पात्रे स्याद्गन्धकम् ॥ ९१ ॥
प्रतिपात्रे त्रिकोणं च लिखेन्मायासमन्वितम् ।
न्यसेद्द्रव्याक्षतं पुष्पं त्रिधा मूलेन मन्त्रयेत् ॥ ९२ ॥
सप्तधा रसपात्रं च मूलमन्त्रेण मन्त्रयेत् ।
रसपात्रोदकेनैव पूजाद्रव्याणि चात्मनः ॥ ९३ ॥
शरीरमुत्तमाङ्गं च प्रोक्षयेत्पीठदीपकम् ।
आसनस्य ऋषिर्मेरुः सुतलं छन्द ईरितम् ॥ ९४ ॥
कूर्मरूपी नु भगवान् देवता परिकीर्तिता ।
" पृथ्वि ! त्वया धृता लोका देवि ! त्वं विष्णुना धृता ॥
त्वं च धारय मां देवि ! पवित्रं कुरु चासनम् " ।
अनेनैव तु मन्त्रेण चासने कुसुमं क्षिपेत् ॥ ९६ ॥

॥ भूतशुद्धिः ॥

भूतशुद्धिं प्रवक्ष्यामि पृथ्वी पीता सवज्रका ।
कठिना लंबीजयुता जान्वन्ताङ्गुष्ठमूलतः ॥ ९७ ॥
ध्येया जान्वादिकट्यन्तं उपर्यस्यार्धचन्द्रका(गा) ।
शुभ्रा वं बीजसहिता विचिन्त्या द्रवरूपिका ॥ ९८ ॥
कट्यादि हृदयान्तं च वह्निर्ध्येयस्त्रिकोणगः ।
रं बीजं रक्तवर्णश्च स्वस्तिकेन विभूषितः ॥ ९९ ॥
हृदादिकण्ठपर्यन्तं वायुः स्मर्योऽञ्जनप्रभः ।
यं बीजसहितो देवि ! षड्बिन्दुपरिभूषितः ॥ १०० ॥
षट्कोणः कर्णदेशाच्च ब्रह्मरन्ध्रान्तमीश्वरि ! ।
वर्तुलं हंबीजयुतं महाकृष्णं वियत्स्मरेत् ॥ १०१ ॥
पृथिवीमप्सु च तास्त्वग्नौ स च वायौ स सोऽम्बरे ।
मेळयित्वा द्वादशान्ते स्थापयेत्परमेश्वरि ! ॥ १०२ ॥

यं बीजेनात्मनो देहं मूलाधाराद्विशोषयेत् ।
षडाधाराणि निर्भिद्य यावत् ब्रह्मबिलं प्रिये ! ॥ १०३ ॥
रं बीजेन दहेद्देहं सर्वमाप्लावयेत्ततः ।
वंबीजेन द्रवीभूतं ब्रह्मरन्ध्रेन्दुमण्डलात् ॥ १०४ ॥
स्यन्दमानामृतेनैव तनुमाप्लावयेच्छिवे ! ।
आकाशाद्वायुमादद्यात्तस्माद्वह्निं समाहरेत् ॥ १०५ ॥
वह्नेरापस्समादेयास्ताभ्यो भूमिं समाहरेत् ।
एवं पञ्च च भूतानि स्वस्वस्थाने नियोजयेत् ॥ १०६ ॥
वामकुक्षिस्थितं पापपुरुषं कृष्णरूपिणम् ।
ध्यायेत्तं निर्गतं देवि ! खड्गचर्मधरं परम् ॥ १०७ ॥
न्यासं रसांकुशेनैव कृत्वाऽङ्गुलिहृदादिषु ।

" ऐं ह्रीं श्रीं क्ष्मौं क्ष्मं हां ह्रीं ह्रूं ह्रैं ह्रौं हः फट् रसेश्वराय महाकालभैरवाय शिखायै वषट् । रौद्ररूपाय कृष्णपिङ्गललोचनाय अवनर (२) अवतारय (२) जल्प (२) जल्पय (२) शुभाशुभं कथय (२) कथापय (२) मम महारक्षां कुरु कुरु कारय (२) मम रससिद्धिं देहि देहि ॥८८८ ॥

महाकालभैरवाय हृदयाय नमः । पूर्ववन्महाबलभैरवाय शिरसे स्वाहा । पूर्ववत् अघोरभैरवाय शिखायै वषट् । पूर्ववत् वज्रवीरभैरवाय कवचाय हुं । पूर्ववत् क्रोधभैरवाय नेत्रत्रयाय वौषट् । पूर्ववत् कालभैरवाय अस्त्राय फट् । एवमङ्गुलिन्यासः ॥

प्रतिबीजैस्समुच्चार्य चतुर्थ्यन्तं रसांकुशम् ॥ १०८ ॥
हृदादिपञ्चस्थानेषु विन्यसेद्बीजपञ्चकम् ।
ततश्चास्त्राय फडिति चोटिकां दिक्षु दर्शयेत् ॥ १०९ ॥
मातृकां च कलान्यासं पाज्यो(बीज ?)न्यासं च कोळकम् ।
प्रकुर्वीत ततो देवि ! चान्तर्यजनमाचरेत् ॥ ११० ॥

कुम्भकेन हृदम्भोजं संफुल्लं विदधाति हि।
तत्पद्मकर्णिकायां च रसमूर्तिं च चिन्तयेत्॥ १११॥

मानसैर्गन्धपुष्पाद्यैरुपचारैः प्रपूजयेत्।
स्वदेहं गन्धपुष्पाद्यैरलंकुर्याद्यथासुखम्॥ ११२॥

अन्तर्यजनमेवं स्यात् बहिर्यजनमाचरेत्।
अस्त्रेण लिङ्गं संप्रोक्ष्य लिङ्गशुद्धिं विधाय च॥

अस्त्रपूतेन तोयेन पूरितां वर्धनीं प्रिये!।
दक्षपार्श्वे संनिवेश्य पूजयेत्तां विधानतः॥ ११४॥

पीठे सिन्दूररजसा विदध्याच्चतुरश्रकम्।
षट्कोणं विलिखेत्तस्मिन् ऋजुं स्वर्णशलाकया॥

वसुपत्रं चाष्टपत्रे सचतुर्द्वारभूगृहम्।
चतुरश्रं बहिर्भागे दिक्पालान्पूजयेत्प्रिये!॥ ११६॥

नन्दिनं च महाकालं भृङ्गिं रिटिं महाबलम्।
कुम्भकर्णं च सुग्रीवं भृङ्गकं च हलायुधम्॥ ११७॥

चतुर्द्वारे तु विन्यस्य द्वौ द्वौ प्रागादिपूजितौ।
रुक्मं रौप्यं ताम्रसीसं वङ्गकान्तशठं क्रमात्॥ ११८॥

प्रागादिद्वारेषु संपूज्य क्रमाद्द्वे महेश्वरि।
भूगृहाभ्यन्तरे प्राच्यां शुक्रमग्नौ ग्रहं यजेत्॥ ११९॥

दक्षिणस्यां यजेद्रुद्रमासुरे च समीरणम्।
पश्चिमस्यां शिवं वह्निं वायव्यामुत्तरे हनुमाम्॥ १२०॥

यजेत्पावकमैशान्यां ततश्चाष्टदलाग्रके।
प्रागादौ गन्धकं ताळं कासीसं च मनश्शिलाम्॥

कंकुष्ठं माक्षिकं चैव नृपावर्तं च गैरिकम्।
लेपिका क्षेपिका चैव क्रामिका रंजिका तथा॥ १२२॥

यं बीजेनात्मनो देहं मूलाधाराद्विशोषयेत् ।
षडाधाराणि निर्भिद्य यावत् ब्रह्मबिलं प्रिये ! ॥ १०३ ॥
रं बीजेन दहेद्देहं सर्वमाप्लावयेत्ततः ।
वंबीजेन द्रवीभूतं ब्रह्मरन्ध्रेन्दुमण्डलात् ॥ १०४ ॥
स्यन्दमानामृतेनैव तनुमाप्लावयेच्छिवे ! ।
आकाशाद्वायुमादद्यात्तस्माद्वह्निं समाहरेत् ॥ १०५ ॥
वह्नेरापस्समादेयास्ताभ्यो भूमिं समाहरेत् ।
एवं पञ्च च भूतानि स्वस्वस्थाने नियोजयेत् ॥ १०६ ॥
वामकुक्षिस्थितं पापपुरुषं कृष्णरूपिणम् ।
ध्यायेत्तं निर्गतं देवि ! खड्गचर्मधरं परम् ॥ १०७ ॥
न्यासं रसांकुशेनैव कृत्वाऽङ्गुलिहृदादिषु ।

"ऐं ह्रीं श्रीं क्ष्मौं क्ष्मं ह्रां ह्रीं हुं हैं ह्रौं हः फट् रसेश्वराय महाकालभैरवाय शिखायै वषट् । रौद्ररूपाय कृष्णपिङ्गललोचनाय अवतर (२) अवतारय (२) जल्प (२) जल्पय (२) शुभाशुभं कथय (२) कथापय (२) मम महारक्षां कुरु कुरु कारय (२) मम रससिद्धिं देहि देहि १८८८ ॥

महाकालभैरवाय हृदयाय नमः । पूर्ववन्महाबलभैरवाय शिरसे स्वाहा । पूर्ववत् अघोरभैरवाय शिखायै वषट् । पूर्ववत् वज्रवीरभैरवाय कवचाय हुं । पूर्ववत् क्रोधभैरवाय नेत्रत्रयाय वौषट् । पूर्ववत् कालभैरवाय अस्त्राय फट् । एवमङ्गुलिन्यासः ॥

प्रतिबीजैस्समुच्चार्य चतुर्थ्यन्तं रसांकुशम् ॥ १०८ ॥
हृदादिपञ्चस्थानेषु विन्यसेद्बीजपञ्चकम् ।
ततश्चास्त्राय फडिति चोटिकां दिक्षु दर्शयेत् ॥ १०९ ॥
मातृकां च कलान्यासं पाज्यो(बीज ?)न्यासं च कोळकम् ।
प्रकुर्वीत ततो देवि ! चान्तर्यजनमाचरेत् ॥ ११० ॥

कुम्भकेन हृदम्भोजं संफुल्लं विदधाति हि ।
तत्पद्मकर्णिकायां च रसमूर्तिं च चिन्तयेत् ॥ १११ ॥

मानसैर्गन्धपुष्पाद्यैरुपचारैः प्रपूजयेत् ।
स्वदेहं गन्धपुष्पाद्यैरलंकुर्याद्यथासुखम् ॥ ११२ ॥

अन्तर्यजनमेवं स्यात् बहिर्यजनमाचरेत् ।
अर्घ्येण लिङ्गं संप्रोक्ष्य लिङ्गशुद्धिं विधाय च ॥

मन्त्रपूतेन तोयेन पूरितां वर्धनीं प्रिये ! ।
रसपार्श्वे संनिवेश्य पूजयेत्तां विधानतः ॥ ११४ ॥

पीठे सिन्दूररजसा विलिख्याच्चतुरश्रकम् ।
षट्कोणं विलिखेत्तस्मिन् ऋजुं स्वर्णशलाकया ॥

वसुपत्रं चाष्टपत्रं सच्चतुर्द्वारभूगृहम् ।
चतुरश्रं बहिर्भागे दिक्पालान्पूजयेत्प्रिये ! ॥ ११६ ॥

नन्दिनं च महाकालं भृङ्गिं रिटिं महाबलम् ।
कुम्भकर्णं च सुग्रीवं भूतकं च दृढायुधम् ॥ ११७ ॥

चतुर्द्वारे तु विन्यस्य द्वौ द्वौ प्रागादिपूजितौ ।
अभ्रं रौप्यं ताम्रसीसं वङ्गकान्तशठं क्षयः ॥ ११८ ॥

प्रागादिद्वारेषु संपूज्य क्रमाद् द्वे महेश्वरि ।
भूगृहाभ्यन्तरे प्राच्यां शुक्रमग्नौ ग्रहं यजेत् ॥ ११९ ॥

दक्षिणस्यां यजेद्रुद्रभास्वरे च समीरणम् ।
पश्चिमस्यां शिवं वह्निं वायव्यामुत्तरे हनुमाम् ॥ १२० ॥

यजेत्पावकमैशान्यां ततश्चाष्टदलाग्रके ।
प्रागादौ गन्धकं तालं कासीसं च मनश्शिलाम् ॥

कंकुष्टं माक्षिकं चैव नृपावर्तं च गैरिकम् ।
लेपिका क्षेपिका चैव कामिका रंजिका तथा ॥ १२२ ॥

लोहटी वन्धकारी च भूचरी मृत्युनाशिनी ।
विभूतिः खेचरी चैव दश दूत्यः क्रमेण च ॥ १२३ ॥

पूज्यास्त्वष्टदले पद्मे ह्यूर्ध्वाधस्ताद्दलेषु च ।
माणिक्यमुक्तावैडूर्यनीलगारुडविद्रुमाः ॥ १२४ ॥

गोमेदः पुष्परागश्च मणयस्सर्वसिद्धिदाः ।
द्वितीयवसुपत्रस्य दलाग्रेषु प्रपूजयेत् ॥ १२५ ॥

अष्टादशभुजा रुद्राः पञ्चवक्त्रास्त्रियम्बकाः ।
चन्द्रार्धशोभिमकुटाः नीलग्रीवा वृषध्वजाः ॥ १२६ ॥

स्वस्ववर्णधरास्सर्वे त्वष्टविद्येश्वरास्तु ते ।
पूजनीया महेशानि ! द्वितीयेऽष्टदलाम्बुजे ॥ १२७ ॥

रसकं विमलं ताप्यं चपलं तुत्थमञ्जनम् ।
षट्कोणस्य दलाग्रेषु सख्यस्स्युस्सर्वसिद्धिदाः ॥ १२८ ॥

वज्रवैक्रान्तवज्राभ्रकान्तपाषाणटङ्कणम् ।
मूनागश्शक्तयश्चैताः षडश्रेषु प्रपूजयेत् ॥ १२९ ॥

हिंगुळं सस्यकं चैव शिलाजत्वग्निजारकम् ।
तत्कर्णिकायां पूर्वादौ पराशक्तिचतुष्टयम् ॥ १३० ॥

हिंगुळं मालिनी शक्तिः परा शक्तिश्च सस्यकम् ।
शिलाजत्वपरा शक्तिरग्निजारः परापरा ॥ १३१ ॥

प्रणवादिनमोऽन्तैश्च तत्तन्नामपुरस्सरम् ।
सचतुर्थ्या यजेदेतान् रसावरणसंस्थितान् ॥ १३२ ॥

मध्ये तु दिव्यशक्तीनां पूजयेद्रसभैरवम् ।
सप्तविंशतिनिष्के तु द्राविते शुद्धहाटके ॥ १३३ ॥

नवनिष्कं सूतराजं विन्यसेच्चैकमानसः ।
मधूच्छिष्टकृते यन्त्रे लिङ्गाकारे सुलक्षणे ॥ १३४ ॥

निष्टप्ते हाटके सूतं प्रतप्ते प्रक्षिपेच्छिवे ! ।
मुहूर्तात्स्वाङ्गशीतं तं रसलिङ्गं पयोऽन्तरे ॥ १३५ ॥

स्थापयेत् पुनरादाय ह्युपरिस्थं मलं हरेत् ।
संतृप्य च समीकृत्य लिङ्गं संप्रोक्षयेत्ततः ॥ १३६ ॥

एवं रौप्यादिलोहैर्वा व्यस्तैर्वाऽथ समस्तकैः ।
अभ्रकादिमसत्वैर्वा लिङ्गं कुर्यात्स्वशक्तितः ॥ १३७ ॥

रसलिङ्गं द्विधा प्रोक्तं सकलं निष्कलं प्रिये ! ।
पूर्वोक्तं सकलं लिङ्गं निष्कलं केवलो रसः ॥ १३८ ॥

बुभुक्षूणां हि सकलं निष्कलं मोक्षमिच्छताम् ।
रसलिङ्गं हेमबद्धं ब्रह्मविष्ण्वीशवह्नयः ॥ १३९ ॥

अपूजयन् रूप्यबद्धं गणेशस्कन्दनन्दिनः ।
त्वयाऽभ्रसत्वसंबद्धं रसलिङ्गं प्रपूजितम् ॥ १४० ॥

ताम्रबद्धं रमावाणीकुबेरेन्द्रजलाधिपाः ।
कान्तबद्धं यममरुन्नैऋतास्समपूजयन् ॥ १४१ ॥

वङ्गबद्धं सिद्धसाध्यविद्याधरमहर्षयः ।
नागबद्धं नागवसुगन्धर्वोरगकिन्नराः ॥ १४२ ॥

तीक्ष्णबद्धं भद्रकाळीयक्षभूतपिशाचकाः ।
मुण्डबद्धं च दुर्गाम्बा चाप्सरोगुह्यकासुराः ॥ १४३ ॥

निष्कळं रसलिङ्गं तु भृंग्याद्या योगिनोऽर्च्चयन् ।
उक्तानि रसलिङ्गानि मानवा फलकांक्षिणः ॥ १४४ ॥

पूजयेयुः प्रयत्नेन नित्यं सर्वार्थसिद्धये ।
उक्तानां रसलिङ्गानां प्राणसंस्थापनं शृणु ॥ १४५ ॥

प्राणानायम्य विधिवत् प्राणशक्तिं स्मरेच्छिवे ! ।
शोणिताम्भोधिमध्यस्थरक्ताम्भोजासनां पराम ॥ १४६ ॥

रक्तांबरधरां रक्तां नानारत्नकिरीटिनीम् ।
विनलेन्दुकलाजूटां रविवह्नीन्दुलोचनाम् ॥ १४७ ॥

कर्णताटङ्ककिरणारुणीकृतकपोलकाम् ।
श्रीपर्णीकुसुमाकारनासावंशविराजिताम् ॥ १४८ ॥

प्रवाळपद्मरागाभबिम्बाधरविराजिताम् ।
कुरुविन्ददलाकारश्लक्ष्णदन्ताभिशोभिताम् ॥ १४९ ॥

शङ्खाभिरामकण्ठस्थमुक्ताहारविराजिताम् ।
अङ्गुलीयककेयूरकटकादिविभूषिताम् ॥ १५० ॥

पाशांकुशेक्षुकोदण्डपुष्पबाणाभयप्रदाम् ।
रुधिरापूर्णपात्रेण शोभमानकराम्बुजाम् ॥ १५१ ॥

पीनस्तनतटोद्भासिहारकुङ्कुममण्डिताम् ।
काञ्चीमञ्जीरकटकपादाङ्गुलिविभूषिताम् ॥ १५२ ॥

प्राणप्रतिष्ठां लिङ्गस्य कुर्वीतैकाग्रमानसः ।
सृणिं म(णिं ?)ञ्च पाशश्च हंसः सोहमिति प्रिये ! ॥

अमुष्य लिङ्गस्य प्राण इह प्राणः । अमुष्य लिङ्गस्य जीव इह स्थितः । अमुष्य लिङ्गस्य सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु सोऽहं हंसः स्वाहा । यरलवशषसहों ॥ क्रों ह्रीं आं ॥

एतन्मन्त्रं समुच्चार्य प्राणानावाहयेत्प्रिये ! ।

"अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुस्सामानि छन्दांसि । श्रीपराशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । अमुष्य लिङ्गस्य प्राणप्रतिष्ठायां विनियोगः ॥

आसनं पूजयेत्पूर्वं गन्धपुष्पाक्षतादिभिः ॥ १५४ ॥

ह्रां आधारशक्त्यै नमः । ह्रीं कूर्माय नमः । ह्रूं अनंताय नमः । ह्रैं पृथिव्यै नमः । ह्रौं कन्दाय नमः । अंकुराय नाळाय कर्णि(न्द)केभ्यः दलेभ्यः केसरेभ्यः कर्णिकायै तन्मध्ये धर्माय ज्ञानाय वैराग्याय ऐश्वर्याय अधर्माय अज्ञानाय अवैराग्याय अनैश्वर्याय नमः ॥

हृदंभोजस्थितं देवं सह देव्या महेश्वरि ! ।
आवाहयेत्सावरणं स्वाङ्गशक्तिसमन्वितम् ॥ १५५ ॥
पीठे संस्थापयेल्लिङ्गं मूलेनार्घ्यं कुशोदकैः ।
पाद्यं गन्धोदकैर्दद्यात् हैमेनाचमनं भवेत् ॥ १५६ ॥
रत्नोदकैर्भवेत्स्नानं सर्वं मूलेन शांभवि ! ।
एकादशेन रुद्रेण पवमानेन पार्वति ! ॥ १५७ ॥
चमकैः पुरुषसूक्तैश्च फलैः पञ्चामृतैरपि ।
नाळिकेरेक्षुसलिलैः सुगन्धोदकवारिणा ॥ १५८
संस्नाप्य च ततो लिङ्गं पीठे संस्थापयेच्छिवे ! ।

लिङ्गस्य परितः— ॐ वामदेवाय नमः, ज्येष्ठाय, रुद्राय, कालाय, कलविकरणाय, बलाय, बलविकरणाय, बलप्रमथनाय, सर्वभूतदमनाय इत्यष्टासु दिक्षु मनोन्मनाय इति शिवसन्निधौ पुष्पैरभ्यर्च्य । ॐ ह्रां हृदयाय नमः । ॐ ह्रीं शिरसे स्वाहा । ॐ ह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुं ॥ ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ हः अस्त्राय फट् । ह्रां ईशानाय नमः । ह्रीं तत्पुरुषाय नमः । ह्रूं अघोराय नमः । ह्रैं वामदेवाय नमः । ह्रौं सद्योजाताय नमः ॥

मूलमन्त्रेण देवाय दद्यात्पुष्पांजलिं प्रिये ! ॥ १५९ ॥
मूलमन्त्रषडङ्गेन न्यासं कुर्याच्छिवस्य च ।
लिङ्गस्य दक्षिणे भागे ऋगादीन्निगमानपि ॥ १६० ॥
ब्रह्माणं पृथिवीं तोयं विष्णुं रुद्रं हुताशनम् ।
ईश्वरं पवनं चैवमाकाशं च सदाशिवम् ॥ १६१ ॥

रक्तांबरधरां रक्तां नानारत्नकिरीटिनीम् ।
विनलेन्दुकलाजूटां रविवह्नीन्दुलोचनाम् ॥ १४७ ॥

कर्णताटङ्ककिरणारुणीकृतकपोलकाम् ।
श्रीपर्णीकुसुमाकारनासावंशविराजिताम् ॥ १४८ ॥

प्रवाळपद्मरागाभबिम्बाधरविराजिताम् ।
कुरुविन्ददलाकारश्लक्ष्णदन्ताभिशोभिताम् ॥ १४९ ॥

शङ्खाभिरामकण्ठस्थमुक्ताहारविराजिताम् ।
अङ्गुलीयककेयूरकटकादिविभूषिताम् ॥ १५० ॥

पाशांकुशेक्षुकोदण्डपुष्पबाणाभयप्रदाम् ।
रुधिरापूर्णपात्रेण शोभमानकराम्बुजाम् ॥ १५१ ॥

पीनस्तनतटोद्भासिहारकुङ्कुममण्डिताम् ।
काञ्चीमञ्जीरकटकपादाङ्गुलिविभूषिताम् ॥ १५२ ॥

प्राणप्रतिष्ठां लिङ्गस्य कुर्वीतैकाग्रमानसः ।
सृणिं म(णिं ?)श्च पाशश्च हंसः सोहमिति प्रिये ! ॥

अमुष्य लिङ्गस्य प्राण इह प्राणः । अमुष्य लिङ्गस्य जीव इह स्थितः । अमुष्य लिङ्गस्य सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु सोऽहं हंसः स्वाहा । यरलवशषसहों ॥ क्रों ह्रीं आं ॥

एतन्मन्त्रं समुच्चार्य प्राणानावाहयेत्प्रिये ! ।

"अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुस्सामानि छन्दांसि । श्रीपराशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । अमुष्य लिङ्गस्य प्राणप्रतिष्ठायां विनियोगः ॥

आसनं पूजयेत्पूर्वं गन्धपुष्पाक्षतादिभिः ॥ १५४ ॥

ह्रां आधारशक्त्यै नमः। ह्रीं कूर्माय नमः। ह्रूं अनंताय नमः। ह्रैं पृथिव्यै नमः। ह्रौं कन्दाय नमः। अंकुराय नाळाय कर्णि(न्द्र)केभ्यः दलेभ्यः केसरेभ्यः कर्णिकायै तन्मध्ये धर्माय ज्ञानाय वैराग्याय ऐश्वर्याय अधर्माय अज्ञानाय अवैराग्याय अनैश्वर्याय नमः।

हृदंभोजस्थितं देवं सह देव्या महेश्वरि ! ।
आवाहयेत्सावरणं स्वाङ्गशक्तिसमन्वितम् ॥ १५५ ॥
पीठे संस्थापयेल्लिङ्गं मूलेनार्घ्यं कुशोदकैः ।
पाद्यं गन्धोदकैर्दद्यात् हैमेनाचमनं भवेत् ॥ १५६ ॥
रत्नोदकैर्भवेत्स्नानं सर्वं मूलेन शांभवि ! ।
एकादशेन रुद्रेण पवमानेन पार्वति ! ॥ १५७ ॥
चमकैः पुरुषसूक्तैश्च फलैः पञ्चामृतैरपि ।
नाळिकेरेक्षुसलिलैः सुगन्धोदकवारिणा ॥ १५८
संस्नाप्य च ततो लिङ्गं पीठे संस्थापयेच्छिवे ! ।

लिङ्गस्य परितः— ॐ वामदेवाय नमः, ज्येष्ठाय, रुद्राय, कालाय, कलविकरणाय, बलाय, बलविकरणाय, बलप्रमथनाय, सर्वभूतदमनाय इत्यष्टासु दिक्षु मनोन्मनाय इति शिवसन्निधौ पुष्पैरभ्यर्च्य। ॐ ह्रां हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ॐ ह्रूं शिखायै वषट्। ॐ ह्रैं कवचाय हुं ॥ ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्। ह्रां ईशानाय नमः। ह्रीं तत्पुरुषाय नमः। ह्रूं अघोराय नमः। ह्रैं वामदेवाय नमः। ह्रौं सद्योजाताय नमः॥

मूलमन्त्रेण देवाय दद्यात्पुष्पांजलिं प्रिये ! ॥ १५९ ॥
मूलमन्त्रषडङ्गेन न्यासं कुर्याच्छिवस्य च ।
लिङ्गस्य दक्षिणे भागे ऋगादीन्निगमानपि ॥ १६० ॥
ब्रह्माणं पृथिवीं तोयं विष्णुं रुद्रं हुताशनम् ।
ईश्वरं पवनं चैवमाकाशं च सदाशिवम् ॥ १६१ ॥

श्रीकण्ठममृतांशुं च भैरवं भास्करं तथा ।
परं शिवं परात्मानं पूजयेन्मतिमान् क्रमात् ॥ १६२ ॥

लिङ्गस्य वामपार्श्वे तु ब्राह्मयादीस्सप्त मातरः ।
महालक्ष्मीं महाकाळीं दुर्गां स्कन्दविनायकौ ॥ १६३ ॥

योगिन्यः क्षेत्रपालाश्च शक्तयश्चादिपीठकाः ।
ओड्याणशक्तिर्जालन्ध्री तथा पूर्णा गिरिः प्रिये ! ॥

कामेश्वरीति संपूज्या रुद्रशक्तिस्सुरार्चिते ! ।
लोपामुद्रा कुब्जिका च कालसंकर्षणी तथा ॥ १६५ ॥

मधुरादिरसा गन्धाः सर्वधान्यानि पार्वति ! ।
दिव्यौषध्यस्सुधा हाला विषं चर्मादिधातवः ॥ १६६ ॥

इन्द्रियाणि मनो बुद्धिरहङ्कारश्च चेतनः ।
शब्दाद्या विषयाः पूज्या देहाङ्गानि च शाम्भवि ! ॥

लिङ्गस्य पश्चिमे भागे समुद्रास्सरितो नदाः ।
पर्वता मेरुमुख्याश्च भास्कराद्या नव ग्रहाः ॥ १६८ ॥

ज्योतिश्चक्रं ध्रुवश्चैव शिशुमारः प्रजापतिः ।
कलाः काष्ठाश्च घटिका मुहूर्ताः प्रहरा दिनम् ॥ १६९ ॥

रात्रिः पक्षश्च मासश्च ऋतुकालायनानि च ।
संवत्सरा युगाः कल्पा दिशस्तारास्तिथिश्शिवे ! ॥

पाताळानि च नागेन्द्रास्तथा कालाग्निरुद्रकाः ।
यक्षाः पिशाचभूताश्च राक्षसा दनुजास्तथा ॥ १७१ ॥

गुह्यका दुष्टवेताला राजयक्ष्मादयो गदाः ।
मन्त्राश्शस्त्राणि चास्त्राणि संपूज्य क्रमशः प्रिये ! ॥

लिङ्गस्य पूर्वभागे तु संपूज्या गुरुपंक्तयः ।
सिद्धास्साध्याश्च मुनयो योगिनो ब्रह्मवादिनः ॥ १७३ ॥

विद्याधराः किन्नराश्च गन्धर्वश्चाश्विनौ तथा ।
वसवोऽप्सरसां मुख्या शृङ्गारादिरसा नव ॥ १७४ ॥

गीतं नृत्तानि तद्भेदाः काश्यपाद्यास्तथा दश ।
रुद्राः समनवः पूज्या भास्करा वह्नयस्त्रयः ॥ १७५ ॥

विश्वे देवाश्च पितरो मातरः पितृदेवताः ।
कुलाचार्या रसाचार्याः पूर्वाचार्याः शिवार्चकाः ॥ १७६॥

मत्स्यादिदशजन्मानि जिनो लोकायतस्तथा ।
नरकाद्यास्सर्वलोका गरुडा गरुडाण्डकाः ॥ १७७ ॥

ब्रह्माण्डाः खेचरास्सर्वे भूचराश्च जलेचराः ।
सम्पूज्य देवतास्सर्वाः प्रणवादिनमोऽन्तकैः ॥ १७८ ॥

तत्तन्नामचतुर्थ्यंतैः पुष्पगन्धाक्षतैः प्रिये ! ।
देवाय वस्त्रयुगलं उपवीतद्वयं तथा ॥ १७९ ॥

मधुपर्कं दिव्यगन्धमक्षतान् कुसुमानि च ।
सदा कैतकवर्ज्यानि दिव्यानि विदलानि च ॥१८०॥

तत्पुष्पाणि च कह्लारकमलोत्पलकैरवम् ।
जातीचंपकपुन्नागपूगनारङ्गचूतकैः ॥ १८१ ॥

मागधीमाधवीमल्लीयूथिकाप्रभृतीनि च ।
दमनी मरुवं चैव रसेन्द्राय समर्पयेत् ॥ १८२ ॥

धूपं दशाङ्गं दीपञ्चापूपान्नं घृतपायसम् ।
सषड्रसानि शाकानि शुद्धगन्धोत्तमान्वितम् ॥ १८३ ॥

लेह्यं चोष्यादि नैवेद्यं पारदेन्द्राय दर्शयेत् ।
हस्तप्रक्षालनं देवि ! दद्याद्गन्धोदकेन च ॥ १८४ ॥

सुवासितानि पूगानि घनसारयुतानि च ।
अवदातानि साम्राणि नागवल्लीदलानि च ॥ १८५ ॥

मुक्ताफलोद्भवं चूर्णं ताम्बूलं च समर्पयेत् ।
दर्पणं चामरद्वन्द्वं छत्रं नृत्तं च गीतकम् ॥ १८६ ॥

उपचारेषु सर्वेषु दद्यादाचमनं प्रिये ! ।
सर्वोपचारान्मूलेन दद्यात्स्तोत्रं जपेच्छिवे ! ॥ १८७ ॥

रसेन्द्रभैरवं देवं ध्यात्वा देवीं रसांकुशाम् ।
माहेश्वरांश्च विनतां गन्धपुष्पादिभिर्यजेत् ॥ १८८ ॥

अङ्गुष्ठानामिकाभ्यां च दद्याद्गन्धोत्तमान्वितम् ।
बिन्दुमूलेन देवाय देव्यै च गुरुपंक्तये ॥ १८९ ॥

क्रमादावरणस्थेभ्यो देवीभ्योऽपि च तर्पयेत् ।

"ह्रीं आनन्दशिवमूर्तिमाराधयामि । ह्रीं परानन्दशिवमूर्तिमाराधयामि । ह्रीं परापरानन्दशिवमूर्तिमाराधयामि । श्रीं आनन्दसिद्धमूर्तिमाराधयामि । श्रीं परानन्दसिद्धमूर्तिमाराधयामि । श्रीं परापरानन्दसिद्धमूर्तिमाराधयामि । क्लीं आनन्दगुरुमूर्तिमाराधयामि । क्लीं परानन्दगुरुमूर्तिमाराधयामि । क्लीं परापरानन्दगुरुमूर्तिमाराधयामि ॥"

तेभ्यो दत्वा प्रसादं च तैरनुज्ञापितस्स्वयम् ॥ १९० ॥
कुण्डल्यामात्मतत्वं च विद्यातत्वं च नाभिगम् ।
हृदये शिवतत्वं च सर्वतत्वं हि तालुगम् ॥ १९१ ॥
त्रितत्वमेवं सञ्चिन्त्य प्रसादं च समन्त्रकम् ।
ततः प्रज्वलितं स्मृत्वा ज्योतिरन्तर्गतं प्रिये ! ॥ १९२ ॥
स्वीकुर्वीत प्रसादं च यथेष्टं सुरसेविते ! ।
प्रीणन्ति पितरो, हर्षान्मूर्छया सर्वदेवताः ॥ १९३ ॥
अज्ञाना ☼ वप्रीतिः स एवाहं न संशयः ।

॥ रसेन्द्रबलिक्रमः ॥

गन्धोत्तमौदनं शुद्ध(।)क्षतजं च, घृतं मधु ॥ १९४ ॥

संयोज्य पञ्चखण्डं च कृत्वा दद्यात्क्रमेण च।
दक्षिणोत्तरपूर्वासु पश्चिमायां च मध्यमे ॥ १९५ ॥
तांस्तान्मन्त्रान्समुच्चार्य बलिं दद्यात्ततो नरः।
प्रणवं मायां कमलां देवीं पुत्रप्रदं ततः ॥ १९६ ॥

ततो वटुकनाथाख्यं, कपिलं जटाभारभासुरं च, ततः पिंगळ त्रिणेत्र
ां बलिं पूजां गृह्ण गृह्ण स्वाहा। ॐ ह्रीं श्रीं सिद्धयोगिनीभ्यस्सर्वमातृ-
ो नमः। ॐ ह्रीं श्रीं सर्वभूतेभ्यस्सर्वभूतपतिभ्यो नमः। ॐ ह्रीं श्रीं
नक्षेत्रपाल इमां बलिं पूजां गृह्ण गृह्ण स्वाहा। ॐ ह्रीं श्रीं रसेन्द्र क्षेत्रपाल
नराजेश्वर इमां बलिं पूजां गृह्ण गृह्ण स्वाहा ॥

बलिं दद्यादिति शिवे सर्वविघ्नोपशान्तये।
ततश्चाष्टोत्तरशतं जपेन्मूलं रसाग्रतः ॥ १९७ ॥
ततः स्तोत्र जपेद्देवि रसभैरवतुष्टये।
संतुष्टाः सर्वदेवाः स्युः तुष्टे तु रसभैरवे ॥ १९८ ॥
अयं नित्यार्चनविधिः प्रोक्तस्सर्वत्र दुर्लभः।

## पारदपूजाफलम्।

विद्धि मां पारदं देवि तत्स्मर्ता मत्समः प्रिये ॥
पारदस्त्वधिको मत्तो मदीयत्वाच्च सारतः।
रसस्य स्मरणं पुण्यं दर्शनं स्पर्शनं तथा ॥ २०० ॥
पूजनं भक्षणं दानं षोढा पुण्यमुदीरितम्।
सात्विकं राजसं चैव तामसं त्रिविधं वपुः ॥ २०१ ॥
सात्विकं मुक्तिदं शुभ्रं बालं द्विभुजमण्डितम्।
पूर्णपात्रं सूक्ष्मदण्डं द्विनेत्रं किंकिणीस्रजम् ॥ २०२ ॥
राजसं भुक्तिदं रक्तं किरीटशशिशेखरम्।
चतुर्भुजं च तरुणं नीलकण्ठं त्रिलोचनम् ॥ २०३ ॥

सर्वैश्वर्यप्रदं ध्यायेत् शूलपात्रवराभयम् ।
तामसं कृष्णवर्णं च ज्वलदूर्ध्वशिरोरुहम् ॥ २०४ ॥

अष्टादशभुजं त्र्यक्षं पूर्वोक्तं चिन्तयेद्रसम् ।
सर्वसिद्धिप्रदं देवि सर्वकामफलप्रदम् ॥ २०५ ॥

स्मरणं रसराजस्य सर्वोपद्रवनाशनम् ।
हृदम्भोजस्थितं ध्यायेन्नश्यन्त्येनांसि भैरवि ॥ २०६ ॥

दर्शनं पारदेन्द्रस्य हन्ति पापं त्रिकालजम् ।
सेतुकेदारपर्यन्तदिव्यलिंगौघदर्शने ॥ २०७ ॥

यत्पुण्यं लभते मर्त्यः तत्कोटिगुणितं भवेत् ।
पृथिव्यां सर्वतीर्थेषु सागरान्तेषु दर्शनात् ॥ २०८ ॥

स्नानपानादिभिः पुण्यं तत्कोटिगुणितं भवेत् ।
गोहत्यानियुतं देवि भ्रूणहत्याशतानि च ॥ २०९ ॥

ब्रह्महत्यासहस्राणि नश्यन्ति रसदर्शनात् ।
गवां कोटिप्रदानेन स्वर्णकोटिशतेन च ॥ २१० ॥

अश्वमेधसहस्रेण यत्पुण्यं तच्च दर्शनात् ।
रसस्य स्पर्शनं हन्यादगम्यागमनं प्रिये ॥ २११ ॥

परद्रव्यापहारं च पापं प्राणिवधार्जितम् ।
सप्तद्वीपे धरण्यां च पाताळे गगने दिवि ॥ २१२ ॥

यान्यर्चयंति लिंगानि तत्पुण्यं रसपूजया ।
स्वायंभुवेषु लिङ्गेषु दिव्येषु कृतपूजया ॥ २१३ ॥

यत्पुण्यं रसलिङ्गस्य पूजया तत्फलं भवेत् ।
योगिनोऽष्टाङ्गनिरता यत्पदं ब्रह्मवादिनः ॥ २१४ ॥

तत्पदं समवाप्नोति रसलिङ्गस्य पूजया ।
कुंकुमागरुकस्तूरीकर्पूरान्तर्गतं रसम् ॥ २१५ ॥

मूर्छितं रसलिङ्गाय दद्यादिष्टार्थसिद्धये ।
भक्षणाद्रसराजस्य सर्वपापं विनश्यति ॥ २१६ ॥

अनादिमायामलिनमात्मानं च विशोषयेत् ।
भवरोगं हरेच्छीघ्रं त्रितापं च विनाशयेत् ॥ २१७ ॥

रसराजस्य दानेन चतुरब्ध्यंतमेदिनीम् ।
महामेरुसमं स्वर्णं दत्वा यत्तत् फलं भवेत् ॥ २१८ ॥

ब्रह्मरूपी शुद्धरसो विष्णुरूपी स मूर्छितः ।
भस्मीकृतो रुद्ररूपी बद्धस्सूतस्सदाशिवः ॥ २१९ ॥

कामरूपी जलूकाभः कालरूपी च दोषवान् ।
मूर्छितो भस्मितो बद्धः पारदेन्द्रो महेश्वरि ॥ २२० ॥

व्याधिमृत्युदरिद्रत्वं हरतेऽसौ कृपाकरः ।

## रसेन्द्रस्तोत्रम् ।

ददासि त्वं रसेन्द्राशु शब्दस्पर्शनधूमतः ॥ २२१ ॥

स्वर्णमर्बुदकोट्यन्तं त्राहि खेचरसिद्धिद ।
नमस्ते कालकालाय नमस्सर्वगुणात्मने ॥ २२२ ॥

वलीपलितनाशाय महावीर्यप्रदायिने ।
नमश्शस्त्रास्त्रहन्त्रे च मायांभोनिधिपारद ॥ २२३ ॥

पारदेन्द्र नमस्तुभ्यं कामिनीकेळिमन्मथ ।
सुधारूप त्रिदोषघ्न नमस्ते षड्रसात्मने ॥ २२४ ॥

घनत्वात्पृथिवीरूप द्रवत्वाज्जलरूपिणे ।
तेजोऽधिकत्वात्तेजस्विन् चाञ्चल्याद्वायुरूपिणे ॥

सूक्ष्मत्वाद्रसरूपाय नमस्ते भूतरूपिणे ।
नमस्ते योगयोग्याय प्रसीदामरवन्दित ॥ २२६ ॥

वेदगोद्विजराजेन्द्रगुरुवीरादिहिंसया ।
सम्भूतक्षयकुष्ठादीन् रोगान् हरसि पावन ॥ २२७ ॥

नष्टेन्द्रियार्थानज्ञानान् त्राता त्वमसि पारद ।
सर्वौषधीभ्योऽप्यधिको ह्यणुमात्रोपयोगतः ॥ २२८ ॥

एकोऽपि सर्वदोषघ्नोऽरुचिनाशन ते नमः ।
त्वया सृष्टा महेन्द्राद्या सुरा ब्रह्मादयः कलाः ॥

चन्द्रार्कग्रहनक्षत्रशिवभैरवशक्तयः ।
ज्ञानाज्ञानगुणा लोका गन्धर्वोरगराक्षसाः ॥ २३० ॥

दिव्यौषधानि सर्वाणि सर्वसिद्धिकराण्यपि ।
सूतेन्द्र भवतः श्रीमन् कलां नार्हन्ति षोडशीम् ॥

प्रत्यक्षशंभो सूतेन्द्र किमन्यैर्भवति स्थिते ।
अणिमादिगुणोपेते नानासिद्धिप्रदायके ॥ २३२ ॥

योगिनो हेममुख्यानि लोहान्यक्षयतां सदा ।
अमृतत्वं प्राप्नुवन्ति सेवया तत्र कोज्वल(?) ॥

दृश्यादृश्यस्वरूपं त्वां भोगमोक्षप्रदं परम् ।
यो न जानाति सूतेन्द्र स मां वेत्ति कथं नरः ॥

गुरुर्माता पिता भ्राता धनं विद्या गतिस्सुहृत् ।
रस त्वमेव भूतानां त्वत्तः कोऽन्यो हितंकरः ॥

रसेन्द्र तव योगे च शास्त्रे स्तोत्रे रसायने ।
यस्तु भक्तियुतो लोके स एवाहं न संशयः ॥ २३६ ॥

ब्रह्मज्ञानेऽपि निष्णातो यस्त्वां निन्दति पारद ।
त्याज्योऽसौ सर्वलोकेषु नैवाहं रक्षितुं क्षमः ॥ २३७ ॥

यस्त्वां नास्तीति च वदेत् तस्य सिद्धिर्न कुत्रचित् ।
यस्त्वामस्तीति च वदेत्तस्य सिद्धिर्भवेत्सदा ॥ २३८ ॥

रसेन्द्रं यस्तु लोकेऽस्मिन्कुलीनो वाऽधमान्वयः ।
संस्कृतं कुरुते सूत त्वामष्टादशकर्मभिः ॥ २३९ ॥

स पुण्यस्स व्रती धन्यः स श्लाघ्यस्स च बुद्धिमान् ।
स पुमान्स च सर्वज्ञः स सिद्धस्स च दैवतम् ॥

तत्कुलं पावनं भूमिः पुण्या राजा जयान्वितः ।
तत्पुरं सोत्सवं नित्यं कृतार्था च तदम्बिका ॥ २४१ ॥

तस्य सन्दर्शनं पुण्यं स्पर्शनं भाषणं तथा ।
प्रत्यक्षादिप्रमाणेन पारद त्वं सदाशिवः ॥ २४२ ॥

त्वत्तो देहादि लोहानि वज्रत्वं यान्ति हेमताम् ।
रसेन्द्र त्वत्प्रसादेन मानिन्यो मृगलोचनाः ॥ २४३ ॥

चक्रवाकसमोत्तुङ्गपीनवृत्तस्तनोज्ज्वलाः ।
चञ्चला मन्मथासक्ता विद्रुमाधरशोभिताः ॥ २४४ ॥

शुकतुण्डप्रतीकाशवक्रतीक्ष्णनखांकुराः ।
शिरीषमालासुभुजाः चम्पकस्रक्समप्रभाः ॥ २४५ ॥

निम्ननाभिसमुद्भूतरोमराजिविराजिताः ।
सर्वांगसौष्ठवाः कान्ताः स्निग्धा वश्या भवन्ति च ॥

सूतेन्द्र शुष्ककाष्ठानां राशिमग्निर्यथा दहेत् ।
तथैव जन्मदारिद्र्यमृत्युदुःखमहामयान् ॥ २४७ ॥

जारणार्थेऽग्निमध्ये त्वां धारयेत्कति वासरान् ।
तावत्कल्पसहस्राणि शिवलोके सुखं वसेत् ॥ २४८ ॥

तव कार्येषु सूतेन्द्र किंचिद्द्रव्यं व्ययेन्नरः ।
तेषां ददासि तद्वित्तं कोटिकोटिगुणाधिकम् ॥ २४९ ॥

परमा पारदी विद्या सर्वलोकेषु दुर्लभा ।
भोगमोक्षप्रदा पुण्या पुत्रारोग्यप्रवर्धनी ॥ २५० ॥

ये त्वां निन्दन्ति सूतेन्द्र मार्जालखरवायसाः ।
जम्बूका ऋषभाः श्वानः क्लीबान्धबधिरा जडाः ।।
मूकाः कुब्जाः पङ्गवश्च व्यङ्गा वन्ध्याश्च रोगिणः ।
कैवर्ताः पापकर्माणो जायन्तेऽनेकजन्मसु ॥ २५२ ॥
भवतो निन्दकैस्सार्धं भाण्डपक्वान्नमिश्रणम् ।
यः कुर्यादासनं शय्यां भोजनालापसंगतिम् ॥ २५३ ॥
स पापिष्ठो भवेत्त्याज्यः सर्वधर्मबहिष्कृतः ।
इति स्तोत्रं मया प्रोक्तं पारदेन्द्रस्य भैरवि ॥ २५४ ॥
यः पठेत् शृणुयाद्भक्त्या त्रिसन्ध्यं रससिद्धये ।
ब्रह्महत्यादिपापैश्च पातकैरुपपातकैः ॥ २५५ ॥
त्रिकर्मकलिभिर्देवि मुच्यते नात्र संशयः ।
घोरे युद्धे महारण्ये दिग्भ्रमे शत्रुसंकटे ॥ २५६ ॥
नदीप्रतरणे देवि चोरव्याघ्रादिसङ्कटे ।
जपेत्स्तोत्रमिदं देवि ध्यात्वा श्रीरसभैरवम् ॥ २५७ ॥
इति स्तुत्वा सूतराजं सर्वं कर्म समर्पयेत् ।
रसो दाता रसो भोक्ता रसः कर्ता च कारणम् ॥
रसो होता च हव्यं च सर्वव्यापी रसः सदा ।
अनेनैव च मन्त्रेण रसेन्द्राय समर्पयेत् ॥ २५९ ॥
ततो न्यासं च मूलेन कुर्याद्ध्यात्वा च पूर्ववत् ।
संहारमुद्रां कृत्वाऽथ वहेन्नद्यां रसेश्वरम् ॥ २६० ॥
हृत्पद्मे स्थापयेद्देवं सांगावरणशक्तिकम् ।
शिवोऽहमिति सद्भावं चिन्तयेद्रसदेशिकः ॥ २६१ ॥
पूजास्थानं च संमार्ज्य प्रोक्षयेदुदकेन च ।
ततो होमालयं प्राप्य समाचम्य च देशिकः ॥ २६२ ॥

शालायामग्निदिग्भागे योनिकुण्डे त्रिमेखलम्।
दर्भैः प्रागुदगग्रैश्च परिस्तीर्णे यथाविधि॥ २६३॥

न्यासं मूलेन संकल्प्य प्राणायामं विधाय च।
पञ्चभूसंस्कृतं कृत्वा स्वस्त्रिया वा द्विजेन वा॥ २६४॥

आनीय वह्निं निक्षिप्य कुण्डे प्रज्वालयेत्ततः।
वह्निं पिङ्गजटाजूटं त्रिणेत्रं शुक्लवाससम्॥ २६५॥

रक्ताम्भोजस्थितं देवं माल्याभरणभूषितम्।
सप्तहस्तं चतुश्शृङ्गं द्विशीर्षं च त्रिपादकम्॥ २६६॥

त्रिधा बद्धं च ऋषभं शक्त्याद्यायुधधारिणम्।
ध्यात्वा तस्यार्घ्यपाद्यादि कुर्यात्सर्वोपचारकम्॥ २६७॥

गन्धाक्षतसुपुष्पैश्च पूजयेज्जातवेदसम्।
तस्मिन्नावाहयेद्देवं संचिन्त्य रसभैरवम्॥ २६८॥

न्यासं देवस्य कुर्वीत मूलमन्त्रेण होमयेत्।
तिलाज्यव्रीहिभिर्मन्त्रं शतमष्टोत्तरं प्रिये॥ २६९॥

अष्टाविंशति वा कुर्यात् मूलात्पूर्वाहुतिं हुनेत्।
प्राणायामं ततो न्यासं कृत्वा च हृदि धारणम्॥
एवं नित्यार्चनविधिः प्रोक्तस्तव सुरार्चिते॥ २७०॥

। इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ द्वितीयोल्लासः॥



# ॥ तृतीयोल्लासः ॥

## रसदीक्षाक्रमः ।

अथ दीक्षां प्रवक्ष्यामि सर्वसिद्धिप्रदायिनीम् ।
सा च पञ्चविधा प्रोक्ता समयादिविभेदतः ॥ १ ॥

समया प्रथमा दीक्षा साधकाख्या द्वितीयका ।
निर्वाणाख्या तृतीया च चतुर्थ्याचार्यसंज्ञका ॥ २ ॥

पञ्चमी सिद्धसंज्ञा च प्रायशो दुर्लभा नृणाम् ।
पूर्वोक्तलक्षणोपेतः शिष्यो भक्तिनतश्शुचिः ॥ ३ ॥

गुरुं प्रणम्य चाष्टाङ्गं स्तुत्वा च बहुधा ततः ।
अनुगृह्णीष्व मे दीक्षामिति विज्ञापयेद्गुरुम् ॥ ४ ॥

दीक्षां च विधिवत्प्राप्य शिष्यस्सर्वार्थदृग्भवेत् ।

## दीक्षायोग्याः शुभतिथ्यादयः ।

अश्विनीमूलरेवत्यो मृगः पुष्यः पुनर्वसुः ॥ ५ ॥

रोहिणी श्रवणो मैत्रं हस्तस्स्यादुत्तरात्रयम् ।
मघाश्विनी श्रेष्ठतमा दीक्षाकर्मणि तारकाः ॥ ६ ॥

तृतीया पञ्चमी नैव सप्तमी च चतुर्दशी ।
अष्टमी पौर्णमासी च दशमी च त्रयोदशी ॥ ७ ॥

एतास्तु तिथयो मुख्याः सौम्येन्दुगुरुभार्गवाः ।
आदित्य इति वारेषु रसदीक्षा सुशोभना ॥ ८ ॥

## समयादीक्षाक्रमः ।

शुक्लपक्षे सुयोगे च करविष्टिविवर्जिते ।
चन्द्रताराबलोपेतविषुवायनसंक्रमे ॥ ९ ॥

ग्रहणे शिवरात्रे च जन्मर्क्षे सुमुहूर्तके ।
शुभग्रहे सिद्धयोगे दद्याद्दीक्षां गुरूत्तमः ॥ १० ॥

रसशालां प्रविश्याथ सर्वोपकरणोज्ज्वलाम् ।
पुष्पमालासमाकीर्णामुत्तोरणपताकिनीम् ॥ ११ ॥

नित्यपूजाग्निकार्यं च कृत्वा दीक्षाक्रमं भजेत् ।
देवस्य दक्षिणे पार्श्वे विस्तरे तण्डुलान् श्रितान् ॥ १२ ॥

चतुरश्रं च तन्मध्ये क्षिपेत्प्रस्थं सुतण्डुलम् ।
तदूर्ध्वं विन्यसेत्कुम्भं सितसूत्रेण वेष्टितम् ॥ १३ ॥

वासोभ्यां वेष्टितं सूतपंचरत्नसमन्वितम् ।
पञ्चमृत्पल्लवत्वग्भिः पावितं जलपूरितम् ॥ १४ ॥

दूर्वागन्धोत्तमतिलहेमदर्भाक्षतान्वितम् ।
शिवसंज्ञमिदं कुम्भं शिवरूपं विचिन्तयेत् ॥ १५ ॥

तद्वामभागे संस्थाप्य वर्धनीसंज्ञकं घटम् ।
शक्तिरूपं च पूर्वोक्तसर्वद्रव्यसमन्वितम् ॥ १६ ॥

परितस्सर्वतोभद्रं श्रीगौरीतिलकं लिखेत् ।
नन्द्यावर्तं स्वस्तिकं च पञ्चवर्णविराजितम् ॥ १७ ॥

प्रक्षाल्य पादौ पाणी च समाचम्य गुरूत्तमः ।
निजासनं समासाद्य प्राणायामत्रयं तथा ॥ १८ ॥

शिष्यस्यास्यायुरारोग्यसंपत्सन्तानवृद्धये ।
मुक्तये चाष्टसिद्ध्यै च सङ्कल्प्याभ्यर्चयेच्छिवम् ॥ १९ ॥

गन्धपुष्पाक्षतैर्धूपैर्दीपै नैवेद्यदर्शनैः ।
शिवकुम्भं वर्धनीं च पूजयेत्सोपचारकम ॥ २० ॥

रसांकुशीं मूलमन्त्रं प्रजपेच्च सहस्रकम् ।
तद्दशांशं हुनेत्कुण्डे त्रिकोणे लक्षणान्विते ॥ २१ ॥

फलं त्रिमधुसंयुक्तं ततो गन्धोत्तमान्वितम् ।
क्रमादावृतिदेवांश्च चतुर्थ्यां स्वस्वनामकम् ॥ २२ ॥

स्वाहान्तं प्रणवादिं च समुच्चार्य हुनेद्धविः ।
शिवत्रयं पुरा देवि ततस्सिद्धत्रयं यजेत् ॥ २३ ॥

ततो गुरुत्रयं देवि कुलवृद्धान् गुरूत्तमः ।
योगिनीं पूजयित्वा तु लब्धानुज्ञो गुरुस्ततः ॥ २४ ॥

स शक्तिमानन्दशिवमूर्तिमाराधयामि च ।
तथा परानन्दशिवमूर्तिमाराधयामि च ॥ २५ ॥

एवं त्रिसिद्धमूर्तिं च श्रीबीजसहितं यजेत् ।
एवं त्रिगुरुमूर्तिं च मारबीजयुतं यजेत् ॥ २६ ॥

तत्वत्रयं गृहीत्वा च पुनर्न्यासं समाचरेत् ।
स्वयं शिवतनुर्भूत्वा शिवोऽहमिति भावयेत् ॥ २७ ॥

हृष्टं शक्तियुतं शिष्यं शिवदृष्ट्या विलोकयेत् ।
स्ववामपार्श्वे संस्थाप्य तन्मूर्धनि विनिक्षिपेत् ॥ २८ ॥

मूलाभिमन्त्रितं भस्म तन्नेत्रं वस्त्ररोधितम् ।
कृत्वा तन्मूर्ध्नि संप्रोक्ष्य शिववर्धनिवारिणा ॥ २९ ॥

त्रिधा स्वदक्षिणे हस्ते शिवं सावरणं यजेत् ।
विज्ञेयश्शिवहस्तोऽयं भवपाशनिकृन्तनः ॥ ३० ॥

अङ्कुशीमूलमन्त्रं च त्रिवारं च समुच्चरेत् ।
शिष्यदक्षिणकर्णे च कुर्यान्मन्त्रोपदेशकम् ॥ ३१ ॥

पूर्वं गणपतेर्मन्त्रं क्षेत्रपालमनुं ततः ।
ऋषिस्तु गणकश्छन्दो न्यृचिद्गायत्रिका स्मृतम् ॥ ३२ ॥

देवो गणपतिर्ज्ञेयो न्यासं बीजाक्षरेण च ।
आदिवर्गतृतीयार्णं सार्धचन्द्रं गणाख्यकम् ॥ ३३ ॥

पतिं चतुर्थ्या संयुक्तं नमोऽन्तं मनुमुच्चरेत् ।
पाशांकुशं मोदकं च बिभ्राणं स्वविषाणकम् ॥ ३४ ॥

गजाननं प्रवाळाभं मकुटेन्दुकलाधरम् ।
तुन्दिलं गणनाथं च ध्यात्वा लक्षं जपेन्मनुम् ॥ ३५ ॥

दशांशं तर्पणं होमं सगुडं सतिलं हुनेत् ।
कषबिन्दुयुतं क्षेत्रपाळं च सचतुर्थिकम् ॥ ३६ ॥

नमोऽन्तं मनुमुच्चार्य न्यासं बीजाक्षरेण च ।
छन्दः पंक्तिर्मुनिर्ज्ञेयो भृगुर्देवश्च भैरवः ॥ ३७ ॥

चतुर्भुजं शूलपात्रवरदाभयशोभितम् ।
कालाम्बुदनिभं नागभूषणं किंकिणीस्रजम् ॥ ३८ ॥

त्रिणेत्रं वक्रदंष्ट्रं च ध्यात्वा लक्षं जपेन्मनुम् ।
दशांशं तर्पणं होमं पायसं त्रिमधुप्लुतम् ॥ ३९ ॥

हुनेदिति समादिश्य सामयाचारिकं भजेत् ।
देवतापरिचर्यां च शुश्रूषां च गुरोः कुरु ॥ ४० ॥

अतन्द्रितो जपं कुर्यात् शास्त्रश्रवणमादरात् ।
पूर्वोक्ताचारमार्गेण निरतो भव संततम् ॥ ४१ ॥

प्रह्वः कृतांजलिर्भूत्वा करिष्यामि तथा प्रभो ।
धन्योऽहं कृतकृत्योऽस्मि श्रीनाथ त्वत्प्रसादतः ॥ ४२ ॥

इति विज्ञापयेच्छिष्यः सनयाचारबृंहितः ।
प्रातस्तरां समुत्थाप्य गुरूंश्च शिरसि स्मरेत् ॥ ४३ ॥

निर्वेद्यावश्यकं कर्म स्नातस्संध्यां समाचरेत् ।
नद्यास्तीर्थे तटाके वा पुष्करिण्यां शुचौ जले ॥ ४४ ॥

उपस्पृश्य च संकल्प्य नित्यतर्पणमाचरेत् ।
आदौ शिवत्रयं विघ्ननाथं क्षेत्राधिपं हरिम् ॥ ४५ ॥

ब्रह्माणं भास्करादींश्च ग्रहान् दुर्गां च मातृकाः ।
भैरवानसितांगादीन् ततस्सिद्धत्रयं वदेत् ॥ ४६ ॥

आदिनाथं मीननाथं गोरक्षं कोंकणेश्वरम् ।
जालन्ध्रेशं कन्थनीशमोड्डीशं चिंचिणीश्वरम् ॥ ४७ ॥

चौरङ्गिमेतान्नाथाख्यान्नव संतर्पयेत्ततः ।
चौरङ्गिं चर्पटिं घोडाचूळिं रामद्वयं ततः ॥ ४८ ॥

भोलगोविन्दसिद्धं च व्याडिन्नागार्जुनं तथा ।
कोरण्डं शूर्पकर्णं च मुक्तार्यीं रेवणं तथा ॥ ४९ ॥

सिद्धं कुक्कुरपादं च शूर्पपादं कर्णेरिकम् ।
सिद्धं किंकिणिकाख्यं च सिद्धान् षोडश तर्पयेत् ॥

ततो गुरुत्रयं तर्प्य मातरं पितरं गुरुम् ।
आचार्यं भ्रातरं मित्रं तर्प्य चान्यान्कुलोद्भवान् ॥ ५१ ॥

तर्पयेद्विधिनाऽऽचम्य देवताराधनं ततः ।
नद्यास्तीरे तटाके वा गोष्ठे देवालये तथा ॥ ५२ ॥

शुचिस्थले वा संस्तीर्थे सैकतं वर्तुलाकृतिम् ।
आवाहयेद्दिनाधीशं पाटलं शिवरूपिणम् ॥ ५३ ॥

द्विनेत्रपद्मयुगळधारिणं द्विभुजं परम् ।
रक्तस्रगम्बरालेपभूषापद्मासनोज्ज्वलम् ॥ ५४ ॥

ध्यात्वार्चयेद्रक्तपुष्पैस्ततो विघ्नेशभैरवौ ।
ध्यात्वा पूर्वोक्तवत्तौ द्वौ रक्तपुष्पैस्समर्चयेत् ॥ ५५ ॥

अष्टाङ्गदण्डप्रणतिं कुर्यात् द्वादशवारकम् ।
पुनस्संस्थापयेत्स्वान्ते सेवायै स्वगुरोर्व्रजेत् ॥ ५६ ॥

इत्युक्ता समया दीक्षा

## साधकदीक्षा।

साधका कथ्यतेऽधुना।
समयाचारनिरतं सच्छिष्यं पक्वमानसम्॥ ५७॥
दीक्षयेत्सुदिने लग्ने दीक्षया साधकाख्यया।
कुर्यान्नैमित्तिकीं पूजां शिष्यमावाहयेद्गुरुः॥ ५८॥
स्वयं शिवतनुश्शिष्यं गौरीगर्भगतं स्मरेत्।
भूमौ विभूतिं संस्तीर्य तस्मिन्कोणत्रयं लिखेत्॥
तत्रोपवेश्य शिष्यं च बन्धयित्वा विलोचने।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः॥ ६०॥
जातकर्म च दीक्षाङ्गं नामधेयं च कल्पयेत्।
व्रतकर्मणि सम्प्रोक्ष्य मूलमन्त्रेण भस्मना॥ ६१॥
गौरीपुत्रं भावयित्वा तस्य दीक्षां प्रकल्पयेत्।
शिवदृष्ट्या विलोक्यामुं शिवभस्म च मूर्धनि॥ ६२।
निधाय मूलमन्त्रञ्च पूजयेद्दशवारकम्।
तस्य दक्षिणकर्णे च उपदिश्याद्दशाक्षरम्॥ ६३॥

## रसगायत्री।

रसेन्द्रभैरवं मन्त्रं गायत्रीं रससंज्ञिकाम्।
स बिन्दुहुतभुग्बीजं रसेन्द्रस्य पदं ततः॥ ६४॥
भैरवं च चतुर्थ्यन्तं कर्मास्त्रं च दशांशकम्।
वह्निबीजं दीर्घयुक्तं करन्यासं समाचरेत्॥ ६५॥
अघोराख्यो ऋषिश्छन्दो विराड्देवो महेश्वरः।
पूर्वसेवाजपं लक्षं दशांशं होमतर्पणम्॥ ६६॥
तिलाज्यव्रीहिभिः कुर्याद्धोमं निश्चलमानसः।
पूर्वोक्तां रसगायत्रीं जपेल्लक्षं च तर्पणम्॥ ६७॥

हुनेद्दशांशमाज्येन सतिलव्रीहिभिः प्रिये ।
दद्याच्छिष्यायाक्षमालां रसलिङ्गं रसागमम् ॥ ६८ ॥

पूर्वोक्ताचारवान् भूत्वा रसलिङ्गं समर्चयेत् ।
स्वशास्त्रार्थावगमनं कुर्यात्सूतेन्द्रसंस्कृतिम् ॥ ६९ ॥

गुरुसेवारतं नित्यं शिष्यमाज्ञापयेदिति ।
शिष्यो बद्धाञ्जलिर्नम्रस्तवाज्ञामाचराम्यहम् ॥ ७० ॥

इत्युक्ता साधका दीक्षा

**निर्वाणदीक्षा ।**

निर्वाणाख्या प्रशस्यते ।
कृतनित्यक्रियः पूर्वं कृतनैमित्तिकार्चनः ॥ ७१ ॥

पूर्ववच्छिवकुम्भादि वर्धनीं स्थापयेत्क्रमात् ।
स्ववामे भस्म संस्तीर्य षट्कोणं भूगृहं लिखेत् ॥

शिष्यं संवेश्य कुम्भस्थजलैः संप्रोक्षयेद्गुरुः ।
मूलाभिमन्त्रितं भस्म तस्य मूर्धनि निक्षिपेत् ॥ ७३ ॥

गन्धपुष्पाक्षतं दद्यात् बध्नीयाद्दक्षिणे करे ।
कङ्कणं चरणाङ्गुष्ठब्रह्मरन्ध्रान्तमानकम् ॥ ७४ ॥

सूत्रं तन्मूलमन्त्रेण मन्त्रितं सुरभीकृतम् ।
शिवहस्तं च तन्मूर्ध्नि निधाय गुरुसत्तमः ॥ ७५ ॥

रसांकुशां द्वादशार्णां उपदिश्यान्मनुं परम् ।
रसभैरवदैवत्यं दद्याच्छिष्याय देशिकः ॥ ७६ ॥

ऋषिश्छन्दो देवता च न्यासं पूर्वोक्तवत्प्रिये ।
तर्पणं चाथ होमं च ध्यानं कुर्याच्च पूर्ववत् ॥ ७७ ॥

उत्थाय च गुरुं नत्वा बहुशस्स्तोत्रमुच्चरेत् ।
गुरुश्शिष्याय वै दद्याद्व्याघ्रचर्मासनं च यत् ॥ ७८ ॥

भस्त्रिकां वस्त्रसंपूर्णां दद्याद्भैषज्यभस्त्रिकाम्।
रसागमं पाठयित्वा भव शिष्य चिकित्सकः ॥ ७९ ॥
रुद्ररूपी भवान् जातः सर्वभूतहितो भव।
इत्यादिशेद्गुरुश्शिष्यं शिष्यो हृष्टमनास्ततः ॥ ८० ॥
कृतकृत्योऽस्मि पूतोऽस्मि तीर्णसंसारसागरः।
इति विज्ञापयेच्छिष्यः स्तुत्वा च बहुधा गुरुम् ॥ ८१ ॥
प्रोक्ता निर्वाणदीक्षेयं

## आचार्यदीक्षा।

### अथाचार्याभिषेचनम्।

निर्वाणदीक्षितस्यास्य शिष्यस्यापि महात्मनः ॥ ८२ ॥
आचार्यदीक्षां कुर्वीत यथावद्गुरुसत्तमः।
यथा निर्वाणदीक्षायास्तथा सर्वं प्रकल्पयेत् ॥ ८३ ॥
विशेषाच्छिववर्धन्योः पुरतस्स्थापयेद्धटम्।
रूप्यगन्धादिलोहाशा(?)दिव्यौषधगणान्वितम् ॥ ८४ ॥
शिवकुम्भवदन्यच्च सर्वमस्मिन्विनिक्षिपेत्।
गुरुकुम्भं जपेत्स्पृष्ट्वा मूलमष्टोत्तरं शतम् ॥ ८५ ॥
गुरुकुम्भमिमं विद्धि गुरुमन्त्रेण पूजयेत्।
आवाहनासनार्घ्याद्यैरुपचारैश्च षोडशैः ॥ ८६ ॥
शिवादिपंक्तिं तत्रैव पूजयेद्गुरुणा सह।
यथापूर्वं समासीनं शिष्यं चैकाग्रमानसम् ॥ ८७ ॥
पूर्ववच्छिववर्धन्योरम्बुना परिषेचयेत्।
पूर्ववच्छिवहस्तं च मूलमन्त्रोपदेशकम् ॥ ८८ ॥
कृत्वा तदुत्तमाङ्गे च गुरुपंक्तिं गुरुं तथा।
आवाहनाद्यैस्संपूज्य गन्धस्रग्धूपदीपकैः ॥ ८९ ॥

फलगन्धोत्तमोपेतैर्नैवेद्यैः पूजयेत्क्रमात् ।
गुरुः कुम्भजलैः कुर्यात्प्रोक्षणं पञ्चपल्लवैः ॥ ९० ॥
मूलमन्त्रेण शतधा शिवपंक्त्या त्रिसप्तधा ।
तथैव सिद्धपंक्त्या च गुरुपंक्त्या तथैव च ॥ ९१ ॥
शिष्याय गुरुभक्ताय शक्तियुक्ताय धीमते ।
हारकेयूरकटकमुद्रिकामकुटानि च ॥ ९२ ॥
वाहनासनसच्छत्रचामरव्यजनानि च ।
मणिकुण्डलयुग्मं च भूत्याढ्यं पात्रमक्षयम् ॥ ९३ ॥
सशिरस्त्राणमुष्णीषं पट्टकूर्पासमुत्तमम् ।
योगपट्टं योगदण्डं तथैवोड्याणबन्धनम् ॥ ९४ ॥
दद्यात्तस्मै तथैवाज्ञां त्वमाचार्योऽसि संप्रति ।
ईश्वरोऽस्यद्य धन्योऽसि सर्वेषां देशिको भव ॥ ९५ ॥
रसागमानां दिव्यानां व्याख्याता भव तत्ववित् ।
इत्यादिशेद्गुरुश्शिष्यं प्रणतं गुरुवत्सलम् ॥ ९६ ॥
इति चाचार्यदीक्षेयं

## सिद्धदीक्षा ।

सिद्धदीक्षाद्य कथ्यते ।
नवाहं सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥ ९७ ॥
वीराः शक्तियुताः पूज्याः एकविंशति चान्वहम् ।
तत्संख्या योगिनः पूज्याः कुमाराः कन्यकाः स्त्रियः ॥
गन्धपुष्पाक्षतैः पुष्पैः फलगन्धोत्तमार्पणैः ।
तोषयित्वा प्रदद्याच्च वस्त्राभरणदक्षिणाः ॥ ९९ ॥
अथासनसमासीनं शिष्यं भक्तियुतं शुचिम् ।
स्पृष्ट्वा कराभ्यां तच्छीर्षं दक्षिणे श्रवणे मनुम् ॥ १०० ॥

वह्निं सबीजं शीतांशुं सविसर्गं च दीक्षयेत्।
मूलाधारात्समुद्भूतं रेफं वह्निशिखोपमम् ॥ १०१ ॥

षडाधाराम्बुजं तीर्त्वा ब्रह्मरन्ध्रान्तगं स्मरेत्।
ब्रह्मरन्ध्राद्द्रवीभूतं सकारं सोमरूपिणम् ॥ १०२ ॥

आप्लावयन्तं सर्वाङ्गं सिद्धस्सञ्चिन्तयेन्मनुम्।
उच्छ्वासनिश्वासभवं संहारस्थितिकारणम् ॥ १०३ ॥

ज्ञात्वेत्थं मनसा नित्यं सर्वमन्त्रात्मकं सदा।
सर्वदेवमयं पुण्यं सर्वसिद्धिप्रदायकम् ॥ १०४ ॥

जीवतो मुक्तिदं शुद्धं शिवशक्त्यात्मकं परम्।
रसमन्त्रमिमं विद्धि चाग्नीषोमात्मकं भज ॥ १०५ ॥

एकविंशतिसाहस्रषट्शताधिकसंख्यकम्।
प्रवर्तितं दिवारात्रं मनस्तत्र निधेहि च ॥ १०६ ॥

मन्त्रस्यास्य ऋषिर्जीवश्छन्देत्युक्ताः(?)प्रकीर्तिताः।
रसो देवस्तु रं बीजं सं शक्तिस्तु प्रकीर्तितः ॥

रेफदीर्घयुतं कुर्यात्कराङ्गन्यासमाचरेत्।
ध्यायेद्धृदम्बुजे देवि कोटिसूर्येन्दुसन्निभम् ॥ १०८ ॥

शुद्धस्फटिकसंकाशं रसं संसारपारदम्।
एवं निष्कलरूपं तं ध्यात्वा तन्मयतां व्रजेत् ॥ १०९ ॥

### निष्कलरसस्तोत्रम् ॥

त्वं रसस्त्वं शिवस्त्वं हि शक्तिस्त्वं भैरवेश्वरः।
त्वं ब्रह्मा त्वं हि रुद्रश्च सूर्यस्त्वं शीतदीधितिः ॥

त्वं भूस्त्वं सलिलस्त्वं च वह्निस्त्वं च सदा गतिः।
त्वं व्योम त्वं पराकाशः त्वं जीवस्त्वं परा गतिः ॥

त्वं सिद्धस्त्वं प्रबुद्धस्त्वं सुगन्धस्त्वं च मन्मथः ।
त्वं लोकपालस्त्वं तारा मातृकास्त्वं गजाननः ॥ ११२ ॥

त्वं स्कन्दस्त्वं गुरुस्त्वं च त्वं सर्वजनकः शुचिः ।
त्वं यज्वा त्वं हरिस्त्वं च त्रेताग्निस्त्वं च ऋत्विजः ॥

येन त्वमर्च्यसे तेन पूजितास्सर्वदेवताः ।
त्वयि तुष्टे च सन्तुष्टा ब्रह्मविष्णुमहेश्वराः ॥ ११४ ॥

त्वत्पादोदकपानेन सर्वतीर्थफलं लभेत् ।
यस्त्वां पश्यति सद्भक्त्या तमालोकयते शिवः ॥

यस्त्वां संकीर्तयेत्तस्य सर्वमन्त्रफलं भवेत् ।
यत्र त्वं क्षणनात्रे च पुण्यक्षेत्रं तदुच्यते ॥ ११६ ॥

त्वं यं पश्यति सिद्धेन्द्र ! स ब्रह्मा विष्णुरीश्वरः ।
यत्र भुंक्षेऽन्नकबळं तत्र त्रैलोक्यमत्ति हि ॥ ११७ ॥

येन त्वं स्त्रि(श्रि?)यसे नाथ त्वयायं स्त्रि(श्रि?)यतेक्षणम् ।
स एव चित्सदानन्दः परमात्मा ध्रुवं भवेत् ॥ ११८ ॥

एवं निश्चितचित्तस्य सिद्धस्य तव योगिनः ।
वर्णाश्रमसदाचाराः कृत्याकृत्यविवेकतः ॥ ११९ ॥

पापं पुण्यं सुखं दुःखं शीतमुष्णं प्रियाप्रिये ।
स्नानास्नान हानिवृद्धी शुद्धाशुद्धं भयाभयम् ॥

ग्राह्याग्राह्यं क्षुधा तृष्णा न किंचिदिह विद्यते ।
स्वेच्छाहारविहारश्च सुखी संहृष्टमानसः ॥ १२१ ॥

निर्ममस्सर्वकार्येषु कलत्रादिषु बन्धुषु ।
एवमाचार्यवचनमङ्गीकृत्य च दीक्षितः ॥ १२२ ॥

अद्य प्रभृति वन्द्यस्त्वं मा कुरु प्रणतिं क्वचित् ।
मत्समानोऽसि सिद्धोऽसि जीवन्मुक्तोऽसि संप्रति ॥

इत्युक्त्वाऽऽचार्यवर्योऽपि सिद्धमालिङ्ग्य च क्षणम् ।
सिद्धदीक्षेयमाख्याता शिवसायुज्यदायिनी ॥ १२४ ॥

दुर्लभा सर्वतन्त्रेषु तव प्रीत्या प्रकाशिता ।
देवीत्थमेव मन्तव्यं दुर्लभं समयेषु च ॥ १२५ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ तृतीयोल्लासः ॥

# ॥ चतुर्थोल्लासः ॥

## रससंस्काराः ॥

**श्री भैरवी—**

रससंस्कारमीश त्वं यथावत्कथयस्व मे ।

**श्री भैरवः—**

अष्टादश स्युस्संस्कारा रसस्य परमेश्वरि ! ॥ १ ॥

तान्सिद्धसाधकाभ्यर्च्यै यथावत्कथयामि ते ।
अथादौ स्वेदनं कर्म द्वितीयं मर्दनं प्रिये ॥ २ ॥

मूर्छा तृतीयमुत्थानं चतुर्थं पातनं शिवे ।
पञ्चमं रोधनं षष्ठं नियामं सप्तमं स्मृतम् ॥ ३ ॥

दीपनं चाष्टमं देवि नवमं चानुवासनम् ।
दशमं चारणं देवि जारणं रुद्रसंख्यकम् ॥ ४ ॥

गर्भद्रुतिर्द्वादशी स्यात् बाह्यद्रुतिस्त्रयोदशी ।
चतुर्दशं स्याद्रागाख्यं सारणा दशपञ्चमी ॥ ५ ॥

अनुसारणा षोडशी च विख्याता प्रतिसारणा ।
सप्तदशी चाष्टदशं वेधनं देहलोहयोः ॥ ६ ॥

### रससंस्कारप्रकारः ।

अथ वक्ष्यामि संस्कारान् रसराजस्य पार्वति ! ।
लिङ्गस्य दक्षिणे भागे लिखेत् षट्कोणमण्डले ॥ ७ ॥

तद्बहिश्चाष्टपत्रं च कमलं चतुरश्रकम् ।
दिग्द्वारशोभितं तस्य कर्णिकायां न्यसेच्छिवे ! ॥ ८ ॥

ताम्रजं कान्तजं वाऽपि खल्वं तु स्वर्णरेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ॥ ९ ॥

तदर्धं वा तदर्धं वा क्षिप्त्वा भक्त्या प्रपूजयेत् ।
साधको रसराजस्य ततस्संस्कारमाचरेत् ॥ १० ॥

### १. स्वेदनम् ।

### धान्याम्लसन्धानप्रकारः ।

यवगोधूमकलममाषमुद्गचणादिभिः ।
श्यामाककोद्रवाद्यैश्च नानाधान्यैश्च निस्तुषैः ॥ ११ ॥

धान्यं चतुर्गुणजले मृद्घटे निक्षिपेत्प्रिये ।
प्राप्नोति यावदम्लत्वं तावद्यत्नेन रक्षयेत् ॥ १२ ॥

तन्मध्ये हंसपादीं च मीनाक्षीं द्विपुनर्नवाम् ।
चित्रकं भृङ्गराजञ्च विष्णुकान्तां शतावरीम् ॥ १३ ॥

सर्पाक्षीं गिरिकर्णीं च मुण्डीञ्च सहदेविकाम् ।
त्रिफलां खण्डशः कृत्वा सर्वानेतान्विनिक्षिपेत् ॥ १४ ॥

धान्यस्य च चतुर्थांशान् धान्याम्लमिदमुत्तमम् ।
स्वेदनादिषु कार्येषु पारदस्य विशिष्यते ॥ १५ ॥

आतप्ते कान्तजे खल्वे रसराजं विनिक्षिपेत् ।
चूर्णं च गृहधूमं च चित्रकं त्रिफलां गुडम् ॥ १६ ॥

दग्धोर्णामिष्टकां कन्यां लवणं बृहतीद्वयम् ।
मागधीं राजिकां चैव वन्ध्यां कर्कोटकीं तथा ॥ १७ ॥

एतान्कलांशान्सूतस्य तस्मिन्निक्षिप्त्वा विमर्दयेत् ।
दत्वा दत्वाऽथ धान्याम्लमेवं कृत्वा दिनत्रयम् ॥ १८ ॥

सम्यक् सोष्णारनालेन रसं प्रक्षालयेत्प्रिये ।
पटुं राजीं त्रिकटुकं मूलकं चित्रकं वराम् ॥ १९ ॥

पुनर्नवां मेषशृङ्गीं मेघनादं दुरालभाम् ।
आर्द्रकं रजनीं नागबलां च नवसारकम् ॥ २० ॥

समं धान्याम्लकैः पिष्ट्वा श्लक्ष्णं वस्त्रे प्रलेपयेत् ।
यावदङ्गुलिमात्रं च तस्मिन्पूर्वरसं क्षिपेत् ॥ २१ ॥

तद्बध्वा ताम्रजे पात्रे क्षिप्त्वा धान्याम्लपूरिते ।
घटे दोलाख्ययन्त्रे च स्वेदयेत्तमहर्निशम् ॥ २२ ॥

तमुद्धृत्य पुनस्सोष्णैरारनालैश्शरावके ।
प्रक्षालयेत्सूतराजमेवं कुर्यात्त्रिसप्तधा ॥ २३ ॥

प्रस्वेदितं सूतराजं ततस्संमर्दयेत्प्रिये ! ।

## २. मर्दनम् ।

अथातो मर्दनं कर्म वक्ष्यामि शृणु भैरवि ! ॥ २४ ॥

चूर्णादिपूर्ववद्द्रव्यं विशालां राजवृक्षकम् ।
अङ्कोलं कृष्णधुत्तूरं त्रिकटुं च समं समम् ॥ २५ ॥

सर्वं सूतकलांशं च तप्तखल्वे रसं क्षिपेत् ।
मर्दयेत्पूर्वधान्याम्लैर्दिवारात्रं पुनश्च तम् ॥ २६ ॥

क्षालयेन्मृण्मये पात्रे ततः सोष्णारनालकैः ।
मर्दनं क्षालनं चैवमेकविंशतिवासरम् ॥ २७ ॥

एवं विमर्दितं सूतं समादायाथ मूर्छयेत् ।
अभ्रजीर्णोऽथवा बीजजीर्णस्सूतोऽपि मर्द्यते ॥ २८ ॥

चूर्णादिपूर्वद्रव्यैश्च रागान् गृह्णाति निर्मलः ।

## ३. मूर्छा ।

अथ मूर्छां प्रवक्ष्यामि शृणु त्वं सावधानतः ॥ २९ ॥

राजिका मेषशृङ्गी च चित्रकं च फलत्रयम् ।
क्षीरकन्दं सूरणं च सर्पाक्षी काकमाचिका ॥ ३० ॥

नीला वचा बला कन्या कृष्णोन्मत्तस्तथाकुली ।
श्वेताऽपराजिताङ्कोलं गोजिह्वा गरुडी तथा ॥ ३१ ॥

एतेषां स्वरसैर्मर्द्यो रविक्षीरेण पारदः ।
व्यस्तानां वा समस्तानां रसैरेषां दिनावधि ॥ ३२ ॥

मर्दयेत्तप्तखल्वे च मूषायां तं रसं क्षिपेत् ।
निरुध्य भूधरे यन्त्रे विपचेत्तं पुनः प्रिये ॥ ३३ ॥

राजिकाद्यौषधभवै रसैस्त्रिस्सप्तवासरम् ।
मर्दनं भूधरे पाकं कुर्यात्संमूर्छितो रसः ॥ ३४ ॥

भवेत्तदुत्थानविधिं प्रकुर्वीत सुरार्चिते ।

## ४. उत्थापनविधिः ।

एवं संमूर्छितं सूतं क्षालयेत्कांजिकेन च ॥ ३५ ॥

सोष्णेन वारिणा वाऽपि सूतमुत्थापयेत्प्रिये ।
पातनायन्त्रयोगे वा रसस्योत्थापनं भवेत् ॥ ३६ ॥

## ५. पातनम् ॥

पातनं त्रिविधं प्रोक्तं रसराजस्य पार्वति ! ।
ऊर्ध्वपातमधःपातं तिर्यक्पातनमुच्यते ॥ ३७ ॥

## ऊर्ध्वपातनविधिः ।

रसस्य पातनं वक्ष्ये पाठा ब्राह्मी च चित्रकम् ।
शार्ङ्गेरी काकमाची च मण्डूकी गिरिकर्णिका ॥ ३८ ॥

कुमारी च जया भृङ्गी गोजिह्वा शङ्खपुष्पिका ।
भूपाटली च निर्गुण्डी काकजङ्घा शतावरी ॥ ३९ ॥

आर्द्रकं देवदाली च तिलपर्णी च नीलिका ।
आरग्वधः क्षीरकन्दस्त्वङ्कोलो देवदारु च ॥ ४० ॥

एषां रसैस्समस्तानां व्यस्तानां वा दिनं रसम् ।
मर्दयेत्तप्तखल्वे तत् शुल्बं सूतचतुर्थकम् ॥ ४१ ॥

तं पिष्ट्वा पातयेद्यन्त्रे ह्यूर्ध्वपातनके दिनम् ।
ऊर्ध्वलग्नं रसं शुद्धं तमादायाथ मर्दयेत् ॥ ४२ ॥

पूर्वोदितौषधरसैः पूर्ववत् शुल्बसंयुतम् ।
पातयेन्मर्दयेदेवं सप्तधैवं पुनः पुनः ॥ ४३ ॥

ऊर्ध्वपातनसंशुद्धं पारदं पातयेदधः ।

## अधःपातनविधिः ।

अथाधःपातनं वक्ष्ये त्र्यूषणं लवणं वराम् ॥ ४४ ॥

चित्रकं राजिकां शिग्रुं सर्वं सूतसमं क्षिपेत् ।
मर्दयेत्तप्तखल्वे च रसं धान्याम्लकेन च ॥ ४५ ॥

तत्कल्केन लिपेदूर्ध्वं भाण्डं सम्यक् निरोधयेत् ।
ऊर्ध्वभाण्डस्य पृष्ठे तु दद्याल्लघुपुटं ततः ॥ ४६ ॥

इत्यधःपातनं कुर्यात्सप्तवारं पुनः पुनः ।
अधःपातनशुद्धस्य तिर्यक्पातनमाचरेत् ॥ ४७ ॥

### तिर्यक्पातनविधिः ।

वक्ष्यामि तिर्यक्पतनं सूतं धान्याभ्रकं समम् ।
धान्याम्लैर्मर्दयेद्यामं तिर्यक्पातनयन्त्रके ॥ ४८ ॥

चण्डाग्निना पचेदेवं सप्तवारं पुनः पुनः ।
एवं त्रिधा पातितं च ततस्सूतं निरोधयेत् ॥ ४९ ॥

अभ्रकं वाऽथ गन्धं वा माक्षिकं विमलामपि ।
स्वर्णं वा रजतं वाऽपि कान्तं वा तीक्ष्णमेव वा ॥ ५० ॥

प्रत्येकं शोधितं देयं ताम्रवत्पादमात्रकम् ।
पाठादिकरसैः कुर्यान्मर्दनं पातनं क्रमात् ॥ ५१ ॥

यद्यद्द्रव्यान्वितस्सूतस्तत्तद्द्रव्यगुणप्रदः ।
पातने ताम्रयोगेन नागवङ्गौ त्यजेद्रसः ॥ ५२ ॥

अथवा दीपिकायन्त्रे शुद्धः स्यात्पातितो रसः ।

### ६. निरोधनम् ।

कदर्थितो भवेत्सूतः स्वेदाद्यैः पञ्चकर्मभिः ॥ ५३ ॥

आप्यायनार्थं सूतस्य कर्म कुर्यान्निरोधनम् ।
अथ कर्म निरोधाख्यं पेषयेल्लवणं जलैः ॥ ५४ ॥

स्थालीमध्ये रसं क्षिप्त्वा तदूर्ध्वं लवणं क्षिपेत् ।
किंचिज्जलं च निवपेत्तं शरावेण रोधयेत् ॥ ५५ ॥

कुर्यात्सम्यक् सन्धिलेपं तदूर्ध्वञ्च पुटेल्लघु ।
एवं निरोधनं कर्म विदध्यात्सप्तधा प्रिये ॥ ५६ ॥

आप्यायितो भवेत्सूतोऽनेन षंडत्ववर्जितः ।
निरोधकर्मसिद्धोऽसौ वीर्यवान्सुनियम्यते ॥ ५७ ॥

### ७. नियामनम्।

अथो नियामनं कर्म कथयामि वरानने।
यवचिञ्चा क्षीरकन्दं सर्पाक्षी पटु भृङ्गराट्॥ ५८॥

वन्ध्या कर्कोटकी निंबः सर्वं धान्याम्लपेषितम्।
कृत्वाऽऽलोड्यारनाळेन तद्द्रवैः स्वेदयेद्दिनम्॥ ५९॥

यन्त्रे नियामके सप्तवासरं तच्च दीपयेत्।

### ८. दीपनम्।

अथातो दीपनं कर्म वदामि तव पार्वति॥ ६०॥

स्वर्णपुष्पी च मरीचं त्रिक्षारं पञ्चपुष्पिका[1]।
भूखगः पञ्चलवणं राजिका शिग्रुमूलकम्॥ ६१॥

कासीसं विजया कन्या पाताळगरुडी कणा।
क्षीरकन्दं च कर्कोटी गिरिकर्णी जया मधु॥ ६२॥

चित्रकं काकजंघा च सर्वमम्लगणेन च।
कल्कयेत्पारदं तेन मर्दयेत्तद्द्रवैरपि॥ ६३॥

दोलायन्त्रे पचेदेकदिनमेवं च सप्तधा।
मर्दनं पाचनं कुर्यात् ग्रासार्थी दीपितो रसः॥ ६४॥

एवं प्रदीपितं सूतं शुद्धं तमनुवासयेत्।

### ९. अनुवासनम्।

अथानुवासनं कर्म मृत्पात्रे दीपितं रसम्॥ ६५॥

क्षिप्त्वा जम्बीरजद्रावैस्तीव्रघर्मेऽनुवासयेत्।
एवं सप्तदिनं कुर्यात्ततश्चारणमाचरेत्॥ ६६॥

1. 'जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः' इति पञ्चपुष्पाणि। [illegible]पुष्पीति क्वचित्पठ्यते।

नवभिस्स्वेदनाद्यैश्च शुद्धः स्यात्कर्मभिः प्रिये ।
पारदस्सर्वरोगघ्नः सप्तकंचुकवर्जितः ॥ ६७ ॥

श्रीभैरवी—

स्वेदनादीनि कर्माणि श्रुतानि वद शङ्कर ।
त्वत्प्रसादादसन्देहं संशृण्वे चारणादिकम् ॥ ६८ ॥

श्री भैरवः—

साधु पृष्टं महाभागे ! शृणु तच्चारणादिकम् ।

## १०. चारणविधिः ।

अथाऽत्र चारणं कर्म वक्ष्यामि परमेश्वरि ! ॥ ६९ ॥

समुखे वा निर्मुखे वा रसे वा वासनामुखे ।
गगनं चारयेद्धर्मपिष्टिग्रासक्रमैः क्रमात् ॥ ७० ॥

### समुखचारणम् ।

अत्रादौ कथ्यते देवि ! समुखं चारणं स्फुटम् ।
समुखो ग्रसति ग्रासं निर्मुखो ग्रसनाक्षमः ॥ ७१ ॥

तस्मात्परं रसेन्द्रस्य मुखीकरणमाचरेत् ।

### [प्रथमो मुखीकरणप्रकारः ।]

इष्टकामध्यभागे तु गम्भीरं वर्तुलं समम् ॥ ७२ ॥

गर्तं कृत्वा तत्र सूतं प्रक्षिपेदनुवासितम् ।
निरुन्ध्यात्स्वच्छवस्त्रेण रसस्य दशमांशकम् ॥ ७३ ॥

गन्धं तदूर्ध्वं निक्षिप्य शरावेण निरोधयेत् ।
तत्पृष्ठेऽल्पपुटं दद्यात् गंन्धे जीर्णे पुनः पुनः ॥ ७४ ॥

क्षिप्त्वा क्षिप्त्वा शतगुणं चारयेत्पातयेदिति ।
चतुर्गुणे सान्द्रवस्त्रे गालयेत्तं रसेश्वरम् ॥ ७५ ॥

वेणौ क्षिप्त्वा निरुद्ध्यास्यं पचेद्गोमूत्रपूरिते।
भाण्डे त्रिसप्तदिवसं पुनस्तं तप्तखल्वके ॥ ७६ ॥

जम्बीरमातुलुङ्गाम्लवेतसैर्भूखगैस्त्र्यहम्।
भूनागैश्च त्र्यहं मर्द्यं तं पश्चादिष्टकोदरे ॥ ७७ ॥

एकैकं गर्तमादद्याद्धान्याभ्रं गन्धकं तथा।
प्रत्येकं दशनिष्कं च यामं जम्बीरमर्दितम् ॥ ७८ ॥

अनेन लेपयेद्गर्तद्वयमेकेष्टकान्तरे।
गर्ते क्षिप्त्वाऽथ तं सूतं विंशन्निष्कं तदूर्ध्वतः ॥ ७९ ॥

अपरामिष्टकान्दद्यात्तत्सन्धिं लोणमृत्स्नया।
दृढं लिप्त्वाऽथ दीपाग्नौ पचेत्सप्तदिनावधि ॥ ८० ॥

इष्टकां स्वाङ्गशीतां तां अवतार्य हरेद्रसम्।
किट्टहीनं पुनरपि कुर्यादित्थं त्रिवारकम् ॥ ८१ ॥

एवं कृते रसेन्द्रस्य मुखं स्याद्देवसंज्ञकम्।

[द्वितीयो मुखीकरणप्रकारः।]

पुनरन्यं प्रवक्ष्यामि मुखीकरणमुत्तमम् ॥ ८२ ॥

रसेन्द्रं जीविभूनागं समं संमर्दयेत्त्र्यहम्।
तत्क्षिपेत् भूलतालिप्तमूषायां सन्निवेशयेत् ॥ ८३ ॥

तदूर्ध्वं भूलताकल्कं क्षिप्त्वा रुध्वा विशोषयेत्।
आर्द्रगोमयलिप्तां तां पादमग्नां निवेशयेत् ॥ ८४ ॥

तद्गर्ते च पुटं देयं तुषकारीषवह्निना।
दिनान्ते तत्समुद्धृत्य पूर्ववन्मर्दयेत्पचेत् ॥ ८५ ॥

त्रिंशद्वारं पुनः कुर्यादित्थं वह्निमुखो रसः।
ग्रसते गुह्यसूतोऽयं सर्वसिद्धिप्रदो भवेत् ॥ ८६ ॥

[तृतीयो मुखीकरणप्रकारः ।]

पुनरन्यं प्रवक्ष्यामि मुखीकरणमुत्तमम् ।
गोमूत्रपूरिते भाण्डे डोलायन्त्रे पचेद्रसम् ॥ ८७ ॥

त्रिस्सप्तवारं सम्यक्च रन्ध्रितं वेणुनाळके ।
मुखं भवति सूतस्य चारणार्हं वराङ्गने ॥ ८८ ॥

[चतुर्थो मुखीकरणप्रकारः ।]

इष्टकाद्वयमध्ये च गर्तं तु चतुरङ्गुळम् ।
दशनिष्कं शुद्धगन्धं धान्याभ्रं दशनिष्ककम् ॥ ८९ ॥

जम्बीरनीरैस्संमर्द्य यामं कल्केन तेन च ।
गर्तद्वयं समांशेन लिप्त्वा गर्ते विनिक्षिपेत् ॥ ९० ॥

वासितं रसराजं तं विंशन्निष्कं तदूर्ध्वतः ।
इष्टकामपरां न्यस्य श्लक्ष्णमृत्स्नवर्णैर्दृढम् ॥ ९१ ॥

लेपयेदथ दीपाग्निमधः प्रज्वालयेत्प्रिये ।
अनुस्यूतं सप्तरात्रं स्वाङ्गशीतं समुद्धरेत् ॥ ९२ ॥

किट्टं विहाय तं सूतं पूर्ववच्च त्रिवारकम् ।
कुर्यादेवं हि सूतस्य मुखं भवति शोभनम् ॥ ९३ ॥

निर्मुखचारणाप्रकारः ।

दिव्यौषधिप्रभावेन रसश्चरति निर्मुखः ।
अथवा वज्रवैक्रान्तस्पर्शादभ्रादिकं चरेत् ॥ ९४ ॥

पारदस्य चतुष्षष्टिनिष्कं वैक्रान्तभस्म च ।
चतुर्निष्कं वज्रभस्म निष्कं दिव्यौषधिद्रवैः ॥ ९५ ॥

सर्वं सप्तदिनं मद्य स रसोऽभ्रादिकं चरेत् ।

वासनामुखचारणम् ।

गन्धकं जारयेत्सूते दोलाख्ये पूर्वभाषिते ॥ ९६ ॥
यन्त्रे च षोडशगुणं रसः स्याद्वासनामुखः ।

॥ अभ्रकाभिषेकः— चारणीयाभ्रकस्य संस्कारः ॥

चारणार्हाभ्रकस्याहमभिषेकं वदामि ते ॥ ९७ ॥

[प्रथमः प्रकारः]

मृतमभ्रं तु रुधिरैः क्षारैर्जलकणैरपि ।
सुष्टित्यैस्तुंबुरुभिर्मर्दयेदम्लवर्गकैः ॥ ९८ ॥
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ।

[द्वितीयः प्रकारः]

मृतमभ्रं च कदली मूलकञ्च शतावरी ॥ ९९ ॥
पुनर्नवा मेघनादो यवचिञ्चा च शिग्रुकः ।
सूरणं च रसैरेषां मर्दयेद्भावयेत्प्रिये ॥ १०० ॥
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ।

[तृतीयः प्रकारः]

शुल्बपात्रे तु लवणसर्ज्जिटङ्कणभूखगान् ॥ १०१ ॥
क्षिप्त्वाऽऽरनाळं त्रिदिनं कुर्यात्पर्युषितं यथा ।
तस्मिन्नागं तु विद्राव्य ढालयेच्छतधा प्रिये ॥ १०२ ॥
रौप्यकर्मणि वङ्गस्य तद्द्रवैर्भावयेद्घनम् ।
सप्ताहं तच्चरेत्सूतः समुखो निर्मुखोऽथवा ॥ १०३ ॥

[चतुर्थः प्रकारः]

धान्याभ्रमर्कक्षीरेण मर्दयेदेकवासरम् ।

निरुध्य संपुटे पच्यात्कपोताख्ये पुटे पुनः ॥ १०४ ॥

चतुर्वारं पुटेदेवं मर्दयेच्च पुनस्तथा ।
रम्भाद्रवैस्त्रिधा मर्द्यं मूलकस्य द्रवैस्त्रिधा ॥ १०५ ॥

काकमाची मेघनादो मत्स्याक्षी च पुनर्नवा ।
अपामार्गश्चित्रकं च विदारी भृङ्गराण्मुनिः ॥ १०६ ॥

चतुर्वारं पचेदेवं मर्दयेच्च पुनस्तथा ।
एतैरेकैकधा मर्द्यं पुटपाकं पृथक् पृथक् ॥ १०७ ॥

तदभ्रकं भावयेच्च मुसली यवचिञ्चिकाः ।
तण्डुली कदली शिग्रुर्वरी चार्कः पुनर्नवा ॥ १०८ ॥

एकैकैश्च द्रवैर्भाव्यमेकैकं दिवसं पृथक् ।
तदभ्रकं पारदेन्द्रश्चरत्येव सुरार्चिते ॥ १०९ ॥

[पञ्चमः प्रकारः]

धान्याभ्रं रविदुग्धेन मर्दयेद्याममात्रकम् ।
तदभ्रं संपुटे रुध्वा कपोताख्यपुटे पचेत् ॥ ११० ॥

वारांश्चतुर्दशैवं स्यात्ततो रम्भार्कपीलुकाः ।
नागवल्ली च मुसली कुबेराक्षी च शिग्रुकः ॥ १११ ॥

तुम्बी तुंबुरुरंकोलबलापामार्गकाः प्रिये ।
गृहीत्वैषामेकरसं सव्योषं च सकांजिकम् ॥ ११२ ॥

भाण्डमध्ये विनिक्षिप्य डोलायन्त्रे पचेत्त्र्यहम् ।
पूर्वाभ्रं च ततस्तस्मात्समुद्धृत्याथ साध(शोष ?)येत् ॥

टङ्कणं तुवरी सिन्धु कासीसं च समं समम् ।
अभ्रकस्य दशांशं तु सर्वमेतद्विमर्दयेत् ॥ ११४ ॥

तदभ्रकं चरेत्सूतः समुखो निर्मुखोऽथवा ।

[षष्ठः प्रकारः]

मुण्डीद्रवे तु शतधा द्रुतं नागं प्रढालयेत् ॥ ११५ ॥

तद्द्रवेण च धान्याभ्रं मर्दयेत्संपुटे क्षिपेत् ।
रुध्वा पचेत्कपोताख्ये पुटे चैवं तु सप्तधा ॥ ११६ ॥

आर्द्रकस्य द्रवैरेवं सप्तधा चित्रकद्रवैः ।
तत्समं गन्धकं दत्वा मर्दयेद्भावयेत्क्रमात् ॥ ११७ ॥

प्रागुक्तमुण्डीस्वरसैर्बीजपूरसेन च ।
स्तन्यैरेकदिनं भाव्यं तदभ्रं च चरेद्रसः ॥ ११८ ॥

एवं सर्वाणिबीजानि सत्व(ज)श्चाभ्रकस्य च ।
स्वर्णादिसर्वलोहानि सत्वानि विविधानि च ॥ ११९ ॥

द्वन्द्वानि सर्वरत्नानि यद्यत्स्याच्चारणार्हकम् ।
तत्तत्पिष्टाऽभ्रवत्कार्यं तत्तच्चरति पारदः ॥ १२० ॥

[सप्तमः प्रकारः]

तिलपर्णीरसैः पिष्ट्वा धान्याभ्रं पुटयेत् त्रिधा ।
सप्तधा भावयेदस्य मर्दनेन च पारदः ॥ १२१ ॥

पिष्टतां याति सहसा गगनं चरति क्षणात् ।

[अष्टमः प्रकारः]

त्रिक्षारं पञ्चलवणं कांक्षी कासीसटङ्कणम् ॥ १२२ ॥

भूखगं हेममाक्षीकं सौराष्ट्री वत्सनाभकम् ।
तुवरी वेतसाम्लं च सर्वमेतत्समांशकम् ॥ १२३ ॥

तत्समांशं तु धान्याभ्रं धान्याम्लैर्मर्दयेद्दिनम् ।
अर्कक्षीरं भृङ्गराजो मेघनादः पुनर्नवा ॥ १२४ ॥

मूलकं चिलकं रंभा काकमाची शतावरी ।
अपामार्गस्तालमूली विदारी तण्डुली मुनिः ॥ १२५ ॥

मीनाक्षी शिग्रु बृहती कुमारी यवचिञ्चिका ।
बला तुम्बी कुबेराक्षी व्योषं तुंबुरुपीलुनी ॥ १२६ ॥

अङ्कोलः फणिवल्ली च सर्वमेतत्समांशकम् ।
संपेष्य कल्कयेद्देवि धान्याम्ले तच्चतुर्गुणे ॥ १२७ ॥

द्रुतं नागं शतं वारान्क्षिपेत्तस्मिन्पुनः पुनः ।
कल्कद्रवेण पूर्वाभ्रं यामं संमर्दयेद्दृढम् ॥ १२८ ॥

कपोताख्ये पुटे पच्यादेवं विंशतिवारकम् ।
तत्तुल्यं गन्धकं दत्वा पूर्वोक्तैरौषधद्रवैः ॥ १२९ ॥

सस्तन्यैर्बीजपूरोत्थैर्द्रवैर्भाव्यं त्रिवासरम् ।
एतदभ्रं तु सूतस्य चारणे परमं हितम् ॥ १३० ॥

द्वन्द्वितं व्योमसत्वं च बीजानि विविधानि च ।
हेमादिसर्वलोहानि रत्नानि विविधानि च ॥ १३१ ॥

द्वन्द्वितं वज्रबीजं च चारणायां विधीयते ।
समस्तमेतत्पूर्वोक्तप्रकारेणैव कारयेत् ॥ १३२ ॥

तदा रसेन्द्रश्चरति तत्सर्वं चारणोचितः ।

[नवमः प्रकारः]

शुल्बपात्रे तु कासीसं कांक्षी माक्षीकगन्धकम् ॥ १३३ ॥

क्षारत्रयं पञ्चलोणमम्लयुक्तं क्षणं क्षिपेत् ।
दिव्याभिषेकयोगोक्तं शतधा ढालयेदहिम् ॥ १३४ ॥

वङ्गं वानेन वस्तूनि चारणार्हाणि भावयेत् ।
वरी पुनर्नवा रंभा गवाक्षी यवचिञ्चिका ॥ १३५ ॥

शिग्रुका मेघनादश्च रसैरेषां विभावयेत्।
वज्राभ्रकं क्रमेणैव सप्ताहं सुरवन्दिते ॥ १३६ ॥

तदभ्रकं नागवल्या कोबेर्या शिग्रुकस्य वा।
बाणाङ्कोल्लबलारंभास्फोतानां पीलुकस्य वा ॥ १३७ ॥

अलम्बुषाहिमरु(लमु ?)चामुसलीतुम्बुरोरपि।
अथवा खरमञ्जर्यास्तिक्तशाकस्य वा प्रिये ॥ १३८ ॥

एकेनैषां रसेनैव व्योषसर्षपसंयुतम्।
स्विन्नं त्रिदिवसं कुर्यात्तस्मिन् टङ्कणसैन्धवम् ॥ १३९ ॥

कासीसं तुवरीं क्षिप्त्वा पूर्वाभिषवयोगतः।
एतदभ्रं चरेत्सूतः समुखो निर्मुखोऽथवा ॥ १४० ॥

तदभ्रकप्रभावेन गोळकस्सिद्धिदो भवेत्।

[दशमः प्रकारः]

धान्याम्लैरम्लवर्गैश्च स्वेदयेदभ्रकं दिनम् ॥ १४१ ॥

ततस्स्नुक्क्षीरतो मर्द्यं कपोताख्ये पुटे दहेत्।
मुनित्रयं मेघनादं रम्भाकन्दं च मूलकम् ॥ १४२ ॥

मत्स्याक्षी शृङ्गिबेरं च काकमाची पुनर्नवा।
अपामार्गस्त्वरूपूगश्चैतेषां तु रसेन च ॥ १४३ ॥

एकैकेन पुनर्दद्यादेकैकं पूर्वमभ्रकम्।
डोलायन्त्रे स्नुहीक्षीरयुक्तमेकदिनं पचेत् ॥ १४४ ॥

ततश्छायागते शुष्के घनेऽस्मिन्नवसारकम्।
निंबं वचाञ्च कासीसं चणकाम्लं पृथक्पृथक् ॥ १४५ ॥

अभ्रस्य षोडशांशं च निक्षिपेत्ताम्रभाजने।
घर्षयेत्तच्चरेत्सूतो लोहपालस्य योगतः ॥ १४६ ॥

[एकादशः प्रकारः]

धान्याभ्रं मर्दयेत्सोमवल्लीतोयैर्दिनं दृढम् ।
पुटेदेवं त्रिधा पश्चात् सोमवल्ल्या रसेन च ॥ १४७ ॥

भावयेत्सप्तधा देवि रसश्चरति तद्घनम् ।

[द्वादशः प्रकारः]

सारनाले तु शतधा निषिच्य तमनेन च ॥ १४८ ॥

शतधा प्लावयेदभ्रं ताम्रवासनया सह ।
खल्ल्यां तच्चरेत्सूतो नात्र कार्या विचारणा ॥ १४९ ॥

गन्धकभावना ॥

चारणार्थस्य गन्धस्य भावनां शृणु पार्वति ।
सौराष्ट्रं चाजमोदं च सर्ज्जीं कासीसमेव च ॥ १५० ॥

मर्दयेच्छिग्रुतोयेन गन्धकं तेन भावयेत् ।
सप्ताहं मर्दितं गन्धं चारयेत्पारदस्य च ॥ १५१ ॥

रागं धत्ते रसेन्द्रस्य बीजानां पाकजारणे ।
पक्षच्छेदे रसेन्द्रस्य श्रेष्ठस्यात्सर्वकर्मणि ॥ १५२ ॥

पलाशपुष्पस्वरसैः शाकवृक्षच्छदद्रवैः ।
विष्णुक्रान्ताद्रवैर्गन्धं भावयेत्सप्तवासरम् ॥ १५३ ॥

तं गन्धं चारयेत्सूते इष्टकायन्त्रयोगतः ।

अभ्रचारणे श्रेष्ठा दिव्यमूल्यः ॥

अथाभ्रचारणे श्रेष्ठा दिव्यमूलीर्वदामि ते ॥ १५४ ॥

वज्री रंभा हंसपदी चिञ्चिका व्याघ्रपादिका ।
मण्डूकी बृहती पुङ्खा कुमारी लाङ्गली तथा ॥ १५५ ॥

सर्पाक्षी चाग्निधमनी शङ्खपुष्पीन्द्रवारुणी ।
षण्ड(खण्ड)जारी च कार्कोटी विख्याता दिव्यमूलिका ॥

### गन्धकाभ्रकचारणम् ।

अथातश्चारणं कर्म प्रवक्ष्यामि समासतः ।
धान्याभ्रकं द्रुते गन्धे समं क्षिप्त्वा नियोजयेत् ॥

ख्यातो गन्धाभ्रयोगोऽयं श्रेष्ठश्चारणकर्मणि ।
समुखं निर्मुखं वापि पारदं दशनिष्ककम् ॥ १५८ ॥

गन्धाभ्रयोगनिष्के द्वे पिष्टं कुर्याद्यथा तथा ।
तं पिष्टं नागपिष्टचाऽथ समया परिवेष्टयेत् ॥ १५९ ॥

हेमकर्मणि वङ्गस्य पिष्ट्या रजतकर्मणि ।
ताम्रपिष्ट्या देहसिद्धौ वेष्टयेत्परमेश्वरि ! ॥ १६० ॥

तां पिष्टिं विद्रुते गन्धे विपचेद्दिवसत्रयम् ।
तां पिष्टिं दीपिकायन्त्रे पाचयेत्पातयेदधः ॥ १६१ ॥

तं रसं पूर्ववत्पिष्टिं कुर्याद्वेष्टनवर्जिताम् ।
त्रिदिनं विद्रुते गन्धे विपचेत्पातयेदधः ॥ १६२ ॥

तं रसं तप्तखल्वे तु चतुष्षष्टिगुणं क्षिपेत् ।
भागैकमभिषिक्ताभ्रं मर्द्यं दिव्यौषधैर्दिनम् ॥ १६३ ॥

तत्क्षिपेच्चारणायन्त्रे जम्बीररससंयुते ।
तीव्रातपे दिनं स्थाप्यं सूतश्चरति तद्घनम् ॥ १६४ ॥

एवं पुनः पुनर्गर्भपिष्टीग्रासक्रमात्मकम् ।
पत्राभ्रचारणं प्रोक्तमेवं सत्वाभ्रचारणम् ॥ १६५ ॥

एवं कुर्याद्यथाशक्यं चारणं परमेश्वरि ! ।
रसेऽभ्रं चारयेत्पूर्वं चतुष्षष्टितमांशकम् ॥ १६६ ॥

द्वात्रिंशत्तमभागं स्यात्तदेतत्षोडशांशकम् ।
अष्टमांशं चतुर्थांशं द्वितीयांशं समं क्रमात् ॥ १६७ ॥

द्विगुणं चतुर्गुणं चाष्टगुणं षोडशकं गुणम् ।
द्वात्रिंशद्गुणमेवं स्यात् चतुष्षष्टिगुणं क्रमात् ॥ १६८ ॥

पक्षच्छेदस्त्वदोषत्वं लघुता ग्रासयोग्यता ।
मुखिताग्निसहत्वं च व्यापित्वं गतिहीनता ॥ १६९ ॥

रसेन्द्रस्यानवस्थत्वं च भवेदभ्रकचारणात् ।

## जारणा ॥

यस्याहमपि तुष्टः स्यां तस्य सूतेन्द्रजारणे ॥ १७० ॥

मतिर्भवेन्न सन्देहो जारणा भुक्तिमुक्तिदा ।
दुर्लभा जारणा देवि विना भाग्यं न लभ्यते ॥ १७१ ॥

जारणा द्विविधा बालजारणा वृद्धजारणा ।

## जारणे क्रमः ॥

गगनं जारयेत्पूर्वं सर्वसत्वान्यतः परम् ॥ १७२ ॥

द्वन्द्वानि सर्वलोहानि पक्वबीजानि भैरवि ! ।
पद्मरागादिरत्नानि जारयेच्च यथाक्रमम् ॥ १७३ ॥

## जारणाय अभ्रकसत्वनिर्माण प्रकारः ॥

[प्रथमः प्रकारः]

जारणार्हं व्योमसत्वं रसराजस्य वक्ष्यते ।
धान्याभ्रकं च विधिवन्मारयेद्वज्रसंज्ञकम् ॥ १७४ ॥

अभिषेकं पूर्ववत्स्यात्तस्मिंस्ताप्यं दशांशकम् ।
पञ्चमाहिषगव्यैश्च मर्दयेत्कर्षसन्निभाः ॥ १७५ ॥

कुर्वीत वटिकाः कोष्ठीयन्त्रे सत्वं निपातयेत्।
सत्वस्य च चतुर्थांशं तार्प्यं मूषागतं धमेत्॥ १७६॥

एवं कृत्वा चतुर्वारं तत्सत्वं रसजारणे।
रसायने च भैषज्ये श्रेष्ठं सकलकर्मणि॥ १७७॥

[द्वितीयः प्रकारः]

मृताभ्रं तच्चतुर्थांशं नागं तत्पादमाक्षिकम्।
पञ्चभिर्माहिषैर्गव्यैः पातयेत्सत्वमुज्ज्वलम्॥ १७८॥

तत्सत्वं तच्चतुर्थांशं माक्षिकं तत्समां शिलाम्।
धमेत्प्रलिप्तमूषायां सत्वं स्याद्धेमसन्निभम्॥ १७९॥

एवं कुर्याच्चतुर्वारं तत्सत्वं ग्रसते रसः।

[तृतीयः प्रकारः]

मृताभ्रकं षोडशांशं तच्चतुर्थांशकं त्रपु॥ १८०॥

तत्समं तालकं क्षिप्त्वा पञ्चगाहिषगव्यतः।
सत्वं निपातयेत्तच्च चतुर्थं हरितालकम्॥ १८१॥

क्षिप्त्वा क्षिप्त्वा चतुर्वारं तत्सत्वं ग्रसते रसः।

[चतुर्थः प्रकारः। अभ्रकसत्वमृदूकरणम्]

वज्रमूषागतं कृत्वा घनसत्वं च तत्समम्॥ १८२॥

काचं च टङ्कणं क्षिप्त्वा रुध्वा तीव्राग्निना धमेत्।
तत्क्षिपेदम्लवर्गेण चिञ्चाबीजं स्नुहीदलम्॥ १८३॥

पिष्ट्वा तस्मिन्पुनस्तद्वत्काचटङ्कणयोगतः।
धमेदेवं सप्तवारं सेचनं च पुनः पुनः॥ १८४॥

तदभ्रसत्वं शुभ्रं स्यान्मृदु स्याच्चारणोदितम्।

[पञ्चमः प्रकारः]

रसेन्द्रं टङ्कणं ताप्यं भागैकैकं पृथक्पृथक् ॥ १८५ ॥

त्रिभागं शोधितं नागं मृताभ्रं दशभागकम् ।
यवक्षारं च दग्धोर्णां सर्जक्षारं च गुग्गुलुम् ॥ १८६ ॥

अजापञ्चाङ्गसंयुक्तं अम्लमूलगणैर्युतम् ।
मर्दयेत्पूर्ववत्सत्वं पातयेन्मृदु निर्मलम् ॥ १८७ ॥

**द्वन्द्वमेलापनाय मूषालेपः ॥**

[प्रथमः प्रकारः]

द्वन्द्वमेलापने मूषा लेपं वक्ष्यामि पार्वति ! ॥ १८८ ॥

मेषशृङ्गं खुरं गुञ्जा टङ्कणं च विषं समम् ।
स्थूलभेकस्य वसया पिष्ट्वा मूषां प्रलेपयेत् ॥ १८९ ॥

मिलन्ति सर्वसत्वानि मूषायां चूर्णितानि च ।
गुग्गुलुं धातकीपुष्पं गुडं क्षारत्रयं समम् ॥ १९० ॥

स्तन्यैः पिष्ट्वाऽथ मूषायां लेपनं द्वन्द्वमेलनम् ।

[द्वितीयः प्रकारः]

अश्मभेदी लाङ्गली च भूलता च मरीचकः ॥ १९१ ॥

कार्पासस्य फलं शक्रगोपश्चैतांश्च मर्दयेत् ।
नारीस्तन्येन तेनैव मूषामन्तः प्रलेपयेत् ॥ १९२ ॥

तस्यां मिलन्ति सत्वानि सर्वाणि च महारसाः ।
हेममुख्यानि लोहानि चण्डाग्निधमनेन च ॥ १९३ ॥

[तृतीयः प्रकारः]

चुचुन्दर्याश्च पिशितं टङ्कणं च विषं समम् ।
मर्दयित्वा च मूषान्तर्लेपयेत्तत्र निक्षिपेत् ॥ १९४ ॥

द्वन्द्वयोग्यं तु यद्यत्स्यात्तत्सर्वं धमनान्मिलेत् ।

[चतुर्थः प्रकारः]

भस्मीकृतमपामार्गं कङ्गुणीतैलमर्दितम् ॥ १९५ ॥

मूषायां लेपयेत्तेन द्वन्द्वद्रव्यं विनिक्षिपेत् ।
मिलेत्तीव्राग्निधमनात्तत्तन्मारकवापनात् ॥ १९६ ॥

द्वन्द्वमेलापनम् ॥

अत एव प्रवक्ष्यामि द्वन्द्वमेलापनं शृणु ।
वर्षाभूकदलीकन्दकाकमाचीपुनर्नवम् ॥ १९७ ॥

स्वर्णं नरकपालं च गुञ्जा टङ्कणमभ्रकम् ।
सत्वं मूषागतं ध्मातं हेमाभ्रं मिलति क्षणात् ॥१९८॥

अभ्रकं चूर्णयित्वा तु काकमाचीरसप्लुतम् ।
कपित्थतोयसंयुक्तं सूतटङ्कणसंयुतम् ॥ १९९ ॥

वङ्गपत्रान्तरे न्यस्तं ध्मातं वङ्गाभ्रकं मिलेत् ।
आवर्त्य कटुतैलेन भस्मापामार्गजं क्षिपेत् ॥ २०० ॥

हेमाभ्रं नागताप्येन ताराभ्रं हरितालकात् ।
गन्धकेन तु शुल्बाभ्रं तीक्ष्णाभ्रं सिन्धुहिङ्गुलात् ॥

वङ्गाभ्रं हरितालेन नागाभ्रं शिलया मिलेत् ।
लाङ्गली चमरीकेशाः कार्पासास्थि कुलत्थकम् ॥

भूलता चाश्मदमनी स्त्रीस्तन्यं सुरगोपकः ।
द्वन्द्वे प्रलिप्तमूषायां सुध्मातास्तीव्रवह्निना ॥ २०३ ॥

कान्ताभ्रशैलविमलाः मिलन्ति सकलाः क्षणात् ।
अथ चुच्छुन्दरीमांसं विषटङ्कणयोजितम् ॥ २०४ ॥

मूषाप्रलेपात्कुरुते सर्वद्वन्द्वेषु मेलनम् ।
जौर(?)भ्रमरशृङ्गं च मण्डूकस्य वसामिपम् ॥ २०५ ॥

गुञ्जाटङ्कणलेपेन सर्वसत्वेषु मेलनम् ।
टङ्कणोर्णागिरिजतुकर्णाक्षीमलकर्कटैः ॥ २०६ ॥

मिलन्ति सर्वद्रव्याणि स्त्रीस्तन्यपरिपेषितैः ।
धातकीगुग्गुलुगुडसर्जयावकटङ्कणैः ॥ २०७ ॥

स्त्रीस्तन्यपेषितं शस्तं द्वन्द्वं स्यात्तु रसायने ।
सूक्ष्मचूर्णं तु यत्किञ्चित्पूर्वकल्केन संयुतम् ॥ २०८ ॥

अन्धमूषागतं ध्मातं संकरं मिलति क्षणात् ।
वापितं ताप्यरसकसस्यकैर्दरदेन च ॥ २०९ ॥

स सत्वं स्यादनिविडं दृढं ध्मातं मिलेत्ततः ।
रसोपरसलोहानि सर्वाण्येकत्र मेलयेत् ॥ २१० ॥

[प्रथमः प्रकारः]

अन्योन्यं द्वन्द्वतां यान्ति द्रवन्ति सलिलं यथा ।
वज्राभ्रसत्वचूर्णं तु यत्किञ्चिल्लोहचूर्णकम् ॥ २११ ॥

द्वयं समं तयोस्तुल्यमरिवर्गं विनिक्षिपेत् ।
द्वन्द्वमेलनमूषायां धमनान्मेलनं भवेत् ॥ २१२ ॥

[द्वितीयः प्रकारः]

मर्दयेट्टङ्कणं रम्भाकन्दतोयेन लेपयेत् ।
मूषां श्वेताभ्रकं वङ्गं धमनान्मिलति प्रिये ॥ २१३ ॥

[तृतीयः प्रकारः]

वनशिग्रुष्टङ्कणश्च गुञ्जा च नृकपालकम् ।
पिष्ट्वा योषित्स्तन्यनीरैस्तेन मूषां प्रलेपयेत् ॥ २१४ ॥

वङ्गं श्वेताभ्रसत्वं च चूर्णयित्वा क्षिपेद्धमेत्।
असंशयं मिलन्त्येव श्रेष्ठं रजतकर्मणि॥ २१५॥

[चतुर्थः प्रकारः]

श्वेताभ्रसत्वं सचूर्ण्य तच्चतुर्थांशपारदम्।
सूततुल्यं टङ्कणं च मर्दयेत्काकमाचिजैः॥ २१६॥

द्रवैस्तद्गोळकं कृत्वा वङ्गपत्रेण वेष्टयेत्।
श्वेताभ्रसत्वतुल्येन लिप्तमूषागतं धमेत्॥ २१७॥

भवेत्संमेलनं सम्यक् मुख्यः स्याद्रूप्यकर्मणि।

**वज्रहेममेलापने मूषालेपः॥**

[प्रथमः प्रकारः]

अथातो वज्रकनकद्वन्द्वमेलाप्रलेपनम्॥ २१८॥

गुञ्जा कान्तमुखं तुल्यं द्वन्द्वयोर्द्विगुणं बलिम्।
स्तन्येन योषितां पिष्ट्वा मूषायामन्तरे तथा॥ २१९॥

मेळयेद्वज्रमेलापलेपोऽयं कथितो मया।

[द्वितीयः प्रकारः]

शिलाधातुः कान्तमुखं शशदन्ताश्च गन्धकः॥ २२०॥

अम्लवेतसकं तुल्यं पिष्ट्वा मूषां प्रलेपयेत्।
हेमवज्रं मिलत्येव मूषायां नात्र संशयः॥ २२१॥

[तृतीयः प्रकारः]

कुलीरास्थि शिलाधातु महिषीकर्णकज्जलम्।
टङ्कणोर्णासमं सर्वं कान्तास्तन्येन मर्दयेत्॥ २२२॥

अनेन लेपयेन्मूषां हेमवज्रं मिलत्यलम्।

[चतुर्थः प्रकारः]

कान्तास्यं टङ्कणं बालवत्सविड्भ्रमरास्थि च ॥
मनुष्यचिकुरास्थीनि स्त्रीस्तन्येन विमर्दयेत् ।
अनेन लिप्तमूषायां हेमवज्रं मिळेद्ध्रुवम् ॥ २२४ ॥

[पञ्चमः प्रकारः]

ताप्यटङ्कणभूनागकान्तकाचमधूनि च ।
कुलीरास्थि स्नुहीक्षीरमर्कक्षीरं समं समम् ॥ २२५ ॥
स्तन्येन मर्दयेत्सर्वं मूषालेपं तु कारयेत् ।
मूषालेपो भवेदेष वज्रहाटककमेलनः ॥ ॥ २२६ ॥
वज्रं भस्मीभवेद्यैस्तैर्मूषामन्तर्विलेपयेत् ।
धमेत्तीव्राग्निना हेमवज्रमेलापनं भवेत् ॥ २२७ ॥

वज्रहेममेलापनम् ॥

[प्रथमः प्रकारः]

अथातो मेलनं वक्ष्ये वज्रहेम्नोस्सुरेश्वरि ! ।
स्वर्णं द्वादशभागं स्यात्तदर्धं शुद्धपारदम् ॥ २२८ ॥
रसेन्द्रार्धं नागभस्म नागार्धं मृतवज्रकम् ।
एतच्चतुष्टयं चाम्लैर्मर्दयेत्तप्तखल्वके ॥ २२९ ॥
उद्धृत्य द्वन्द्वमेलापे मूषायां रोधयेद्धमेत् ।
हठात्तच्च मिलत्येतन्नात्र कार्या विचारणा ॥ २३० ॥

[द्वितीयः प्रकारः]

भावयेच्छारिबाक्षीरे मृतं वज्रं दिनं ततः ।
मर्दयेद्गोलकं कृत्वा शोषयेच्चैकभागकम् ॥ २३१ ॥
त्रिभागं रसराजं च चतुर्भागं सुवर्णकम् ।
अम्लेन मर्दयेत्पिष्टिं कृत्वा तद्वज्रगोलकम् ॥ २३२ ॥

तत्पिष्ट्वा वेष्टयेत्तच्च भूर्जपत्रेण वेष्टयेत् ।
पक्षं न्यसेद्धान्यराशौ तदुद्धृत्य पुनः पुनः ॥ २३३ ॥
धमेद्धठान्मिलत्येव नात्र कार्या विचारणा ।

[तृतीयः प्रकारः]

वज्रं षोडशभागेन हेमपत्रेण वेष्टयेत् ॥ २३४ ॥

तत्क्षिपेल्लिप्तमूषायां स्वर्णांशं श्वेतकाचजम् ।
चूर्णं वा नृकपालं वा चूर्णं कृत्वा विनिक्षिपेत् ॥

निरुध्य च धमेत्तीव्रमेवं कुर्यात्पुनः पुनः ।
क्षिप्त्वा क्षिप्त्वा श्वेतकाचं नृकपालमथापि वा ॥२३६॥

सप्तधैवं मिलत्येव पुनरेवं विधीयते ।
अस्य हेम्नः षोडशांशं मृतं वज्रं विनिक्षिपेत् ॥

पूर्ववल्लिप्तमूषायां काचं वा नृकपालकम् ।
क्षिप्त्वा क्षिप्त्वा धमेत्तीव्रं सप्तवारं मिलत्यलम् ॥

एवं तृतीयवारं च कुर्यादेवं चतुर्थकम् ।

द्वन्द्वितानामभिषेकः ॥

अथातो द्वन्द्वितानां च प्रवक्ष्याम्यभिषेचनम् ॥ २३९ ॥

कासीसं पञ्चलवणं माक्षीकं गन्धकं तथा ।
कांक्षी क्षारत्रयं तुल्यमारनाळेन मर्दयेत् ॥ २४० ॥

तत्कल्कमातपे ताम्रपात्रे संस्थापयेत्त्र्यहम् ।
तस्मिन्क्षिपेद्द्रुतं नागं शतधा तद्द्रुतं द्रुतम् ॥२४१॥

ताम्रपात्रस्थसौवीरैर्भावयेच्छतवारकम् ।
द्वन्द्वितं तच्चरेत्सूतो यत्किंचिज्जारणार्हकम् ॥ २४२ ॥

रूप्यकर्मणि वङ्गं स्यान्नागं स्याद्धेमकर्मणि ।

**पक्वबीजविधानम् ॥**

अथातस्संप्रवक्ष्यामि पक्वबीजं सुरार्चिते ॥ २४३ ॥

[प्रथमं विधानम्]

सुवर्णे विद्रुते तुल्यं नागाभ्रं द्वन्द्वितं प्रिये ।
वाहयेद्द्वादशगुणं स्वर्णशेषं यथा धमेत् ॥ २४४ ॥

पक्वबीजमिदं ख्यातं जारयेत्पारदे क्रमात् ।

[द्वितीयं विधानम्]

पीताभ्रसत्वं स्वर्णं च समांशं द्वन्द्वितं धमेत् ॥ २४५ ॥

वाहयेद्द्वादशगुणं स्वर्णशेषं यथा धमेत् ।
पुनः पीताभ्रसत्वं च वहेद्दशगुणं शनैः ॥ २४६ ॥

स्वर्णशेषं भवेद्यावत्पक्वबीजमिदं भवेत् ।

[तृतीयं विधानम्]

नागार्कव्योमरसकं चतुस्त्रिद्व्येकभागिकम् ॥ २४७ ॥

चूर्णयेल्लिप्तमूषायामन्धयेच्च धमेद्दृढम् ।
माक्षिकेण च तत्खोटं संपेष्याम्लैः पुटे पचेत् ॥

पुनस्तत्सममाक्षीकमम्लैः पिष्ट्वा पुटे पचेत् ।
एवं पञ्चपुटं दत्वा तद्द्रुते हेम्नि वाहयेत् ॥ २४९ ॥

धमेद्दशगुणं यावत्तावत्स्यात्पक्वबीजकम् ।

**चतुर्बीजक्रमः ॥**

अथातस्सम्प्रवक्ष्यामि चतुर्बीजं वरानने ॥ २५० ॥

हेमताराहिकुटिलबीजान्येतानि तत्वतः ।
हेमबीजं नागबीजं शस्यते हेमकर्मणि ॥ २५१ ॥

तारबीजं वज्रबीजं कथिते रूप्यकर्मणि ।
हेमबीजं तारबीजं भवेतां च रसायने ॥ २५२ ॥

नागबीजं वज्रबीजं न रसायनकर्मणि ।
चत्वार्येतानि बीजानि भवेयू रोगशान्तये ॥ २५३ ॥

अन्यथा नैव योज्यानि बीजान्येतानि शाम्भवि ।

### हेमबीजविधानम् । [प्रथमं हेमबीजम्]

गन्धकं सस्यकं चाऽपि माक्षीकं वाऽथ तालकम् ॥

शिलां च विमलां वापि वैक्रान्तं वाञ्जनं च वा ।
खर्परं वा कान्तमुखं वा चूर्णयित्वा समांशकम् ॥

शतवारान्द्रुते हेम्नि वाहयेच्च पुनः पुनः ।

### [द्वितीयं नागभस्मसिद्धं हेमबीजम्]

सूतहिंगुलकंकुष्ठलोहपर्पटिकाभ्रकम् ॥ २५६ ॥

मृतार्कमाक्षीकशिलाविमलांश्च समांशकान् ।
एतान्नागकलाभागान् स्नुह्यर्कपयसा प्रिये ॥ २५७ ॥

मर्दयेत्तेन पलाणि शुद्धनागस्य लेपयेत् ।
पुटेद्द्वात्रिंशतिपुटे नागो भस्मति तद्वहेत् ॥ २५८ ॥

समं समं च शतधा विद्रुते पूर्ववाहिते ।
सुवर्णे च तथा हेमशेषं तावद्धमेद्दृढम् ॥ २५९ ॥

### [तृतीयं वज्रभस्मसिद्धं हेमबीजम्]

अथवा भस्मयेद्वज्रं तालशङ्खाभ्रपारदैः ।
चिंचाक्षारैस्त्रपु(स्ताप्य ?)समैः स्नुह्यर्कक्षीरमर्दितैः ॥

पुटेत्षोडशभिस्तच्च शतधा हेम्नि वाहयेत् ।

[चतुर्थं ताम्रभस्मसिद्धं हेमबीजम्]

अथवा मारयेच्छुल्बमूर्ध्वाधो गन्धकं समम् ॥ २६१ ॥
क्षिप्त्वा पुटेदष्टवारं तत्ताम्रं हेम्नि वाहयेत् ।

[पञ्चमं तीक्ष्णभस्मसिद्धं हेमबीजम्]

अथवा मारयेत्तीक्ष्णं तीक्ष्णतुल्यं च हिंगुलम् ॥
स्त्रीस्तन्यैर्मर्दयित्वा तु पुटेदथ कलांशकम् ।
तीक्ष्णस्य हिंगुलं दत्वा मर्दयेत्पुटयेत्क्रमात् ॥ २६३ ॥
एवं तत् षोडशपुटैः तत्तीक्ष्णं हेम्नि वाहयेत् ।
शतधा हेम तदिशं(?) विद्रुते हेम्नि वाहयेत् ॥

[षष्ठं हेमबीजम्]

तद्धेम्नि द्विगुणं ताप्यं चूर्णितं तद्धमेद्दृढम् ।
तच्चूर्णयेद्द्वित्रिपुटैः पञ्चभिर्मारितं भवेत् ॥ २६५ ॥
तद्वाहयेद्दशगुणं द्रुते हेम्नि धमन्धमन् ।
तदेव जायते दिव्यं सर्वसिद्धिप्रदायकम् ॥ २६६ ॥
हेमबीजमिदं ख्यातं हितं स्याद्रसजारणे ।

[सप्तमं हेमबीजम्]

सस्यकाभ्रकवैक्रांतसत्वं स्वर्णमहिं रविम् ॥ २६७ ॥
तीक्ष्णं च चूर्णयेल्लिप्तमूषायां चांध्रितं धमेत् ।
पुनः प्रकटमूषायां धमेत्तस्मिन्द्रुते सति ॥ २६८ ॥
माक्षिकं निक्षिपेत्किंचित्किंचिद्दत्वा पुनः पुनः ।
यावत्स्वर्णविशेषं स्यात्ततस्तस्मिन्विनिक्षिपेत् ॥ २६९ ॥
स्वर्णं नागं रविं तीक्ष्णं पूर्ववच्च धमेत्क्रमात् ।
वाहयेन्माक्षिकं तद्वद्धमेत्स्वर्णविशेषकम् ॥ २७० ॥

हेमबीजमिदं ख्यातं हितं स्याद्रसजारणे ।

[अष्टमं हेमबीजम्]

समांशं चूर्णयेदभ्रं सत्वं ताम्रमयं शुभम् ॥ २७१ ॥

अभ्रकाद्द्विगुणं धौतं ताप्यं सर्वं धमेद्धठात् ।
मूषायां द्वन्द्वलिप्तायां तत्खोटं चूर्णयेत्ततः ॥ २७२ ॥

मर्द्यं दिव्यौषधिरसैः संपुटे रोधयेद्दृढम् ।
पचेद्गजपुटे तद्वच्चूर्णयेन्मर्दयेत्पुटेत् ॥ २७३ ॥

एवं पञ्चपुटैः पक्वं तद्वहेत्कनके द्रुते ।
यावद्दशगुणं तावन्मूषायां प्रकटे धमेत् ॥ २७४ ॥

ततस्तस्मिन्शुद्धताप्यं क्षिप्त्वा क्षिप्त्वा धमेद्धमेत् ।
यावत्स्वर्णावशेषं स्यात्स्वर्णबीजमिदं प्रिये ॥ २७५ ॥

[नवमं हेमबीजम्]

तीक्ष्णार्कनागभस्मानि ताप्यचूर्णं समं समम् ।
एतद्द्रुते वहेद्धेम्नि यावद्दशगुणं भवेत् ॥ २७६ ॥
तावत्स्वर्णावशेषं स्यात्स्वर्णबीजमिदं प्रिये ।

[दशमं हेमबीजम्]

मृततारार्कतीक्ष्णायः समं सर्वं धमेद्दृढम् ॥ २७७ ॥

मूषायां द्वन्द्वलिप्तायां तत्खोटं चूर्णयेत्ततः ।
तच्चूर्णं द्राविते स्वर्णे वाहयेच्च शनैश्शनैः ॥ २७८ ॥

यावद्दशगुणं पश्चात्ताप्यचूर्णं क्षिपन्क्षिपन् ।
धमेत्स्वर्णावशेषं स्याद्धेमबीजमिदं प्रिये ॥ २७९ ॥

[एकादशं हेमबीजम्]

नागमेकं चतुस्ताम्रं सत्वं रसकसम्भवम् ।
मूषायां द्वन्द्वलिप्तायां सर्वं ध्मातं विचूर्णयेत् ॥ २८० ॥
तच्चूर्णं वाहयेत्स्वर्णे विद्रुते षड्गुणं शनैः ।
स्वर्णशेषं भवेद्यावत्तावत्स्यात्स्वर्णबीजकम् ॥ २८१ ॥

[द्वादशं हेमबीजम्]

ताप्येन मारयेत्ताम्रं तन्नागे वाहयेच्छनैः ।
यावच्छत(दश ?)गुणं ताप्यं चूर्णं क्षिप्त्वा धमन्धमन् ॥
तद्वाहयेद्धमेद्धेम्नि क्रमाद् द्वात्रिंशतं गुणम् ।
स्वर्णशेषं भवेद्यावत् तावत्स्याद्धेमबीजकम् ॥ २८३ ॥

[त्रयोदशं हेमबीजम्]

भागैकं खर्परीसत्वं द्विभागं चाभ्रसत्वकम् ।
त्रिभागं ताम्रचूर्णं च लिप्तमूषागतं धमेत् ॥ २८४ ॥
तत्खोटं चूर्णयेत्ताप्यं तुल्यमम्लैर्विमर्दयेत् ।
तत्क्षिपेत्संपुटे रुध्वा पुटेल्लघुपुटे पुनः ॥ २८५ ॥
एवं पञ्चपुटैः पक्वं तच्चूर्णं वाहयेद् द्रुते ।
सहस्रगुणितं हेम्नि यावत्स्वर्णावशेषितम् ॥ २८६ ॥
तावत्ताप्यं वहेद्युक्त्या स्यादिदं हेमबीजकम् ।

[चतुर्दशं हेमबीजम्]

भागैकमभ्रसत्वं च द्विभागं शुद्धताम्रकम् ॥ २८७ ॥
चूर्णयेल्लिप्तमूषायां क्षिप्त्वा रुध्वा धमेद्दृढम् ।
ततस्तं चूर्णयेत्ताप्यं तुल्यमम्लेन मर्दयेत् ॥ २८८ ॥

तद्रुध्वा संपुटे पच्यात्पुटे तच्चूर्णयेत्पुनः।
पूर्ववन्माक्षिके क्षिप्त्वा मर्दयेत्पातयेत्प्रिये! ॥ २८९ ॥

एवं पञ्चपुटे कार्यं तच्चूर्णं वाहयेत्प्रिये!।
स्वर्णे शतगुणं यावत्तावत्स्याद्धेमबीजकम् ॥ २९० ॥

[पञ्चदशं हेमबीजम्]

माक्षिकं गन्धपाषाणं हरितालं मनश्शिलाम्।
वैक्रान्तकं कांतमुखं सस्यकं विमलांजने ॥ २९१ ॥

रसकं चापि शतशश्चूर्णितं हेम्नि वाहयेत्।
लोहपर्पटिकाताप्यकंकुष्ठविमलाभ्रकैः ॥ २९२ ॥

मृतशुल्बशिलासूतस्नुह्यर्कक्षीरहिंगुलैः।
नागो निर्जीवतां याति पुटयोगैः पुनः पुनः ॥ २९३ ॥

रसतालकशुद्धाभ्रचिंचाक्षारैस्तथा त्रपु।
मृतं नागं मृतं वङ्गं शुल्वं तीक्ष्णं च वा मृतम् ॥

एकैकमुत्तमे हेम्नि वाहयेत्सुरवन्दिते!।
निरुद्धे पन्नगे हेम्नि निर्व्यूढे शतसंगुणैः ॥ २९५ ॥

हेम्नि नागादिनिर्वहणेन वर्णव्यत्यासः॥

नागजीर्णं रोचनाभं हारीतं ताम्रवाहितम्।
तीक्ष्णजीर्णं रविसमं वङ्गजीर्णं जपानिभम् ॥ २९६ ॥

[प्रथमं तारबीजम्]

श्वेताभ्रसत्वं तीक्ष्णं च ताप्यं च विमलां तथा।
खर्परं च समं सर्वं कुटिलं च चतुर्गुणम् ॥ २९७ ॥

धमेत्सर्वं चूर्णयेच्च भस्मयेत्पुटपञ्चकैः।
तारे द्रुते शतगुणं वाहयेच्च शनैश्शनैः ॥ २९८ ॥

तारबीजमिदं ख्यातं जारणे परमं हितम् ।

[द्वितीयं तारबीजम्]

यथा ताप्येन कुटिलं तथा ताप्येन मारयेत् ॥ २९९ ॥

तद्भागं च समं तालं तत्समं रजते द्रुते ।
त्रिंशद्गुणं भवेद्यावत् तावद्वाहयं क्रमेण च ॥

तारबीजमिदं ख्यातं पारदे तच्च जारयेत् ।

[तृतीयं तारबीजम्]

तीक्ष्णं वङ्गं च त्रिमलां समांशं चूर्णयेत्प्रिये ! ॥

द्वन्द्वमेलोपलिप्तायां धमेत्तत्खोटकं भवेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ ३०२ ॥

पञ्चवारं प्रकुर्वीत भस्म तज्जायते प्रिये ! ।
तद्भस्म विद्रुते तारे वाहयेच्च समं समम् ॥ ३०३ ॥

धमन्धमन्दशगुणं यावद्भवति भैरवि ! ।
तारबीजमिदं श्रेष्ठं रसराजस्य जारणे ॥ ३०४ ॥

[चतुर्थं तारबीजम्]

श्वेताभ्रसत्वं कुटिलं तारमाक्षीकसत्वकम् ।
त्रयं समांशं संचूर्ण्य लिप्तमूषागतं धमेत् ॥ ३०५ ॥

तच्चूर्णं वाहयेत्तारे तारतुल्यं विनि(ष ?)क्षिपेत् ।
यावद्दशगुणं तावत्तारमाक्षीकवापतः ॥ ३०६ ॥

तारबीजमिदं प्रोक्तं जारणे परमं हितम् ।

[पञ्चमं तारबीजम्]

त्रिद्व्येकभागान्देवेशि तीक्ष्णतालामलान्क्रमात् ॥ ३०७ ॥

चूर्णितान् लिप्तमूषायां क्षिप्त्वा तीव्राग्निना धमेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ ३०८ ॥

सप्तधा तद्द्रुते तारे वाह्यं दशगुणं ततः ।
क्षिप्त्वा क्षिप्त्वा ताळचूर्णं तारशेषं यथा धमेत् ॥

तारबीजमिदं श्रेष्ठं जारणे परमं हितम् ।

[षष्ठं तारबीजम्]

खर्परी ताळशुभ्राभ्रसत्वकं तारमाक्षिकम् ॥ ३१० ॥

तुल्यं सर्वसमं वङ्गं सर्वं मूषागतं धमेत् ।
चूर्णयेन्मर्दयेदम्लैः पुटेदेवं तु सप्तधा ॥ ३११ ॥

तच्चूर्णं वाहयेत्तारे द्रुते दशगुणं धमन् ।
तारशेषं भवेद्यावत्तावत्स्यात्तारबीजकम् ॥ ३१२ ॥

[सप्तमं तारबीजम्]

श्वेताभ्रसत्वं वङ्गं च द्वन्द्वं कुर्याच्च पूर्ववत् ।
तच्चूर्णे ताळकं दत्वा पादमम्लैर्विमर्दयेत् ॥ ३१३ ॥

पुटेत्तस्मिन्क्षिपेत्ताळं पूर्ववन्मर्दनं पुटम् ।
एवं पञ्चपुटं कुर्यात्तच्चूर्णं वाहयेद्द्रुते ॥ ३१४ ॥

रजते द्वादशगुणं तद्भवेत्तारबीजकम् ।

[अष्टमं तारबीजम्]

श्वेताभ्रसत्वं वङ्गञ्च वङ्गार्धं तीक्ष्णचूर्णकम् ॥ ३१५ ॥

तीक्ष्णांशा तारविमला सर्वं मूषागतं धमेत् ।
ततस्तच्चूर्णयेदम्लैः पिष्ट्वा रुध्वा पुटेत्पचेत् ॥ ३१६ ॥

पञ्चवारं पुनस्तच्च वाहयेद्रजते द्रुते ।
यावच्छतगुणं तावत्तालकं च क्षिपन् धमेत् ॥ ३१७ ॥

तारबीजमिदं ख्यातं जारणे परमं हितम् ।

[द्वितीयं तारबीजम्]

यथा ताप्येन कुटिलं तथा ताप्येन मारयेत् ॥ २९९ ॥

तद्भागं च समं तालं तत्समं रजते द्रुते ।
त्रिंशद्गुणं भवेद्यावत् तावद्वाह्यं क्रमेण च ॥

तारबीजमिदं ख्यातं पारदे तच्च जारयेत् ।

[तृतीयं तारबीजम्]

तीक्ष्णं वङ्गं च विमलां समांशं चूर्णयेत्प्रिये ! ॥

द्वन्द्वमेलोपलिप्तायां धमेत्तत्खोटकं भवेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ ३०२ ॥

पञ्चवारं प्रकुर्वीत भस्म तज्जायते प्रिये ! ।
तद्भस्म विद्रुते तारे वाहयेच्च समं समम् ॥ ३०३ ॥

धमन्धमन्दशगुणं यावद्भवति भैरवि ! ।
तारबीजमिदं श्रेष्ठं रसराजस्य जारणे ॥ ३०४ ॥

[चतुर्थं तारबीजम्]

श्वेताभ्रसत्वं कुटिलं तारमाक्षीकसत्वकम् ।
त्रयं समांशं संचूर्ण्य लिप्तमूषागतं धमेत् ॥ ३०५ ॥

तच्चूर्णं वाहयेत्तारे तारतुल्यं विनि(ष ?)क्षिपेत् ।
यावद्दशगुणं तावत्तारमाक्षीकवापतः ॥ ३०६ ॥

तारबीजमिदं प्रोक्तं जारणे परमं हितम् ॥

[पञ्चमं तारबीजम्]

त्रिद्व्येकभागान्देवेशि तीक्ष्णतालामलान्क्रमात् ॥ ३०७ ॥

चूर्णितान् लिप्तमूषायां क्षिप्त्वा तीव्राग्निना धमेत् ।
तत्खोटं चूर्णयेदम्लैर्मर्दयेत्पुटयेदिति ॥ ३०८ ॥

सप्तधा तद्द्रुते तारे वाह्यं दशगुणं ततः ।
क्षिप्त्वा क्षिप्त्वा ताळचूर्णं तारशेषं यथा धमेत् ॥

तारबीजमिदं श्रेष्ठं जारणे परमं हितम् ।

[षष्ठं तारबीजम्]

खर्परी ताळशुभ्राभ्रसत्वकं तारमाक्षिकम् ॥ ३१० ॥

तुल्यं सर्वसमं वङ्गं सर्वं मूषागतं धमेत् ।
चूर्णयेन्मर्दयेदम्लैः पुटेदेवं तु सप्तधा ॥ ३११ ॥

तच्चूर्णं वाहयेत्तारे द्रुते दशगुणं धमन् ।
तारशेषं भवेद्यावत्तावत्स्यात्तारबीजकम् ॥ ३१२ ॥

[सप्तमं तारबीजम्]

श्वेताभ्रसत्वं वङ्गं च द्वन्द्वं कुर्याच्च पूर्ववत् ।
तच्चूर्णे ताळकं दत्वा पादमम्लैर्विमर्दयेत् ॥ ३१३ ॥

पुटेत्तस्मिन्क्षिपेत्ताळं पूर्ववन्मर्दनं पुटम् ।
एवं पञ्चपुटं कुर्यात्तच्चूर्णं वाहयेद्द्रुते ॥ ३१४ ॥

रजते द्वादशगुणं तद्भवेत्तारबीजकम् ।

[अष्टमं तारबीजम्]

श्वेताभ्रसत्वं वङ्गञ्च वङ्गार्धं तीक्ष्णचूर्णकम् ॥ ३१५ ॥

तीक्ष्णांशा तारविमला सर्वं मूषागतं धमेत् ।
ततस्तच्चूर्णयेदम्लैः पिष्ट्वा रुध्वा पुटेत्पचेत् ॥ ३१६ ॥

पञ्चवारं पुनस्तच्च वाहयेद्रजते द्रुते ।
यावच्छतगुणं तावत्तालकं च क्षिपन् धमेत् ॥ ३१७ ॥

तारशेषं भवेद्यावत् तावत्स्यात्तारबीजकम् ।

### ताम्रबीजम् ॥

ताम्रबीजं प्रवक्ष्यामि जारणार्थं रसस्य तु ॥ ३१८ ॥

स्वर्णं ताम्रं समं देवि तयोस्तुल्यं च माक्षिकम् ।
ऊर्ध्वाधो निक्षिपेल्लिप्तमूषायां तद्धमेद्दृढम् ॥

धमेदेवं च दश(शत ?)धा दत्वा दत्वाऽथ माक्षिकम् ।
ताम्रबीजमिदं ख्यातं भास्वरिकिरणसंनिभम् ॥ ३२० ॥

### प्रथमं नागबीजम् ॥

अभ्रकं रसकं तुल्यं नागभस्म चतुर्गुणम् ।
धमयेच्चूर्णयेत्तच्च माक्षिकेण च मारयेत् ॥ ३२१ ॥

एतत्समं शिलाचूर्णमेकीकृत्याथ वापयेत् ।
तद्धमेत्सदृशे हेम्नि विद्रुते शतधा प्रिये ॥ ३२२ ॥

नागबीजमिदं प्रोक्तमेतत्सूते तु जारयेत् ।

### द्वितीयं नागबीजम् ॥

नागबीजं प्रवक्ष्यामि श्रेष्ठं तद्रसजारणे ॥ ३२३ ॥

रसकाभ्रकताम्रेऽहिं भागवृद्ध्या धमेत्ततः ।
माक्षिकेण हतं तच्च बीजं निर्वाहयेत्प्रिये ॥ ३२४ ॥

द्वात्रिंशांशगुणं हेम्नि वङ्गं ताप्यहतं वहेत् ।
त्रिंशद्गुणं शिलावाप्यं नागबीजमुदाहृतम् ॥ ३२५ ॥

### वङ्गबीजक्रमः ॥

वङ्गबीजं प्रवक्ष्यामि वङ्गं ताळं च ताप्यकम् ।
समं धमेच्चूर्णयेच्च तत्समं ताप्यताळकम् ॥ ३२६ ॥

मर्दयेत्पुटयेदम्लैर्भस्म स्यात्षोडशैः पुटैः ।
तारे द्रुते शतगुणं वाहयेद्वज्रभस्म च ॥ ३२७ ॥
तत्तारे ताळकं देवि द्वात्रिंशद्गुणमावहेत् ।
वज्रबीजमिदं ज्ञेयमेतत्सूते तु जारयेत् ॥ ३२८ ॥

जारणे विडयोगाः ॥

विडयोगान्प्रवक्ष्यामि जारणार्हान्सुरार्चिते ! ।

[१. बडबानलविडः]

सौवीरं गन्धकं कांक्षी कासीसं व्योषसैन्धवम् ॥
सौवर्चलं सर्जिका च मालतीतीरसम्भवम् ।
शिग्रुमूलरसैस्सर्वं भावयेत्सप्तवासरम् ॥ ३३० ॥
बिडोऽयं जारणे श्रेष्ठो नाम्ना च बडबानलः ।

[२. वैश्वानरविडः]

अर्कक्षीरैर्दग्धशङ्खं भावयेत्पुटयेत्प्रिये ! ॥ ३३१ ॥
शतधाऽयं बिडः प्रोक्तो नाम्ना वैश्वानरो महान् ।

[३. ज्वालामुखविडः]

गन्धकं शङ्खचूर्णं च सैन्धवं च विषं समम् ॥ ३३२ ॥
शतवारं गवां मूत्रैः शिग्रुमूलरसैस्तथा ।
भावितोऽयं बिडः प्रोक्तो नाम्ना ज्वालामुखस्स्मृतः ॥

[४. अग्निजिह्वकविडः]

पलाशस्य रसैर्भाव्यं टङ्कणं शतधा प्रिये ! ।
लोहानां जारणे श्रेष्ठो बिडो नाम्नाऽग्निजिह्वकः ॥

[५. बडबामुखविडः]

कान्तास्यं गन्धकं चूली चैकैकं लोहजारकम् ।
चूलीगन्धकसिन्धूत्थतालभूखगटङ्कणान् ॥ ३३५ ॥

सक्षारमूत्रैर्विपचेन्नाम्नाऽयं बडबामुखः ।

[६. महावैश्वानरो बिडः]

देवदालिं मोक्षकं च निचुळं च पुनर्नवाम् ॥ ३३६ ॥

पलाशं काञ्चनं वासामेरण्डं वास्तुकं तिलम् ।
कदलीमपि सर्वाङ्गं खण्डितं नाति शोषयेत् ॥ ३३७ ॥

मूलवर्गे चाष्टगुणे प्रक्षिपेत्तदनन्तरम् ।
समूलं मूलकं दग्ध्वा तिलकाण्डं च तत्समम् ॥

क्षारद्वयं पूर्वरसे क्षिप्त्वा स्थाप्यं त्र्यहं खरे ।
आतपे तद्वस्त्रपूतं लोहपात्रे द्रवं पचेत् ॥ ३३९ ॥

बहवो बुद्बुदा बाष्पा उद्भवन्ति यदा यदा ।
त्रिक्षारं त्रिकटुं गन्धं कासीसं लोणपञ्चकम् ॥ ३४० ॥

सौराष्ट्रीं रामठं चूलिं समं चूर्णीकृतं क्षिपेत् ।
प्रचालयेल्लोहदर्व्या गुडपाको यथा भवेत् ॥ ३४१ ॥

समुत्तार्य क्षिपेल्लोहसंपुटे सप्तवासरम् ।
भूगर्भे धान्यराशौ च सप्ताहं धारयेत्पुनः ॥ ३४२ ॥

सप्ताहं धारयेद्घर्मे महावैश्वानरो बिडः ।

[७. वह्निबिडः]

जम्बीराम्लेन शतधा वनशिग्रुरसेन च ॥ ३४३ ॥

गन्धकं भावयेदेष बिडस्स्याद्वह्निसंज्ञकः ।
नवसारोपि च तथा गन्धवत्स बिडो भवेत् ॥ ३४४ ॥

[८. चित्रभानुबिडः]

गन्धकं निचुळक्षारं गुंजाबीजं च टङ्कणम् ।
मूलबीजं देवदाल्यास्समं सर्वं च भावयेत् ॥ ३४५ ॥

तिक्तकोशातकीनीरैस्सप्तधाऽम्लगणैस्तथा ।

बिडोऽयं चित्रभानुस्स्यात्प्रधानं हेमजारणे ॥ ३४६ ॥

[९. महाबिडः]

मूलकं शृङ्गिबेरं च वह्निं दग्ध्वा त्रयं समम् ।
गोमूत्रे निक्षिपेत्तच्च वस्त्रपूतं च कारयेत् ॥ ३४७ ॥

अनेन भावितो गन्धः शतधा स्यान्महाबिडः ।

[१०. अन्यो महाबिडः]

ताळं शिला टङ्कणं च शङ्खं लवणशुक्तिके ॥ ३४८ ॥

मूलाम्लैर्विपचेन्मन्दं वह्नावेष बिडो महान् ।

[११. वज्रानलबिडः]

अर्कक्षीरैर्दग्धशङ्खं शतधा भावयेत्ततः ॥ ३४९ ॥

मर्दयित्वाऽम्लवर्गेण रुध्वा पञ्चपुटैः पचेत् ।
तत्समं टङ्कणक्षारं क्षिप्त्वाऽम्लगणभावितम् ॥ ३५० ॥

कृत्वा मनश्शिलां गन्धं दरदं विद्रुमं ततः ।
नृपावर्त्तं तु पञ्चानां शंखचूर्णं समं प्रिये ! ॥ ३५१ ॥

भावयेदम्लवर्गेण त्रिदिनं स्यान्महाबिडः ।
नाम्ना वज्रानलः प्रोक्तः खोटस्सूतस्य जारणे ॥

द्वन्द्वमेळापमूषायां सारणे योजयेत्सदा ।
पारदस्तु क्षणादेव वज्रादीन्यपि जारयेत् ॥ ३५३ ॥

[१२. अन्यो बिडः]

निर्दग्धशङ्खचूर्णं च रविक्षीरशताप्लुतम् ।
पुटितं बहुशो देवि ! प्रशस्तो जारणे बिडः ॥ ३५४ ॥

[१३. बडवामुखो बिडः]

शतशो वा प्लुतं चूर्णं गन्धकस्य गवां जलैः ।

निर्दग्धशङ्खचूर्णं तु शिग्रुमूलाम्बुभावितम् ॥ ३५५ ॥
शतशो विषसिंधूत्थसंयुतं बडबामुखः ।

[१४. सर्वजारकबिडः]

गन्धकं भावयेत्कन्याधुत्तूरकरवीरजैः ॥ ३५६ ॥
द्रवैस्तु शतधा घर्मे बिडोऽसौ सर्वजारकः ।

[१५. अन्यो बिडः]

ताम्रवल्लीदलरसैः प्लावयेद्गन्धसैन्धवम् ॥ ३५७ ॥
सप्ताहेन भवेदेनं नियुंज्याद्धेमजारणे ।

[१६. सिद्धबिडः]

सैन्धवं कुनटी गन्धं प्रत्येकं च पलं पलम् ॥ ३५८ ॥
भूलता त्रिपलं सर्वं मर्दयेच्छोषयेत्पचेत् ।
एवं कुर्यादष्टवारं अयं सिद्धबिडस्स्मृतः ॥ ३५९ ॥

## अभ्रकजारणम् ॥

अथाभ्रजारणं कर्म वक्ष्यामि शृणु पार्वति! ।
तप्तखल्वे चतुष्षष्टिनिष्कसूतं सुचारितम् ॥ ३६० ॥
भावितं गगनं चैकं निष्कं तत्र विनिक्षिपेत् ।
त्रिक्षारं पञ्चलवणं भूखगाम्लजवेतसान् ॥ ३६१ ॥
षोडशांशान् रसेन्द्रस्य क्षिपेज्जम्बीरवारिणा ।
मर्दयेद्याममात्रं तु कूर्मयन्त्रे बिडान्विते ॥ ३६२ ॥
पचेद्दिनं विनिक्षिप्य जीर्णग्रासो भवेद्रसः ।
एतत्सूतं तप्तखल्वे क्षिप्त्वा राजीगुडोर्णकम् ॥ ३६३ ॥
इष्टिकां गृहधूमं च सैन्धवं पारदस्य तु ।
एतत्सर्वं षोडशांशं मर्द्यमम्लगणैर्दिनम् ॥ ३६४ ॥

चण्डातपे पिण्डितं तद्रसे बद्ध्वाऽथ पोटलम् ।
अम्लवर्गेण भरिते डोलायन्त्रे पचेद्दिनम् ॥ ३६५ ॥

प्रतिग्रासे त्विदं कुर्यात्पुनर्ग्रासमपेक्षते ।
ग्रासोऽजीर्णो यदि भवेत्पाच्यः कच्छपयन्त्रके ॥ ३६६ ॥

एवं ग्रासक्रमेणैव जारयेद्गगनादिकम् ।
चतुष्षष्टितमांशादि चतुष्षष्टिगुणावधि ॥ ३६७ ॥

रसेन्द्रे जारयेद्ग्रासं दत्वा दत्वा पुनः पुनः ।

जीर्णाभ्रकरसलक्षणम् ॥

चतुष्षष्ट्यंशके सूतो व्योमसत्वे तु जारिते ॥ ३६८ ॥

दण्डधारी जलूकाभो वेष द्वात्रिंशदंशके ।
षोडशांशे वायसस्य विष्ठातुल्योऽष्टमांशके ॥ ३६९ ॥

दधिमण्डसमो देवि! चतुर्थांशे तु जारिते ।
नवनीतसमो द्व्यंशे गोळाभो जारितो भवेत् ॥ ३७० ॥

अभ्रके समजीर्णे तु शतवेधी भवेद्रसः ।
घने द्विगुणजीर्णे तु सहस्रांशेन वेधयेत् ॥ ३७१ ॥

चतुर्गुणेऽभ्रके जीर्णे त्वयुतायुर्भवेत्प्रिये! ।
गगनेऽष्टगुणे जीर्णे ब्रह्मायुर्लक्षवेधकः ॥ ३७२ ॥

विष्ण्वायुष्षोडशगुणे जीर्णेऽभ्रे कोटिवेधकः ।
द्वात्रिंशद्गुणिते जीर्णे रुद्रायुर्दशकोटिभिः ॥ ३७३ ॥

चतुष्षष्टिगुणे जीर्णे नित्यायुः शतकोटिभिः ।
अभ्रके समजीर्णे तु रसो दोषान्विमुञ्चति ॥ ३७४ ॥

जहाति स्वगतान्सर्वान् सर्वलोहानि भक्षयेत् ।
यन्त्रादधो न पतति नैवोत्पतति चोर्ध्वतः ॥ ३७५ ॥

नोद्गारी कपिलो वर्णे वह्नौ तिष्ठति निश्चलः ।
विपुषो मुञ्चते देवि ! छिन्नपक्षो भवेद्रसः ॥ ३७६ ॥

समजीर्णे तु बालस्स्याद्युवा जीर्णचतुर्गुणः ।
व्योमषड्गुणजीर्णस्तु वृद्धसंज्ञो भवेद्रसः ॥ ३७७ ॥

बालो विध्यति कल्केन युवा पत्रप्रलेपतः ।
जारितस्तु रसेन्द्रोऽयं वृद्धो लोहानि विध्यति ॥

बालस्सूतो रुजं हन्ति न समर्थो रसायने ।
युवा रसायने दक्षो वृद्धस्त्वादेहलोहयोः ॥ ३७९ ॥

## अन्यजारणाप्रकारः ॥

अभावे घनसत्वस्य कान्तसत्वं प्रदीयते ।
तदभावे भवेत्तीक्ष्णमेवं द्वन्द्वानि जारयेत् ॥ ३८० ॥

घनजीर्णस्य सूतस्य ततो द्वन्द्वानि जारयेत् ।
रसेन्द्रो द्वन्द्वरहितं न चरेदभ्रसत्वकम् ॥ ३८१ ॥

तस्माद्धेमादिलोहेन युक्तमभ्रं चरेद्ध्रुवम् ।
नागाभ्रं वाऽपि वङ्गाभ्रं ताम्राभ्रं वा सुरार्चिते ! ॥३८२॥

ताराभ्रं वापि हेमाभ्रं ताप्याभ्रं वापि जारयेत् ।
घनसत्वं यथा जीर्णं तथा द्वन्द्वानि जारयेत् ॥

द्वन्द्वबीजरसस्याथ पक्वबीजानि जारयेत् ।

## जारणाफलम् ॥

सत्वन्तु पीठिका देवि ! रसेन्द्रो लिङ्ग उच्यते ॥

मर्दनं चन्दनं तस्य ग्रासः पूजा विधीयते ।
क्षीयमाणे पातकौघे सुलभा रसजारणा ॥ ३८५ ॥

जारणायां च लब्धायां ज्ञानं कैवल्यदं भवेत् ।
तावन्मुक्तिः कुतः कान्ते ! यावन्नो वेत्ति जारणाम् ॥

जारणा साधकेन्द्रस्य मुक्तिव्यक्तिकरा प्रिये ! ।
जारणार्थं रसो यावद्दिनं वह्नौ तु धार्यते ॥ ३८७ ॥

शिवलोके सुखं भुङ्क्ते तावत्कल्पसहस्रकम् ।
धारयेद्यो रसं वह्नावेकाहं वा तदर्धकम् ॥ ३८८ ॥

क्षीयन्ते तस्य पापानि बहुजन्मार्जितानि च ।
सुवर्णरेतसो मित्रं स्वर्णदेहस्तथा रसः ॥ ३८९ ॥

असहत्वं सूतवह्नौ तोये मैत्रं सुवर्णतः ।
चतुर्गुणेन वस्त्रेण पीडितो निर्मलश्च सः ॥ ३९० ॥

गाळनक्रियया ग्रासे सति निश्शेषनिर्गते ।
स भवेद्दण्डधारी च जीर्णग्रासस्तदा रसः ॥ ३९१ ॥

ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् रसेश्वराय सर्वसत्वोपहाराय ग्रासं गृह्ण गृह्ण ह्रीं स्वाहा ॥

## १२. गर्भद्रुतिः ॥

### गर्भद्रावणयोग्यबीजसिद्धिः ।

[प्रथमः प्रकारः]

गर्भद्रुतिं प्रवक्ष्यामि जारितस्य रसस्य च ।
गर्भद्रावणयोग्यानि बीजानि शृणु भैरवि ! ॥ ३९२ ॥

नागभस्म च माक्षीकं गन्धकं च समं समम् ।
चूर्णितं वाहयेत्स्वर्णे त्रिगुणं द्राविते धमन् ॥ ३९३ ॥

पूतिबीजमिदं सूतगर्भे द्रवति तत्क्षणात् ।

[द्वितीयः प्रकारः]

स्वर्णे नागं समावर्त्य शिलाचूर्णं क्षिपन्क्षिपन् ॥

नागक्षये पुनर्नागं दत्वा दत्वा त्रिवारकम् ।
स्वर्णशेषं भवेद्यावत्तावद्धाम्यं पुनः पुनः ॥ ३९५ ॥
एतद्बीजं द्रवत्येव रसगर्भे तु मर्दनात् ।

[तृतीयः प्रकारः]

सुवर्णं ताप्यसत्वं तु समं मूषागतं धमेत् ॥ ३९६ ॥
तस्मिन्द्रुते ताप्यचूर्णं तुल्यं तुल्यं क्षिपन्क्षिपन् ।
माक्षीकसत्वं त्रिगुणमेवं वाह्यं पुनः पुनः ॥ ३९७ ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ।

[चतुर्थः प्रकारः]

सुवर्णस्य समं ताप्यसत्वमावर्तयेत्ततः ॥ ३९८ ॥
कुर्यात्कण्टकवेध्यानि पत्राणि च विलेपयेत् ।
लवणेनाम्लपिष्टेन गन्धतुल्येन पार्वति ! ॥ ३९९ ॥
तानि पत्राणि च पुटे पचेद्धेमावशेषितम् ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ ४०० ॥

[पञ्चमः प्रकारः]

ताप्यतुल्यं च सिन्धूत्थं मर्दयेदम्लकेन च ।
तत्संपुटे पुटे पच्यात्पुनस्संमर्दयेत्पुटेत् ॥ ४०१ ॥
पुनः पुनर्द्विषड्वारमस्य तुल्यं च नागजम् ।
भस्म संमर्दयेदम्लैरनेन स्वर्णपत्रकम् ॥ ४०२ ॥
लिप्त्वा लिप्त्वा धमेत्सप्तवारं तद्वाहयेत्ततः ।
द्रुतं तं वापयेत्पूर्वं कल्कितैस्सप्तवारकम् ॥ ४०३ ॥
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ।

[षष्ठः प्रकारः]

कासीसं टङ्कणं गन्धं ताप्यं सौवर्चलं शिलाम् ॥

तुल्यं संमर्दयेत्सर्वांश्चणकाम्लैर्दिनावधि ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ ४०५ ॥

**गर्भद्रावणे मूषायन्त्रसिद्धिः ॥**

सुवर्चलं च कासीसं यवक्षारं च टङ्कणम् ।
माक्षिकं सैन्धवं चुल्ली सामुद्रं राजिका तथा ॥
तुल्यं कांक्षीं च कर्पूरमर्कस्नुक्क्षीरमर्दितम् ।
अनेन लेपयेन्मूषां बिडेनांगुलमालकम् ॥ ४०७ ॥
मूषायन्त्रमिदं श्रेष्ठं गर्भद्रावणकर्मणि ।

**गर्भद्रुति प्रकाराः ॥**

[प्रथमः प्रकारः]

स्वर्णं ताम्रं मृतं तीक्ष्णं रञ्जितं पक्कबीजकम् ॥ ४०८ ॥
गर्भद्रावणबीजं च सर्वमावर्तयेद्दृढम् ।
द्रुतेऽस्मिंस्ताप्यचूर्णं च क्षिप्त्वा क्षिप्त्वा धमन्धमन् ॥
यावत्क्षयं गते ताम्रतीक्ष्णे तावत्सुरेश्वरि ! ।
एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ ४१० ॥

[द्वितीयः प्रकारः]

हेम गन्धहतं नागं पक्वबीजस्य साधनम् ।
तद्द्वयं लिप्तमूषायां अन्धयित्वा धमेद्दृढम् ॥ ४११ ॥
तच्चूर्णमभिषिक्तं च रसगर्भे द्रवत्यलम् ।

[तृतीयः प्रकारः]

सुवर्णे विद्रुते शुल्वं मृतं तीक्ष्णं शनैश्शनैः ॥
वाहयेत् षड्गुणं यावत्तद्रसे द्रवति प्रिये ! ।

[चतुर्थः प्रकारः]

महारसाननुरसान्क्षीणलोहानि चाक्षये ॥ ४१३ ॥

समांशं सममाक्षीकगन्धकावापयोगतः ।
शतशो वाहयेदेतदक्षीणांशावशेषितम् ॥ ४१४ ॥

समांशं रसराजस्य गर्भे द्रवति निश्चितम् ।

[पञ्चमः प्रकारः]

जारितस्य रसेन्द्रस्य चतुष्षष्टितमांशकम् ॥ ४१५ ॥

गर्भद्रावणबीजं च तप्तखल्वे विनिक्षिपेत् ।
शिलारुचकमाक्षीकगन्धकासीसटङ्कणैः ॥ ४१६ ॥

मर्दयेच्चणकाम्लेन सर्वमेतद्दिनावधि ।
रसस्यैतत्षोडशांशं दत्वा बीजं च दापयेत् ॥ ४१७ ॥

मुच्यते यत्न यत्रैव तत्तद्द्रवति तत्क्षणात् ।

[षष्ठः प्रकारः]

अपामार्गपलाशोत्थभस्मक्षारं समाहरेत् ॥ ४१८ ॥

टङ्कणं सयवक्षारं कासीसं च सुवर्चलम् ।
सामुद्रं सैन्धवं राजीं माक्षिकं नवसारकम् ॥ ४१९ ॥

कर्पूरं माक्षिकं तुल्यं स्नुह्यर्कक्षीरमर्दितम् ।
मूषालेपमनेनैव कृत्वा कुर्याद्बिडेन च ॥ ४२० ॥

लेपमङ्गुलमानेन प्राक्सूतं चात्र निक्षिपेत् ।
रुध्वा स्वेद्यं दिनैकं तु करीषाग्नौ द्रवत्यलम् ॥

इत्येवं द्रावितं जार्यं यावद्बीजन्तु षड्गुणम् ।

१३. बाह्यद्रुतिः ॥

शिवे! वक्ष्यामि ते बाह्यद्रुतिकर्म यथाक्रमम् ॥

येनोपायेनाभ्रकादिद्रुतिर्भवति तच्छृणु ।

### अभ्रकद्रुतिः ॥

अथाभ्रकद्रुतिं वक्ष्ये कंचुकीकन्दमेव च ॥ ४२३ ॥

कपितिन्दौ केशतैले प्रत्येकं तु त्रिधा वपेत् ।
मूषायां द्रावयित्वा तदभ्रसत्वं द्रुतिर्भवेत् ॥ ४२४ ॥

### स्वर्णद्रुतिः ॥

फलपांशुर्देवदाल्याः शक्रगोपोऽश्वलालकाः ।
टङ्कणं जालिनीनीरैर्भावयेद्बहुधा प्रिये ! ॥ ४२५ ॥

द्रावयेत्काञ्चनं तत्र वपेत्सूतसमा द्रुतिः ।

### सर्वरत्नद्रुतिः ॥

त्रिक्षारं चणकाम्लं च रामठं चाम्लवेतसम् ॥ ४२६ ॥

तथा ज्वालामुखीक्षारं स्थलकुम्भीरसेन च ।
पिष्ट्वा स्नुह्यर्कयोः क्षीरैस्तद्गोळे मृदु हीरकम् ॥
निक्षिपेत्तच्च जम्बीरे डोलायन्त्रे त्र्यहं पचेत् ।
एवं कृते हीरकस्य द्रुतिर्भवति सूतवत् ॥ ४२८ ॥

पद्मरागादिरत्नानां द्रुतिरेवं कृते भवेत् ।

### द्रुतिमेलापनम् ॥

द्रुतीनां मेळनं वक्ष्ये शृणु भैरवि ! तत्वतः ॥ ४२९ ॥

कृष्णागरुश्च कस्तूरी ब्रह्मबीजं च माक्षिकम् ।
नारीपुष्पं विषं हिंगु लशुनं टङ्कणं निशा ॥ ४३० ॥

एतैस्समं द्रुतिं सूतं तप्तखल्वे विमर्दयेत् ।
पाठा वन्ध्या तालमूली नीली त्रिविधचित्रकम् ॥

पद्मकन्दं क्षीरकन्दं बला गुञ्जामृतार्द्रकम् ।
अश्वलाला निम्बपत्रं स्त्रीस्तन्यं च समं समम् ॥
एतेषां ग्राहयेत्स्वच्छं रसं वस्त्रेण गालितम् ।
एतद्द्रुतियुते सूते क्षिप्त्वा क्षिप्त्वा विमर्दयेत् ॥४३३॥
मिलन्ति द्रुतयस्सर्वाः पारदे नात्र संशयः ।
द्रुतयो मिलिता येन यन्त्रं तेनैव कच्छपम् ॥ ४३४ ॥
लिम्पेच्च बिडयोगेन मेलयेज्जारयेत्क्रमात् ।
इत्येवं रसराजस्य षड्गुणां जारयेद्द्रुतिम् ॥ ४३५ ॥

## १४. रञ्जनम् ॥

द्रुतिजीर्णस्य सूतस्य रञ्जनं शृणु पार्वति ! ।
तस्माद्रञ्जकबीजानां रञ्जनं च वदामि ते ॥ ४३६ ॥

### रञ्जनतैलविधिः ॥

पलाशपुष्पं मञ्जिष्ठा लोहितं करवीरजम् ।
पुष्पं च खदिरं रक्तचन्दनं कुक्कुटी तथा ॥ ४३७ ॥
निशाद्वयं च सरलं देवदारुं जपाकुसुमम् ।
अन्यानि रक्तपुष्पाणि लाक्षातोयेन मर्दयेत् ॥ ४३८ ॥
एतच्चतुर्गुणं तैलं तैलाद्रक्तप्रसूनजम् ।
द्रवं चतुर्गुणं देयं तैलशेषं यथा भवेत् ॥ ४३९ ॥
तस्मिन्निषेचयेद्बीजं एकविंशतिवारकम् ।
रञ्जयेत्पक्कबीजानि सर्वाण्येवं सुरार्चिते ! ॥ ४४० ॥

### नागबीजरञ्जनम् ॥

खर्परे नागमादाय चण्डाग्निं ज्वालयेदधः ।
पलाशपर्णबीजानि क्षिपेत्तस्मिन्प्रचालयेत् ॥ ४४१ ॥

पलाशदण्डेनामर्द्य चतुर्यामेन भस्मति ।
तद्भस्म गन्धकं तुल्यमम्ले यामं प्रपेषयेत् ॥ ४४२ ॥

रुद्ध्वा पुटेद्गजपुटे स्वाङ्गशीतं तदुद्धरेत् ।
तच्चतुर्थांशकं गन्धं दत्वा पिष्ट्वा पुटे पचेत् ॥ ४४३ ॥

एवं द्विसप्तवारेण नागं स्याद्रक्तवर्णकम् ।
चाशापञ्चाङ्गचूर्णं च तच्चूर्णं ककुभस्य च ॥ ४४४ ॥

शिग्रुकिंशुककोरण्डशाकपुष्पाणि नागिनीम् ।
अहिमारं कुमारीं च नागकन्यां च चूर्णयेत् ॥ ४४५ ॥

एतत्सर्वं चैकभागं द्विभागं च मनश्शिलम् ।
भाण्डे सर्वं विनिक्षिप्य गवां मूत्रे चतुर्गुणे ॥ ४४६ ॥

पचेत्पादावशेषं तु पूर्वनागे क्षिपन्क्षिपन् ।
चुल्ल्यां पचेद्ब्रह्मदण्डैश्चालयेत्सप्तवासरम् ॥ ४४७ ॥

इदं नागं पक्वबीजे द्रुते निर्वाहयेत्त्रिधा ।
रञ्जितं जायते बीजं मुख्यं स्याद्रसरञ्जने ॥ ४४८ ॥

बीजरञ्जनप्रकारः ।

ताप्यसत्वं च कृष्णाभ्रसत्वचूर्णं धमेत्समम् ।
तस्मिन्द्रुते ताप्यचूर्णं मृतशुल्बं क्रमाद्वहेत् ॥

त्रिगुणं तद्भवेद्बीजं रञ्जकं परमेश्वरि ! ।

[अन्यः प्रकारः]

कुनटी माक्षिकं गन्धं दरदं पेषयेत्समम् ॥ ४५० ॥

रक्तवर्गस्य गोमूत्रे पेषितस्य रसे प्रिये ! ।
पेषयेच्छोषयेत्सप्तवारं तच्चूर्णयेत्क्षिपेत् ॥ ४५१ ॥

द्रन्द्रुते तीक्ष्णताम्रे च तुल्यं क्षिप्त्वा धमेद्दृढम् ।
ज्योतिष्मतीतैलयुक्ते रक्तवर्गे निषेचयेत् ॥ ४५२ ॥

पुनश्च पूर्वचूर्णं तु तुल्यं क्षिप्त्वा धमेत्प्रिये ! ।
सेचयेत्सप्तधा त्वेवं स्याद्बीजं रसरञ्जकम् ॥ ४५३ ॥

[अन्यः प्रकारः]

तारं च विमलासत्वं समांशं द्रावयेत्ततः ।
सरक्तवर्गे गोमूत्रे भावितं दरदं त्रिधा ॥ ४५४ ॥
तत्तुल्यं निक्षिपेत्तस्मिन्धमेदेवं तु सप्तधा ।
क्षिप्त्वा क्षिप्त्वा च दरदं स्याद्बीजं रसरञ्जकम् ॥

[अन्यः प्रकारः]

घनसत्वमहिं स्वर्णं समांशं द्वन्द्वितं धमेत् ।
खर्परे रक्तवर्गं च माक्षिकं गैरिकं शिलाम् ॥
समं संचूर्णयेत्तस्मिन्वापयेच्च समं समम् ।
दशवारं भवेदेतद्बीजं सूतेन्द्ररञ्जकम् ॥ ४५७ ॥

[अन्यः प्रकारः]

यवचिञ्चारसैर्भाव्या रक्तवर्णा मनश्शिला ।
विंशद्वारं प्रयत्नेन तेन कल्केन लेपयेत् ॥ ४५८ ॥
नागपत्रं पुटे पच्याद्यावच्चूर्णमुपागतम् ।
रसकस्य तु भागांस्त्रीन्भागैकं दरदस्य च ॥ ४५९ ॥
शिलागन्धविषाणां च त्रयाणामेकभागकम् ।
सेचयेन्मातुलुङ्गाम्लैः तेन कल्केन लेपयेत् ॥ ४६० ॥
मूषागर्भे क्षिपेत्तत्पूर्वनागं धमेत्ततः ।
द्रुतं यावत्समुद्धृत्य लिप्त्वा मूषां पुनर्धमेत् ॥ ४६१ ॥
इत्येवं सप्तधा धाम्यं नागं स्वर्णनिभं भवेत् ।

द्वन्द्वितं पूर्वयोगेन ह्यभिषिक्तं च कारयेत्।
अनेन द्वन्द्वयोगेन वापो देयो द्रुतस्य च ॥ ४६३ ॥

पक्वबीजस्य वारांस्त्रीन् तद्बीजं रञ्जितं शुभम्।

## तारबीजरञ्जनम् ॥

अथातस्तारबीजानां रञ्जनं शृणु पार्वति! ॥ ४६४ ॥

नानाभूरुहसंभूतश्वेतपुष्परसे प्रिये!।
चतुर्भागे चैकभागं कङ्गुणीतैलकं क्षिपेत् ॥ ४६५ ॥

तैलावशेषं विपचेत्तारबीजानि तत्र वै।
भूयो भूयो द्रावयित्वा सेचयेदेकविंशतिम् ॥ ४६६ ॥

बीजानि रञ्जितान्येवं भवेयू रसरञ्जने।
एवं वङ्गस्य बीजानि रञ्जयेत्परमेश्वरि! ॥ ४६७ ॥

## रञ्जनक्रमः ॥

द्रुतिजीर्णस्य सूतस्य चतुष्षष्टितमांशकम्।
निक्षिपेद्रञ्जकं बीजं तप्तखल्वे दिनावधि ॥ ४६८ ॥

मर्दयेत्तप्तखल्वे तु पचेत्कच्छपयन्त्रके।
एवं ग्रासक्रमेणैव षड्गुणं जारयेत्प्रिये! ॥ ४६९ ॥

## १५-१७. सारणात्रयम् ॥

## सारणार्थे वज्रबीजसाधनम्।

[प्रथमः प्रकारः]

रञ्जितस्य रसेन्द्रस्य प्रवक्ष्ये सारणात्रयम्।
सारणा योग्यबीजानि दिव्यानि च सुरार्चिते! ॥

स्वर्णं द्वादशभागं स्यात्तदर्धं शुद्धपारदम्।
रसेन्द्रार्धं नागभस्म चतुर्भागं मृतं पविम् ॥ ४७१ ॥

एतच्चतुष्टयं चाम्लैर्मर्दयेत्तप्तखल्वके ।
उद्धृत्य द्वन्द्वमेळापमूषायां रोधयेद्धमेत् ॥ ४७२ ॥
हठात्तच्च मिळत्येव वज्रबीजमिदं प्रिये ! ।

[द्वितीयः प्रकारः]

भावयेच्छारिबाक्षीरैर्मृतं वज्रं दिनं ततः ॥ ४७३ ॥
मर्दयेद्गोळकं कृत्वा शोषयेच्चैकभागकम् ।
त्रिभागं रसराजं च चतुर्भागं सुवर्णकम् ॥ ४७४ ॥
अम्लेन मर्दयेत्पिष्टिं कृत्वा तद्वज्र(च)गोळकम् ।
तत्पिष्ट्या वेष्टयेत्तच्च भूर्जपत्रेण वेष्टयेत् ॥ ४७५ ॥
पक्षं न्यसेद्धान्यराशौ तदुद्धृत्य पुनः प्रिये ! ।
धमेद्धठान्मिळत्येव वज्रबीजमिदं भवेत् ॥ ४७६ ॥
वज्रषोडशभागेन स्वर्णपत्रेण वेष्टयेत् ।
तत्क्षिप्त्वा लिप्तमूषायां स्वर्णांशं श्वेतकाचजम् ॥
चूर्णं वा नृकपालं वा चूर्णं कृत्वा विनिक्षिपेत् ।
निरुध्य च धमेत्तीव्रमेवं कुर्यात्पुनः पुनः ॥ ४७८ ॥
क्षिप्त्वा क्षिप्त्वा श्वेतकाचं नृकपालमथापि वा ।
सप्तधैवं मिलत्येव वज्रबीजमिदं भवेत् ॥ ४७९ ॥

[सारणातैलम्]

अतः परं सारणायां प्रवक्ष्ये तैलसाधनम् ।
ज्योतिष्मतीकरंजाक्षकटुतुम्बीसमुद्भवम् ॥ ४८० ॥
तैलं कूर्मवराहादिमेषमत्स्यसमुद्भवम् ।
जलूकाभेकजाता च वसा ग्राह्या विधानतः ॥ ४८१ ॥
रक्तवर्गः पीतवर्गः क्वाथ्यः क्षीरैश्चतुर्गुणैः ।
पुष्पाणां रक्तपीतानामनेकानां द्रवं हरेत् ॥ ४८२ ॥

पाटलीकाकतुण्ड्युत्थमहाराष्ट्रीद्रवं तथा ।
एकांशं तैलमेकांशा वसा क्वाथश्चतुर्गुणः ॥ ४८३ ॥

त्र्यंशैः पुष्पद्रवैर्व्यंशान्पाटल्यादिद्रवानपि ।
सर्वं ताम्रमये पात्रे मृदुना वह्निना पचेत् ॥ ४८४ ॥

तस्मिन्क्षिपेत्षोडशांशं भूलतामलताप्यकम् ।
विख्यातं सारणातैलं रसराजस्य जारणे ॥ ४८५ ॥

रञ्जितं रसराजं तु सारणातैलसंयुतम् ।
निक्षिपेत्सारणायन्त्रे नाळमूषां गतं द्रुतम् ॥ ४८६ ॥

बीजं तु ढालयेत्सूते चतुष्षष्टितमांशकम् ।
उद्धृत्य तप्तखल्वे तु पट्वम्लैर्मर्दयेद्दिनम् ॥ ४८७ ॥

ततः कच्छपयन्त्रे तु सविव्ये(?)पाचयेद्दिनम् ।
इत्येवं षड्गुणं सार्यं सारितो जायते रसः ॥ ४८८ ॥

एवं द्वितीयवारे तु कृते सूतोऽनुसारितः ।
तथा तृतीयवारे तु रसस्स्यात्प्रतिसारितः ॥ ४८९ ॥

## १८. वेधः ॥

सारितस्य रसेन्द्रस्य हरिताळं समांशकम् ।
मर्दयेद्धूर्ततैलैश्च दिनं दिव्यौषधिद्रवैः ॥ ४९० ॥

ततोद्धृत्य क्षिपेद्वज्रमूषायां विपचेद्दिनम् ।
करीषाग्नाविति पुनर्मर्द्य पाच्यं त्रिधा प्रिये ! ॥ ४९१ ॥

अनेन कर्मणा देवि ! सूतो बद्धमुखो भवेत् ।
बद्धवक्त्रस्य सूतस्य भागमेकं सुरार्चिते ! ॥ ४९२ ॥

सुतारताम्रतीक्ष्णानां चूर्णानामेकभागकम् ।
सर्वं संमर्दयेद्देवदालीनीरैर्दिनं ततः ॥ ४९३ ॥

मध्वाज्यैश्च दिनं मर्द्यं तेन कुर्यात्सुगोळकम् ।
निक्षिपेद्वज्रमूषायां रुध्वा तीव्राग्निना धमेत् ॥ ४९४ ॥

स रसः खोटबद्धस्स्यात्तत्खोटं काचटङ्कणैः ।
तेजःपुञ्जो भवेद्यावत्तावत्कुर्याद्धमन्धमन् ॥ ४९५ ॥

तं रसं योजयेद्देहे लोहे रोगे च पार्वति ! ।

देहवेधक्रमः ॥

देहवेधं प्रवक्ष्यामि सावधानं शृणु प्रिये ! ॥ ४९६ ॥

पाचनस्नेहनस्वेदवमनारेचनैः क्रमात् ।
शरीरं शोधयेल्लोणक्षाराम्लादिविवर्जितः ॥ ४९७ ॥

ततस्त्वारोटकं सूतं भक्षयेत्परमेश्वरि ! ।
क्षेत्रं कृत्वा शरीरं तु ततस्सिद्धरसं क्षिपेत् ॥ ४९८ ॥

शतवेधिरसं पूर्वं ततस्साहस्रवेधकम् ।
दशसाहस्रवेधं च लक्षवेधकरं रसम् ॥ ४९९ ॥

वेधकं दशलक्षस्य कोटिवेधं सुरार्चिते ! ।

गन्धकेन युतं सूतं क्रमेणानेन सुव्रते ! ॥ ५०० ॥

स रसः क्रमते देहे सिद्धयस्सम्भवन्ति हि ।
रसायने तु याः प्रोक्ता मूलिका देहसिद्धिदाः ॥

ताभिर्युक्तो रसेन्द्रस्तु देहे सङ्क्रमते प्रिये ! ।
क्रामति तनौ हि सूतो जनयति पुत्रांश्च देवतागर्भान् ॥

खे गमनेन च नित्यं सञ्चरणं सकलभुवनेषु ।
धाता भुवनत्रितये स्रष्टाऽऽद्यो ब्रह्मयोनिरिव ॥ ५०३ ॥

विष्णुरिव पालनार्थे संहर्ता रुद्रदेववत्सकलम् ।

लोहवेधक्रमः ॥

क्रामणं लोहवेधस्य वक्ष्यामि शृणु भैरवि ! ॥ ५०४ ॥

दरदं माक्षिकं कान्तं शिलां गन्धं विषं घनम् ।
रसकं भूलतां हिङ्गु कांतास्यं टङ्कणं प्रिये ! ॥ ५०५ ॥

गन्धकेन हतं ताम्रं भुजङ्गं शिलया हतम् ।
दरदेन हतं तीक्ष्णं महिषीकर्णसम्भवम् ॥ ५०६ ॥

मलं वायसविष्ठां च प्रथमार्तवरक्ततः ।
अनेन वेष्टयेत्सिद्धसूतं लोहेषु वेधयेत् ॥ ५०७ ॥

तारकृष्टचष्टनवतिः स्वर्णमेकं तथा रसः ।
शतवेधी तु विख्यातस्त्वेवं साहस्रवेधकः ॥ ५०८ ॥

वेधयेद्दशसाहस्रं लक्षं कोटिमथार्बुदम् ।
जारणायां बलं यावत्तावल्लोहानि वेधयेत् ॥ ५०९ ॥

[१. क्रामणयोगः]

माक्षिकं भूलतां सूतं कुनटीं टङ्कणं तथा ।
स्त्रीस्तन्यरक्तं संपिष्टं क्रामणं क्षेपलेपयोः ॥ ५१० ॥

[२. क्रामणयोगः]

हिङ्गुलं रसकं कान्तं इन्द्रगोपं विषं तथा ।
मर्दयेत्तैलरक्ताभ्यां क्रामणं क्षेपलेपयोः ॥ ५११ ॥

[३. क्रामणयोगः]

गण्डोलविषभेकास्यमहिषीनेत्रजं मलम् ।
रुधिरेण समायुक्तं रससङ्क्रामणे हितम् ॥ ५१२ ॥

[४. क्रामणयोगः]

रोचनं गुग्गुलुं स्तन्यं इन्द्रगोपं विषं तथा ।

सर्वं संमर्दयेद्देवि ! रससङ्क्रामणे हितम् ॥ ५१३ ॥

[५. क्रामणयोगः]

विष्णुक्रान्ता मधूच्छिष्टं माहिषं कर्णजं मलम् ।
भूलता काकविष्ठा च लाङ्गली द्विपदी रजः ॥ ५१४ ॥
नररक्तं ब्रह्मसोमा सुरसा शैलजं प्रिये ! ।
शृङ्गी च लक्ष्मणा गृध्रकर्णी च क्रामणं परम् ॥

[६. क्रामणयोगः]

श्रीवेष्टनिंबनिर्यासस्त्रीस्तन्यविषटङ्कणैः ।
गोघृतेन समायुक्तो लोहे सङ्क्रामते रसः ॥ ५१६ ॥

[७. क्रामणयोगः]

परमं क्रामणं वङ्गं मृगनाभं च पार्वति ! ।
मातृवाहः कुलीरश्च शङ्खाभ्यन्तरजो मलः ॥ ५१७ ॥
तथा कपित्थनिर्यासो रससङ्क्रामणं परम् ।
क्रामणं रसराजस्य वेधकाले प्रदापयेत् ॥ ५१८ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ चतुर्थोल्लासः ॥



# ॥ पञ्चम उल्लासः ॥

॥ विशेषजारणाक्रमः ॥

श्रीभैरवी—

सामान्यजारणा प्रोक्ता त्वया पूर्वं सदाशिव ! ।
विशेषजारणं ब्रूहि यथा जानाम्यहं प्रभो ! ॥ १ ॥

श्रीभैरवः—

शृणु[1] देवि ! प्रवक्ष्यामि भूचराख्यं तु जारणम् ।

भूचरी जारणा ॥

कृष्णं पीतं तथा[2] रक्तं शुल्वे तीक्ष्णे च मेळयेत् ॥

शुल्वं[3] शुद्धं यदा जीर्णं द्वाविंशतिगुणं मते[4] ।
गन्धनागं ततोऽर्धं तु क्रमेणैव तु मेळयेत् ॥ ३ ॥

हेम्ना तु सह दातव्यं सूतकैकेन षोडश ।
गन्धनागं यदा जीर्णं तदा बद्धो भवेद्रसः ॥ ४ ॥

हेम्नि जीर्णे ततोऽर्धेन मृतलोहेन रञ्जयेत् ।
गन्धकेन हतं शुल्वं माक्षिकं दरदायसम् ॥ ५ ॥

पुटेन मारयेच्छुद्धं हेम दद्यात्तु षड्गुणम् ।
सूतके हेमबीजं च यदा जीर्णं चतुर्गुणम् ॥ ६ ॥

बद्धरागं विजानीयाद्धेमाभो जायते रसः ।
सारणायन्त्रमध्यस्थं तेनैव सह सारयेत् ॥ ७ ॥

त्रिभागं सारितं कृत्वा पुनस्तत्रैव जारयेत् ।
जारितः सारितश्चैव पुनर्जारितसारितः ॥ ८ ॥

---

1. रसार्णवे एकादशे पटले एते जारणाप्रकाराः अमुनैव पाठेन पठ्यन्ते । तत्रोपलभ्यमानाः पाठभेदाः इमे ।

2. रक्तमभ्रं । 3. शुल्वे तीक्ष्णं । 4. प्रिये ।

सप्तशृङ्खलिकायोगात्कोटिवेधी भवेद्रसः ।
भूचरी जारणा प्रोक्ता खेचरीं जारणां शृणु ॥ ९ ॥

**खेचरी जारणा ॥**

हीन[1]रागानि रत्नानि रसोच्छिष्टानि कारयेत् ।
कटुतुंबस्य बीजानि तस्यार्धेन तु दापयेत् ॥ १० ॥

महाजारसमायुक्तं कल्कं कुर्याद्विचक्षणः ।
वज्रमूषामुखे चैव तन्मध्ये स्थापयेद्रसम् ॥ ११ ॥

कतकं कनकं चैवमेकीकृत्य विमर्दयेत् ।
पद्मरागप्रलेपं तु[2] रसे ग्रासं तु दापयेत्[3] ॥ १२ ॥

भक्षितव्यं प्रयत्नेन नत्वा च गुरुदेवयोः ।
सर्वसिद्धान्नमस्कृत्य देवताश्च विशेषतः ॥ १३ ॥

मूर्च्छाऽङ्गदाहश्च ततो जायते नात्र संशयः ।
आत्मानमुत्थितं पश्येद्दिव्यदेहो महाबलः ॥ १४ ॥

शङ्खकाहलनिर्घोषैस्सिद्धविद्याधरैस्सह ।
इच्छया विचरेल्लोकान् कामरूपी विमानगः ॥ १५ ॥

देवा वै यत्र लीयन्ते सिद्धस्तत्रैव लीयते ।

**अन्यो जारणाप्रकारः ॥**

पुनरन्यं प्रवक्ष्यामि जारणायोगमुत्तमम् ॥ १६ ॥

सुघृष्टं पातितं सूतं सर्वदोषोज्झितं ततः ।
शाकपल्लवसारेण विष्णुक्रान्तारसेन च ॥ १७ ॥

---

1. हीरमुख्यानि रत्नानि । 2. पद्मरागं प्रयत्नेन ।

3. इतः परमयमंशोऽधिकः । एकादशगुणं यावत्पद्मरागं तु सूतके रागजीर्णस्तु देवेशि ! लिङ्गाकारो भवेद्रसः । रक्षितव्यं प्रयत्नेन लोकपालाष्टकेन च । षड्भागं सूतकेन्द्रस्य तेषु सर्वेषु दापयेत् ।

पालाशपुष्पतोयेन भावितं गन्धकं समम्।
समं कृष्णाभ्रसत्वं च रसकं चाष्टकं गुणम्॥ १८॥

तीक्ष्णशुल्बोरगं चैव कूर्मयन्त्रेण जारयेत्।
काञ्चनं जारयेत्पश्चाद्बिडयोगेन पार्वति!॥ १९॥

ततस्सिद्धं विजानीयाद्द्वैधं शुल्बस्य दापयेत्।
कर्मसंख्याप्रमाणेन नागो भवति काञ्चनम्॥ २०॥

अतः परं प्रवक्ष्यामि जारणाक्रममुत्तमम्।
बीजचूर्णानि तैलेन भावयित्वा पुनः पुनः॥ २१॥

षोडशांशेन तं ग्रासमङ्गुल्या मर्दयेच्छनैः।
आर्द्रकादि ततो योगाद्दातव्यं षोडशांशतः॥ २२॥

भूर्जे दत्वा ततो देयं डोलायन्त्रे विनिक्षिपेत्।
अहोरात्रेण तद्बीजं सूतको ग्रसति प्रिये!॥ २३॥

समुद्धृत्य रसं देवि! खल्वे संमर्दयेत्ततः।
ततो यन्त्रे विनिक्षिप्य दिवारात्रं दृढाग्निना[1]॥ २४॥

तप्तं समुद्धृतं यन्त्रात्ततखल्वे विमर्दयेत्।
मर्दयित्वाऽर्द्रके पिण्डे क्षिप्त्वाऽथ[2] त्रिपुटं दहेत्॥

ततो गर्भे पतत्याशु जरते तत्सुखेन तु।
डोलायन्त्रे ततो दद्यादार्द्रपिण्डेन संयुतम॥ २६॥

तृतीयदिवसे सूतो जरते ग्रसते ततः।
समजीर्णं ततो यावत् डोलायन्त्रे विचक्षणः॥ २७॥

पश्चात्कच्छपयन्त्रेण समजीर्णं तु पार्वति!।
ताम्रांश[3]द्वादशांशेन कच्छपेन तु जारयेत्॥ २८॥

1. तुषाग्निना। 2. तत्र पुटं ददेत्।
3 तं ग्रासद्वादशांशेन।

प्राग्वदार्द्रकयोगं च गर्भद्रावणमेव च ।
पश्चात्तं देवि ! निक्षिप्य पुटं दद्याद्विचक्षणः ॥ २९ ॥
अष्टांशेन ततो ग्रासं गर्भद्रावं च पूर्ववत् ।
कन्दोदरे सूरणस्य तं विनिक्षिप्य सूतकम् ॥ ३० ॥
पुटयेद्वार्तिक[1]स्तावत् यावत्कन्दो न दह्यते ।
पादांशेन तु मूषायां ग्रासस्सूते विधीयते ॥ ३१ ॥
पूर्ववच्च बिडं दद्याद्गर्भद्रावणमेव च ।
एवं चतुर्गुणे जीर्णे सूतको बलवान् भवेत् ॥ ३२ ॥
ततश्शलाकया ग्रासमग्निस्थो ग्रसते रसः ।
ततो रत्नानि जार्याणि वक्ष्यमाणक्रमेण तु ॥ ३३ ॥
अभ्रकं भ्रामकं चैव शङ्खनाभिं तथैव च ।
रसानुपरसान्दत्वा महाजारसमन्वितम् ॥ ३४ ॥
[2]वज्रकन्दलतां ब्राह्मीमेषश्रृङ्ग्यमृतायसम् ।
कटुतुम्बस्य बीजानि मृतलोहानि पाचयेत् ॥ ३५ ॥
सर्वाणि समभागानि शिखिशोणितमर्दितम् ।
तावत्तं मर्दयेत्प्राज्ञो यावत्कर्म दृढं भवेत् ॥ ३६ ॥
मूषा मल्लाकृतिश्चैव कर्तव्याऽऽच्छादनैस्सह ।
तन्मध्ये स्थापयेत्सूतमधोवातेन धामयेत् ॥ ३७ ॥
आदौ तावत्प्रकर्तव्यं वज्रमौषधलेपितम् ।
गृह्यते नात्र सन्देहो यथा तीव्रहुताशने ॥ ३८ ॥
[3]कुलिशादि भवेद्दग्धं करीषा तेन मर्दयेत् ।
यावदेकादशगुणं कुलिशं जारयेद्बुधः ॥ ३९ ॥

---

1. जारितस्तावत् । 2. वज्रकन्दं वज्रलता ।
3. कुलिशेन पुटे दग्धे कर्ष्वेग्नौ तेन मर्दयेत ।

सन्दग्धा शङ्खनाभिश्च मातुलुङ्गरसप्लुता ।
मुक्ताफलं ततो देयं वज्रजीर्णे तु सूतके ॥ ४० ॥

अनेन क्रमयोगेन ह्येकादशगुणं भवेत् ।
केवलं शिखिपित्तं च नीलीनिर्यासमिश्रितम् ॥ ४१ ॥

नीलोत्पलानि लिप्तानि निक्षिप्तानि तु सूतके ।
रसः पिबेन्महारागान्हीनरागान्परित्यजेत् ॥ ४२ ॥

रक्ता(क्ता)नि शिखिपित्तं च महारक्त(क्त)समन्वितम् ।
सद्रत्नं लेपयेत्तेन प्रक्षिपेद्रसमध्यतः ॥ ४३ ॥

रजनी चैव कंकुष्ठं ब्रह्मनिर्यासभावितम् ।
जारणं पुष्परागस्य तेनैव सह दापयेत् ॥ ४४ ॥

बहुरत्नेषु जीर्णेषु भृङ्गराजेषु सुव्रते ! ।
रसेन्द्रो दृश्यतां देवि ! नीलपीतारुणच्छविः ॥ ४५ ॥

धूमवेधीरसः ॥

शुद्धानि हेमपत्राणि शतांशेनानुलेपयेत् ।
पुटेन मारयेदेतदिन्द्रगोपनिभं भवेत् ॥ ४६ ॥

संस्पर्शाद्वेधयेत्सर्वं इदं हेम मृतं प्रिये ! ।
त्रिभागं सूतकेन्द्रस्य तेनैव सह का(सा ?)रयेत् ॥

मूषामध्ये स्थिते तस्मिन्पुनस्तेनैव जारयेत् ।
धूमवेधी भवेद्देवि ! पुनः[1] पुनः प्रसारितः ॥ ४८ ॥

अनेन क्रमयोगेन यदि जीर्णा त्रिशृङ्खला ।
वेधयेन्नात्र सन्देहो गिरिपाषाणभूतलम् ॥ ४९ ॥

पार्श्वे ज्योतिः प्रदृश्येत ऊर्ध्वं दृश्येत तेन(नैव)वै ।
भूचरं तं विजानीयाद्रसेन्द्रं नात्र संशयः ॥ ५० ॥

---

1. पुनः सारितजारितः ।

तेनाश्रान्तगतिर्देवि ! योजनानां शतं व्रजेत् ।
दिव्यतेजा महाकायो दिव्यदृष्टिर्महाबलः ॥ ५१ ॥

सर्वरोगविनिर्मुक्तो जीवेच्चन्द्रार्कतारकम् ।
तस्य मूत्रपुरीषं तु सर्वलोहानि विध्यति ॥ ५२ ॥

**अन्ये वेधप्रकाराः ॥**

समजीर्णेन वज्रेण हेम्ना च सहितेन च ।
अग्निस्थो जारयेल्लोहान् बन्धमायाति सूतकः ॥ ५३ ॥

सारयेत्तेन बीजेन सहस्रमपि वेधयेत् ।
सारितं जारयेत्पश्चात् लेप्यं क्षेप्यं सहस्रतः ॥ ५४ ॥

सारयेत्तेन बीजेन लक्षवेधमवाप्नुयात् ।
अनेन क्रमयोगेन कोटिवेधी भवेद्रसः ॥ ५५ ॥

केवलं तु यदा वज्रं समजीर्णं तु कारयेत् ।
बद्धस्सूतस्तदा ज्ञेयो निष्कंपो निरुपद्रवः ॥ ५६ ॥

अग्निस्थो जायते सूतः शलाकां ग्रसते क्षणात् ।
हठाग्निना धाम्यमानो ग्रसते सर्वमादरात् ॥ ५७ ॥

ग्रसते जरते सूतं आयुर्द्रव्यप्रदायकः ।
मूषास्थं धमयेत्सूतं हठाग्नौ नैव कंपयेत् ॥ ५८ ॥

जारयेत्सर्वरत्नानि बद्धः खेचरतां नयेत् ।
अष्टलोहेऽष्टगुणिते जीर्णे स्याद्रसबन्धनम् ॥ ५९ ॥

लोहानि सर्वास्त्रिगुणं[1] त्रिगुणं कनकं तथा ।
धूमावलोके वेधी स्यात् भवेन्निर्वाणदोऽम्बरः ॥ ६० ॥

आदावष्टगुणं जार्यं व्योमसत्वं महारसे ।
समं हेमदशांशेन वज्ररत्नानि जारयेत् ॥ ६१ ॥

1. सत्वं त्रिगुणं ।

समं च जारयेद्वज्रं तदासौ खेचरो रसः ।
क्रमे प्रदक्षिणावर्तः कोटिवेधी च जायते ॥ ६२ ॥

**जीर्णद्रव्यमानभेदात् वेधे विशेषः ॥**

समे तु पन्नगे जीर्णे दशवेधी भवेद्रसः ।
द्विगुणे शतवेधी स्यात्सहस्रं त्रिगुणे भवेत् ॥ ६३ ॥

चतुर्गुणेऽयुतं देवि ! क्रमेणानेन वर्धयेत् ।
उत्तरोत्तरवृद्ध्या तु जारयेत्तत्र पन्नगम् ॥ ६४ ॥

कुटिलं पन्नगं जार्यं नवसंख्याक्रमेण तु ।
दत्वा क्रमेण देवेशि ! कोटिवेधी भवेद्रसः ॥ ६५ ॥

गन्धकादिमपाषाणे षड्गुणे जीर्णतां गते ।
रोगहर्ता रसः स्यात्तु समुखे तवदा(?) भवेत् ॥ ६६ ॥

तस्मिन् शतगुणे जीर्णे रुग्जरामृत्युहा भवेत् ।
अभ्रकादिमपाषाणसत्वान्यात्मसमं ग्रसन् ॥ ६७ ॥

रुग्जरा मरणं जित्वा शतवेधी रसो भवेत् ।
शतायुर्द्विगुणे जीर्णे सूतस्साहस्रवेधकः ॥ ६८ ॥

चतुर्गुणे सहस्रायुः पारदोऽयुतवेधकः ।
रसश्चाष्टगुणे जीर्णे लक्षायुर्लक्षवेधकः ॥ ६९ ॥

ब्रह्मायुष्षोडशगुणे कोटिवेधी भवेद्रसः ।
द्वात्रिंशद्गुणिते जीर्णे खेचरत्वादिसिद्धिदः ॥ ७० ॥

विष्णोरायुर्बलं दत्ते पारदस्स्पर्शवेधकः ।
चतुष्षष्टिगुणे जीर्णे शिवायुश्शब्दवेधकः ॥ ७१ ॥

**षड्गुणाभ्रकजारणेन सर्वदोषनाशः ॥**

रसस्य सर्वदोषास्तु षड्गुणेनाभ्रकेण तु ।
जीर्णेन नाशमायान्ति नात्र कार्या विचारणा ॥ ७२ ॥

तदा ग्रसति लोहानि त्यजेच्च गतिमात्मनः ।
धूमश्चिटिचिटिश्चैव मण्डूकप्लुतिरेव च ॥ ७३ ॥

सकंपश्च विकंपश्च पञ्चावस्था रसस्य तु ।
समजीर्णो भवेद्बालो यौवनस्थश्चतुर्गुणः ॥ ७४ ॥

वृद्धष्षड्गुणजीर्णस्तु सर्वकर्मकरश्शुभः ।

**जारणे क्रमः ॥**

गन्धकं जारयेदादौ सर्वसत्वान्यतः परम् ॥ ७५ ॥

ततस्सर्वाणि लोहानि द्वन्द्वानि विविधानि च ।
पक्वबीजानि रत्नानि द्रुतिसत्वे च जारयेत् ॥ ७६ ॥

चतुष्षष्ट्यंसके पूर्वं द्वात्रिंशांशे द्वितीयकः ।
तृतीयष्षोडशांशे तु चतुर्थश्चाष्टमेन च ॥ ७७ ॥

पञ्चमोऽथ चतुर्थांशे षष्ठो व्द्यंशे प्रकीर्तितः ।
शतांशे सप्तमो ज्ञेयो ग्रासमानं रसस्य तु ॥ ७८ ॥

**ग्रासमानभेदेन स्वरूपभेदः ॥**

चतुष्षष्ट्यंशके ग्रासे दण्डधारी भवेद्रसः ।
जलूकाभो द्वितीये तु ग्रासयोगे सुरेश्वरि ! ॥ ७९ ॥

ग्रासे रसात्तृतीये च काकविष्ठासमो भवेत् ।
चतुर्थो गोळकाकारः पञ्चमे दहनप्रभः ॥ ८० ॥

षष्ठे सूर्यप्रभस्सूतस्तेजःपुंजश्च सप्तमे ।
रसराजस्य देवेशि ! क्रमाज्जीर्णस्य लक्षणम् ॥ ८१ ॥

समांशं द्विगुणं ग्रासं ततस्सूते चतुर्गुणम् ।
तथा चाष्टगुणं देवि ! जारयेच्च कलागुणम् ॥ ८२ ॥

द्वात्रिंशद्गुणितं देवि ! चतुष्षष्टिगुणं क्रमात् ।

संस्कारैर्जायमाना गुणाः ॥

तीव्रत्वं जनयेत्स्वेदादमलत्वं च मर्दनात् ॥ ८३ ॥

मूर्च्छनाद्दोषराहित्यमुत्थानात्पूतिनाशनम् ।
रसायनं पातनेन रोधादाप्यायनं भवेत् ॥ ८४ ॥

अचापल्यं नियमनाद्दीपनात्सम्मुखो ज्वलेत् ।
वासनाद्योगसांगत्यं चारणाद्बलचारिता ॥ ८५ ॥

जारणाद्बन्धनं सम्यगेकत्वं द्रावणद्वयात् ।
रक्तत्वं रञ्जनात्तस्य व्यापित्वं सारणात्रयात् ॥ ८६ ॥

क्रामित्वं क्रामणाद्देहलोहेष्वपि च वेधनात् ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ पञ्चमोल्लासः ॥

---

# ॥ षष्ठ उल्लासः ॥

## ॥ देहवेधक्रमः ॥

प्रणम्य शिरसा शम्भुं पप्रच्छ गिरिजात्मजा ।

श्रीभैरवी—

देहवेधस्त्वया पूर्वं संक्षेपात्कथितः प्रभो ! ॥ १ ॥

तं देहवेधमाचक्ष्व सम्यक् जानाम्यहं यथा ।

श्रीभैरवः—

शृणु देवि ! प्रवक्ष्यामि देवानामपि दुर्लभम् ॥ २ ॥

योगिनां भोगयुक्तानां देहवेधं सुरेश्वरि ! ।
पाचनादि प्रकुर्वीत पञ्चकर्मविधानतः ॥ ३ ॥

पञ्चकर्माणि ॥

[१. पाचनम्]

लवणादिसमुत्क्लिष्टान्दोषान्संशोधयेत्क्रमात् ।
ततो जीर्णरसं चाद्यात्क्रमादेवं सुरेश्वरि ! ॥ ४ ॥

लध्वाहारो दिवा भूत्वा क्षुद्राधान्याकनागरम् ।
एतत्त्रयं पलोन्मेयं उदकेष्ववलोडयेत् ॥ ५ ॥

अष्टावशिष्टं संक्वाथ्य प्रतिरात्रं पिबेत्त्र्यहम् ।
अनन्तरं कराकाथं पूर्ववत्त्रिदिनं पिबेत् ॥ ६ ॥

इति पाचनमातन्यादथ स्नेहनमाचरेत् ।

[२. स्नेहनम्]

घृतोदनं छागरसं दिवा भुञ्जीत मात्रया ॥ ७ ॥

आज्यान्नं वा मुद्गरसं लघ्वाशी स्याद्दिने सुधीः ।
रात्रौ पिबेद्घृतं गव्यं सैन्धवेन समन्वितम् ॥ ८ ॥

निष्कमेकं सैन्धवं च घृतं निष्कचतुष्टयम् ।
भृङ्गामलकतैलेन सर्वाङ्गमभिषेचयेत् ॥ ९ ॥

एवं सप्तदिनं कुर्यात्स्नेहनं परमं हितम् ।

[३. स्वेदनम्]

मत्स्यमांसं माषतिलयवजामलसक्तवः ॥ १० ॥

सर्वमेतद्द्रवेत्प्रस्थमेकाष्ठीलागरूबला ।

रास्ना व्याघ्री घनापत्रं कौशिकातिविषा निशा ॥ ११ ॥

सर्वमेतद्द्वयपलं तक्रक्षीरांबुकांजिकम् ।
व्याढके निक्षिपेत्सर्वं मृत्पात्रे क्वाथयेत्सुधीः ॥ १२ ॥

कुर्यात्तस्योष्मणा गात्रं स्विन्नं द्विघटिकावधि ।
एवं सप्तदिनं कुर्यात्स्वेदनं परमं हितम् ॥ १३ ॥

[४. वमनम्]

मदनस्य फलं चैकं पाठा षोडशिकं जलम् ।
पादावशिष्टं संक्वाथ्य तज्जले वस्त्रशोधिते ॥ १४ ॥

पिप्पलीन्द्रयवा यष्टिलवणं कर्षमात्रकम् ।
निक्षिपेच्च पिबेत्प्रातर्वान्तिस्स्यात्सर्वरोगहा ॥ १५ ॥

[५. विरेचनम्]

सूतटङ्कणगन्धाश्म त्रिकटुं त्रिफलां समम् ।
एतैस्समं तु जेपालं श्लक्ष्णं तत्परिमर्दयेत् ॥ १६ ॥

गुञ्जाद्वितयमात्रं तु गुडेन सह भक्षयेत् ।
विरेचनमिति प्रोक्तं सर्वव्याधिविनाशनम् ॥ १७ ॥

पञ्चकर्मेति कथितं क्रमात्कुर्याद्विरेचने ।

दोषशोधकयोगाः ॥

केतकीस्तनजम्बीरं प्रत्यहं कुडुवं पिबेत् ॥ १८ ॥

सप्तवासरपर्यन्तं प्रातर्लवणदोषहृत् ।
सलिले षोडशपले त्रिफलैकपलं क्षिपेत् ॥ १९ ॥

क्वाथयेत्पादशेषं तत्तस्मिन् शीते मधोः पलम् ।
पिबेत्प्रभाते त्रिदिनं क्षारदोषहरं परम् ॥ २० ॥

विडङ्गं सवचाकुष्ठं केतकीस्तनसंयुतम् ।
क्वथितं त्रिदिनं पीतमम्लदोषहरं पिबेत् ॥ २१ ॥

अथवा तिन्त्रिणीक्षारसलिलं पलमात्रकम् ।
यवक्षारसिताकर्षं संयोज्य त्रिदिनं पिबेत् ॥ २२ ॥

अम्लदोषविनाशोऽयं कथितश्च रसायने ।
वचाविडङ्गपालाशबीजजन्तुघ्नकर्षकम् ॥ २३ ॥

कर्षं गुडं च तत्सर्वं भक्षयेदुष्णवारि च ।
पिबेत्प्रातस्त्रिदिवसं भवेत्तत्क्रिमिपातनम् ॥ २४ ॥

श्यामावह्निविडङ्गानि वाशा त्र्यूषं फलत्रयम् ।
सैन्धवं देवदारुं च मुस्ता चैतत्समं समम् ॥ २५ ॥

घृतैः कर्षं लिहेत्प्रातः सप्ताहात्सर्वरोगजित् ।
एवं कृत्वा देहशुद्धिं शाल्यन्नं क्षीरभोजनम् ॥ २६ ॥

सम्यग्जातबलो भूत्वा ततः कुर्याद्रसायनम् ।

**रसायनोपयोगः ॥**

क्षीराज्यामलकरसक्षौद्रैस्सुरतरूद्भवम् ॥ २७ ॥

तैलं निर्मथ्य तत्सर्वं द्विपलं प्रत्यहं पिबेत् ।
मासेन कान्तिर्मेधा च भवत्येव न संशयः ॥ २८ ॥

द्वितीयमासि पूर्वोक्तं तत्पिबेत्तच्चतुःपलम् ।
तेन शाम्यन्ति दोषाश्च विकारा नेत्रसम्भवाः ॥ २९ ॥

पुनस्तृतीये मासे तु सेव्यं षट्पलमात्रकम् ।
तेनामरवपुर्भूयान्महातेजा भवेद्ध्रुवम् ॥ ३० ॥

**आरोटरससेवाक्रमः ॥**

अथारोटरसस्सेव्यः क्रमेण परमेश्वरि ! ।
अयश्शुल्बाभ्रताप्येभ्यः पातितो मारितः क्रमात् ॥

अयमारोटकरसो देहसिद्धिकरः परः ।
स्वेदनाद्यैश्च संस्कारैस्सप्तभिस्संस्कृतो रसः ॥ ३२ ॥

मूर्च्छितो रंजितो देवि ! सूतस्त्वारोटकः स्मृतः ।
रसायने रोगशान्त्यां श्रेष्ठस्सर्वगुणप्रदः ॥ ३३ ॥

क्रान्ताभ्रसत्वारोटाश्च समं गुञ्जाद्वयोन्मितम् ।
मध्वाज्यत्रिफलाभिश्च मासमेकं भजेदिति ॥ ३४ ॥

एवं क्रमेण संसेव्यं द्वित्रिवेदेषुषट्क्रमात् ।
एवं षोडशमासान्तं गुञ्जाषोडशमात्रकम् ॥ ३५ ॥

आरोटकरसे चेत्थं कुर्यान्मत्प्राणवल्लभे ! ।
वलीपलितनिर्मुक्तो जीवेच्च शरदश्शतम् ॥ ३६ ॥

**आरोटरसः ॥**

कान्तसत्वाभ्रसत्वं च स्वर्णजीर्णरसस्तथा ।
सर्वमेतत्समीकृत्य भजेदारोटकं तथा ॥ ३७ ॥

क्षेत्रीकरणमेतद्धि सहस्रायुष्यकारकम् ।
अभूमौ योजितस्सूतो न प्ररोहति कुत्रचित् ॥ ३८ ॥

तस्मात्क्षेत्रमकृत्वैव योजयेद्यस्तु सूतकम् ।
न प्ररोहेदशुद्धस्य शुभं बीजमिवोषरे ॥ ३९ ॥

**खोटबद्धरससेवाक्रमः ॥**

पूर्वोक्तखोटबद्धस्य सूतस्य विधिमुत्तमम् ।
क्रामणं च क्रमाद्वक्ष्ये तथा विधिनिषेधनम् ॥ ४० ॥

शृणु पार्वति ! यत्नेन त्वत्प्रीत्या कथयाम्यहम् ।
कान्ताभ्रस्वर्णवज्राणि रसस्य क्रामणं परम् ॥ ४१ ॥

क्रामणेन विना सूतो न सिद्ध्येद्देहलोहयोः ।
गुञ्जामात्रं खोटबद्धं क्रामणक्षौद्रसंयुतम् ॥ ४२ ॥

मासमेकं भजेदित्थं पुनर्विधिक्रमेण वै ।
मासषोडशपर्यन्तं यथाऽऽरोटरसस्तथा ॥ ४३ ॥

स शतायुष्यमाप्नोति सर्वरोगविवर्जितः ।

पलमात्रोपयोगेन व्याधिभिर्नाऽभिभूयते ॥ ४४ ॥

द्वितीये शुक्रवृद्धिस्स्यात्तृतीये बलवान् भवेत् ।
चतुर्थे पलितं हन्ति वलिं जयति पञ्चमे ॥ ४५ ॥

षष्ठे श्रुतिधरो वाग्मी सप्तमे नेत्ररोगहृत् ।
अष्टमे तार्क्ष्यदृष्टिस्स्याद्ब्रह्मायुर्ब्रह्मविक्रमः ॥ ४६ ॥

उपयुंज्यान्नवपलं सिद्धिमेलापकं भवेत् ।
विनियुञ्ज्याद्दशपलं द्वितीयश्शङ्करो भवेत् ॥ ४७ ॥

सहस्रायुष्यकरं सूतं माषमात्रं भजेन्नरः ।
अयुतायुष्करं सूतं यवमात्रं भजेत्प्रिये ! ॥ ४८ ॥

लक्षायुष्यकरं सूतं व्रीहिमात्रं भजेत्सुधीः ।
कोट्यायुष्यं भजेत्सूतं खादयन्मुद्गमालकम् ॥ ४९ ॥

एतत्सर्वं रसानां तु क्रामणं पूर्ववद्भवेत् ।
सहस्रायुःप्रदस्सूतो ब्रह्मत्वं विदधाति सः ॥ ५० ॥

अयुतायुष्करस्सूतो विष्णुतां प्रददाति च ।
लक्षायुष्यकरस्सूतो रुद्रत्वमुपपादयेत् ॥ ५१ ॥

कोट्यायुष्यप्रदस्सूतश्शिवत्वं विदधाति च ।
माक्षीकजीर्णसूतस्तु धनदत्वं ददाति वै ॥ ५२ ॥

इन्द्रत्वं विमलाजीर्णस्त्वभ्रजीर्णोऽर्कतां ददेत् ।
ब्रह्मतां शुल्वजीर्णश्च विष्णुतां तारजारितः ॥ ५३ ॥

रुद्रता हेमजीर्णे स्यादीशत्वं वज्रजारिते ।
सदाशिवत्वं च ददेत्पारदो द्रुतिजारितः ॥ ५४ ॥

सच्चिदानन्दरूपत्वं सूतको बीजजारितः ।
सामान्येन तु तीक्ष्णेन रुद्रत्वं प्राप्नुयान्नरः ॥ ५५ ॥

एवं यो लोहजीर्णं तु भक्षयेद्बद्धसूतकम्।
जलेन जलरूपी स्यात्स्थलेन स्थलतां व्रजेत्॥ ५६॥

तेजस्त्वं तेजसा देवि! वायुना वायुरूपभाक्।
कर्ता हर्ता स्वयं साक्षाच्छापानुग्रहकारकः॥ ५७॥

यत्र मूत्रपुरीषं तु साधकस्तु परित्यजेत्।
पाषाणं मृण्मयं तत्र स्पृष्टं भवति कांचनम्॥ ५८॥

प्रस्वेदात्तस्य गात्रस्य लोहान्यष्टौ च वेधयेत्।
तत्सर्वं कनकं दिव्यं भक्षिते द्वादशे पले॥ ५९॥

अथवा तारजीर्णं तु भक्षयेद्बद्धसूतकम्।
शुल्बारं वङ्गघोषं च तत्स्वेदात्तारता भवेत्॥ ६०॥

अथवा तीक्ष्णजीर्णं तु भक्षयेद्बद्धसूतकम्।
मूत्रेण तस्य स्पृष्टं तु वङ्गं व्रजति तारताम्॥ ६१॥

एकैकेन निषेकेन स्तम्भनं नागवङ्गयोः।
गुञ्जामात्रं रसं देवि! हेमजीर्णं तु भक्षयेत्॥ ६२॥

द्विगुञ्जं तारजीर्णस्य रविजीर्णस्य च त्रयम्।
तीक्ष्णाभ्रकांतमाणैकं गुंजका द्वेऽथवा भवेत्॥ ६३॥

वज्रवैक्रांतजीर्णं तु भक्षयेत्सर्षपोन्मितम्।
नागवङ्गवसाकीटविषोपविषसंयुतम्। ६४॥

मूत्रयुक्तं हठाद्बद्धं त्यजेत्कल्कं रसायने।
हेमतारप्रवेशेन जातो योऽग्निसहः क्रमात्॥ ६५॥

बद्धश्च रसराजोऽयं देहसिद्धिप्रदो भवेत्।
वज्रायस्कांतमाक्षीकवैक्रान्ताभ्रककांचनम्॥ ६६॥

एतैर्जीर्णो यथालाभं रसश्शस्तो रसायने।
षडेनोपरसाश्चैव भक्षणार्थं रसायने॥ ६७॥

भस्मनस्तीक्ष्णजीर्णस्य पलमेकं तु भक्षयेत् ।
दशवर्षसहस्राणि वज्रकायस्स जीवति ॥ ६८ ॥

एवञ्च द्वादशपलं तीक्ष्णजीर्णस्य भक्षयेत् ।
एवं जीवन्महाकल्पं प्रळयान्ते शिवं व्रजेत् ॥ ६९ ॥

भस्मनश्शुल्बजीर्णस्य पलेन ब्राह्ममायुषम् ।
द्विपले वैष्णवायुष्यं रुद्रायुस्त्रिपलेन तु ॥ ७० ॥

चतुर्थे तु पले देवि! शिवत्व प्राप्नुयान्नरः ।
हेमजीर्णे भस्मसूते त्रिपले भक्षिते क्रमात् ॥ ७१ ॥

अष्टाशीतिसहस्राणि योगिन्यो मददर्पिताः ।
तस्य तिष्ठन्ति किंकर्यः कामरूपी भवेन्नरः ॥ ७२ ॥

यद्यद्भावयते रूपं तत्तद्रूपधरो भवेत् ।
यत्र यत्र विलीयन्ते सिद्धिस्तत्रैव लीयते ॥ ७३ ॥

मिते पले द्वादशभिर्हेमभस्मनि भक्षिते ।
गुंजैकमात्रं देवेशि! ज्ञात्वा चाग्निबलं निजम् ॥ ७४ ॥

घृतेन मधुना चाद्यात्ताम्बूलं कामिनीं भजेत् ।
एको हि दोषस्सूक्ष्मोऽपि भक्षिते भस्मसूतके ॥ ७५ ॥

त्रिसप्ताहाद्वरारोहे कामान्धो जायते नरः ।
कामिनीनां सहस्रं तु क्षोभयेद्दिवसान्तरे ॥ ७६ ॥

नारीसङ्गाद्वरारोहे देहे क्रामति सूतकः ।
नारीसङ्गाद्विना देवि! ह्यजीर्णं तच्च जीर्यते ॥ ७७ ॥

मैथुनाच्चलिते शुक्ले त्रिसप्ताहादधः कृतात् ।
जायते प्राणसन्देहस्तावत्तन्मैथुनं त्यजेत् ॥ ७८ ॥

युवत्या जल्पनं कार्यं युवत्या चाङ्गमर्दनम् ।
यस्यास्स्पर्शनमात्रेण रसः क्रामति विग्रहे ॥ ७९ ॥

यथा तथा ह्लादयते सुस्त्रीरूपनिरीक्षणम्।
तथा क्रामति देवेशि! सूतकोऽसौ ततः क्षणात्॥८०॥

अश्वत्थसदृशो यस्या आधारश्च समश्शुभः।
तादृशस्तु भगो देवि! भाजनं तु रसायने॥ ८१ ॥

निर्मांसश्चैव दीर्घश्च भगश्शुष्कशिरास्तथा।
दुःखदारिद्र्यकर्तारं वर्जयेत्तं रसायने॥ ८२ ॥

पक्षे शुक्ले शुभदिने चन्द्रताराबलान्विते।
सुमुहूर्ते चिन्त्यं शिवानलविप्रगुरून्द्विजः॥ ८३ ॥

सन्तुष्टस्सुमना भूत्वा रसं सेवेत सिद्धिदम्।
पयसा हेमशुण्ठीभ्यां नस्यं क्रामणमुत्तमम्॥ ८४ ॥

हेमादि षड्लोहकृतमञ्जनं क्रामणं परम्।

## रससेवायां पथ्यापथ्यम्॥

अतः परं प्रवक्ष्यामि रससेवाहिताहितम्॥ ८५ ॥

रक्तशाल्यन्नगोधूमं गव्यं क्षीरं घृतं दधि।
जांगलं पललं मुद्गं शर्करा मधु सैन्धवम्॥ ८६ ॥

हंसोदकं वास्तुकं च मेघनादः पुनर्नवा।
पटोलालाबुकदलीधान्यकेक्षुकदाडिमम्॥ ८७ ॥

नालिकेरांबु विश्वं च सदा ताम्बूलचर्वणम्।
गन्धसारं कुङ्कुमं च मृगनाभिं विलेपयेत्॥ ८८ ॥

सुरभीणि सुपुष्पाणि मृदुशय्येष्टकामिनीः।
शिवात्मज्ञानकथनं मृदुभाषा सुखासिका॥ ८९ ॥

दिव्याम्बराणि शुद्धानि छाया चाल्पविपर्यटम्।
मृत्युञ्जयजपो हर्षो मन्दहासश्च शुद्धता॥ ९० ॥

नर्तनालोकनं गीतश्रवणं शिवपूजनम् ।
देवाग्निगुरुविप्राणां वन्दनं श्रुतिपालनम् ॥ ९१ ॥

समाधिः प्राणिकरुणा सत्यवाक्यं हितं प्रियम् ।
वाग्देहमनसां चेष्टा यथा दुःखनिरोधिनी ॥ ९२ ॥

एतत्सर्वं रसेन्द्रस्य क्रामणं कथितं प्रिये ! ।
अहितं रससेवायाः कथयामि शृणु प्रिये ! ॥ ९३ ॥

अत्यशनं चातिपानमतिनिद्राऽतिजागरम् ।
अकाले भोजनं स्त्रीणामतिसङ्गोऽप्यसङ्गिता ॥ ९४ ॥

अस्थानमदहासाश्च हर्षः कोपोऽधिकस्पृहा ।
बहुजल्पो जलक्रीडा दुःखमत्यन्तचिन्तनम् ॥ ९५ ॥

कलिङ्गं कारवेल्लं च कूश्माण्डः कर्कटी तथा ।
काकमाची कुलुत्थं च कार्कोटी च कुसुम्भिका ॥ ९६ ॥

तिलातसीतैलमाषकपोतकमसूरकाः ।
तक्रभक्तं च सौवीरं तिक्तकट्वम्ललावणम् ॥ ९७ ॥

क्षारं क्षौद्रं पिच्छिलं च पित्तलं च परूषकम् ।
माहिषीः क्षीरविकृतीर्विदरं सहकारकम् ॥ ९८ ॥

नारङ्गबिल्वलिकुचशिग्रुनैवेद्यभोजनम् ।
अग्निस्पर्शनमंघ्रिभ्यां ताडनं गोद्विजन्मनोः ॥ ९९ ॥

कुमारीबालतुरगपश्वादीनां च ताडनम् ।
पातकं प्राणिहिंसा च छेदनं भूरुहामपि ॥ १०० ॥

अक्षादिसप्तव्यसनं छायाश्वत्थकपित्थयोः ।
लिङ्गस्त्रीनरखट्वानां तथा द्वीपिविभीतयोः ॥ १०१ ॥

चतुष्पथातिनिर्विक्तस्थाने विण्मूत्रमोचनम् ।
शिवद्विजगुरुस्त्रीणां वीरयोनियतात्मनाम् ॥ १०२ ॥

समयश्रुतिसूतानां नदीतीर्थाम्भसां नृणाम्।
पलाण्डुहिंगुलशुनराजिकाबृहतीद्वयम्॥ १०३॥

निष्पावलङ्घनोद्वर्तिनिशाशाभरणन्दिता(?)।
सुप्तिर्मद्यासवौ ताम्रचूडश्च जलजामिषम्॥ १०४॥

तीक्ष्णोष्णगुरुविष्टंभिरूक्षशुष्कामिषं मधु।
कदलीपत्रकांस्येषु भोजनं घर्मसेवनम्॥ १०५॥

एतानि द्रव्यजालानि निषिद्धानि रसायने।

## अपथ्यजनिता रोगाः॥

सेवेत चेत्प्रमादेन विकृतिर्जायते क्षणात्॥ १०६॥

रसाजीर्णे भवेत्कान्ते! शोषो मूर्च्छा भ्रमो ज्वरः।
क्लमः कंपः शकृन्मूत्ररोधनं शूलवेपथुः॥ १०७॥

अनिद्रालस्यहिक्का च कासश्वासविजृम्भिकाः।
अरोचकातिसारश्च लिंगस्तम्भोऽक्षिकुक्षिषु॥ १०८॥

वक्षःकर्णोदरांघ्रौ च मेढ्रे शिरसि सन्धिषु।
दाहोऽङ्गभङ्गस्सर्वेऽन्ये व्याधयस्संभवन्ति वै॥ १०९॥

रसाजीर्णप्रशान्त्यर्थं योगोऽयं कथ्यते मया।
राजकोशातकी पुङ्खा गरुडी कारवल्लिका॥ ११०॥

कार्कोटी काकमाची च देवदाली पराजिता।
सर्वमेतच्चैकपलं गोमूत्रे तु चतुष्पले॥ १११॥

क्वाथयेत्पादशेषं तु कार्षिकं स्वच्छसैन्धवम्।
निक्षिपेत्तत्पिबेत्क्वाथं रसाजीर्णे हितंकरम्॥ ११२॥

सुखीभवेत्त्रिदिवसे रसस्य क्रामणं भवेत्।
रसो व्यथयते तत्तदङ्गं संपरिमर्दयेत्॥ ११३॥

वा स्तनेन च तन्वङ्ग्या निर्व्यथः क्रमते रसः ।

सप्तधातुवेधः ॥

त्वग्वेधः प्रथमं देवि ! रक्तवेधो द्वितीयकः ॥ ११४ ॥

तृतीयो मांसवेधस्स्यान्मेदोवेधश्चतुर्थकः ।
अस्थिवेधः पञ्चमः स्यात्षष्ठो मज्जात्मको भवेत् ॥

सप्तमश्शुक्लवेधस्स्यात् नाडीवेधस्तथाऽष्टमः ।
नवमश्चक्षुषो वेधो दशमस्सर्ववेधकः ॥ ११६ ॥

रसवेधेन भुजगः स्वर्णं स्याद्रक्तवेधतः ।
त्रपु स्वर्णं भवेन्मांसवेधात्तीक्ष्णं च कांचनम् ॥ ११७ ॥

मेदोवेधेन शुल्बं तु स्वर्णं स्यादस्थिवेधतः ।
रूप्यं स्वर्णं भवेन्मज्जवेधाल्लोहानि कांचनम् ॥ ११८ ॥

शुक्लवेधेन मृत्पात्रं काञ्चनं भवति प्रिये ! ।
वज्रजीर्णो वीर्यवेधी मज्जामभ्रकजारितः ॥ ११९ ॥

हेमजीर्णस्त्वस्थिवेधी रूप्यजीर्णो रसं प्रिये ! ।
मेदोवेधी ताप्यजीर्णो मांसवेधी तु पारदः ॥ १२० ॥

शुल्बजीर्णो रक्तवेधी कान्तजीर्णो रसात्मकः ।
तीक्ष्णबद्धेन नीलाभस्ताम्रेणारुणसप्रभः ॥ १२१ ॥

रजतेनेन्दुसंकाशो हेम्ना काञ्चनसप्रभः ।
धूमावलोकी वक्त्रस्थो मासात्खेचरतां नयेत् ॥ १२२ ॥

स्पर्शवेधी तु वक्त्रस्थो द्विमासात्सिद्धिदायकः ।
शतकोटिस्त्रिभिर्मासैश्चतुर्भिर्दशकोटिकृत् ॥ १२३ ॥

पञ्चभिः कोटिवेधी स्यादष्टभिश्चायुतं पुनः ।
साहस्रं नवभिर्मासैर्दशमासे शतं पुनः ॥ १२४ ॥

तस्य मूत्रपुरीषैस्तु श्लेष्मणाङ्गमलैस्तथा ।
लेपाद्धेमत्वमायान्ति यानि लोहानि भूतले ॥ १२५ ॥

चतुष्षष्ट्यंशतो वेधी मासमेकादशस्य तु ।
द्वात्रिंशकवेधी तु वर्षाद्देहं तु वेधयेत् ॥ १२६ ॥

सर्वरोगैर्विनिर्मुक्तो वलीपलितवर्जितः ।
नासौ छिद्येत शस्त्रैश्च पावकेन न दह्यते ॥ १२७ ॥

वायुवेगी महातेजाः कामदेव इवापरः ।
इच्छया जायते दृश्योऽप्यदृश्यश्चैव जायते ॥ १२८ ॥

यस्य संस्पर्शमात्रेण सर्वलोहानि काञ्चनम् ।
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ॥ १२९ ॥

देवा यत्र विलीयन्ते सिद्धस्तत्रैव लीयते ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ षष्ठ उल्लासः

# ॥ सप्तमोल्लासः ॥

## पद्मरागादिरत्नोत्पत्तिः ॥

पुरा कैलासशिखरे गह्वरेऽद्रिसुतेश्वरौ ।
चिरमास्तां क्रीडमानौ जिगूषू तौ परस्परम् ॥ १ ॥

तदा रेतस्सूतरूपप्रवाहोऽभूत्तयोर्महान् ।
तत्प्रवाहप्रभावेन वेधिता दृषदोऽभवन् ॥ २ ॥

पद्मरागादिमणयो लोहा हेमादयस्तथा ।
गन्धकाद्याश्च पाषाणा दिव्या ओषधयो लताः ॥ ३ ॥

नानावर्णा बहुविधा नानासिद्धिप्रदायकाः ।
पूर्वोक्तानां समस्तानां वज्रं श्रेष्ठतमं महत् ॥ ४ ॥

तज्जातिलक्षणं देवि ! संस्कारं भजनं फलम् ।
क्रमाद्वक्ष्यामि ते देवि ! सावधानं शृणु प्रिये ! ॥ ५ ॥

### वज्रलक्षणं वज्रभेदाश्च ॥

द्विजन्मानश्च राजन्या ऊरव्या वृषलाः क्रमात् ।
शुभ्रशोणहरिद्राभाः काला नानाविधास्तथा ॥ ६ ॥

स्त्रीपुन्नपुंसकाश्चैव ज्ञातव्यास्ते क्रमात्प्रिये ! ।
शुक्लाः फलकसंपूर्णा ज्योतिष्मन्तो महत्तराः ॥ ७ ॥

पुमांसस्ते तु विज्ञेया रेखाबीजविवर्जिताः ।
बलाढ्यास्सत्वसहिता लोहक्रमणहेतवः ॥ ८ ॥

रसबन्धकराः क्षिप्रं सर्वेषां सिद्धिदायकाः ।
रसायनकरास्स्थूला ह्यष्टसिद्धिप्रदायकाः ॥ ९ ॥

षट्कोणबीजरेखाभिरुज्ज्वलास्तास्स्त्रियः स्मृताः ।
देहज्योतिःप्रजनना भोगकान्तिसुखप्रदाः ॥ १० ॥

दीर्घास्त्र्यश्राश्च तनवो निबोद्धव्या नपुंसकाः ।
क्षीणसत्वास्स्वल्पवीर्याः क्रामकास्सुरनायिके ! ॥ ११ ॥

क्लीबा नपुंसके स्त्रीणां स्त्रियस्सर्वहिता नराः ।
जात्यानुरूपाश्चोत्साहं यथा सत्वं तथा गुणम् ॥ १२ ॥

यथा कान्तिस्तथा शीलं कुर्वन्त्येवं द्विजातयः ।
वलीपलितरोगघ्नाः क्षत्रिया मृत्युहारिणः ॥ १३ ॥

देहस्थैर्यकरा वैश्या लोहानां वेधकारिणः।
वयस्स्तंभकराश्शूद्रा नानामयविनाशनाः॥ १४ ॥

## वज्रसंस्कारः॥

वज्रसंस्कारमधुना कथयामि शृणु प्रिये!।
श्यामा शमी मेघनादा वर्षाभूधूर्तकोद्रवाः॥ १५ ॥

मेषशृङ्ग्याखुकर्णी च कुलुत्थं चाम्लवेतसः।
मदनागस्त्यनिर्गुण्डी चैतेषां स्वरसैर्युते॥ १६ ॥

डोलायन्त्रे पाचयेच्च व्याघ्रीकन्दगतं दिनम्।
उद्धृत्य माहिषशकृल्लिप्तं कारीषवह्निना॥ १७ ॥

दहेद्रात्रौ चतुर्यामं रात्र्यन्ते परिषेचयेत्।
हयमूत्रस्नुहीक्षीरकुलत्थकरसैस्तथा॥ १८ ॥

पाचयेद्दाहयेदेवं सेचयेत्सप्तवारकम्।
एवं द्विजातिजातीयाश्शोधितास्स्युश्च सिद्धिदाः॥१९॥

## वज्ररसायनम्॥

रसायनार्हं वक्ष्यामि वज्रभस्म सुरेश्वरि!।
वैक्रान्ततताप्यगन्धाश्मशिलामाक्षिकतालकम्॥ २०।

कान्तास्यटङ्कणक्षारकुलीरास्थीनि पेषयेत्।
स्तन्येन गोलके क्षिप्त्वा मूषायां निक्षिपेत्ततः॥ २१ ॥

धमेद्दृढतरं पूर्वं पश्चाद्गजपुटे पचेत्।
तदेव वज्रमादाय तस्मिन्षोडशमात्रके॥ २२ ॥

एकांशं पारदं तस्मिन्पक्वबीजेन जारितम्।
स्तन्येन मर्दयेत्तौ द्वौ पुनर्गजपुटे पचेत्॥ २३ ॥

एवं तत्षोडशपुटाद्बीजजीर्णरसान्वितम् ।
दृढं कुर्वीत तद्वज्रं भवेद्भस्म रसायनम् ॥ २४ ॥

शृणु रुद्राणि! वक्ष्यामि दिव्यं वज्ररसायनम् ।
पूर्वोक्तवत्प्रकुर्वीत देहशुद्ध्यादिकं विधिम् ॥ २५ ॥

शुभर्क्षे सुमुहूर्ते च चन्द्रताराबलान्विते ।
शिवाग्निगुरुगोविप्रभिषजः पूजयेत्पुरा ॥ २६ ॥

ततस्सेवेत तद्भस्म यवमात्रं वरानने! ।
कान्ताभ्रसत्वं सौवर्णभस्म गुञ्जैकमात्रकम् ॥ २७ ॥

त्रिफलामधुसर्पिर्भिः प्रातश्शुद्धवपुर्लिहेत् ।
एवं षोडशमासान्तं एकद्वित्रिचतुष्टयम् ॥ २८ ॥

प्रतिमासं वर्धयित्वा यावद्यावकषोडशम् ।
कान्तादिभस्मत्रितयं गुञ्जावृद्धिक्रमे तथा ॥ २९ ॥

द्विनिष्कं त्रिफलाचूर्णं सर्पिर्मधु यथा सुखम् ।
पूर्वोक्तवद्विधिं त्याज्यं प्रकुर्यान्मम वल्लभे! ॥ ३० ॥

सेवितं पलमात्रं तु वज्रभस्म दिनं क्रमात् ।
वलीपलितरोगघ्नं शतायुष्यं ददाति च ॥ ३१ ॥

द्विपलं च सहस्रायुरयुतं त्रिपलं तथा ।
चतुष्पलं लक्षमायुर्दशलक्षं च पञ्चमम् ॥ ३२ ॥

कोट्यायुष्यं षट्पलं च सुरेन्द्रायुश्च सप्तमम् ।
ब्रह्मायुष्यं चाष्टपलं विष्णुत्वं नवमं पलम् ॥ ३३ ॥

रुद्रत्वं दशमं देवि! ईश्वरत्वं ततः परम् ।
सदाशिवत्वं द्वादश्यां वज्रभस्म ददात्यलम् ॥ ३४ ॥

सर्वज्ञत्वं सर्वगत्वं स्वेच्छाविहरणं तथा ।

## वज्रौदनम् ॥

वज्रौदनं प्रवक्ष्यामि रसायनहितं परम् ॥ ३५ ॥

पूर्ववच्छोधिते वज्रे मृदुकर्म समारभेत् ।
मातृवाहकमध्यस्थं तित्तिरीमांसवेष्टितम् ॥ ३६ ॥

तीक्ष्णकान्ताननरसैः पुनस्तत्परिवेष्टयेत् ।
कुलत्थत्रिफलानीरकोद्रवेषु पृथक्पृथक् ॥ ३७ ॥

त्रिदिनं पाचयेदेवं तद्वज्रं वेष्टयेद्दलैः ।
त्रिवर्षारूढतांबूल्यास्तथा कार्पासकस्य वा ॥ ३८ ॥

वेष्टितं जानुमध्यस्थं वज्रं यामद्वयान्मृदु ।
वज्रौदनमिदं प्रोक्तं वज्रद्रुतिरथोच्यते ॥ ३९ ॥

## वज्रद्रुतिः ॥

त्रिक्षारं चणकाम्लं च रामठं चाम्लवेतसम् ।
ज्वालामुखी चेक्षुरकं स्थलकुम्भीरसेन च ॥ ४० ॥

पिष्ट्वा स्नुह्यर्कयोः क्षीरैस्तद्गोले मृदु हीरकं ।
निक्षिपेत्तच्च जम्बीरे दोलायन्त्रे त्र्यहं पचेत् ॥ ४१ ॥

एवं कृते हीरकस्य द्रुतिर्भवति सूतवत् ।

## अन्यद्रुत्यतिदेशः ॥

पद्मरागादिरत्नानां द्रुतिरेवं कृते भवेत् ॥ ४२ ॥

अभ्रकादिमपाषाणा द्रवन्त्येवं कृते ध्रुवम् ।
द्रवन्ति रसरत्नानि मौक्तिकं चाम्लवेतसम् ॥ ४३ ॥

सप्ताहं भावयेद्धर्मे क्षिपेज्जम्बीरके ततः ।
धान्यराशौ त्रिसप्ताहं पुटपाके द्रवत्यलम् ॥ ४४ ॥

### वज्रभस्मगुणाः ॥

वज्रभस्म यथा तद्वद्द्रुतिमार्दवयोरपि ।
भवेद्भस्म वरारोहे जरादारिद्र्यमृत्युजित् ॥ ४५ ॥

रसायने भवेत्सौख्यं भस्म द्रुतिमृदूद्भवम् ।
रसायने तु स्त्रीपुंसौ क्रामणे तु नपुंसकः ॥ ४६ ॥

षड्रसं हिमवीर्यं च सर्वामयविनाशनम् ।
सर्वदोषप्रशमनं सर्वसौख्यं रसायनम् ॥ ४७ ॥

विद्युत्प्रभां देहदार्ढ्यं स्वच्छं स्निग्धं च लेखनम् ।
सौन्दर्यं बलमायुष्यं ग्रहालक्ष्मीविनाशनम् ॥ ४८ ॥

शुद्धिर्मृदुद्रुतीभस्म वैक्रान्तस्य तु वज्रवत् ।

### स्वर्णम्— तद्भेदाः ॥

अथ वक्ष्ये श्रेष्ठतमं शृणु हेमरसायनम् ॥ ४९ ॥

हेमोत्पत्तिः पुरा प्रोक्ता तथाऽपि त्रिविधा भवेत् ।
रसवेधाद्भवेच्चैकं इतरत्क्षेत्रसम्भवम् ॥ ५० ॥

लोहसङ्करजं चान्यच्छ्रेष्ठमध्यकनीयसः ।
क्रमेण पीतरक्ते च पीतरक्तं च वर्णतः ॥ ५१ ॥

निकर्षच्छेददाहेषु कुङ्कुमश्वेतशोणितम् ।

### स्वर्णशुद्धिः ॥

दिव्यमेवंविधं स्वर्णं पट्टकं कणशः कृतम् ॥ ५२ ॥

हलिनीकंचुकीकन्दस्नुह्यर्काग्निकरञ्जकम् ।
घूर्तगुञ्जेङ्गुदीचीरमूलतालाश्वगन्धिकाः ॥ ५३ ॥

पिष्ट्वेन्द्रवारुणी चैषां मूलानि मथितेन वै ।
लेपयेत्स्वर्णपट्टानि तापयेज्जातवेदसि ॥ ५४ ॥

गोमूत्रे मथिते तैले कुलुत्थाम्भसि काञ्जिके।
जम्बीरार्कपयोमध्ये प्रत्येकं सप्तधा क्षिपेत् ॥ ५५ ॥

लेपयेत्तापयेत्सिञ्च्याद्भूयो भूयोऽपि सप्तधा।
वल्मीकमृंद्धूमसारमिष्टकापट्टगैरिकम् ॥ ५६ ॥

पिष्ट्वा जम्बीरनीरेण लिप्त्वा पत्रं पुटीकृतम्।
चतुर्वर्णाभ्रकं ताप्यं दरदं तालकं शिलाम् ॥ ५७ ॥

कान्तकङ्कुष्ठरसकविमलासूतभूलताः।
पिष्ट्वाऽम्लेन वटीः कुर्यान्निष्कमात्रास्सुरेश्वरि ! ॥ ५८ ॥

पलादूनं न कर्तव्यमधिकं च चतुष्पलात्।
पुटितं हेम शुल्बं च द्रावयेच्च समीकृतम् ॥ ५९ ॥

तन्मध्ये तद्द्रवीभूते चैकैकां वटिकां क्षिपेत्।
स्वर्णाद्दशगुणा वाह्या वटिकाः शोषिताः क्रमात् ॥

यावच्छेषं भवेत्स्वर्णं तावदेवं धमेच्छनैः।
शुद्धं तज्जायते दिव्यं जरामरणरोगहृत् ॥ ६१ ॥

**स्वर्णभस्म ॥**

चिञ्चापत्रनिभं स्वर्णं पत्रं शुद्धं च पारदम्।
एकान्तं मर्दयेदम्लैस्तत्पिष्टिमपि लेपयेत् ॥ ६२ ॥

समगन्धकताप्याभ्यां पिष्टिं मूषागतां धमेत्।
षोडशांशं सूतभस्म हेमचूर्णे विनिक्षिपेत् ॥ ६३ ॥

अम्लेन मर्दयेद्गाढं पचेत्तद्भूधरे पुटे।
एवं षोडशपर्यन्तं रसं प्रतिपुटं क्षिपेत् ॥ ६४ ॥

निरुत्थं हेमभस्मेदं जायते सर्वसिद्धिदम्।

**हेमरसायनम् ॥**

विरेकवमनाद्यैश्च शुद्धदेहश्शुभे दिने ॥ ६५ ॥

अर्चयेदीशविप्राग्निगुरुवैद्यपुरस्सरान् ।
सेवेत शुद्धहृदयो दिव्यं हेमरसायनम् ॥ ६६ ॥

कान्ताभ्रयोस्सत्वभस्म चैकगुञ्जाप्रमाणकम् ।
माषोन्मितं हेमभस्म वरामध्वाज्ययुग्लिहेत् ॥ ६७ ॥

पूर्वोक्तवद्वज्र(विधौ ?)मासषोडशिकावधि ।
पूर्वोक्तवद्विधिन्त्याज्यं प्रकुर्वीत रसायनी ॥ ६८ ॥

शृणु चित्रां गिरिसुते! सेवां हेमरसायने ।
पलमात्रोपयोगेन सर्वरोगविवर्जितः ॥ ६९ ॥

ततो द्विपलयोगेन वलीपलितवर्जितः ।
वाक्सिद्धिर्दिव्यदृष्टिश्च त्रिपलेन भवेत्प्रिये! ॥ ७० ॥

चतुष्पलोपयोगेन विषव्याघ्राहिभीर्न हि ।
तथा पञ्चपलेनैव दिव्यात्मज्ञानिता भवेत् ॥ ७१ ॥

देवि! षट्पलयोगेन सिद्धसाध्यपदं भवेत् ।
तथा सप्तपलेनापि विद्याधरपदं भवेत् ॥ ७२ ॥

तथाऽष्टपलयोगेन स्वेच्छाविहरणे पटुः ।
पलेन नवमेनापि चाष्टैश्वर्यगुणान्वितः ॥ ७३ ॥

तथा दशपलेनापि महेन्द्रत्वमवाप्नुयात् ।
एकादशपलैर्देवि! ब्रह्मत्वं नात्र संशयः ॥ ७४ ॥

द्वादशभिः पलैः कान्ते! विष्णुत्वं समुपैति च ।
त्रयोदशपलेनापि रौद्रं पदमवाप्नुयात् ॥ ७५ ॥

तथा चतुर्दशपलैरैश्वरं लभते पदम् ।
पलैः पञ्चदशैरेति सदाशिवपदं परम् ॥ ७६ ॥

तथा स्यात्षोडशपलैः सच्चिदानन्दविग्रहः ।
सर्वज्ञस्सर्वकर्ता च हर्ता गोप्ता स सर्वगः ॥ ७७ ॥

### हेमद्रुतिः ॥

हेमद्रुतिं प्रवक्ष्यामि शृणु संप्रति पार्वति ! ।
फलपांशुर्देवदाल्याश्शक्रगोपोऽश्वलालिका ॥ ७८ ॥

टङ्कणं जालिनीनीरैर्भावयेद्बहुधा प्रिये ! ।
द्रावयेत्काञ्चनं तत्र वपेत्सूतसमा द्रुतिः ॥ ७९ ॥

इमां द्रुतिं काञ्चनवद्रस सेवाञ्च कल्पयेत् ।
स्वादु तिक्तं कषायं च शीतमुष्णं रसायनम् ॥ ८० ॥

हृद्यं कान्तिप्रदं शुद्धं चक्षुष्यं गुरु लेखनम् ।
धृतिस्मृत्यायुरारोग्यनयवाक्सिद्धिदायकम् ॥ ८१ ॥

क्षयोन्मादादिरोगाणां नाशनं दोषशान्तिकृत् ।
स्निग्धं रुच्यं दीप्तिकरं वीर्यकृद्बलवर्धनम् ॥ ८२ ॥

### कान्तम्— तद्भेदा लक्षणञ्च ॥

अथ कान्ते ! प्रवक्ष्यामि कान्तं कान्तरसायनम् ।
दिव्या औषधयस्सन्तु सर्वसिद्धिप्रदायिकाः ॥ ८३ ॥

तेभ्यः कान्तं श्रेष्ठतमं वलीरुक्पलितापहम् ।
कल्पान्ते ताण्डवं शंभुश्शर्वाणीसहितस्स्वयम् ॥ ८४ ॥

उच्चण्डं व्यतनोत्तत्र सञ्जातास्स्वेदबिन्दवः ।
तत्र तत्र गतास्तेऽपि ह्ययस्कान्तत्वमाययुः ॥ ८५ ॥

जाङ्गले बहवो जाता देशे साधारणे क्वचित् ।
जलप्रायेऽस्ति वा नास्ति जात्या पञ्चविधास्स्मृताः ।

भ्रामकं चुम्बकं देवि ! कर्षकं द्रावकं तथा ।
रोमकं च तथैकद्वित्रिचतुस्सर्वतोमुखाः ॥ ८७ ॥

तेषां पञ्चविधानां तु पीतं कृष्णं च शोणितम् ।
मिश्रं पृथक्पृथक्तेषां क्रमात्स्युरधिदेवताः ॥ ८८ ॥

ब्रह्मविष्ण्वीशभूतात्ममातृकाः परिकीर्तिताः ।
पीतवर्णं स्पर्शवेधि कृष्णं श्रेष्ठं रसायने ॥ ८९ ॥

रसबन्धकरं रक्तं मिश्रं सर्वरुजापहम् ।
रोमकं ग्रहभीतिघ्नं द्रावकं चोत्तमोत्तमम् ॥ ९० ॥

उत्तमं मध्यमं नीचं कर्षकं चुम्बकं क्रमात् ।
भ्रामकं लक्षणं वच्मि लोहन्तु भ्रामयेत्ततः ॥ ९१ ॥

तस्माद्भ्रामकमित्युक्तं चुम्बकं लोहचुम्बकम् ।
कर्षकं कर्षयेल्लोहं द्रावकं द्रावयेद्यतः ॥ ९२ ॥

स्फुटनाद्रोमजननं तद्रोमकमुदाहृतम् ।
अत्युत्तमं बहुमुखं चतुःपञ्चास्यमुत्तमम् ॥ ९३ ॥

मध्यमं स्याद्द्वित्रिमुखं नीचमेकमुखं भवेत् ।
भ्रामकं चुम्बकं सर्वरोगाणां नाशने हितम् ॥ ९४ ॥

कर्षकं द्रावकं श्रेष्ठं रसयोगे रसायने ।
रसद्विपांकुशमिदं कान्तं पञ्चविधं प्रिये ! ॥ ९५ ॥

समीरणातपस्पृष्टं न ग्राह्यं तत्कदाचन ।
हस्तद्वयं समुत्खाय कान्तं ग्राह्यं वरानने ! ॥ ९६ ॥

### कान्तसत्वपातनम् ॥

आदौ संपूज्य दुर्गां च गणेशं भैरवं प्रिये ! ।
तीव्राग्निना दहेत्कान्तं सेचयेत्त्रिफलांबुना ॥ ९७ ॥

तत्कान्तं चूर्णयेत्सूक्ष्मं काचसामुद्रटङ्कणैः ।
लाक्षागुग्गुलुगुञ्जाभिरूर्णाज्यमधुसिक्थकैः ॥ ९८ ॥

शशास्थिक्षुद्रमीनैश्च भल्लाततिलकल्ककैः ।
सर्जक्षारयवक्षाररालैश्चिरगुलै(?)स्तथा ॥ ९९ ॥

न्यङ्कुसैरिभदन्तीनां विषाणैश्च समांशकैः।
एतत्समांशं तत्कान्तमजाक्षीरेण मर्दयेत् ॥ १०० ॥

मेलयेत्पञ्चमाहिष्यैर्दध्याद्यैर्गोमयान्तकैः।
श्लक्ष्णं पिष्ट्वा वटीः कुर्यात्कर्षमात्रास्सुरेश्वरि! ॥१०१॥

कोष्ठीयन्त्रे वङ्कनाले खदिराङ्गारकैर्दृढम्।
पञ्च पञ्च वटीस्तत्र निक्षिपेच्च शनैश्शनैः ॥ १०२ ॥

त्रियाममथनादेव कान्तात्सत्वं पतेच्छुचि।
तत्सर्वं कणशः कृत्वा काचाद्यैरौषधैस्समैः ॥ १०३ ॥

मूषागतं धमेत्तीव्रमेवं धाम्यं त्रिधा प्रिये!।
एवं कृतं तु तत्कान्तसत्वं सत्वतमं भवेत् ॥ १०४ ॥

## कान्तस्वरूपम् ॥

कान्तलोहस्य पात्रस्थजले तैलस्य बिन्दवः।
न सर्पन्ति चणास्त्वेताः कृष्णास्स्युर्नात्र संशयः ॥१०५॥

घृष्टहिंगोर्न गन्धस्स्यात्क्षीरोर्मिश्शिखराकृतिः।
न कदाचिद्भुवि पतेच्छिवा मुञ्चति तिक्तताम् ॥१०६॥

तल्लोहक्षिप्तमुष्णांबु शीतलं भवति क्षणात्।

## लोहशुद्धिः ॥

ऊनं पञ्चपलान्नैव नोर्ध्वं पञ्चदशात्पलात् ॥ १०७ ॥

त्रिफला षोडशपला तच्चतुर्गुणमम्बु च।
क्काथयेत्पादशेषं तु तस्मिन्पत्राणि ढालयेत् ॥ १०८ ॥

शशरक्तप्रलिप्तानि शोषयेदातपे पुनः।
तापितानि पुनस्तक्रतैलसौवीरसर्पिषि ॥ १०९ ॥

क्षौद्रार्कक्षीरजम्बीर कुलत्थकरसेष्वपि ।
लेपनं शोषणं दाहं सेचनं च क्रमात्प्रिये ! ॥ ११० ॥
प्रत्येकं सप्तधा कुर्याद्गिरिदोषं त्यजेदयः ।

**लोहसंस्कारमन्त्राः ॥**

आदौ मन्त्रस्ततः कर्म कर्तव्यो मन्त्र उच्यते ॥ १११ ॥

उद्भवोद्भवशब्दस्याच्चतुर्थ्यन्तोऽमृतात्परः ।
स्वाहान्तः प्रणवश्चादौ मन्त्रोऽयं मर्दने स्थितः ॥११२॥

ॐ अमृतोद्भवोद्भवाय स्वाहा ।

रक्षायै लोहनरयोरयमेकोद्भवो मनुः ।
विना स्वाहापदं स्थाने फडन्तं यस्समुच्चरेत् ॥ ११३ ॥

"ॐ अमृतोद्भवाय फट्"

प्रणवोर्ध्वन्नमश्चण्डवज्रपाणय इत्यपि ।
ततः परं महायक्षसेनाधिपतये नमः ॥ ११४ ॥

द्विरुक्तं सुरुशब्दस्य महाविद्याबलाय च ।
ततस्स्वाहेति मन्त्रोऽयं बलिकर्मणि कीर्तितः ॥ ११५ ॥

ॐ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये नमः
सुरु सुरु महाविद्याबलाय स्वाहा ॥

**लोहभस्म ॥**

एतानि लोहपत्राणि सूक्ष्मं सञ्चूर्णयेत्ततः ।
अयःपात्रे कान्तचूर्णं निक्षिप्य त्रिफला रसैः ॥ ११६ ॥

सेचयेत्तदयोदर्व्या चालयन्पाचयेदिति ।
पिण्डीभूतं तदादाय मृत्तिकापटले शुभे ॥ ११७ ॥

सम्पुटे निक्षिपेत्सम्यक् षोडशाङ्गुलगर्तके ।
निधायारण्यकारीषमध्यगं कारिषं दहेत् ॥ ११८ ॥
अहोरात्रं प्रकुर्वीत वातातपविवर्जितम् ।
पुनः प्रातस्समादाय वराक्वाथेन मर्दयेत् ॥ ११९ ॥
स्थालीसंपुटयोरेवं कुर्यात्पाकपुटैः क्रमात् ।
एवं विंदध्यात्सप्ताहं तस्मिन्क्षेप्यं च हिंगुलम् ॥१२०॥
लोहस्य षोडशांशं च नारीस्तन्येन मर्दयेत् ।
स्थाल्यां पाकं संपुटे च पुटं कुर्वीत षोडश ॥ १२१ ॥
निरुत्थं तद्भवेद्भस्म देवि ! योज्यं रसायने ।

लोहभस्मनोऽमृतीकरणम् ॥

यावत्स्यात्त्रिफला तस्माद्भवेद्वारि चतुर्गुणम् ॥ १२२ ॥
अष्टावशेषं क्वथयेत्क्वाथस्य सदृशं घृतम् ।
घृततुल्यं कान्तभस्म ताम्रपात्रे पचेत्प्रिये ! ॥ १२३ ॥
लोहदर्व्या प्रचलयन्यावच्छुष्यति तद्रसः ।
तावन्मृद्वग्निना पाच्यं लोहतुल्यां सितां क्षिपेत् ॥
अमृतीकरणमित्युक्तं सर्वयोगवहं परम् ।

लोहपाकभेदाः ॥

लोहपाकं प्रवक्ष्यामि तद्भवेत्त्रिविधं प्रिये ! ॥ १२५ ॥
मृदुमध्यखराः प्रोक्ता जम्बीरसदृशो मृदुः ।
मध्यमः पिण्डसदृशो वालुकासदृशः खरः ॥ १२६ ॥

कान्तलोहरसायनसेवाक्रमः ॥

अथ सेवां प्रवक्ष्यामि कान्तलोहस्य भस्मनः ।
सुमुहूर्ते शुभदिने पूजितेशादिदैवतः ॥ १२७ ॥

सेवेत सिद्धिदं दिव्यं कान्तभस्म रसायनम् ।
शुद्धदेहो विरेकाद्यैरभ्रभस्म पुरा प्रिये ! ॥ १२८ ॥

मासमेकं तु सेवेत तस्माच्छुद्धवपुर्भवेत् ।
माषमात्रं कान्तभस्म गुञ्जामात्राभ्रभस्म च ॥ १२९ ॥

द्विनिष्कं त्रिफलाचूर्णं मधुसर्पिस्समन्वितम् ।
लिहेत्प्रातर्विशुद्धात्मा स्नानदानादिकर्मभिः ॥ १३० ॥

अनुपेयं ततो लोहाद्द्रव्यं षष्टिगुणं पयः ।
धारोष्णं तदभावे तु कृत्वा क्षीरं समांबुकम् ॥१३१ ॥

यावत्क्षीणजलं क्वाथ्यं क्षीरं चानुपिबेत्प्रिये ! ।
तदसात्म्ये वराक्वाथं गुडूच्या वा कषायकम् ॥१३२॥

इत्येकमासं सेवेत क्रमाद्द्वित्रिचतुष्टयम् ।
प्रतिमासं माषगुञ्जावृद्धिः कान्ताभ्रभस्मनोः ॥ १३३ ॥

एवं षोडशमासान्तं वृद्धिष्षोडशमात्रकाः ।
पूर्वोक्तवद्विधिं त्याज्यं कुर्यात्सिद्धिमवाप्नुयात् ॥१३४॥

अस्य वत्सरयोगेन क्षुद्रामयविनाशनम् ।
एतद्द्विवर्षयोगेन महारोगप्रणाशनम् ॥ १३५ ॥

त्रिवर्षात्पलितं हन्ति चतुर्वर्षाद्वलिं हरेत् ।
पञ्चमादपमृत्युघ्नं षष्ठे स्यादायुषश्शतम् ॥ १३६ ॥

सप्ताब्दे सूर्यवद्दीप्तिं दशमे सिद्धिमेलनम् ।
वैद्याधरं समाप्नोति वर्षे चैकादशे प्रिये ! ॥ १३७ ॥

त्रयोदशाब्दे देवत्वमिन्द्रत्वं च चतुर्दशे ।
तथा पञ्चदशाब्दे च सर्वलोकप्रियो भवेत् ॥ १३८ ॥

षोडशाब्देऽष्टसिद्धिस्स्यात्सत्यं सत्यं महेश्वरि ! ।

### कान्तद्रुतिक्रमः ॥

सुवर्णद्रुतिवत्कान्तद्रुतिस्स्यात्पूर्ववत्प्रिये ! ॥ १३९ ॥

कान्तद्रुतिर्भवेद्भस्म कान्तलोहस्य भस्मवत् ।

### लोहभेदास्तद्गुणाश्च ॥

किट्टं मुण्डं तथा तीक्ष्णं कान्तं पूर्वोत्तरोत्तरम् ॥१४०॥

गुणाढ्यास्स्युर्दशशतसहस्रं लक्षकं क्रमात् ।
शताधिको भवेत्कान्तस्त्वौषधानां रसायनम् ॥ १४१ ॥

त्रिदोषशमनं दिव्यं सर्वरोगापहारकम् ।
कान्ति रुच्यं च चक्षुष्यं हृद्यमायुष्यदं शुचि ॥१४२॥

स्थैर्यं दार्ढ्यं च धातूनां बलवच्च रसायनम् ।

### अभ्रकोत्पत्तिः—तद्भेदा लक्षणञ्च ॥

अथाभ्रकं प्रवक्ष्यामि तदुत्पत्त्यादिकं क्रमात् ॥१४३॥

पुराऽऽदिशक्तिर्भवती श्वेतद्वीपे मनोरमे ।
इन्द्राणीकमलावाणीगायत्रीप्रमुखैस्सह ॥ १४४ ॥

अरुन्धतीमुखैर्दिव्यमुनिदारैश्च संयुता ।
संचिक्रीडे महामाया चित्सदानन्दरूपिणी ॥ १४५ ॥

आनन्दाश्रुकणा क्षौमे न्यपतन्बहवो दृशोः ।
तदा ऋतुमती जाता ततस्स्वादु सरित्पतेः ॥ १४६ ॥

तीरे त्यक्त्वा च तद्वस्त्रं स्नात्वा कैलासमाययौ ।
वात्यावशेन तद्वस्त्रं क्षीराब्धौ न्यपतत्तदा ॥ १४७ ॥

देवासुरैर्मथ्यमानात्तस्मात्क्षीराम्बुधेस्तदा ।
समभूत्तद्रजोवस्त्रं चतुर्धाऽभ्रकसंज्ञकम् ॥ १४८ ॥

कृष्णाभ्रकं साञ्जनाभं पीतं देव्यङ्गलेपनात् ।
रक्तं तस्य रजोरूपं क्षौमं श्वेतमभूदिति ॥ १४९ ॥

चतुर्विधं तदालोक्य रसबन्धनकारणम् ।
रसायनं रोगहरं सर्वसिद्धिप्रदायकम् ॥ १५० ॥

इत्यूचिरे सुरास्सर्वे साक्षादमृतसंमितम् ।
श्वेतं रजतकार्येषु त्रयमन्यत्सुवर्णके ॥ १५१ ॥

सर्वं रसायने योज्यं रक्तपीतसितासितम् ।
श्वेताच्छतगुणं रक्तं रक्तात्पीतं सहस्रकम् ॥ १५२ ॥

पीताल्लक्षगुणं कृष्णं ज्ञेयं लोहे रसायने ।
प्रत्येकं तानि जायन्ते चतुर्धा जातितः क्रमात् ॥१५३॥

पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम् ।
वज्रं समाहरेन्मुख्यं त्रीण्यन्यानि विवर्जयेत् ॥ १५४ ॥

पिनाकमग्निनिक्षिप्तं मुञ्चते दलसञ्चयम् ।
तत्सेवितं मलं बद्ध्वा मारयेद्रोगकारणम् ॥ १५५ ॥

दर्दुरं वह्निनिक्षिप्तं कुरुते भेकनिस्स्वनम् ।
तदुत्पादयते रोगमश्मर्याख्यमसाध्यकम् ॥ १५६ ॥

नागमग्नौ विनिक्षिप्तं फूत्कारं वितनोति यत् ।
तत्सेवया महाकुष्ठं मण्डलाख्यं भवेद्ध्रुवम् ॥ १५७ ॥

## ग्राह्यलक्षणम् ॥

एतत्त्रितयसेवाभिर्जायते रोगसञ्चयः ।
वह्निस्थितं तु वज्राभ्रं विकारान्नाचरेत्क्वचित् ॥ १५८ ॥

तस्माद्वज्राभ्रकं सेव्यं वलीपलितमृत्युजित् ।
राजहस्तात्परं ग्राह्यं खनिस्थेन तदाकरात् ॥ १५९ ॥

भारयुक्तं पृथुदलं स्निग्धं मोच्यदलं सुखम्।
काचचन्द्रककिट्टाभं न योज्यं तत्कदाचन ॥ १६० ॥

### धान्याभ्रकम् ॥

पूर्वोक्तलक्षणयुतं वज्राभ्रं धमयेद्दृढम्।
अर्कक्षीरारनाले च गोमूत्रे त्रिफलारसे ॥ १६१ ॥

मेघनादरसे चेत्थं निक्षिपेत्तेषु तत्त्रिधा।
सम्यग्दलं मोचयित्वा मेघनादाम्लयोर्द्रवैः ॥ १६२ ॥

भावयेदातपे तीव्रे श्लक्ष्णं पिष्ट्वाऽथ वस्त्रके।
निक्षिप्य धान्यसहितं बद्ध्वा तत्काञ्जिके पुनः ॥१६३॥

कराभ्यां घट्टयेद्गाढं सूक्ष्मं तत्काञ्जिके स्रवेत्।
तत्कुर्यादातपे शुष्कमेतद्धान्याभ्रकं स्मृतम् ॥ १६४ ॥

### अभ्रकसत्वपातनम् ॥

कान्तवत्सत्वपतनमभ्रकस्य भवेत्प्रिये !।
हेम रूप्यं माक्षिकं च वैक्रान्तं मधु टङ्कणम् ॥ १६५ ॥

गुञ्जा गुडं घृतं भल्ल(बिल्व)मेकैकं दशनिष्ककम्।
पिष्ट्वाऽर्कपयसा कार्या वटिकाः कर्षमात्रकाः ॥ १६६ ॥

शतनिष्केऽभ्रसत्वेऽस्मिन्विद्रुते वटिकाः क्षिपेत्।
एकैकघटिकामात्रे वट्यः क्षेप्याश्शनैश्शनैः ॥ १६७ ॥

यावत्तत्सत्वशेषं स्यात्तावद्धाम्यमतन्द्रितैः।
इदमभ्रकसत्वं तु देवयोग्यं रसायनम् ॥ १६८ ॥

### अभ्रकसत्वभस्म ॥

चूर्णीकृत्याभ्रसत्वं तन्मेघनादः पुनर्नवा।
सूरणोऽर्कदलं मुस्ता जम्बीरस्तालमूलिका ॥ १६९ ॥

त्रिफला वज्रवल्ली च शाङ्गेरी मरिचं तथा ।
अम्लवर्गो वटजटा कार्पासमुनिशिग्रुकम् ॥ १७० ॥

एकवीरा कोकिलाक्षी सर्पाक्षी तुलसी वचा ।
पेटारी बाकुची कन्या चैकैकस्य रसैः पृथक् ॥१७१॥

मर्दनं घर्मपाकं च स्थालीपाकं पुटं क्रमात् ।
एकैकाहं प्रकुर्वीत ततो दरदमाक्षिके ॥ १७२ ॥

सत्वषोडशभागेन योज्यं पेष्यं वरारसैः ।
पुटषोडशपर्यन्तं कुर्यादेवं हि भैरवि ! ॥ १७३ ॥

पूर्वोक्तवत्स्यादमृतीकरणं कान्तसत्ववत् ।
निरुत्थं भस्म भवति चायुरारोग्यदायकम् ॥ १७४ ॥

अभ्रकसत्वसेवाक्रमः ॥

अथ सेवां प्रवक्ष्यामि घनसत्वरसायने ।
वमनादिविशुद्धात्मा पूजितस्वेष्टदेवतः ॥ १७५ ॥

गुञ्जामात्राभ्रसत्वं च द्विनिष्कं त्रिफलारजः ।
मध्वाज्याभ्यां लिहेत्प्रातरेकमासं भजेदिति ॥ १७६ ॥

एवं षोडशमासान्तं मासवृद्धिक्रमेण वै ।
गुञ्जावृद्धिर्भवेद्देवि ! सेवेतेत्थं रसायनम् ॥ १७७ ॥

पूर्वोक्तवद्विधिं त्याज्यं प्रकुर्वीत सुरेश्वरि ! ।
वर्षेण देहशुद्धिस्स्याद्द्विवर्षादामयाच्च्युतः ॥ १७८ ॥

त्रिवत्सरान्महारोगनाशनं भवति ध्रुवम् ।
चतुर्वर्षान्महाकान्तिबलवीर्यप्रवर्धनम् ॥ १७९ ॥

पञ्चवर्षाद्देहदार्ढ्यं षष्ठे वाक्सिद्धिमेति हि ।
सप्तमे दिव्यदृष्टिस्स्यादष्टमे विषनाशनम् ॥ १८० ॥

नवाब्दे सिद्धतामेति ततो विद्याधरो भवेत्।
एकादशाब्दे त्विन्द्रत्वं द्वादशे ब्रह्मता भवेत् ॥१८१॥
त्रयोदशाब्दे विष्णुत्वं रुद्रत्वं च चतुर्दशे।
ईशत्वं पञ्चदशके षोडशाब्दे सदाशिवः ॥ १८२ ॥
अणिमादियुतस्स्वैरी सर्वज्ञस्सर्वकृद्भवेत्।

**अभ्रकद्रुतिः ॥**

अथाभ्रकद्रुतिं वक्ष्ये कन्चुकीकन्द एव च ॥ १८३ ॥
कपितिन्दौ केशतैले प्रत्येकं तु त्रिधा वपेत्।
मूषायां द्रावयित्वा तदभ्रसत्वद्रुतिर्भवेत् ॥ १८४ ॥
भस्मीकुर्यात्प्रयत्नेन द्रुतिमभ्रकसत्ववत्।

**अभ्रकगुणाः ॥**

षड्रसस्सर्वरोगघ्नस्त्रिदोषशमनः परः ॥ १८५ ॥
वीर्यायुष्यबलप्रज्ञाकान्तिरूपविवर्धनः।
वपुर्दार्ढ्यस्थैर्ययुक्तो बलीपलितमृत्युहा ॥ १८६ ॥
रुच्यो वृष्यो लघुश्शीतो मेध्यस्स्निग्धो रसायनम्।
अभ्रकं दीपनं ग्राहि श्रेष्ठं पारदबन्धनम् ॥ १८७ ॥
पक्षजित्सूतराजस्य भस्मीभूताभ्रसत्वकः।
अभ्रस्य पत्रं रोगघ्नं तच्च सत्वं दृढङ्करम् ॥ १८८ ॥
चेतसत्वं(?) मृदु हरेद्द्रुतिस्तांश्च दरिद्रताम्।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ सप्तमोल्लासः ॥



## ॥ अष्टम उल्लासः ॥

### रसायनसेवा ॥

सूतो वज्रं सुवर्णं च कान्तलोहं तथाऽभ्रकम् ।
पञ्चैतान्यमृतानि स्युः कल्पितानि नृणां मया ॥ १ ॥

मत्तकाशिनि ! यो वेत्ति सोपि साक्षान्महेश्वरः ।
अहं रसो रसश्चाहमावयोरन्तरं न हि ॥ २ ॥

तेन युक्तास्तु वज्राद्यास्सिद्धिदास्स्युर्न संशयः ।
पुरुषं रससेवार्हं वदामि शृणु पार्वति ! ॥ ३ ॥

स्त्रीक्लीबबालकानां च न हि योज्यं रसायनम् ।
बालाः पञ्चदशाब्दा ये कुमारास्त्रिंशदब्दकाः ॥ ४ ॥

पञ्चाशद्वर्षदेशीया युवानः परिकीर्तिताः ।
अतः परं च स्थविराः भवेयुस्ते रसायने ॥ ५ ॥

यथोक्तकाले सिद्धिस्स्यात्कुमारस्य रसायनात् ।
तस्माद्द्विगुणकालेन यूनस्सिद्धिर्भवेद्ध्रुवम् ॥ ६ ॥

तस्मात्त्रिगुणकालेन वृद्धस्सिद्धिमवाप्नुयात् ।
ज्ञातव्याः क्रमशो देवि ! ह्युत्तमो मध्यमोऽधमः ॥ ७ ॥

### रसायनसेवाक्रमः ॥

पूर्वमभ्रकमश्नीयात्ततः कान्तरसायनम् ।
अथ कान्ताभ्रकं देवि ! पश्चाद्धेमरसायनम् ॥ ८ ॥

अथाभ्रकं स्वर्णयोगं कान्तहेमरसायनम् ।
घनकान्तस्वर्णयोगं ततो वज्ररसायनम् ॥ ९ ॥

अथाभ्रवज्रसेवां च कान्तवज्रमतः परम् ।
घनायस्कान्तहीरं च हेमवज्रं ततो भवेत् ॥ १० ॥

पश्चादभ्रस्वर्णवज्रं कान्ताष्टापदवज्रकम् ।
घनकान्तं हेमवज्रमतः पारदभक्षणम् ॥ ११ ॥

तथाऽभ्ररसयोगं स्यात्ततः कान्तरसं भवेत् ।
घनकान्तरसं देवि! पश्चाद्धेमरसं भवेत् ॥ १२ ॥

घनहेमरसं पश्चात्कान्तहेमरसं ततः ।
घनकान्तं हेमसूतमतो वज्ररसं भवेत् ॥ १३ ॥

घनवज्ररसं देवि! कान्तवज्ररसं ततः ।
घनकान्तं वज्रसूतं हेमवज्ररसं ततः ॥ १४ ॥

घनहेमपवीसूतं कान्तहेमपवीरसम् ।
घनकान्तस्वर्णवज्ररसमस्मात्परं न हि ॥ १५ ॥

उत्तरोत्तरतस्सर्वे चैते सर्वगुणोत्तराः ।
रसायनानि पञ्च स्युरेकैकानि वरानने! ॥ १६ ॥

रसा द्विद्व्यौषधभवास्त्रिञ्यौषधभवा दश ।
चतुश्चतुर्भवाः पञ्च त्वेकः पञ्चौषधोद्भवः ॥ १७ ॥

एकत्रिंशद्वरारोहे! रसायनमिति प्रिये! ।
घनं कान्तं हेम वज्रं पारदश्चेतरेतरम् ॥ १८ ॥

पूर्वोत्तरोत्तरगुणा भवन्ति प्राणवल्लभे! ।
रसस्य क्रामणं वज्रं हेमकान्तघनं भवेत् ॥ १९ ॥

वज्रसंक्रामणं हेम कान्तं व्योम भवेत्प्रिये! ।
हेम्नः कान्तभवं योज्यं कान्तस्य क्रामणं घनम् ॥ २० ॥

अभ्रस्य क्रामणं चाभ्रसत्त्वं सिद्धिप्रदं यतः ।
एकैकौषधसेवायां यथोक्तं क्रामणं भवेत् ॥ २१ ॥

युक्तो द्वित्रिचतुःपञ्चभैषज्यैः क्रामणं न हि ।
त्रिफलामधुसर्पींषि सामान्यक्रामणं भवेत् ॥ २२ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ अष्टमोल्लासः ।

---

# ॥ नवम उल्लासः ॥

### रसायनार्हरससंस्कारः ॥

[प्रथमः प्रकारः]

श्रीभैरवी—

रसायनार्हां सूतस्य संस्कृतिं वद मे विभो ! ।

श्रीभैरवः—

शृणु पार्वति ! यत्नेन संस्कारं शोधनादिकम् ॥ १ ॥

पुनर्नवारसैः पेष्यं धान्याभ्रं पारदं समम् ।
तप्तखल्वे दिनं देवि ! वज्रमूषागतं रसम् ॥ २ ॥

पचेद्भूधरयन्त्रे च पुनस्संमर्दयेच्च तम् ।
पूर्वद्रवैर्यथापूर्वं मर्दनं पाचनं पुनः ॥ ३ ॥

कृत्वैवं दशवारं तं पात्यं पातनयन्त्रके ।
शुद्धस्स्यात्पारदो देवि ! योज्यो योगे रसायने ॥ ४ ॥

[द्वितीयः प्रकारः]

दशमांशं रसाद्गन्धं तप्तखल्वे विनिक्षिपेत् ।
वराजम्बीरकन्याग्निद्रवैर्यामं विमर्दयेत् ॥ ५ ॥

पातयेत्पातनायन्त्रे कुर्यादेवं तु सप्तधा।
सगन्धकं मर्दनं च पातनं भवति प्रिये! ॥ ६ ॥
शुद्धस्स्यात्पारदो देवि! योग्यो योगे रसायने।

[तृतीयः प्रकारः]

तिलतैलैर्माहिषिकैर्मूत्रैर्मद्याम्लकेन च ॥ ७ ॥
गोमांसैर्हिङ्गुलं पाच्यं लोहपात्रे क्रमाग्निना।
सप्ताहं लोहदण्डेन चालयन्सद्रवं मुहुः ॥ ८ ॥
सार्द्रमायूरपित्तेन भावयेदातपे दिनम्।
पाचयेत्पातनायन्त्रे दरदं खरवह्निना ॥ ९ ॥
शुद्धो भवेच्चतुर्यामात्पारदस्स्याद्रसायने।

**रसभस्मक्रमः ॥**

[प्रथमः प्रकारः]

ऊर्ध्वाधस्तात्खजीर्णस्य सूतस्य समगन्धकम् ॥ १० ॥
निक्षिपेत्पक्वमूषायां गर्ते द्वाभ्यां चतुर्गुणम्।
काकमाचीद्रवं दत्वा निरुध्यैनां क्रमाग्निना ॥ ११ ॥
पचेद्गुण्ड(त्कन्दु)कयन्त्रस्थां मूषां यामचतुष्टयम्।
भस्मसाज्जायते सूतो योजयेत्तु रसायने ॥ १२ ॥

[द्वितीयः प्रकारः]

खजीर्णसूतं स्नुक्क्षीरैस्समं गन्धं विमर्दयेत्।
दिनं ततो गर्भयन्त्रे पुटे भस्मति पूर्ववत् ॥ १३ ॥

[तृतीयः प्रकारः]

खजीर्णसूतं तुल्यांशं लाक्षोर्णामधुटङ्कणम्।
गुञ्जां भृङ्गरसैस्सर्वं दिनमेकं विमर्दयेत् ॥ १४ ॥

अन्धितं वज्रमूषायां धमेद्भस्मति पारदः ।

[चतुर्थः प्रकारः]

घनजीर्णं रसं गन्धं त्र्यहं तुल्यं विमर्दयेत् ॥ १५ ॥

अहिमार्या रसैर्वाऽथ ह्यजामार्या रसेन वा ।
रसेन कीटमारिण्याः श्वेतांकोलरसेन वा ॥ १६ ॥

दिवारात्रं करीषाग्नौ मृण्मये संपुटे दहेत् ।
तुषाग्निना वा त्रिदिनाद्भस्मीभवति पारदः ॥ १७ ॥

[पञ्चमः प्रकारः]

तप्तखल्वे वज्रभस्म जीर्णे सूते समं त्र्यहम् ।
हंसपादीरसैर्मर्द्यं बीजैर्दिव्यौषधोद्भवैः ॥ १८ ॥

लेपयेद्वज्रमूषायां तल पूर्वं रसं क्षिपेत् ।
त्र्यहं तुषाग्निना पाच्यं हंसपादीद्रवैः पुनः ॥ १९ ॥

मर्दयेत्त्रिदिनं गाढं तद्गोलं पूर्ववत्पचेत् ।
भस्मीभवति सूतेन्द्रः शङ्खकुन्देन्दुसन्निभः ॥ २० ॥

**जारितरसमारणम् ॥**

[प्रथमः प्रकारः]

अथ वक्ष्यामि देवेशि ! जारितं रसमारणम् ।
प्रथमं जारणं कुर्यात्सबीजं सुरनायिके ! ॥ २१ ॥

अजारितं रसं मूढः प्रमादान्मारयेद्यदि ।
मम द्रोही स पापिष्ठो महापातकवान् भवेत् ॥ २२ ॥

भ्रूणहा गुरुघाती च गोघ्नस्स्त्रीबालघातकः ।
तस्मात्सर्वप्रयत्नेन कुर्याज्जारणपूर्वकम् ॥ २३ ॥

मारणं रसराजस्य मम बीजस्य पार्वति !।
धरायां गोमयं देवि ! स्थापयित्वा ततोपरि ॥

पक्वमूषां विनिक्षिप्य तन्मध्ये कटुतुम्बिजम्।
तैलं निधाय सूतं च निक्षिपेच्च ततोपरि ॥ २५ ॥

काकमाचीरसो देयस्तैलतुल्यो वरानने !।
शुद्धं गन्धं व्रीहिमात्रं दत्वा मूषां निरोधयेत् ॥ २६ ॥

तदूर्ध्वं खादिराङ्गारपूरितं श्रावकं न्यसेत्।
ज्ञात्वा तत्स्वाङ्गशीतत्वं पुनर्गन्धं च तैलकम् ॥ २७ ॥

काकमाचीद्रवं दत्वा वह्निमेवं पुनः पुनः।
अधस्ताद्गोमयं सान्द्रमुपरिष्टाच्च पावकम् ॥ २८ ॥

काकमाचीद्रवस्सूतस्तैलं चैतत्त्रयं समम्।
जारयेत्षड्गुणं गन्धं रसस्येत्थं मुखीकृतिः ॥ २९ ॥

दिनं जम्बीरनीरेण मर्दयेत्तं रसं पुनः।
चतुष्षष्ट्यंशकं हेम्नः पत्रं कण्टकभेदनम् ॥ ३० ॥

मयूरपित्तं तैलं च लिपेत्सर्षपसंभवम्।
अभावे तैलपित्तस्य चूलिकालवणं बलिम् ॥ ३१ ॥

जम्बीरस्य रसैर्मर्द्य तं रसं हेमपत्रकम्।
पाचयेत्पूर्ववद्वह्नौ जम्बीरस्य रसैः पुनः ॥ ३२ ॥

संपूर्णां रोधयेन्मूषां पूर्ववज्जारयेत्पुनः।
द्वात्रिंशदंशकं हेम षोडशांशं ततोपरि ॥ ३३ ॥

मर्दयेज्जारयेदेवं ततस्सूतस्य मारणम्।
समूलां कुम्भिमादाय गवां मूत्रेण पेषयेत् ॥ ३४ ॥

दिनमेकं तद्रसेन मर्दयेत्पारदं सुधीः।
संपुटे कान्तजे क्षिप्त्वा चोर्ध्वाधश्च नियामकान् ॥

रसस्त्रिसप्तवाराणि मर्दयेद्भावयेत्क्रमात् ।
क्षौद्राज्याभ्यां लिहेत्प्रातर्नित्यं गुञ्जाद्वयोन्मितम् ॥४६॥

अनु भक्ष्यं सिन्दुवारवराभृङ्गभवं रजः ।
मध्वाज्याभ्यां कर्षमात्रं शुद्धाङ्गो वमनादिभिः ॥ ४७ ॥

द्वात्रिंशद्गुञ्जिका वृद्धिः परमावधिरीश्वरि ! ।
भवेत्षोडशमासान्ताज्जराव्याधिभिरुज्झितः ॥ ४८ ॥

कान्तस्य सेवया पश्चाद्भवेत्कान्ताभ्रकार्हकः ।

[कान्ताभ्ररसायनम्]

मृतं कान्तं घनं तुल्यं धात्रीभृङ्गपुनर्नवाः ॥ ४९ ॥

द्रवैरेषां पृथग्मर्द्यं कल्ये गुञ्जाद्वयं लिहेत् ।
शर्करामधुसर्पिर्भिश्शुद्धात्मा वमनादिभिः ॥ ५० ॥

भृङ्गामलकवर्षाभूचूर्णं क्रामणमुत्तमम् ।
मध्वाज्यैरनु लेह्यं तद्द्वात्रिंशद्गुञ्जकावधि ॥ ५१ ॥

मासषोडशयोगेन वलीपलितजिद्बली ।
कान्ताभ्रसत्वभजनाद्धेमसेवार्हको भवेत् ॥ ५२ ॥

[स्वर्णरसायनम्]

पूर्ववद्भस्मयेत्स्वर्णं दशमूलकषायतः ।
एकविंशतिवारं तं मर्दयेद्भावयेत्प्रिये ! ॥ ५३ ॥

मध्वाज्याभ्यां मुद्गमानं लिहेत्प्रातर्विशुद्धधीः ।
गुडूचीत्रिफलाक्वाथं पलं चानुपिबेत्सुधीः ॥ ५४ ॥

अष्टगुञ्जावधिर्वृद्धिर्भवेत्षोडशमासतः ।
तेजस्वी बलवान्धीमांश्चक्षुष्मान्रोगवर्जितः ॥ ५५ ॥

वलीपलितनिर्मुक्तस्त्रिकालविषजिद्भवेत् ।

[स्वर्णाभ्रकरसायनम्]

पूर्ववन्मारयेत्स्वर्णं तस्माद्द्विगुणमभ्रकम् ॥ ५६ ॥

दशमूलवराभृङ्गीक्वाथैर्भाव्यं त्रिसप्तधा ।
प्रातर्माषत्रयं लेह्यं मध्वाज्यैः क्रामणं लिहेत् ॥ ५७ ॥

पलं गुडूचीत्रिफलाक्वाथं तदनु पार्वति !
चतुर्विंशतिगुञ्जाऽस्य वृद्धिस्स्यात्परमावधिः ॥ ५८ ॥

मासषोडशयोगेन दिव्यतेजा महाबलः ।
घनकाञ्चनयोगेन स्वर्णकान्तार्हको भवेत् ॥ ५९ ॥

[स्वर्णकान्तरसायनम्]

पूर्ववन्मारयेत्स्वर्णं कान्तं स्वर्णद्विभागकम् ।
धात्रीफलैर्द्विसप्तैव भावयेन्मर्दयेत्क्रमात् ॥ ६० ॥

सशर्करं भजेत्प्रातस्त्रिमाषं च पिबेदनु ।
धात्रीसत्वं घृतं क्षौद्रं कर्षमात्रं सुरेश्वरि ! ६१ ॥

चतुर्विंशतिका गुञ्जा वृद्धिस्स्यात्परमावधिः ।
मासषोडशयोगेन वलीपलितवर्जितः ॥ ६२ ॥

तप्तकाञ्चनसच्छायः पञ्चबाण इवापरः ।
हेमकान्तास्वादनेन कान्ताभ्रकनकार्हकः ॥ ६३ ॥

[स्वर्णाभ्रकान्तरसायनम्]

पूर्ववन्मारयेत्स्वर्णं कान्तसत्वाभ्रसत्वकम् ।
समानि त्रीणि चैतानि भावयेच्च त्रिसप्तकम् ॥ ६४ ॥

मुण्डिनिर्गुण्डिकाभृङ्गवरानीरेण पार्वति ! ।
माषत्रयोन्मितं प्रातर्लिहेत्क्षौद्रघृताप्लुतम् ॥ ६५ ॥

शुण्ठीचूर्णं कर्षमात्रं मध्वाज्याभ्यां लिहेदनु।
गोक्षीरं पलमात्रं च पिबेत्तदनु पार्वति! ॥ ६६ ॥

वल्लद्वादशसंख्याता परा वृद्धिर्भवेत्प्रिये!।
मासषोडशयोगेन दिव्यकायो भवेन्नरः ॥ ६७ ॥

हेमाभ्रकान्तभजनाद्योग्यस्स्याद्वज्रभक्षणे।

[वज्ररसायनम्]

पूर्ववद्भस्मयेद्वज्रं धात्रीनीरेण मर्दयेत् ॥ ६८ ॥

भावयेत्सप्तधा धीमान्व्रीहिमात्रं लिहेत्प्रिये!।
घृतक्षौद्रयुतं चानुपिबेद्धात्रीरसं पलम् ॥ ६९ ॥

वल्लावधिर्भवेद्वृद्धिर्मासषोडशयोगतः।
चिरजीवी वज्रकायो दिव्यदृष्टिर्महाबलः ॥ ७० ॥

वज्रस्य सेवया योग्यो भवेद्वज्राभ्रभक्षणे।

[वज्राभ्ररसायनम्]

पूर्ववन्मारयेद्व्योम वज्रं वज्राच्चतुर्गुणम् ॥ ७१ ॥

घनं धात्र्याश्शतावर्या रसैर्भाव्यं त्रिसप्तधा।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां लिहेदनु ॥ ७२ ॥

धात्रीशतावरीनीरं क्रामणं पलमात्रकम्।
चतुर्गुञ्जा परा वृद्धिर्भवेत्षोडशमासतः ॥ ७३ ॥

वाक्सिद्धिर्दिव्यदृष्टिस्स्याद्देवतासदृशप्रभः।
सेवया घनवज्रस्य कान्तवज्रार्हको भवेत् ॥ ७४ ॥

[कान्तवज्ररसायनम्]

पूर्ववद्भस्मयेद्वज्रं कान्तं वज्राच्चतुर्गुणम्।
कान्तं त्रिसप्तधा भाव्यमश्वगन्धावरारसैः ॥ ७५ ॥

यवमात्रं क्षौद्रघृतैर्युक्तं लेह्यं दिनोदये ।
अश्वगन्धावराचूर्णं कर्षं गोपयसा पिबेत् ॥ ७६ ।

चतुर्गुञ्जावधिर्ज्ञेया वृद्धिस्स्यात्परमावधिः ।
मासषोडशयोगेन बालसूर्यसमद्युतिः ॥ ७७ ॥

महाबलो महातेजा वाक्सिद्धस्सिद्धतां व्रजेत् ।
सेवया वज्रकान्तस्य वज्रकान्ताभ्रकार्हकः ॥ ७८

[वज्राभ्रकरसायनम्]

पूर्ववन्मारयेद्वज्रं कान्ताभ्राणि च हीरकात् ।
चतुर्गुणे च कान्ताभ्रे वराभृङ्गकुरण्डजैः ॥ ७९ ॥

रसैस्त्रिसप्तधा भाव्यं यवमात्रं लिहेत्प्रिये ! ।
समध्वाज्यं भृङ्गवराकुरण्डकरजोयुतम् ॥ ८० ॥

पलं पिबेच्च गोक्षीरं चतुर्गुञ्जापरावधिः ।
मासषोडशयोगेन गृध्रदृष्टिर्महाबलः ॥ ८१ ॥

अव्याहतगतिर्धीरस्सिद्धसंघेन वर्तते ।
कान्ताभ्रवज्रभजनाद्योग्यस्स्याद्धेमवज्रयोः ॥ ८२ ॥

[स्वर्णवज्ररसायनम्]

पूर्ववन्मारयेद्वज्रं स्वर्णं वज्राद्द्विभागकम् ।
सुवर्णवज्रं वर्षाभूरसैर्भाव्यं त्रिसप्तधा ॥ ८३ ॥

व्रीहिमेयं लिहेत्क्षौद्रघृताभ्यां च पुनर्नवाम् ।
कर्षं पलं च गोक्षीरमनुपेयं सुरेश्वरि ! ॥ ८४ ॥

द्विगुञ्जावधि वृद्धिस्स्यान्मासषोडशयोगतः ।
चिरकालं भवेज्जीवी वलीपलितवर्जितः ॥ ८५ ॥

वज्रहेमोपयोगेन स्वर्णाभ्रकुलिशार्हकः ।

[स्वर्णाभ्रवज्ररसायनम्]

पूर्ववद्भस्मयेद्धेमघनवज्राणि पार्वति ! ॥ ८६ ॥

हीरकाद्द्विगुणं स्वर्णं स्वर्णादभ्रं द्विभागकम् ।
मुसलीकन्दसारेण भावनीयं त्रिसप्तधा ॥ ८७ ॥

यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
कर्षं स्यान्मुसलीचूर्णं गोक्षीरं पलमात्रकम् ॥ ८८ ॥

चतुर्गुञ्जावधिर्वृद्धिर्मासषोडशयोगतः ।
मृत्युं जयेज्जराहीनो वज्रकायो महाबलः ॥ ८९ ॥

एतस्य सेवया वज्रहेमकान्तार्हको भवेत् ।

[स्वर्णवज्रकान्तरसायनम्]

वज्रकान्तसुवर्णानि पूर्ववन्मारितानि च ॥ ९० ॥

वज्रात्सुवर्णं द्विगुणं स्वर्णात्कान्तं द्विभागकम् ।
धात्रीभृङ्गरसैर्मर्द्यमेकविंशतिवारकम् ॥ ९१ ॥

यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
धात्रीभृङ्गभवं चूर्णं कर्षं गोदुग्धकं पलम् ॥ ९२ ॥

गुञ्जाचतुष्टयी वृद्धिर्मासषोडशयोगतः ।
वलीपलितनिर्मुक्तो दिव्यतेजा महाबलः ॥ ९३ ॥

एतस्य सेवया कान्तस्वर्णवज्राभ्रकार्हकः ।

[स्वर्णकान्तवज्राभ्रकरसायनम्]

भस्मयेत्स्वर्णकान्ताभ्रवज्राणि च यथोक्तवत् ॥ ९४ ॥

ज्योतिष्मतीरसैर्भाव्यमेकविंशतिवारकम् ।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ॥ ९५ ॥

यवमात्रं क्षौद्रघृतैर्युक्तं लेह्यं दिनोदये ।
अश्वगन्धावराचूर्णं कर्षं गोपयसा पिबेत् ॥ ७६ ॥

चतुर्गुञ्जावधिर्ज्ञेया वृद्धिस्स्यात्परमावधिः ।
मासषोडशयोगेन बालसूर्यसमद्युतिः ॥ ७७ ॥

महाबलो महातेजा वाक्सिद्धस्सिद्धतां व्रजेत् ।
सेवया वज्रकान्तस्य वज्रकान्ताभ्रकार्हकः ॥ ७८ ॥

[वज्राभ्रकरसायनम्]

पूर्ववन्मारयेद्वज्रं कान्ताभ्राणि च हीरकात् ।
चतुर्गुणे च कान्ताभ्रे वराभृङ्गकुरण्डजैः ॥ ७९ ॥

रसैस्त्रिसप्तधा भाव्यं यवमात्रं लिहेत्प्रिये ! ।
समध्वाज्यं भृङ्गवराकुरण्डकरजोयुतम् ॥ ८० ॥

पलं पिबेच्च गोक्षीरं चतुर्गुञ्जापरावधिः ।
मासषोडशयोगेन गृध्रदृष्टिर्महाबलः ॥ ८१ ॥

अव्याहतगतिर्धीरस्सिद्धसंघेन वर्तते ।
कान्ताभ्रवज्रभजनाद्योग्यस्स्याद्धेमवज्रयोः ॥ ८२ ॥

[स्वर्णवज्ररसायनम्]

पूर्ववन्मारयेद्वज्रं स्वर्णं वज्राद्द्विभागकम् ।
सुवर्णवज्रं वर्षाभूरसैर्भाव्यं त्रिसप्तधा ॥ ८३ ॥

व्रीहिमेयं लिहेत्क्षौद्रघृताभ्यां च पुनर्नवाम् ।
कर्षं पलं च गोक्षीरमनुपेयं सुरेश्वरि ! ॥ ८४ ॥

द्विगुञ्जावधि वृद्धिस्स्यान्मासषोडशयोगतः ।
चिरकालं भवेज्जीवी वलीपलितवर्जितः ॥ ८५ ॥

वज्रहेमोपयोगेन स्वर्णाभ्रकुलिशार्हकः ।

[स्वर्णाभ्रवज्ररसायनम्]

पूर्ववद्भस्मयेद्धेमघनवज्राणि पार्वति ! ॥ ८६ ॥

हीरकाद्द्विगुणं स्वर्णं स्वर्णादभ्रं द्विभागकम् ।
मुसलीकन्दसारेण भावनीयं त्रिसप्तधा ॥ ८७ ॥

यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
कर्षं स्यान्मुसलीचूर्णं गोक्षीरं पलमात्रकम् ॥ ८८ ॥

चतुर्गुञ्जावधिर्वृद्धिर्मासषोडशयोगतः ।
मृत्युं जयेज्जराहीनो वज्रकायो महाबलः ॥ ८९ ॥

एतस्य सेवया वज्रहेमकान्तार्हको भवेत् ।

[स्वर्णवज्रकान्तरसायनम्]

वज्रकान्तसुवर्णानि पूर्ववन्मारितानि च ॥ ९० ॥

वज्रात्सुवर्णं द्विगुणं स्वर्णात्कान्तं द्विभागकम् ।
धात्रीभृङ्गरसैर्मर्द्यमेकविंशतिवारकम् ॥ ९१ ॥

यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ।
धात्रीभृङ्गभवं चूर्णं कर्षं गोदुग्धकं पलम् ॥ ९२ ॥

गुञ्जाचतुष्टयी वृद्धिर्मासषोडशयोगतः ।
वलीपलितनिर्मुक्तो दिव्यतेजा महाबलः ॥ ९३ ॥

एतस्य सेवया कान्तस्वर्णवज्राभ्रकार्हकः ।

[स्वर्णकान्तवज्राभ्रकरसायनम्]

भस्मयेत्स्वर्णकान्ताभ्रवज्राणि च यथोक्तवत् ॥ ९४ ॥

ज्योतिष्मतीरसैर्भाव्यमेकविंशतिवारकम् ।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ॥ ९५ ॥

अश्वगन्धाकन्दचूर्णं कर्षं गोदुग्धकं पलम् ।
गुञ्जाचतुष्टयी वृद्धिः परमावधिरीश्वरि ! ॥ ९६ ॥

मासषोडशयोगेन साक्षादिन्द्रसमो भवेत् ।
एतस्य सेवया देवि ! रसं सेवितुमर्हति ॥ ९७ ॥

**रसभस्म ॥**

धान्याभ्रं पारदं मर्द्यं तप्तखल्वे दिनत्रयम् ।
त्रिफलाऽऽरग्वधनिशाकुमारीकृष्णधूर्तजैः ॥ ९८ ॥

पुनर्नवाग्निजंबीरभवैर्नीरैर्विमर्दयेत् ।
पातयेत्पातनायन्त्रे त्वेवं मर्दनपातनम् ॥ ९९ ॥

कुर्यात्त्रिवारं शुद्धस्स्यात्पारदो दोषवर्जितः ।
नियामकैर्मर्दयेत्तं मूषालेपं नियामकैः ॥ १०० ॥

कृत्वा तं मर्दितं सूतं मूषायां निक्षिपेत्सुधीः ।
अन्धयित्वा भूधराख्ये यन्त्रे पाच्यं सुरेश्वरि ! ॥१०१॥

एवं च सप्तधा कुर्यान्मर्दनं पुटपाचनम् ।
रसभस्म भवेच्छुभ्रं योज्यं योगे रसायने ॥ १०२ ॥

**आरोटकरसाः ॥**

**अभ्रकजीर्णरसभस्म ॥**

अथ चारोटकरसं देहसिद्ध्येककारणम् ।
माषमात्रं लिहेत्प्रातर्मध्वाज्यत्रिफलैस्सह ॥ १०३ ॥

धारोष्णं गोपयः पेयं पलमात्रमनु प्रिये ! ।
अष्टगुञ्जावधिं वृद्धिं कृत्वा षोडशमासकम् ॥ १०४ ॥

वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ।
एतस्य सेवया देवि ! ह्यभ्रसूतार्हको भवेत् ॥ १०५ ॥

मुखीकृते रसे देवि ! चतुष्षष्टिकनिष्कके ।
अभ्रसत्वं निष्कमात्रं क्षिप्त्वा जम्बीरजैर्द्रवैः ॥ १०६ ॥

तप्तखल्वे मर्दयेच्च दिनं कच्छपयन्त्रके ।
सबिडं च पचेत्पश्चात्तमादाय बिमर्दयेत् ॥ १०७ ॥

अभ्रसत्वं द्विनिष्कं च जम्बीराम्लेन पार्वति ! ।
तप्तखल्वे कच्छपाख्ये यन्त्रे पचनकर्म च ॥ १०८ ॥

तृतीये च चतुर्निष्कं चतुर्थे पञ्चमे क्रमात् ।
अष्टनिष्काभ्रसत्वं च दद्यात्पञ्चमपातने ॥ १०९ ॥

घनषोडशनिष्कं च षष्ठे द्वात्रिंशदंशकम् ।
घनसत्वं सप्तमे स्यात्सममेव हि पार्वति ! ॥ ११० ॥

पारदेऽभ्रकसत्वस्य जारणा भवति प्रिये ! ।
एवं जारितसूतेन्द्रं भस्मीकुर्याच्च पूर्ववत् ॥ १११ ॥

पलं चैतत्सूतभस्म व्योमसत्वं चतुष्पलम् ।
भृङ्गराजद्रवैर्मर्द्यं मूषायामन्धयेद्दृढम् ॥ ११२ ॥

कुक्कुटाख्ये पुटे पच्यात्स्वाङ्गशीतं समाहरेत् ।
त्रिफलाभृङ्गजैर्नीरैर्भावयेत्तत्त्रिसप्तधा ॥ ११३ ॥

मध्वाज्याभ्यां गुञ्जमात्रं लिहेत्प्रातर्विशुद्धधीः ।
पिबेदनु वराक्वाथं पलं नियतमानसः ॥ ११४ ॥

गुञ्जाषोडशिका वृद्धिः सेव्यं षोडशमासतः ।
आचन्द्रतारकं जीवेद्वलीपलितवर्जितः ॥ ११५ ॥

एतस्य सेवया कान्तसूतसेवार्हको भवेत् ।

## कान्तजीर्णरसभस्म ॥

मुखीकृते सूतराजे यथाऽभूदभ्रजारणा ॥ ११६ ॥

तथैव कान्तसत्वस्य जारणा भवति प्रिये ! ।
मारयेत्पूर्ववत्सूतं कान्तसत्वेन जारितम् ॥ ११७ ॥

एवंविधं सूतभस्म भागमेकं भवेत्पुनः ।
चतुर्भागं कान्तभस्म मर्दयेत्त्रिफलाम्बुना ॥ ११८ ॥

मूषायामन्धयेत्पश्चात्पचेत्कौक्कुटिके पुटे ।
तमादाय वरानीरैर्भावयेच्च त्रिसप्तधा ॥ ११९ ॥

मध्वाज्याभ्यां लिहेद्गुञ्जामात्रं प्रातरतन्द्रितः ।
अनुपेयं च गोक्षीरं पलमात्रं सुरेश्वरि ! ॥ १२० ॥

गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः ।
दिव्यदृष्टिं खेचरत्वं प्राप्नुयादैन्द्रकं पदम् ॥ १२१ ॥

एतस्य सेवया सूतघनकान्तार्हको भवेत् ।
मुखीकृतरसे कुर्यात्पूर्ववद्व्योमजारणम् ॥ १२२ ॥

## कान्ताभ्रकजीर्णरसभस्म ॥

समं सूतस्य देवेशि ! पश्चात्कार्यं विचक्षणैः ।
पूर्ववत्कान्तसत्वस्य जारणा सूतराट्समा ॥ १२३ ॥

कान्तसत्वाभ्रसत्वाभ्यां जारितः पारदो यदि ।
स रसः पक्षहीनस्स्याच्चाञ्चल्यरहितश्शिवः ॥ १२४ ॥

तं रसं पूर्ववद्दिव्यैरौषधैर्मारितं रसम् ।
पलं तद्द्विगुणं व्योमसत्वभस्म च तत्समम् ॥ १२५ ॥

भस्म वैक्रान्तसत्वस्य मर्द्यमेवं त्रयं त्रिधा ।
भृङ्गधात्रीफलरसे ततो लघुपुटे पचेत् ॥ १२६ ॥

भृङ्गधात्रीफलरसैश्छायायां भावयेद्रसम् ।
त्रिफलामधुसर्पिर्भिर्गुञ्जामात्रं लिहेदनु ॥ १२७ ॥

पलमात्रं वराक्काथं वृद्धिष्षोडशगुञ्जिका ।
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ॥ १३८ ॥

एतस्य सेवया कान्तहेमसूतार्हको भवेत् ।

**स्वर्णकान्तजीर्णरसभस्म ॥**

समुखे पारदे कान्तसत्वं जार्यं यथोक्तवत् ॥ १३९ ॥

जारयेच्च तथा स्वर्णं द्वाभ्यां जीर्णं समं समम् ।
विधिना भस्मयेत्सूतं कान्तहाटकजारितम् ॥ १४० ॥

तं रसं पलमेकं च हेमभस्म पलद्वयम् ।
चतुष्पलं कान्तसत्वभस्म युञ्ज्याद्यथाविधि ॥ १४१ ॥

शतावरीवरानीरै र्दिनं संमर्द्य संपुटे ।
रुध्वा तं कुक्कुटपुटे पचेदादाय तं रसम् ॥ १४२ ॥

त्रिस्सप्तधा शतावर्या रसैर्भाव्यं वरारसैः ।
गुञ्जामात्रं घृतक्षौद्रयुक्तं लेह्यं पिबेदनु ॥ १४३ ॥

शतावरीरसः पेयः पलमात्रं सुरेश्वरि ! ।
गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः ॥ १४४ ॥

वलीपलितनिर्मुक्तः प्रलयान्तं च जीवति ।
एतस्य सेवया स्वर्णकान्ताभ्ररसभुग्भवेत् ॥ १४५ ॥

**स्वर्णकान्ताभ्रजीर्णरसभस्म ॥**

घनकान्तसुवर्णानि चैकैकानि समानि वै ।
मुखीकृतस्य सूतस्य जारयेत्क्रमशः प्रिये ! ॥ १४६ ॥

घनादिजारितं सूतं मारयेत्पूर्ववत्सुधीः ।
तस्माद्भस्मीकृतात्सूताद्द्विगुणं हेमभस्म च ॥ १४७ ॥

हेमतुल्यं मृतं कान्तं कान्ततुल्यं मृतं घनम्।
एतत्सर्वं वराक्वाथमुण्डीभृङ्गरसैर्दिनम् ॥ १४८ ॥

मर्दयेत्संपुटे रुध्वा पचेत्कौक्कुटिके पुटे।
तदादाय वराभृङ्गमुण्डिनीरैश्च भावयेत् ॥ १४९ ॥

त्रिस्सप्तवारं छायायां प्रातर्गुञ्जोन्मितं लिहेत्।
शर्करामधुसर्पिर्भिरनुपेयं च गोपयः ॥ १५० ॥

गुञ्जाषोडशिका वृद्धिर्मासषोडशयोगतः।
वलीपलितनिर्मुक्तो जीवेदाचन्द्रतारकम् ॥ १५१ ॥

एतस्य सेवया सूतवज्रसेवार्हको भवेत्।

## वज्रजीर्णरसभस्म ॥

समुखे पारदे कुर्यात्पूर्ववद्वज्रजारणाम् ॥ १५२ ॥

वज्रजीर्णं रसं देवि! भस्मीकुर्याच्च पूर्ववत्।
भस्मीभूतरसाद्वज्रभस्म च द्विगुणं प्रिये! ॥ १५३ ॥

कन्याभृङ्गवरानीरैर्दिनं मर्द्यं च संपुटे।
कुक्कुटाख्ये पुटे पच्यात्तमादायाथ भावयेत् ॥ १५४ ॥

कन्याभृङ्गवरानीरैर्भावयेच्च त्रिसप्तधा।
यवमात्रं लिहेत्प्रातर्मध्वाज्याभ्यां पिबेदनु ॥ १५५ ॥

गोक्षीरं पलमात्रं तु वृद्धिर्गुञ्जाचतुष्टयम्।
मासषोडशयोगेन जीवेदाचन्द्रतारकम् ॥ १५६ ॥

एतस्य सेवया वज्रसूतव्योमार्हको भवेत्।

## वज्राभ्रकजीर्णरसभस्म ॥

घनजीर्णं वज्रजीर्णं भस्मीकुर्याद्रसं सुधीः ॥ १५७ ॥

समानि जारयेत्पश्चाज्जीर्णं तं मारयेद्रसम् ।
पूर्ववत्पारदाद्वज्रं समं वज्रचतुर्गुणम् ॥ १६८ ॥

कान्तं कान्तसमं व्योमसत्वं चैतानि मर्दयेत् ।
त्रिफलाभृङ्गजरसै रुध्वा संपुटके पचेत् ॥ १६९ ॥

लघुनाऽग्निपुटेनैव तमादायाथ भावयेत् ।
वराभृङ्गरसैरेकविंशतिं वारमातपे ॥ १७० ॥

माषमात्रं समध्वाज्यं लिहेत्प्रातर्विशुद्धधीः ।
अनुपेयं च गोक्षीरं वृद्धिर्गुञ्जाष्टकं भवेत् ॥ १७१ ॥

मासषोडशयोगेन जीवेदाचन्द्रतारकम् ।
एतस्य सेवया हेमवज्रसूतार्हको भवेत् ॥ १७२ ॥

**स्वर्णवज्रजीर्णरसभस्म ॥**

समुखे पारदे तुल्ये हेम वज्रं च जारयेत् ।
तं रसं भस्मयेद्देवि ! रसं वज्रं समं समम् ॥ १७३ ॥

तयोस्समं मृतं हेम वराक्वाथेन मर्दयेत् ।
तत्सर्वं संपुटे क्षिप्त्वा भूधराख्ये पुटे पचेत् ॥ १७४॥

तमादाय वराक्वाथैर्भावयेच्च त्रिसप्तधा ।
माषमात्रं लिहेत्प्रातस्तिलाज्यमधुसंयुतम् ॥ १७५ ॥

गोक्षीरमनुपेयं स्यादष्टगुञ्जावधि क्रमात् ।
मासषोडशपर्यन्तं जीयादाचन्द्रतारकम् ॥ १७६ ॥

एतस्य सेवया व्योमहेमवज्ररसार्हकः ।

**स्वर्णवज्राभ्रकजीर्णरसभस्म ॥**

समुखे पारदे व्योमहेमवज्राणि जारयेत् ॥ १७७ ॥

पारदस्य समांशानि ततस्सूतं विमारयेत् ।
रसतुल्यं मृतं वज्रं तयोस्तुल्यं च हाटकम् ॥ १७८ ॥

सर्वतुल्यं रसं व्योम तत्सर्वं ब्रह्मबीजकैः ।
तैलैस्त्र्यहं पेषयित्वा संपुटेद्भूधरे पुटे ॥ १७९ ॥

तं पलाशकषायेण भावनाश्चैकविंशतिः ।
तं रसं माषमात्रं च तैलं ब्रह्मद्रुबीजकम् ॥ १८० ॥

कर्षमात्रं पिबेच्चानु यावद्गुञ्जाष्टकावधि ।
मासषोडशयोगेन सिद्धो भवति शाश्वतः ॥ १८१ ॥

एतस्य सेवया कान्तहेमवज्ररसार्हकः ।

स्वर्णकान्तवज्रजीर्णरसभस्म ॥

मुखीकृते सूतराजे कान्तं स्वर्णं समं समम् ॥ १८२ ॥

जारयेद्ग्रसयेत्तं च तत्समं वज्रभस्म च ।
तयोस्तुल्यं मृतं हेम कान्तं सर्वसमं प्रिये ! ॥ १८३ ॥

वराभृङ्गरसे पिष्ट्वा भूधरे संपुटे पचेत् ।
ततो भृङ्गवरानीरै रेकविंशतिभावनाः ॥ १८४ ॥

वराक्षौद्रैर्लिहेत्प्रातर्माषमात्रं रसं सुधीः ।
गव्यं पयः पलं पेयं वृद्धिष्षोडशमाषिका ॥ १८५ ॥

मासषोडशयोगेन भवेत्सिद्धसमः प्रभुः ।
एतस्य सेवया व्योमकान्तहेमपवीरसम् ॥ १८६ ॥

सेवितुं जायतेऽर्होऽसौ संयतात्मा महेश्वरः ।

स्वर्णकान्तवज्राभ्रकजीर्णरसभस्म ॥

घनकान्तस्वर्णवज्रं जारयेत्समुखे रसे ॥ १८७ ॥

प्रत्येकं पारदसममेवं कार्यं सुरेश्वरि! ।
ततस्तं मारयेद्युक्त्या रसतुल्यं मृतं पविम् ॥ १८८ ॥

तयोस्तुल्यं मृतं हेम सर्वतुल्यं मृतं घनम् ।
घनतुल्यमयस्कान्तं सर्वतुल्यं सुरद्रुजैः ॥ १८९ ॥

तैलैस्ततस्संपुटे च क्षिप्त्वा भूधरके पचेत् ।
गुञ्जामात्रं रसं चैतं लिहेत्प्रातश्शुचिस्सुधीः ॥ १९० ॥

देवदारुजतैलेन कर्षमात्रं तु पार्वति! ।
धारोष्णं गोपयः पेयं पलमात्रमनु प्रिये! ॥ १९१ ॥

गुञ्जाषोडशपर्यन्तं मासषोडशयोगतः ।
य इमं पारदं दिव्यं सेवते पथ्यभुक्सदा ॥ १९२ ॥

व्याधिजन्मजरामृत्युवर्जितस्सर्वसिद्धिभाक् ।
सर्वज्ञस्सर्वगस्सिद्धस्सृजतीव पितामहः ॥ १९३ ॥

विष्णुवत्त्रायते विश्वं हरतीव हरस्स्वयम् ।
वाञ्छितार्थान्स्वयं दत्ते कल्पद्रुम इवापरः ॥ १९४ ॥

कन्दर्प इव कामाक्षीस्सहस्रं रमयेत्क्षणात् ।
सच्चिदानन्दरूपोऽयं रससेवी भवेद्ध्रुवम् ॥ १९५ ॥

घनादिपञ्चयोगोत्थमेकत्रिंशद्रसायनम् ।
भवत्स्नेहेन कथितं रहस्यं देवदुर्लभम् ॥ १९६ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ नवमोल्लासः ॥

## ॥ दशम उल्लासः ॥

### घुटिकासिद्धिः ॥

प्रणम्य परया भक्त्या भैरवं भैरवी शिवम् ।
उवाच विनयेनेदं लोकानां हितकांक्षिणी ॥ १ ॥

श्रीभैरवी—

देवदेव कृपामूर्ते! सर्वानुग्राहक प्रभो! ।
त्वत्प्रसादान्मया ज्ञातं रहस्यमतिदुर्लभम् ॥ २ ॥

कान्ताभ्रहेमकुलिशरसभस्म रसायनम् ।
अतः परं महादेव! श्रोतुमिच्छामि भैरव! ॥ ३ ॥

एतैर्घनाद्यै रचितघुटिकानां रसायनम् ।
श्रुत्वा सविनयं वाक्यं भैरव्यास्त्वादिभैरवः ॥ ४ ॥

स्थित्वेत्युवाच वचनं तद्वक्ष्यामि रसायनम् ।

श्रीभैरवः—

### १. मृतसञ्जीवनी घुटिका ॥

शृणु पार्वति! यत्नेन सावधानेन साम्प्रतम् ॥ ५ ॥

प्रथमं जारणं कार्यं पश्चात्पारदबन्धनम् ।
तस्माज्जारणबीजानि घनादीनां वदामि ते ॥ ६ ॥

गन्धतालशिलातुत्थखर्परीहिङ्गुलामलाः ।
भूनागताप्यकासीसनृपावर्ताभ्रगैरिकम् ॥ ७ ॥

कान्तत्रिक्षारवैक्रान्तास्त्वेते चूर्णसमांशकाः ।
सिद्धचूर्णमिदं ख्यातं श्रेष्ठं स्याद्बीजकर्मणि ॥ ८ ॥

द्वन्द्वमेलोपलिप्तायां मूषायां निक्षिपेत्प्रिये ! ।
कृष्णसत्वाभ्रसत्वं च द्रावयेत्समशुल्वकम् ॥ ९ ॥

समिलपञ्चकं तस्मिन्सिद्धचूर्णं मुहुर्मुहुः ।
घनाद्दशगुणं क्षेप्यं धमेद्गाढं वरानने ! ॥ १० ॥

घनसत्वावशिष्टं स्याद्धमनीयं च तावता ।
कालेनेदं व्योमसत्वबीजं जार्यं रसायने ॥ ११ ॥

समुखे पारदे बीजं चतुष्षष्ट्यंशके क्षिपेत् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ॥ १२ ॥

तं सूतं कच्छपे यन्त्रे सबिडे जारयेत्प्रिये ! ।
ततो द्वात्रिंशदंशं च षोडशांशं रसस्य तु ॥ १३ ॥

अष्टमांशं चतुर्थांशं त्र्यंशं चैव समांशकम् ।
पारदे जारयेदेवं क्रमाद्बीजं सुरेश्वरि ! ॥ १४ ॥

सूतमेवंविधं व्योमसत्वं बीजसमं प्रिये ! ।
तप्तखल्वेऽम्लवर्गेण मर्दयेदेकवासरम् ॥ १५ ॥

पिष्टिं पारदराजं तं जम्बीरान्तर्विनिक्षिपेत् ।
दोलायन्त्रेऽम्लयुक्ते तं विपचेत्सप्तवासरम् ॥ १६ ॥

तमादाय बलिं क्षिप्त्वा सिद्धचूर्णेन पार्वति ! ।
ततस्तं भूधरे यन्त्रे पचेल्लघुपुटेन च ॥ १७ ॥

यावत्कठिनतां याति तावत्कार्यं मुहुर्मुहुः ।
दोलापाकं सिद्धचूर्णलेपं भूधरके पुटम् ॥ १८ ॥

मृतसञ्जीवनी नाम्ना घुटिका सर्वसिद्धिदा ।
वक्त्रान्तरे गले मूर्ध्नि बाहौ कर्णेऽथवा वहेत् ॥ १९ ॥

हेम्ना सुवेष्टिता सम्यग्वलीपलितनाशिनी ।
वक्त्रस्था मृत्युहा वर्षाद्विषविग्रहनाशिनी ॥ २० ॥

शुद्धं गन्धं कर्षमात्रं गव्यं क्षीरं पलं पिबेत् ।
अनेन क्रमणेनैव सूतस्संक्रमते तनुम् ॥ २१ ॥

२. दिव्या घुटिका ॥

कान्तम्लेच्छमुखं रूप्यं लिप्तमूषान्तरे समम् ।
द्रावयित्वा सिद्धचूर्णं कान्तादशगुणं शनैः ॥ २२ ॥

वहेन्मुहुर्मुहुर्द्राव्यं यावत्कान्तोऽवशिष्यते ।
कान्तबीजमिदं प्रोक्तं श्रेष्ठं जार्यं रसायने ॥ २३ ॥

समुखे पारदे चेदं बीजं चार्यञ्च पूर्ववत् ।
चतुष्षष्ट्यंशकं पूर्वं समांशं तं क्रमेण वै ॥ २४ ॥

एवंविधं सूतराजं कान्तबीजं द्वयं समम् ।
मर्दयेत्तप्तखल्वे च साम्लवर्गे दिनत्रयम् ॥ २५ ॥

पिष्टीभूतं च जंबीरे क्षिप्त्वाऽम्लगणपूरिते ।
दोलायन्त्रे पचेत्सम्यगेवमासप्तवारकम् ॥ २६ ॥

तमादाय लिहेद्बाह्ये सिद्धचूर्णेन भैरवि ! ।
ततो दिव्यौषधैर्लिप्ते संपुटे भूधरे पचेत् ॥ २७ ॥

यावत्कठिनतां याति तावत्कुर्यात्क्रमेण च ।
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ॥ २८ ॥

पुटे तौ जारयेद्दिव्यनाम्नाऽथ परमेश्वरि ! ।
वक्त्रान्तरे गले मूर्ध्नि बाहौ कर्णेऽथवा वहेत् ॥ २९ ॥

हेम्ना सुवेष्टितं धार्यं वलीपलितनाशनम् ।
पूर्ववत्फलदा पुण्या धार्या यत्नेन मानवैः ॥ ३० ॥

पूर्ववत्क्रामणं कार्यं देहे सङ्क्रमते रसः ।

### ३. कामेश्वरी घुटिका ॥

समुखे पारदे व्योमकान्तबीजं च मारयेत् ॥ ३१ ॥

प्रत्येकं पारदसमं पूर्ववच्च शनैश्शनैः ।
चतुष्षष्ट्यंशकं चादौ समांशं तं क्रमाद्रसे ॥ ३२ ॥

अस्य सूतस्य तुल्यांशं कान्तबीजाभ्रबीजकम् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्वासरत्रयम् ॥ ३३ ॥

पिष्टीकृतं च जंबीरे क्षिप्त्वा दोलागतं पचेत् ।
पुनरादाय तां पिष्टिं सिद्धचूर्णेन लेपयेत् ॥ ३४ ॥

दिव्यौषधिगणैर्लिप्ते संपुटे भूधरे पचेत् ।
यदा कठिनतां याति द्विधा कुर्यात्क्रमेण तु ॥ ३५ ॥

दोलास्वेदं चूर्णलेपं कृत्वा भूधरपाचनम् ।
कामेश्वरीयं घुटिका वक्त्रस्था सर्वसिद्धिदा ॥ ३६ ॥

पूर्ववत्क्रामणं कार्यं रसेन्द्रः क्रामते तनुम् ।

### ४. हेमसुन्दरी घुटिका ॥

स्वर्णं रूप्यं म्लेच्छमुखं कान्तसत्वाभ्रसत्वकम् ॥ ३७ ॥

द्वन्द्वमेलोपलिप्तायां मूषायां तद्विनिक्षिपेत् ।
तस्मिन्द्रुते सिद्धचूर्णं स्वर्णाद्दशगुणं क्षिपेत् ॥ ३८ ॥

यावत्स्वर्णावशेषं स्यात्तावद्द्राव्यं शनैश्शनैः ।
हेमबीजमिदं ख्यातं श्रेष्ठं रसरसायने ॥ ३९ ॥

समुखे पारदे देवि! बीजं रससमं क्रमात् ।
जारयेत्पूर्ववद्देवि! चतुष्षष्ट्यंशकादिकम् ॥ ४० ॥

एतद्रसं हेमबीजं समं खल्वे च तापिते ।
मर्दयेदम्लवर्गेण त्र्यहात्पिष्टिर्भवेद्रसः ॥ ४१ ॥

पिष्टिं जंबीरजां कृत्वा दोलायन्त्रेऽम्लपूरिते ।
षडहं पाचयेद्देवि ! सिद्धचूर्णप्रलेपनम् ॥ ४२ ॥

तथा संपुटलेपं च तथा भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कुर्याच्च पूर्ववत् ॥ ४३ ॥

इयं तु घुटिका दिव्या विख्याता हेमसुन्दरी ।
वक्त्रस्था सिद्धिदा नृणां जरामृत्युविषापहा ॥ ४४ ॥

पूर्ववत्क्रामणं कार्यं सूतस्संक्रमते पुनः ।

## ५. मदनसुन्दरी घुटिका ॥

मुखीकृते रसे व्योमबीजं हाटकबीजकम् ॥ ४५ ॥

समं समं क्रमाज्जार्यं चतुष्षष्ट्यंशकादिकम् ।
इत्येवं जारितं सूतं बीजं गगनरुक्मयोः ॥ ४६ ॥

मर्दयेत्पारदसमं तप्तखल्वेऽम्लवर्गतः ।
त्रिदिनाज्जायते पिष्टिः पुनर्जंबीरगां कुरु ॥ ४७ ॥

दोलायन्त्रेऽम्लभरिते पचेत्तां सप्तवासरम् ।
लेपनं सिद्धचूर्णस्य तथा संपुटलेपनम् ॥ ४८ ॥

तथा भूधरपाकश्च यावत्कठिनतां व्रजेत् ।
सिद्धिदा घुटिका ह्येषा नाम्ना मदनसुन्दरी ॥ ४९ ॥

आस्यान्तरस्थिता कुर्यात्सर्वसिद्धीश्चिरायुषः ।
व्यालव्याघ्रगजादीनां राज्ञां वश्यं स्त्रियामपि ॥ ५० ॥

पूर्ववत्क्रामणं कार्यं कायमाक्रामते रसः ।

## ६. खेचरी घुटिका ॥

मुखीकृते रसे कान्तहेमबीजं समं समम् ॥ ५१ ॥

रसोन्मिते पृथक्जार्यं चतुष्षष्ट्यंशकादिकम् ।
इत्थं जीर्णं रसं बीजं कान्तहेम्नो रसोन्मितम् ॥ ५२ ॥

पूर्ववत्पिष्टिकां कृत्वा दोलायन्त्रे च पाचनम् ।
यावत्कठिनतां याति तावत्कार्यं मुहुर्मुहुः ॥ ५३ ॥

घुटिका जायते नाम्ना खेचरी सर्वसिद्धिदा ।
पूर्ववत्क्रामणं कार्यं सुगन्धं गोपयः पिबेत् ॥ ५४ ॥

तेन संक्रमते देहं घुटिकान्तर्गतो रसः ।

## ७. वज्रेश्वरी घुटिका ॥

समुखे पारदे व्योमकान्तहेम्नां समं समम् ॥ ५५ ॥

बीजं पृथक्पृथक्जार्यं चतुष्षष्ट्यंशकादिकम् ।
इत्थंभूतस्य सूतस्य समं व्योमादिबीजकम् ॥ ५६ ॥

त्रयं तापितखल्वेन त्र्यहमम्लेन मर्दयेत् ।
स सूतः पिष्टिमाप्नोति तां पिष्टिं पूर्ववत्प्रिये ! ॥ ५७ ॥

दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कार्यमतन्द्रितैः ॥ ५८ ॥

वज्रेश्वरीति घुटिका वक्त्रस्था सर्वसिद्धिदा ।
पूर्ववत्क्रामणं कार्यं गात्रं व्याप्नोति पारदः ॥ ५९ ॥

## ८. महावज्रेश्वरी घुटिका ॥

शुद्धं स्वर्णं वज्रभस्म लोहचूर्णाभ्रसत्वकम् ।
एतच्चतुस्समं नागं मूषायां चान्धितं धमेत् ॥ ६० ॥

द्वन्द्वमेलोपलिप्तायां पुनरादाय तं प्रिये ! ।
एकीभूतं च मूषायां प्रकटं च धमेत्पुनः ॥ ६१ ॥

धौतसत्वं माक्षिकं च स्वल्पं स्वल्पं मुहुः क्षिपेत् ।
वज्रहेमावशेषं तु यावत्स्यात्तत उद्धरेत् ॥ ६२ ॥

एतस्मिन्व्योमसत्वायश्चूर्णनागांश्च पूर्ववत् ।
द्वन्द्वमेलोपलिप्तायामन्धयित्वा दृढं धमेत् ॥ ६३ ॥

एकीभूतं समादाय मूषायां प्रकटं धमेत् ।
हेमवज्रावशेषं स्याद्यावत्तत्पुनराहरेत् ॥ ६४ ॥

व्योमसत्वमयश्चूर्णं नागं वाह्यं पुनः पुनः ।
पूर्ववत्क्रमयोगेन माक्षिकं धौतसत्वकम् ॥ ६५ ॥

मुहुः क्षिप्य धमेत्तं तु वाह्यमेवं तु षड्गुणम् ।
वज्रबीजमिदं श्रेष्ठं जार्यं रसरसायने ॥ ६६ ॥

समुखे पारदे जार्यं वज्रबीजं रसोन्मितम् ।
चतुष्षष्ट्यंशकाद्यं च क्रमात्सङ्क्रामयेत्प्रिये ! ॥ ६७ ॥

इत्थं जारितसूतस्य समं कुलिशबीजकम् ।
तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ॥ ६८ ॥

स पिष्टिर्जायते सूतस्तां पिष्टीं च समाहरेत् ।
दोलापाकस्सिद्धचूर्णलेपस्सम्पुटभूधरम ॥ ६९ ॥

कुर्वीत पूर्ववत्सर्वं यावत्कठिनतां व्रजेत् ।
महावज्रेश्वरी नाम्ना घुटिका सिद्धिदायिनी ॥ ७० ॥

वक्त्रस्था क्रामणं कार्यं पूर्ववत्क्रामते रसः ।

## ९. वज्रखेचरी घुटिका ॥

मुखीकृते रसे व्योमवज्रबीजं रसोन्मितम् ॥ ७१ ॥

पृथक् पृथक्जारणीयं चतुष्षष्ट्यंशकादिकम् ।
अमुष्य जीर्णसूतस्य समं वज्राभ्रबीजकम् ॥ ७२ ॥

तप्तखल्वेऽम्लवर्गेण त्रिदिनं मर्दयेद्दृढम् ।
स रसो जायते पिष्टिस्तां पुनः पूर्ववत्प्रिये ! ॥ ७३ ॥

दोलास्वेदं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावदेवं मुहुर्मुहुः ॥ ७४ ॥

घुटिका जायते दिव्या नाम्नेयं वज्रखेचरी ।
वक्त्रस्था सिद्धिदा नृणां पूर्ववत्क्रामणं प्रिये ! ॥ ७५ ॥

## १०. कालविध्वंसिनी घुटिका ॥

मुखीकृते रसे कान्तवज्रबीजं रसोन्मितम् ।
पृथक्पृथक्जारणीयं चतुष्षष्ट्यंशकादिकम् ॥ ७६ ॥

अस्य जीर्णस्य सूतस्य समं कुलिशकान्तयोः ।
बीजं सन्तप्तखल्वेऽम्लवर्गे मर्द्यं दिनत्रयम् ॥ ७७ ॥

पिष्टिर्भवत्येष सूतः पिष्टिं तां पुनराहरेत् ।
दोलास्वेदस्सिद्धचूर्णलेपस्संपुटभूधरम् ॥ ७८ ॥

यावत्कठिनतां याति तावदेवं मुहुर्मुहुः ।
कालविध्वंसिनी नाम्ना घुटिका जायते शुभा ॥ ७९ ॥

मुखस्था सिद्धिदा दिव्या पूर्ववत्क्रामणं पिबेत् ।

## ११. गगनेश्वरी घुटिका ॥

मुखीकृते सूतराजे वज्रकान्ताभ्रबीजकम् ॥ ८० ॥

पृथक्पृथक्सूतराजे चतुष्षष्ट्यंशकादिकम् ।
रसस्य तस्य सदृशं वज्रबीजाभ्रबीजकम् ॥ ८१ ॥

तप्तखल्वेऽम्लवर्गेण त्र्यहात्पिष्टिस्सुमर्दनात् ।
दोलापाकस्सिद्धचूर्णलेपस्संपुटभूधरम् ॥ ८२ ॥

यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ।
गगनेश्वरीयं घुटिका वक्त्रस्था सर्वसिद्धिदा ॥ ८३ ॥

पूर्ववत्क्रामणं कार्यं देहे क्रामति सूतकः ।

### १२. वज्रघण्टेश्वरी घुटिका ॥

मुखीकृते सूतराजे बीजं वज्रसुवर्णयोः ॥ ८४ ॥

पृथक्पृथक्समं जार्यं चतुष्षष्ट्यंशकादिकम् ।
अस्य सूतस्य सदृशं हेम्नो वज्रस्य बीजकम् ॥ ८५ ॥

तप्तखल्वेऽम्लवर्गेण त्र्यहात्पिष्टिर्भवेद्रसः ।
तां पिष्टिं पुनरादाय पूर्ववत्परिकल्पयेत् ॥ ८६ ॥

दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ॥ ८७ ॥

वज्रघण्टेश्वरी ह्येषा घुटिका सिद्धिदायिनी ।
मुखस्था सिद्धिदा दिव्या पूर्वोक्तं क्रामणं पिबेत् ॥८८॥

### १३. वज्रभैरवी घुटिका ॥

मुखीकृते सूतराजे हेमवज्राभ्रबीजकम् ।
पृथक्पृथक्समं जार्यं चतुष्षष्ट्यंशकादिकम् ॥ ८९ ॥

अस्य सूतस्य सदृशं हेमवज्राभ्रबीजकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ ९० ॥

पिष्टिर्भवेत्पुनस्तां च समादाय ततः प्रिये! ।
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ॥ ९१ ॥

यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ।
घुटिका जायते दिव्या नाम्नेयं वज्रभैरवी ॥ ९२ ॥

मुखस्थिता सिद्धकरी क्रामणं पूर्ववत्प्रिये ! ।

### १४. त्रिपुरभैरवी घुटिका ॥

मुखीकृते रसे कान्तवज्रहाटकबीजकम् ॥ ९३ ॥

जार्यं पृथक्सूतसमं चतुष्षष्ट्यंशकादिकम् ।
जीर्णसूतसमं कान्तवज्रकाञ्चनबीजकम् ॥ ९४ ॥

तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम् ।
जायते पारदः पिष्टिः पूर्ववत्तां समाहरेत् ॥ ९५ ॥

दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतामेति तावत्कार्यं मुहर्मुहुः ॥ ९६ ॥

घुटिका जायते दिव्यानाम्ना त्रिपुरभैरवी ।
मुखस्था सिद्धिदा ह्येषा पूर्ववत्क्रामणं प्रिये ! ॥९७॥

### १५. महाभैरवी घुटिका ॥

मुखीकृते रसे कान्तवज्राभ्रस्वर्णबीजकम् ।
पृथक्सूतसमं जार्यं चतुष्षष्ट्यंशकादिकम् ॥ ९८ ॥

अस्य सूतस्य जीर्णस्य समं व्योमादिबीजकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ ९९ ॥

पिष्टिर्भवति सूतेन्द्रस्तां पिष्टिं पुनराहरेत् ।
दोलापाकं सिद्धचूर्णलेपं संपुटभूधरे ॥ १०० ॥

यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ।
नाम्ना महाभैरवीयं घुटिका सर्वसिद्धिदा ॥ १०१ ॥

धारयेन्मुखमध्ये तत्पूर्ववत्क्रामणं पिबेत् ।

### क्रामणानि ॥

त्रिफला मुसली मुण्डी भृङ्गराजश्च बाकुची ॥ १०२ ॥

यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ।
गगनेश्वरीयं घुटिका वक्त्रस्था सर्वसिद्धिदा ॥ ८३ ॥

पूर्ववत्क्रामणं कार्यं देहे क्रामति सूतकः ।

## १२. वज्रघण्टेश्वरी घुटिका ॥

मुखीकृते सूतराजे बीजं वज्रसुवर्णयोः ॥ ८४ ॥

पृथक्पृथक्समं जार्यं चतुष्षष्ट्यंशकादिकम् ।
अस्य सूतस्य सदृशं हेम्नो वज्रस्य बीजकम् ॥ ८५ ॥

तप्तखल्वेऽम्लवर्गेण त्र्यहात्पिष्टिर्भवेद्रसः ।
तां पिष्टिं पुनरादाय पूर्ववत्परिकल्पयेत् ॥ ८६ ॥

दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ।
यावत्कठिनतां याति तावत्कुर्यान्मुहुर्मुहुः ॥ ८७ ॥

वज्रघण्टेश्वरी ह्येषा घुटिका सिद्धिदायिनी ।
मुखस्था सिद्धिदा दिव्या पूर्वोक्तं क्रामणं पिबेत् ॥८८॥

## १३. वज्रभैरवी घुटिका ॥

मुखीकृते सूतराजे हेमवज्राभ्रबीजकम् ।
पृथक्पृथक्समं जार्यं चतुष्षष्ट्यंशकादिकम् ॥ ८९ ॥

अस्य सूतस्य सदृशं हेमवज्राभ्रबीजकम् ।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ ९० ॥

पिष्टिर्भवेत्पुनस्तां च समादाय ततः प्रिये ! ।
दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम् ॥ ९१ ॥

यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः ।
घुटिका जायते दिव्या नाम्नेयं वज्रभैरवी ॥ ९२ ॥

मुखस्थिता सिद्धकरी क्रामणं पूर्ववत्प्रिये!।

### १४. त्रिपुरभैरवी घुटिका ॥

मुखीकृते रसे कान्तवज्रहाटकबीजकम् ॥ ९३ ॥

जार्यं पृथक्सूतसमं चतुष्षष्ट्यंशकादिकम्।
जीर्णसूतसमं कान्तवज्रकाञ्चनबीजकम् ॥ ९४ ॥

तप्तखल्वेऽम्लवर्गेण मर्दयेद्दिवसत्रयम्।
जायते पारदः पिष्टिः पूर्ववत्तां समाहरेत् ॥ ९५ ॥

दोलापाकं सिद्धचूर्णलेपं भूधरपाचनम्।
यावत्कठिनतामेति तावत्कार्यं मुहर्मुहुः ॥ ९६ ॥

घुटिका जायते दिव्यानाम्ना त्रिपुरभैरवी।
मुखस्था सिद्धिदा ह्येषा पूर्ववत्क्रामणं प्रिये! ॥९७॥

### १५. महाभैरवी घुटिका ॥

मुखीकृते रसे कान्तवज्राभ्रस्वर्णबीजकम्।
पृथक्सूतसमं जार्यं चतुष्षष्ट्यंशकादिकम् ॥ ९८ ॥

अस्य सूतस्य जीर्णस्य समं व्योमादिबीजकम्।
मर्दयेदम्लवर्गेण तप्तखल्वे दिनत्रयम् ॥ ९९ ॥

पिष्टिर्भवति सूतेन्द्रस्तां पिष्टिं पुनराहरेत्।
दोलापाकं सिद्धचूर्णलेपं संपुटभूधरे ॥ १०० ॥

यावत्कठिनतामेति तावत्कार्यं मुहुर्मुहुः।
नाम्ना महाभैरवीयं घुटिका सर्वसिद्धिदा ॥ १०१ ॥

धारयेन्मुखमध्ये तत्पूर्ववत्क्रामणं पिबेत्।

### क्रामणानि ॥

त्रिफला मुसली मुण्डी भृङ्गराजश्च बाकुची ॥ १०२ ॥

नीली कन्या काकमाची हयगन्धा शतावरी ।
उत्तरा वारुणी देवदाली चित्रा पुनर्नवा ॥ १०३ ॥

निर्गुण्डी सहदेवी च रुदन्ती गजकर्णिका ।
भूतावरातभल्लातकाकतुण्डामृतालताः ॥ १०४ ॥

पलाशः कुक्कुरूटश्च धात्रीफलरसः पयः ।
पलाशबीजकं तैलं घृतं मधु शिवाम्बु च ॥ १०५ ॥

बिल्वमज्जा च तैलं च तैलं ज्योतिष्मतीभवम् ।
एतानि क्रामणार्हाणि चौषधानि भवन्ति हि ॥१०६॥

एते चाष्टार्धगदिताः क्रामणार्थे प्रयोगतः ।
रसभस्मप्रयोगे च घुटिकानां रसायने ॥ १०७ ॥

पञ्चदशघुटिकाफलम् ॥

प्रिये! पञ्चदशानां च घुटिकानां फलं शृणु ।
अभ्रबीजेन रचितघुटिका रससंयुता ॥ १०८ ॥

मुखस्थिता द्वादशाब्दं सर्वरोगविनाशनी ।
स जीवेद्वत्सरशतं पुमांश्च परमेश्वरि! ॥ १०९ ॥

कान्तबीजेन रचिता घुटिका रससंयुता ।
आस्यस्था सर्वरोगघ्नी द्वादशाब्दं वरानने! ॥ ११० ॥

धातुदार्ढ्यप्रजननी सहस्रायुष्यदायिनी ।
कान्ताभ्रबीजरचिता रसयुग्घुटिका शुभा ॥ १११ ॥

द्वादशाब्दं मुखान्तस्था जरामयविनाशिनी ।
अयुतायुष्यदा दिव्या महाबलविवर्धिनी ॥ ११२ ॥

हेमबीजयुता सूतघुटिका मुखमध्यगा ।
आद्वादशाब्दं देहस्य वलीपलितरोगहा ॥ ११३ ॥

लक्षायुष्यप्रदा पुण्या नागायुतबलप्रदा ।
हेमाभ्रबीजघटिता घुटिका युक्तपारदा ॥ ११४ ॥

वक्त्रस्थिताऽर्कसंख्याब्दं दशलक्षाब्दजीवदा ।
दिव्यबुद्धिप्रजननी दिव्यसत्वप्रदायिनी ॥ ११५ ॥

कान्तकाञ्चनबीजाभ्यां ससूता घुटिका कृता ।
द्वादशाब्दं मुखान्तस्था कोट्यायुंष्यविवर्धिनी ॥

महातेजःप्रजननी बिलनिध्यादिदर्शिनी ।
कान्ताभ्रहेमघटिता घुटिका रससंयुता ॥ ११७ ॥

मुखस्था द्वादशाब्दान्ताद्दशकोट्यब्दजीवदा ।
हालाहलादिसंवर्तखेचरत्वप्रदायिनी ॥ ११८ ॥

निर्मुक्तवज्रबीजेन रसयुग्घुटिका शुभा ।
मुखस्था द्वादशाब्दान्तं सर्वलोकगतिप्रदा ॥ ११९ ॥

यावद्भूमिः स्थिरतरा तावदायुःप्रवर्धिनी ।
तरुणस्सर्वदा कामः कान्तानां सुरतक्षमः ॥ १२० ॥

वज्राभ्रबीजरचिता घुटिका रसगर्भिता ।
घुटिका रससंख्याब्दं मुखस्था सर्वसिद्धिदा ॥ १२१ ॥

ब्रह्मायुष्यप्रदा पुंसां जगत्स्रष्टुं क्रमात्प्रभुः ।
पूज्यते ब्रह्मवद्देवैर्वेदवेदाङ्गपारगः ॥ १२२ ॥

सरस्वत्या च सावित्र्या सेव्यते सर्वलोकगः ।
अष्टाभिस्सिद्धिभिर्युक्तो ह्यणिमादिभिरीश्वरि ! ॥ १२३ ॥

वज्रकाञ्चनबीजेन ससूता घुटिका कृता ।
मुखस्था द्वादशाब्दान्तं विष्ण्वायुष्यप्रदा नृणाम् ॥

स च विष्णुत्वमाप्नोति विष्णुवत्पालितुं क्षमः ।
सेव्यते सनकाद्यैश्च श्रिया युक्तो महाबलः ॥ १२५ ॥

स्वेच्छागतिर्महेन्द्राद्यैर्निर्जरैस्सेव्यते सदा ।
हेमाभ्रवज्रबीजेन रचिता घुटिका प्रिये ! ॥ १२६ ॥

सपारदा मुखान्तस्स्था द्वादशाब्दं वरानने ! ।
रुद्रायुष्यप्रदा नृणां रुद्रत्वं सा ददाति हि ॥ १२७ ॥

संहर्ता रुद्रवल्लोकं विष्णिवन्द्राद्यैश्च सेव्यते ।
अणिमाद्यैश्च सहितस्सर्वज्ञस्सर्वलोकगः ॥ १२८ ॥

सेव्यते प्रमथश्रेष्ठैर्दिव्यशक्त्या समन्वितः ।
योगीन्द्रैर्ध्यायते धीरो महातेजा महाबलः ॥ १२९ ॥

कान्तकाञ्चनवज्राणां बीजैस्सूतयुता कृता ।
घुटिका भानुसंख्याब्दं मुखस्था सिद्धिदा नृणाम् ॥

ईश्वरायुष्यमाप्नोति खेचरत्वं च मानवः ।
तिरोधत्ते स्वयं लोकाद्ब्रह्मेन्द्राद्यभिवन्दितः ॥ १३१ ॥

कोटिसूर्यप्रतीकाशो महामारुतसत्त्ववान् ।
महाकल्पान्तकालेऽपि विनाशं न व्रजेद्ध्रुवम् ॥ १३२ ॥

योगक्रीडाऽनुषक्तात्मा ध्यायते योगवित्तमैः ।
कान्ताभ्रहेमवज्राणां कृता बीजै रसात्मिका ॥ १३३ ॥

घुटिका रविसंख्याब्दवक्त्रस्था यस्य भैरवि ! ।
सदाशिवायुस्स भवेत्सर्वानुग्राहकः प्रभुः ॥ १३४ ॥

सदाशिवत्वमाप्नोति देवानामधिपस्तथा ।
वह्नौ वह्निर्जले वारि मारुते मारुतात्मकः ॥ १३५ ॥

पृथिव्यां पृथिवीरूपः शून्ये शून्यात्मको भवेत् ।
तस्याक्षिणीन्दुवह्न्यर्का ब्रह्मेन्द्राद्याश्च सेवकाः ॥१३६॥

गायका नारदाद्याश्च नर्तक्यश्चाप्सरोऽङ्गनाः ।
तदाज्ञयैव ब्रह्मेन्द्रास्सृष्टिस्थितिविनाशकाः ॥ १३७ ॥

सच्चिदानन्दकश्शक्तस्सर्वगस्सर्वविच्छिवः।
पराशक्तियुतः पुण्यो निर्मायो निष्कलः परम् ॥१३८॥

एवं गुणाः प्रकथिता घुटिकानां मया प्रिये!।
शस्त्रस्तम्भकरश्चासां सर्वासामपि विद्यते ॥ १३९ ॥

रसायनस्य सर्वस्य सिद्धिदोऽयं महेश्वरि!।

**घुटिकासिद्धौ मन्त्रप्रयोगः ॥**

वक्ष्यते मन्त्रराजोऽयं सर्वसिद्धिप्रदायकः ॥ १४० ॥

ऐं ह्रीं श्रीं क्लीं सौः अमृतेश्वरभैरव अमृतं कुरु अमृतेश्वरभैरवाय सौः क्लीं श्रीं ह्रीं ऐं हुं फट् स्वाहा। सौः क्लीं श्रीं ह्रीं ऐं।

पुमाननेन मन्त्रेण शीघ्रं सिद्धिमवाप्नुयात् ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ दशमोल्लासः ॥

# ॥ एकादश उल्लासः ॥

## जीवत एव दिव्यदेहसिद्धिः ॥

### भूतकालान्तकरसः ॥

श्रीभैरवी—

देवदेव महादेव! कथितानि त्वयाऽधुना ।
रसायनानि दिव्यानि सिद्धिदानि महेश्वर! ॥ १ ॥

चिरकालेन देहानां कल्पानां सिद्धिदानि हि ।
सद्यस्सिद्धिर्यथा देव! जायते परमेश्वर! ॥ २ ॥

तद्ब्रूहि न्यूनाभ्यधिकहीनक्षीणाङ्गिनामपि ।
अथ गद्गदमूकानां कुब्जानामथ कुष्ठिनाम् ॥ ३ ॥

अन्धपंग्वबलानां च जराजर्जरितात्मनाम् ।
सदा रोगार्तषण्डानां कृशानां भ्रान्तचेतसाम् ॥ ४ ॥

भूतप्रेतपिशाचापस्मारोन्मत्तयुजामपि ।
प्रमादाज्जीवशेषाणां देहसिद्धिप्रदं नृणाम् ॥ ५ ॥

श्रीभैरवः—

श्रुत्वा तद्भैरवी वाक्यं साधु पृष्टं त्वया प्रिये! ।
तथाविधां प्रवक्ष्यामि देहसिद्धिं वरानने! ॥ ६ ॥

पञ्चभूतात्मिकाः पञ्च कर्तव्या घुटिकाः प्रिये! ।
जीवात्मिका भवेत्षष्ठी घुटिका पिण्डकोष्ट्युक् (?) ॥

ऋतुकाले तु या कन्या कुर्यात्संभोगमायतम् ।
तद्वराङ्गस्थितं रक्तं शुक्लं स्याद्व्योमसत्वकम् ॥ ८ ॥

तस्यास्सद्यः प्रसूतस्य विष्ठा पुत्रस्य मारुतम् ।
तत्वं स्यात्केवलं तस्या रजस्तेजात्मसत्वकम् ॥ ९ ॥

तदपत्यस्य रुधिरं जलतत्वं प्रकीर्तितम् ।
तत्सूतस्य वपुस्सर्वं पार्थिवं तत्वमुच्यते ॥ १० ॥

सूतसेवकशुक्लं च जीवतत्वं भवेत्प्रिये ! ।
कोटिवेधकरं सूतं कर्षं कर्षं नियोजयेत् ॥ ११ ॥

एकैकतत्वमध्ये तु प्रत्येकं तानि मर्दयेत् ।
तेषां च गोलकान्कृत्वा षड्रसं स्थापयेत्पृथक् ॥ १२ ॥

नृमानमुन्नतं कायमायामं तु तदर्धकम् ।
कटाहं ताम्रघटितं पिण्डस्थौल्यं षडङ्गुलम् ॥ १३ ॥

चतुर्मुखमयं कोष्ठं तस्योपरि कटाहकम् ।
धारयेन्निश्चलं सम्यक्तदन्तः पूरयेत्प्रिये ! ॥ १४ ॥

गोघृतं च महातैलं समभागमिदं द्वयम् ।
अर्चयेद्दशदिक्पालान्योगिनीश्च कुमारिकाम् ॥ १५ ॥

श्रीगुरुं सिद्धचक्रं च भैरवं भैरवीं तथा ।
गणाधिपं क्षेत्रपालं निजेष्टदैवतं तथा ॥ १६ ॥

नवग्रहाग्निविप्रांश्च दैवज्ञान् भिषगुत्तमान् ।
तथाऽन्तरायकर्तॄंश्च भूतप्रेतपिशाचकान् ॥ १७ ॥

यक्षराक्षसगन्धर्वान्मन्त्रज्ञान्स्वजनानपि ।
तर्पयेन्मद्यमांसैश्च वस्त्रभूषणकाञ्चनैः ॥ १८ ॥

तत्तत्प्रियकरैर्दिव्यैर्बलिं दिक्षु विनिक्षिपेत् ।
चतुर्भिर्वङ्कनालैश्च धमयेत्खदिराग्निना ॥ १९ ॥

फेनहीनमधूमञ्च सन्तप्तं च यदा भवेत् ।
श्रीगुरुं निजदेवं च चन्द्रसूर्याग्नितारकाः ॥ २० ॥

भुवनानि नमस्कृत्य कटाहे निक्षिपेत्तनुम् ।
ज्ञात्वा सम्यग्द्रुतं देहं पार्थिवाख्यं रसं क्षिपेत् ॥ २१ ॥

धमेद्गाढं प्रयत्नेन तत्कल्कं च यदा भवेत् ।
ततोऽप्तत्वाख्यरसकं निक्षिपेद्रक्ततां नयेत् ॥ २२ ॥

तेजस्तत्वरसं पश्चात्क्षिपेत्तन्मांसतां व्रजेत् ।
निक्षिपेद्वायुतत्वाख्यं रसं तत्र विनिक्षिपेत् ॥ २३ ॥

शुभ्रवर्णत्वमाप्नोति ततश्चाकाशतत्वकम् ।
निक्षिपेज्जीवतत्वाख्यं रसतत्त्वं च पार्वति ! ॥ २४ ॥

रसं क्षिपेत्त्वन्धिूतस्य स्वर्णस्य तत्समं भवेत् ।
सजीवो जायते सिद्धो हुंकारत्रयमुच्चरेत् ॥ २५ ॥

यथोदितो भानुबिम्बो महाबुद्धिपराक्रमः ।
महावपुर्महातेजा नागायुतमहाबलः ॥ २६ ॥

मन्मथोपमरूपाढ्यो वाचा वागीश्वरीसमः ।
बुद्ध्या जीवसमश्श्रीमान्विष्णुवद्धनदोपमः ॥ २७ ॥

त्यागे रोषे च कालाग्निर्गाम्भीर्येण महोदधिः ।
स्रष्टा हर्ता च गोप्ता च सर्वानुग्राहकः प्रभुः ॥ २८ ॥

दिव्यदृष्टिर्वज्रदेहः स साक्षाद्भैरवस्स्वयम् ।
अर्धयोजनविस्तीर्णहेमकिंकिणिमण्डितम् ॥ २९ ॥

चलद्भ्रमरसंशोभं नानामाणिक्यमण्डितम् ।
हेममालापरिष्वक्तं घण्टानादमनोहरम् ॥ ३० ॥

दिव्यदीप्तमहानादिशङ्खकाहलसङ्कुलम् ।
वीणावेणुमृदङ्गाद्यैर्वादित्रैर्मुरजैस्समम् ॥ ३१ ॥

तालैर्बहुविधैश्चान्यैर्दिव्यघोषैस्समाकुलम् ।
गायत्किन्नरगन्धर्वैस्तथा किंपुरुषैर्युतम् ॥ ३२ ॥

लसन्माणिक्यकेयूरहारकङ्कणमुद्रकाः ।
काचनूपुरसंयुक्ता दिव्याभरणभूषिताः ॥ ३३ ॥

दिव्यमालापरिष्कारा दिव्यगन्धानुलेपनाः ।
दिव्याम्बराश्चारुरूपा मत्तमन्मथविह्वलाः ॥ ३४ ॥

दिव्याङ्गनास्तदा चैनं समाश्रित्य ब्रुवन्ति च ।
किं कर्म सिद्धसंखेदास्त्वादेशो देव ! दीयताम् ॥

उपासते सिद्धकन्याः परश्शतसहस्रकम् ।
यत्र यास्यति तत्रैव चानुयामो वयं वृताः ॥ ३६ ॥

दिव्यालयांश्च विविधान्हेममाणिक्यमण्डितान् ।
दिव्यानि स्नानपानानि स्वीकुर्वाणो मुहुर्मुहुः ॥ ३७ ॥

वज्र्याद्दिसर्वलोकेषु स्वेच्छया विहरत्यसौ ।
पूज्यते देवसिद्धौघैः यथाऽयं भैरवस्तथा ॥ ३८ ॥

भुञ्जानस्सर्वभोगांश्च क्षुत्पिपासाविवर्जितः ।
योगिनीशतसाहस्रं भोक्ता सञ्चिन्तयन्सुखम् ॥ ३९ ॥

महाकल्पान्तकालेऽपि प्रक्षीणेऽस्मिन्वरानने ! ।
लीयते परमे व्योम्नि लीयन्ते यत्र देवताः ॥ ४० ॥

भूतकालान्तको नाम रसस्यास्य प्रभावतः ।
अभेद्योऽयमखण्ड्यश्च त्वदाह्यो भवति प्रिये ! ॥ ४१ ॥

रसायनस्य सर्वस्य सिद्धिदोऽयं महेश्वरि ! ।
वक्ष्यते मन्त्रराजोऽयं रससिद्धिप्रदायकः ॥ ४२ ॥

ऐं ह्रीं श्रीं क्लीं सौः श्रीभैरव ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ एकादशोल्लासः ॥



# ॥ द्वादश उल्लासः ॥

श्रीशैले सिद्धिलाभः ॥

श्रीभैरवी—

श्रीशैले विविधा सिद्धिस्सद्यः प्रत्ययकारिणी ।
सुलभा श्रूयते देव ! तां ब्रूहि विविधां प्रभो ! ॥ १ ॥

श्रीभैरवः—

वक्ष्यामि शृणु तत्सर्वं सद्यस्सिद्धिकरं प्रिये ! ।
कैलासान्मन्दरान्मेरोर्विन्ध्याद्रेश्च हिमालयात् ॥ २ ॥

महेन्द्रान्मलयाद्रेश्च सह्याद्दश्यगिरेरपि ।
श्रेष्ठश्श्रीपर्वतो दिव्यो सिद्धियोगीन्द्रसेवितः ॥ ३ ॥

तत्र तीर्थानि सर्वाणि सरांसि सरितः प्रिये ! ।
सिद्धिप्रदानि लिङ्गानि लतापाषाणपादपाः ॥ ४ ॥

मृत्तिकाकन्दतोयानि पत्रपुष्पफलानि च ।
एवमादीनि विद्यन्ते सर्वसिद्धिकराणि च ॥ ५ ॥

श्रीपर्वतोऽहमीशानि ! त्वहं साक्षात्स पर्वतः ।
स्थावरं मामकं रूपं विद्धि तं सुरसेवितम् ॥ ६ ॥

अस्मिन्यदस्ति नान्यत्र यदन्यत्र स्थितं च तत् ।
दिव्यलिङ्गस्पर्शनीयं ज्योतिर्लिङ्गमनामयम् ॥ ७ ॥

श्रीमल्लिकार्जुनमिति प्रख्यातं परमेश्वरि ! ।
वामपार्श्वेऽस्य लिङ्गस्य घण्टासिद्धेश्वरस्स्थितः ॥ ८ ॥

घण्टा विलम्बते द्वारे तीर्थकुण्डं च विद्यते ।
उपोषितैस्त्रिभिः कार्यं जागरूकैरतन्द्रितैः ॥ ९ ॥

निशि कृष्णचतुर्दश्यामजस्रं स्नापयेच्छिवम्।
एकस्समानयेत्तोयं कुण्डस्थमपरः प्रिये! ॥ १० ॥

घण्टां निनादयेदन्यश्चतुर्यामावधि प्रिये!।
घण्टासिद्धेश्वरस्तुष्टो दद्यात्तेभ्योऽपि खे गतिम् ॥ ११ ॥

घण्टासिद्धेश्वरस्यास्य दक्षिणे निखनेत्प्रिये!।
जानुदघ्नं तु तत्रैव दृश्यते रोचनप्रभा ॥ १२ ॥

मृत्तिका तां समाहृत्य कर्षमात्रं पिबेत्प्रिये!।
क्षीरयुक्तां च सप्ताहं स साक्षादमरो भवेत् ॥ १३ ॥

श्रीगिरीशस्य पुरतो गजाकारा महाशिला।
स्रवत्येव दिवारात्रं दिव्यगन्धं सुगुग्गुलुम् ॥ १४ ॥

तं गृह्णीयात्पलाशस्य दर्व्याऽलाबुकपात्रके।
प्रक्षिपेद्गन्धकयुतं भक्षयेत्कर्षमात्रकम् ॥ १५ ॥

प्रत्यहं मासपर्यन्तं ततस्सिद्धिमवाप्नुयात्।
सदानन्दो युवा धीरो जीवेदाचन्द्रतारकम् ॥ १६ ॥

विद्रुते म्लेच्छवदने गुग्गुलुं तं विनिक्षिपेत्।
कोटिमंशं ततस्ताम्रं दिव्यं भवति काञ्चनम् ॥ १७ ॥

मल्लिकार्जुनदेवस्य चन्द्रवाप्यस्ति पश्चिमे।
वैशाखपूर्णिमायां तु साधयेत्साधकोत्तमः ॥ १८ ॥

निर्भयो निर्विकल्पश्च वसंस्तोयसमीपतः।
जपेन्मृत्युञ्जयं मन्त्रं रात्रौ वासोविवर्जितः ॥ १९ ॥

निशीथे चन्द्रसलिलं चन्द्रस्पृष्टं भवेद्यदा।
तत्तीर्थच्छिद्रदेशे च स्वाञ्जलिं प्रक्षिपेदतः ॥ २० ॥

स्पृष्ट्वा चन्द्रो यदा गच्छेत्तदा तत्तोयमाहरेत्।
पिबेच्च सहसा धीरो जीवेदाचन्द्रतारकम् ॥ २१ ॥

—45.

वज्रकायस्सौम्यरूपश्शान्तात्मा स भवेन्नरः ।
पूर्वद्वारे श्रीगिरेस्तु विद्यते त्रिपुरान्तकः ॥ २२ ॥

देवस्य निकटे देशे चोत्तरे तिन्त्रिणीतरुः ।
दृश्यते तत्र मूले तु स्वयं श्रीभैरवः प्रभुः ॥ २३ ॥

नृमालां निखनेद्भूमिं तदग्रे दृश्यते तदा ।
तप्तकुण्डं नीलजलं दिव्यसिद्धिप्रदायकम् ॥ २४ ॥

तत्तिन्त्रिणीकपत्राणि वस्त्रे बद्ध्वा विनिक्षिपेत् ।
कुण्डे तस्मिंस्तदा तानि स्थूलमीना भवन्ति च ॥२५॥

गृहीत्वा तिन्त्रिणीकाष्ठैः पचेदेवं क्रमात्सुधीः ।
तेषां शिरःकण्टकानि पुच्छानि च विवर्जयेत् ॥ २६ ॥

भक्षयेच्छेषमखिलं साधकस्सिद्धिकांक्षया ।
क्षणमात्रं भवेन्मूर्च्छा तेन पश्चाद्विबुध्यते ॥ २७ ॥

वसुधायां बिलं पश्येज्जीवेद्दिव्यायुताब्दकम् ।
पश्चिमे त्रिपुरान्तस्य गव्यूतिद्वयमात्रके ॥ २८ ॥

मणिपल्लिरिति ग्रामस्तस्य पश्चिमभागतः ।
विद्यते कश्चन गिरिस्तत्पश्चादेकवाटकम् ॥ २९ ॥

दृश्यते प्रविशेत्तत्र पूर्वास्यश्च ततो व्रजेत् ।
दक्षिणाभिमुखः पश्चाद्दशचापान्तमात्रकम् ॥ ३० ॥

तत्र चाम्रफलाकारान्पाषाणाञ्ज्वलनप्रभान् ।
गृहीत्वा बन्धयेद्वस्त्रे तद्वस्त्रं रक्ततां व्रजेत् ॥ ३१ ॥

पाषाणयुक्तं तद्वस्त्रं क्षीरमध्ये विनिक्षिपेत् ।
ततः क्षीरं रक्तवर्णं स्यात्पिबेत्साधकोत्तमः ॥ ३२ ॥

सप्ताहाज्जायते सिद्धिर्वज्रकायो महाबलः ।
जीवेदाचन्द्रतारं च आकल्पमविकल्पकम् ॥ ३३ ॥

त्रिपुरान्तस्योदग्भागे कोकिलाबिलमुत्तमम् ।
जगत्प्रकाशं तत्रास्ते कृत्वा देहविशोधनम् ॥ ३४ ॥

साधको वमनाद्यैश्च तद्बिलं प्रविशेत्सुधीः ।
दशचापावधिस्तत्र पाषाणाः कोकिलोपमाः ॥ ३५ ॥

सन्ति गृहीत्वा तत्पृष्ठे तिलाः क्षिप्तास्स्फुटन्ति च ।
इत्येतत्प्रत्ययं दृष्ट्वा तांश्च घृष्य परस्परम् ॥ ३६ ॥

दुग्धान्तः प्रक्षिपेत्तांश्च तत्क्षीरं कृष्णतां व्रजेत् ।
तत्क्षीरं मासमात्रं च पिबेद्दिव्यतनुर्भवेत् ॥ ३७ ॥

ब्रह्मणस्त्रिदिनं जीवेद्वलीपलितवर्जितः ।
वेगे समीरसदृशश्छिद्रं पश्यति भूतले ॥ ३८ ॥

त्रिपुरान्तस्य पूर्वस्यां दिशि योजनमात्रके ।
अस्ति स्वर्गपुरीनाथो देवस्तस्याग्रतः खनेत् ॥ ३९ ॥

जानुमात्रं च वसुधां तत्र सर्पफणोपमाः ।
स्पर्शसंज्ञास्तु पाषाणा निर्गच्छन्ति वरानने ! ॥ ४० ॥

त्रिपुरान्तकदेवस्य पश्चिमेऽर्धार्धयोजने ।
अस्ति दिव्यबिलद्वारं तत्र चापत्रयान्तरम् ॥ ४१ ॥

व्रजेत्खर्जूरवृक्षोऽस्ति कृष्णवर्णः फलान्वितः ।
तत्फलानां रसं पीत्वा तेन मूर्च्छा भवेत्क्षणम् ॥ ४२ ॥

प्रबुद्धोऽसौ भवेत्सिद्धो जीवेदाचन्द्रभास्करम् ।
श्रीगिरेर्दक्षिणद्वारे वज्रेश्वरसुरेश्वरौ ॥ ४३ ॥

तिष्ठतो निखनेद्भूमिं तत्र श्रीफलसन्निभाः ।
पाषाणास्स्पर्शभेदास्स्युस्संग्राह्यास्ते सुरेश्वरि ! ॥ ४४ ॥

तत्र रामेश्वराख्योऽस्ति निखनेत्तस्य सन्निधौ ।
रुद्राक्षाकारपाषाणास्स्पर्शभेदा भवन्ति ते ॥ ४५ ॥

ज्योतिस्सिद्धवटस्थाने दक्षिणे चैकपादपः ।
तिष्ठत्यावर्तको नाम तदासन्ने तु पश्चिमे ॥ ४६ ॥

पर्वतो विद्यते तत्र खनेत्तालफलोपमाः ।
पाषाणास्तान्धमेद्गाढं तत्सर्वं काञ्चनं भवेत् ॥ ४७ ॥

तस्यैव दक्षिणे द्वारे विद्यते कुण्डलेश्वरः ।
तन्निकृष्टे जानुमात्रं खनेद्भूमिं समुद्धरेत् ॥ ४८ ॥

रक्ताभाः श्रीफलाकाराः पाषाणास्स्पर्शवेधकाः ।
पुरुषेश्वरदेवस्य समीपे कुण्डमस्ति हि ॥ ४९ ॥

गुञ्जारिड्ढौ च विद्येते वृक्षौ तत्फलमश्नियात् ।
सप्ताहाज्जायते सिद्धो जरामरणवर्जितः ॥ ५० ॥

तत्र हस्तिशिला दक्षे खनेद्धस्तप्रमाणतः ।
तत्र जंबूफलाकारा ग्राह्यास्ते स्पर्शसंज्ञकाः ॥ ५१ ॥

ख्याता हस्तिशिरोनाम्ना ख्याता हस्तिशिलेति सा ।
एकयोजनमात्रे तु तस्या दक्षिणभागतः ॥ ५२ ॥

शिवरूपं शिवप्रोक्तं छायाच्छत्रं तु विद्यते ।
वर्तुलं शतहस्तं तु छिद्रं तस्याप्यधो व्रजेत् ॥ ५३ ॥

न कैश्चिद्दृश्यते सोऽपि सिद्धो भवति तत्क्षणात् ।
यदृच्छया रुद्रतुल्यः क्रीडत्येव जगत्त्रये ॥ ५४ ॥

सिद्धयष्टकं साधयेद्वा सर्वसिद्धिप्रदायकः ।
कान्ताभ्रसत्वकनकसूताः क्रमगुणोत्तराः ॥ ५५ ॥

अम्लेन मर्दयेद्गाढं गोलं कृत्वा तु वेष्टयेत् ।
तद्गोलं दीर्घवंशाग्रे बद्ध्वा श्रीकालिकामनुम् ॥ ५६ ॥

जपेन्निवेशयेत्तत्र छायाच्छत्रेण तेन च ।
वंशाग्रबद्धगोलान्तर्जायते घुटिका शुभा ॥ ५७ ॥

चक्रान्तर्धारयेत्तां तु तत्क्षणात्खेचरो भवेत् ।
शिलां तालं वस्त्रबद्धं कृत्वा वंशाग्रवेष्टितम् ॥ ५८ ॥

छायाच्छत्रे निवस्यैतत्ताभ्यां नेत्रे समञ्जयेत् ।
निधिं पश्यति भूमिस्थं नात्र कार्या विचारणा ॥ ५९ ॥

वंशाग्रबद्धखड्गं च छायाच्छत्रे विनिक्षिपेत् ।
मन्त्रयेत्कालिकामन्त्रं तं खड्गं धारयेत्करे ॥ ६० ॥

त्रैलोक्यविजयी धीरो भवेद्वीरो जगत्त्रये ।
वंशाग्रे रोचनं बद्ध्वा छायाच्छत्रे निवेशयेत् ॥ ६१ ॥

ललाटे तिलकं तेन कृत्वा लोकं वशं नयेत् ।
स्रोतोऽञ्जनाञ्जने तद्वच्छायाच्छत्रे निवेशयेत् ॥ ६२ ॥

तेनाञ्जनेनाञ्जितोऽसौ देवैरपि न दृश्यते ।
पादुके पूर्ववद्बद्ध्वा छायाच्छत्रे निधापयेत् ॥ ६३ ॥

पादाभ्यां पादुके धृत्वा यत्र यत्राभिवाञ्छति ।
प्रयातुं तत्र तत्रैव नयतस्तं च पादुके ॥ ६४ ॥

पूर्ववद्रक्तवस्त्रं च छायाच्छत्रे निवेशयेत् ।
आवेष्टयेत्तं च पटमदृश्यो भवति क्षणात् ॥ ६५ ॥

समुज्झिते पटे पश्चाद्दृश्यतेऽसौ न संशयः ।
कान्तं व्योम हेम सूतमेकीकृत्य विमर्दयेत् ॥ ६६ ॥

गोलीभूतं तु वस्त्रेण वंशाग्रे बन्धयेत्सुधीः ।
छायाच्छत्रे स्थापयेत्तत्कालीमन्त्रेण मन्त्रयेत् ॥ ६७ ॥

स्पर्शवेधी भवेदेतत्सत्यं सत्यं वरानने ! ।
श्रीशैलपश्चिमद्वारे देवो ब्रह्मेश्वरस्स्थितः ॥ ६८ ॥

दुर्गा देवी च तत्रस्था सोपानं नवमं च यत् ।
तुङ्गभद्रायां च नद्यां ततो ब्रह्मेश्वरस्य च ॥ ६९ ॥

द्वारदेशे मुद्गवर्णं चत्वारस्स्पर्शका अमी ।
चिञ्चावनं च नैर्ऋत्ये स्थितं ब्रह्मेश्वरस्य हि ॥ ७० ॥

कुण्डं च विद्यते तत्र चिञ्चाधश्चण्डिका स्थिता ।
एकपादेन सततं तच्चिञ्चापत्रमाहरेत् ॥ ७१ ॥

वस्त्रेण बन्धयेत्कुण्डे क्षिप्त्वा स्नानं समाचरेत् ।
स्नानान्ते तानि गृह्णीयात्तावन्मत्स्या भवन्ति हि ॥७२॥

तदिन्धनैः पचेत्तांश्च ह्यस्थिपुच्छशिरस्त्यजेत् ।
दद्याद्देवायैकमंशमतिथीनां द्वितीयकम् ॥ ७३ ॥

तृतीयांशं स्वयं भक्षेन्मूर्च्छितो भवति क्षणात् ।
दिव्यो भवति सिद्धोऽयं बिलं पश्यति भूतले ॥ ७४ ॥

जरामरणनिर्मुक्तो ह्यवध्यो निर्जरैरपि ।
अलंपुरोत्तरे ग्रामो विद्यते भीमपादुकः ॥ ७५ ॥

पार्श्वे तु तस्य ग्रामस्य हस्तमात्रं धरां खनेत् ।
पाषाणा हि फणाकारास्स्पर्शसंज्ञा भवन्ति ते ॥ ७६ ॥

योगीश्वरीति देव्यस्ति तत्रालंपुरदेवता ।
तस्याग्रतो रम्यगुहा तस्या मध्ये खनेद्भुवम् ॥ ७७ ॥

पाषाणा मेद(क)सङ्काशा ग्राह्या मार्जालविष्ठया ।
संमिश्र्य निक्षिपेद्वङ्गे द्रुते तत्तारतां व्रजेत् ॥ ७८ ॥

मध्वाज्याभ्यां पिबेत्तांश्च पाषाणान्साधकोत्तमः ।
दिव्यो भवति सिद्धोऽयं वलीपलितमृत्युजित् ॥ ७९ ॥

श्रीपर्वतोत्तरद्वारे देवो नाम्ना महेश्वरः ।
तिष्ठति भ्रमराश्च तत्र तत्फलमाहरेत् ॥ ८० ॥

स्फोटयेच्च तदन्तस्था निर्यान्ति भ्रमरास्तथा ।
सजीवा अथ तान्सर्वान्भ्रमरांस्तान्विवर्जयेत् ॥ ८१ ॥

तत्फलानि पचेत्क्षीरे यावच्छक्यं पयः पिबेत् ।
क्षणं मूर्च्छा भवेत्तेन मूर्च्छान्ते च पयः पिबेत् ॥८२॥

एवं कुर्यात्प्रयत्नेन चैकविंशतिवासरम् ।
तेन वज्रशरीरस्स्याद्वलीपलितवर्जितः ॥ ८३ ॥

वेदवेदाङ्गतत्वज्ञो जीवेदादित्यतारकम् ।
तरसा वायुना तुल्यस्तत्क्षणाद्भवति प्रिये ! ॥ ८४ ॥

तदाम्रस्य फलेनैव त्यक्तभ्रमरकेन च ।
वङ्गस्य पलसाहस्रं द्रावितं रजतं भवेत् ॥ ८५ ॥

रन्ध्रमापादयेदाम्रफले भृङ्गं विवर्जयेत् ।
तन्मध्ये निक्षिपेत्सूतं कर्षं कृष्णाभ्रसत्वकम् ॥ ८६ ॥

निरुद्ध्य वक्त्रं समृदा गोमयेन च लेपयेत् ।
छायायां शोषयेत्काष्ठैस्तदीयैः प्रहरं पचेत् ॥ ८७ ॥

स्वभावशीतलं कृत्वा वक्त्रस्थां कारयेत्सुधीः ।
खेचरत्वमवाप्नोति वलीपलितवर्जितः ॥ ८८ ॥

जीवेच्चन्द्रार्कपर्यन्तं वाग्मित्वं ब्रह्मणा समम् ।
सूतं कृष्णाभ्रसत्वं चाम्रफले पूर्ववत्क्षिपेत् ॥ ८९ ॥

प्रलिप्य गोशकृन्मृद्भ्यां पुटेदारण्यकोपलैः ।
स्वशीतं पारदं ग्राह्यं मधुसर्पिर्युतं लिहेत् ॥ ९० ॥

गुञ्जामात्रं च मासान्तं बालो भवति मानवः ।
नवनागोपमस्सत्वे जीवेद्ब्रह्मैकवासरम् ॥ ९१ ॥

उत्तरे श्रीगिरीशस्य विद्यते शुक्लपर्वते ।
पञ्चोपचारैस्संपूज्य त्रिषु लोकेषु विश्रुतः ॥ ९२ ॥

ॐ हुं फट्कारमन्त्रेण निर्विकल्पेन साधकः ।
पश्येत्पश्चिमदिग्भागमन्तरिक्षे विमानकम् ॥ ९३ ॥

दिव्यं ह्यनेकरुचिरं सद्यः प्रत्ययकारकम् ।
ततः पश्चिमदिग्भागे व्रजेत्तीर्त्वा महानदीम् ॥ ९४ ॥

दृश्यते च गुहा तत्र प्रविशेत्पश्चिमाननः ।
त्रियोजनं व्रजेत्तत्र विभीरेकोऽविकल्पकः ॥ ९५ ॥

कदलीकाननं तत्र दृश्यते पञ्चयोजनम् ।
अच्छोदपूर्णा सरसी तन्मध्ये भद्रपीठकम् ॥ ९६ ॥

तत्पीठं तु महद्दिव्यं पश्येत्स्फटिकसन्निभम् ।
उच्चारयेन्मन्त्रमिमं दण्डवत्प्रणतिं भजेत् ॥ ९७ ॥

"ॐ ह्रीं विद्यावागीश्वराधिपतये ह्रीं ॐ स्वाहा"

तत्र स्नात्वा जपेन्मन्त्रं लक्षमेकं वरानने ! ।
कन्दमूलाशनो भूत्वा यथेष्टं साधकः प्रिये ! ॥ ९८ ॥

सिंहासनान्तरे देवं पश्येत्स्फटिकसन्निभम् ।
चतुर्भुजं त्रिणेत्रं च विशदेन्दुकलाधरम् ॥ ९९ ॥

नीलग्रीवं नागभूषं परश्वथमृगायुधम् ।
वराभयं वरेण्यं तं विशिष्टविबुधार्चितम् ॥ १०० ॥

नमस्कुर्याच्च साष्टाङ्गं मन्त्रैस्स्तोत्रैर्मुहुर्मुहुः ।
ततः प्रसन्नस्स शिवो वरं दत्ते यथेप्सितम् ॥ १०१ ॥

शतमायतनं तत्र कूपं नवशतं यथा ।
आरामाश्चापि तावन्ति नन्दनानि वनानि च ॥१०२॥

वाप्यो नवशतं सन्ति विवरं चैव तत्समम् ।
कल्पवृक्षाश्च तावन्ति एते सर्वेऽपि सिद्धिदाः ॥१०३॥

तत्रास्ते मोहली नाम्ना प्रथिता यक्षिणीष्टदा ।
ब्रूते सा देहि मे भुक्तिं सिद्धिं त्वं यदि वाञ्छसि ॥

देवि ! दास्याम्यहं भुक्तिं वक्तव्यमिह चामुना ।
कन्दमूलं फलं तस्यै पायसं वा समर्पयेत् ॥ १०५ ॥

सा यक्षिणी पुनर्वक्ति यावद्भुञ्जे सुतं मम ।
धारयेर्वक्षसा तावद्वरं दास्यामि ते महत् ॥ १०६ ॥

विसृजेस्त्वं यदि तदा भवन्तं हन्मि निर्दया ।
एवं गतभयो वीरः कुर्याच्चेत्सिद्धिभाग्भवेत् ॥ १०७ ॥

व्रजेदुदीचीदिग्भागे तत्सरो योजनार्धके ।
तत्रास्ते नन्दनं दिव्यं पुष्पपूर्णं महेश्वरि ! ॥ १०८ ॥

तत्पुष्पाघ्राणमात्रेण क्षुत्पिपासा न बाधते ।
भक्षयेदथवा तस्य फलमेकं यथोचितम् ॥ १०९ ॥

वज्रकायो भवेत्तस्य भक्षणादेव मानवः ।
सरोदक्षिणदिग्भागे गच्छेद्योजनपादकम् ॥ ११० ॥

नन्दनं दृश्यते तत्र दाडिमीवृक्षसङ्कुलम् ।
तत्फलं भक्षयेद्यस्तु जीवेद्युगसहस्रकम् ॥ १११ ॥

तस्यैव सरसः पूर्वभागे क्रोशार्धमात्रकम् ।
गच्छेद्धात्रीफलैर्युक्तं विद्यते नन्दनं वनम् ॥ ११२ ॥

अश्नीयात्तत्फलं धीरो जीवेत्संवर्तकत्रयम् ।
सरसस्तस्य भागे च पश्चिमे योजनं व्रजेत् ॥ ११३ ॥

तत्र श्रीफलसम्पूर्णं नन्दनं विद्यते वनम् ।
अद्यते तत्फलं येन जीवत्याचन्द्रतारकम् ॥ ११४ ॥

तत्रैव नन्दनवने लिङ्गं स्यान्नीलवर्णकम् ।
तस्योद्‌द्वारमार्गेण विशेत्रागो महाबलः ॥ ११५ ॥

तत्र सप्तफणोपेतस्तूग्रभीतिकरो महान् ।
एवंविधं महानागं हुंहुंकारं वदन्मुहुः ॥ ११६ ॥

नमस्कुर्यात्प्रयत्नेन साधकस्सिद्धिकांक्षया ।
वदत्येवं महानागस्त्वदृश्यत्वं ददामि ते ॥ ११७ ॥

याहि त्वं पश्चिमद्वारं दिव्या कन्याऽस्ति तत्र वै ।
समुच्चरन्महामन्त्रं व्रजेत्तत्रैव साधकः ॥ ११८ ॥

ददाति हारं सा कन्या प्रवेशं न ददाति च ।
हारं गले धारयेत्तं तेन सारस्वतं भवेत् ॥ ११९ ॥

तस्माद्दक्षिणदिग्द्वारे व्रजेद्भीतिकरं परम् ।
तत्र पश्येन्मुक्तकेशं जिह्मनेत्रं दिगम्बरम् ॥ १२० ॥

गदाहस्तं नीलवर्णं दृष्ट्वा श्रीक्षेत्रपालकम् ।
वन्देत मन्त्रमुच्चार्य स्तोत्रैर्विघ्ननिवारणम् ॥ १२१ ॥

हाहाहेहेहुंहुंकारं फट् हुं स्वाहान्तमेव च ।
क्षेत्रपालोऽप्यनेनैव मन्त्रेणाशु प्रसीदति ॥ १२२ ॥

खगत्वं वितरत्येष प्रवेशं न ददाति हि ।
अथ व्रजेत्पूर्वदिशो द्वारं तत्र गणाधिपम् ॥ १२३ ॥

स्थितं प्रपूजयेत्तत्र प्रविशेत्साधकोत्तमः ।
दृश्यते दिव्यलिङ्गं च चापस्तत्र मनोहरः ॥ १२४ ॥

ॐ हुङ्कारेण मन्त्रेण पूजयेच्च तमीश्वरम् ।
उपवासेन तत्रैव दिवारात्रं जपेत्सुधीः ॥ १२५ ॥

प्रत्यक्षो भवतीशानो ददाति हि वरं परम् ।
इत्येवमादयस्सन्ति सिद्धयः कदलीवने ॥ १२६ ॥

तत्रैव सरसः पूर्वभागे योजनमात्रके ।
अक्षरैर्लिखितं द्वारि तत्र पद्मावतीबिलम् ॥ १२७ ॥

वमनाद्यैर्विशुद्धात्मा प्रविशेत्तत्र साधकः ।
तत्र चापान्तरशतं गच्छेत्तत्र मृदङ्गकम् ॥ १२८ ॥

आलोक्य वादयेत्तं च तद्ध्वनिश्रवणात्तदा ।
पद्मावती स्वयं याति ह्यमृतं च ददाति च ॥ १२९ ॥

तस्य पानेन सिद्धोऽयममरत्वं लभेत च ।
ततस्सैनं समागम्य प्रार्थयेत्त्वं ममान्तिकम् ॥ १३० ॥

समागच्छालये दिव्ये कन्यापञ्चशताकुले ।
स्थित्वा मम पतिर्भूया ब्रह्मायुष्यावधि प्रभो! ॥१३१॥

तदन्ते शाश्वतं स्थानं गमिष्यसि न संशयः ।
तस्य पूर्वतटाकस्य चाग्नेय्यां दिशि विद्यते ॥ १३२ ॥

कदम्बेश्वरदेवोऽपि वृक्षः कादम्बकोऽग्रतः ।
तत्र पत्राणि चादाय कटुतैलेन लेपयेत् ॥ १३३ ॥

तद्बीजसंभवैस्तैलैर्लिपेद्वाऽथ पचेत्सुधीः ।
तत्काष्ठैस्तानि मत्स्यास्स्युस्ताम्रपात्रे विनिक्षिपेत् ॥१३४॥

वर्ज्यमस्थि शिरः पुच्छं क्षौद्रसर्पिर्युतं भजेत् ।
तत्सेवया भवेत्सिद्धो रुद्रतुल्यो महाबलः ॥ १३५ ॥

तद्वृक्षश्च नदीतीरे कुण्डलेशस्य सन्निधौ ।
विद्यते पूर्ववद्युक्त्या सिद्धिर्भवति नान्यथा ॥ १३६ ॥

अस्त्युत्तरे पुष्पगिरिः कपोतेशश्च विद्यते ।
त्रिः प्रदक्षिणमातन्यात्तस्य मूर्धानमाव्रजेत् ॥ १३७ ॥

खेचरत्वं भवेत्तस्य साधकस्य न संशयः ।
तस्य पूर्वोत्तरे भागे छेदिकीद्वारकं स्थितम् ॥ १३८ ॥

उदङ्मुखं विशेत्तत्र त्रिचापान्तरमादरात् ।
मूषिकाकारपाषाणं तक्रे पिष्ट्वा पिबेन्नरः ॥ १३९ ॥

क्षिप्रं मूर्च्छा भवेत्तस्य जीवेद्ब्रह्मदिनत्रयम् ।
वेधयेत्सर्वलोहानि स्पर्शमात्रान्न संशयः ॥ १४० ॥

उपोष्य च दिवा नक्तं देवाग्रे सिद्धिमाप्नुयात् ।
विद्यते देवतायुग्मं कपोतेश्वरदक्षिणे ॥ १४१ ॥

आनाभिमात्रं निखनेद्देवताद्वयमध्यतः ।
गोरोचनोपमास्तत्र पाषाणास्सन्ति तान्हरेत् ॥ १४२ ॥

पिष्ट्वा क्षौद्रघृताभ्यां च पिबेद्यस्सोऽमरो भवेत् ।
कपोतेशस्य वायव्ये निखनेद्धस्तमात्रकम् ॥ १४३ ॥

तत्र पारावताकारपाषाणास्स्पर्शसंज्ञकाः ।
देवताराधनं कृत्वा तेषामेकं समाहरेत् ॥ १४४ ॥

ऐशान्यां श्रीगिरीशस्य ह्यस्त्येव भृगुपातनम् ।
तत्समीपे दिव्यकुण्डं मृदं तस्मात्समाहरेत् ॥ १४५ ॥

गव्यपञ्चकयुक्तां तां धमेत्खदिरवह्निना ।
तस्माल्लोहं पतेन्नीलं मध्वाज्याभ्यां प्रतापितम् ॥१४६॥

तत्सेचयेत्सप्तधौते तद्गोलं निक्षिपेन्मुखे ।
विष्णुतुल्यो भवेत्सिद्धस्सर्वज्ञस्सर्वगस्सुखी ॥ १४७ ॥

भृगुपातनशैलाग्रात्क्रोशे दधिकवाटकम् ।
अच्छतैलगिरिर्नाम्ना तदग्रे विद्यते सदा ॥ १४८ ॥

बिलं तत्पश्चिमे ह्यस्ति तन्मध्ये चापपञ्चके ।
गते पश्येत्तत्र कुण्डं तत्र लाक्षासमं रसम् ॥ १४९ ॥

अलाबुपात्रे गृह्णीयात्ससूतः कोटिवेधकः ।
प्राकारश्चन्द्रगुप्तस्य श्रीगिरीशस्य पश्चिमे ॥ १५० ॥

तन्मध्ये विद्यते वेश्म चैत्यं तत्पूर्वतस्स्थितम् ।
चैत्यात्पूर्वे शिला दिव्या मुद्राभा स्पर्शसंज्ञका ॥१५१॥

तत्रास्ते मोहनो दन्ती तमारुह्य समाहितः ।
पृष्ठात्तस्य तृणं ग्राह्यं तत्सर्वं काञ्चनं भवेत् ॥ १५२ ॥

तद्गजस्योत्तरे पार्श्वे जानुदघ्नां खनेद्धराम् ।
जम्बूफलाभाः पाषाणास्स्पर्शसंज्ञा भवन्ति ते ॥ १५३ ॥

क्षितिं खनेद्गजस्याधो जानुमात्रं लभेत्ततः ।
लक्षवेधकरा सिद्धा त्रिकोणे घुटिका परा ॥ १५४ ॥

मल्लिनाथस्य वायव्ये नाम्ना देवह्रदः परः ।
तीर्थं तत्रास्ति पाषाणा मुद्गाभास्स्पर्शसंज्ञकाः ॥१५५॥

लिङ्गं कूर्मोपमं तत्र स्पर्शसंज्ञं शुभं प्रिये ! ।
पूर्णिमायां कृत्तिकायां पूजयित्वा समाहरेत् ॥ १५६ ॥

तस्माद्गव्यूतियुगलात्स्मृता नीलवनी परा ।
तस्या लिङ्गं च सलिलं नीलवर्णं प्रशस्यते ॥ १५७ ॥

अश्वाम्रकाकसङ्काशाः पाषाणास्स्पर्शवेधकाः ।
देवालयान्तर्निखनेज्जानुमात्रान्तराद्धराम् ॥ १५८ ॥

मूषिकाकारपाषाणास्स्पर्शसंज्ञा भवन्ति ते ।
श्रीगिरीशस्य नैर्ऋत्यां ख्याता गुण्डीप्रभाख्यया ॥१५९॥

तस्याग्रगर्ते पीताभां मृत्तिकां च पुटे दहेत् ।
तस्यान्निस्सरति स्वर्णं शुद्धदेवार्हकं परम् ॥ १६० ॥

तत्रास्ते भृङ्गचूतोऽपि पूर्ववत्सिद्धिदायकः ।
तथा तंबीपुरे चास्ति तीर्थे च विपुले शुभम् ॥१६१॥

सदाफलं तु विख्यातं तस्याः पूर्वोत्तरे सुधीः ।
श्रीगिरेर्नैर्ऋते भागे महानन्देति विश्रुतः ॥ १६२ ॥

व्रजेद्घण्टापथेनैव तस्य पूर्वोत्तरे सुधीः ।
तत्रास्ते कालकण्ठेशो नाम्नाऽग्रे तस्य कुण्डकम् ॥१६३॥

तत्रेन्द्रगोपसङ्काशं सिद्धिस्सूतस्य विद्यते ।
भवन्ति सप्त लोहानि स्वर्णं तप्तानि सेकतः ॥ १६४ ॥

ऐशान्ये श्रीगिरीशस्य चास्ति श्रीमालिनीश्वरः ।
तस्योत्तरदिशि ख्यातस्तूमापर्वतसंज्ञकः ॥ १६५ ॥

तस्याग्रे च त्रिशूलाभास्सन्ति दर्भाश्शुभङ्कराः ।
तदधो निखनेन्नाभिमात्रं नीलां मृदं हरेत् ॥ १६६ ॥

अक्षकाष्ठैः पचेत्तां च देवातिथ्यग्नये क्रमात् ।
एकैकभागं कल्पेत चतुर्थांशं स्वयं भजेत् ॥ १६७ ॥

जीवेत्कल्पायुतं सिद्धो महाबलपराक्रमः ।
इलेश्वरस्य निकटे तत्र कोटीश्वरः स्थितः ॥ १६८ ॥

पुष्पं पत्रं तदग्रेऽस्ति स्पर्शवेधकरं भवेत् ।
तत्राचलेश्वरो देवस्स्पर्शवेधकरः परः ॥ १६९ ॥

तस्य योजनमात्रे च दक्षिणे चामरेश्वरः ।
ततस्स्वर्णशिला चास्ति तदूर्ध्वं नरमांसकम् ॥ १७० ॥

गोमांसं वा क्षिपेत्काष्ठैर्बादरैर्ज्वालयेत्सुधीः ।
प्रातः काञ्चनसङ्काशा दृश्यते सा शिला तदा ॥ १७१ ॥

प्रत्यग्रपुष्पवत्याश्च रजसा भावितांशुकम् ।
लोडयेत्तच्छिलायां च क्षिपेद्दल्याम्बुपात्रके ॥ १७२ ॥

तस्य संस्पर्शमात्रेण लोहस्स्यात्काञ्चनं परम् ।
श्रीगुरौ यत्र तत्रापि पिण्डभूमिस्थितोपलाः ॥ १७३ ॥

कर्षमात्रं तु तच्चूर्णं भक्षयेत्त्रिफला समम् ।
वलीपलितजिन्मासाज्जीवेदाचन्द्रतारकम् ॥ १७४ ॥

श्रीगिरीन्द्रस्य नैरृत्यां पटहकर्ण ईश्वरः ।
तस्य पूर्वोत्तरे भागे पञ्चविंशतिचापके ॥ १७५ ॥

द्विहस्तमात्रोर्ध्वशिला खनेत्तत्र द्विहस्तकम् ।
शरावसंपुटाकारान्दृषदस्तान्समाहरेत् ॥ १७६ ॥

कुर्वीत तानग्निवर्णान्सिच्यात्कूश्माण्डजैर्द्रवैः ।
तन्मध्यान्नवनीतं तु दद्यादेवाय भागकम् ॥ १७७ ॥

भागैकमतिथेर्देयं भागमेकं स्वयं लिहेत् ।
दिवा नक्तं भवेन्मूर्च्छा विनिद्रो भवति स्वयम् ॥१७८॥

वलीपलितसंवर्ज्यो जीवेद्वर्षायुतं नरः ।
स्पर्शकान्तस्य सोपानं द्वितीयं भवति प्रिये ! ॥ १७९ ॥

तद्देवपार्श्वयोस्सर्वे पाषाणाश्श्वेतपीतकाः ।
स्पर्शास्सर्वा भवन्त्येते तेषु चैकं समाहरेत् ॥ १८० ॥

प्राच्यां हि तस्य देवस्य समीपे कूपमस्ति च ।
मण्डूकाभाश्च पाषाणास्सन्ति च स्पर्शसंज्ञकाः ॥१८१॥

तस्येश्वरस्य चोदीच्यां लिङ्गाद्रिर्विद्यते महान् ।
तदुत्तरस्यां दिश्यस्ति तटिनी पूर्ववाहिनी ॥ १८२ ॥

तटिन्याः पश्चिमाशायां पिङ्गाभं लिङ्गमस्ति हि ।
पूर्णशैलोदकं कुण्डं तत्र स्यात्क्षणवेधकम् ॥ १८३ ॥

द्वियोजने महेशस्य दक्षिणे, चण्डिका स्थिता ।
पिण्डिकाख्या सुविख्याता तस्या वायव्यकोणतः ॥

अन्धुरस्ति हि तन्मध्ये मुद्गवर्णास्तथोपलाः ।
केचित्पथ्यानिभास्सन्ति ते सर्वे स्पर्शसंज्ञकाः ॥१८५॥

अत्रत्यानां च सर्वेषां स्पर्शानां विधिरुच्यते ।
यदि स्थूलं पेषयेत्तं श्लक्ष्णं मूषान्तरेण हि ॥ १८६ ॥

कुर्यात्सर्वाणि लोहानि तस्यामावर्तयेत्प्रिये ! ।
तत्सर्वं जायते स्वर्णं कुर्यादेवं यथेष्टकम् ॥ १८७ ॥

सूक्ष्मश्चेत्सर्वलोहानां द्रुतानामन्तरे क्षिपेत् ।
तत्स्पर्शात्सर्वलोहानि काञ्चनत्वं प्रयान्ति हि ॥ १८८ ॥

वायव्यां मल्लिनाथस्य तीर्थे सर्वेश्वराख्यकम् ।
तस्य दक्षिणदिग्भागे राजमार्गे द्वियोजने ॥ १८९ ॥

गते डोंगलिका तत्र दृश्यते तस्य मूर्धनि ।
कृष्णधात्रीफलान्येव सन्ति तानि च भक्षयेत् ॥१९०॥

सप्तवासरपर्यन्तमातृप्ति वज्रविग्रहः ।
जरामरणनिर्मुक्तो जीवेत्कल्पशतत्रयम् ॥ १९१ ॥

तस्माच्च दक्षिणे भागे काकलारीमहावने ।
तत्रास्ते स्तम्बकदली प्रविशेत्तत्र साधकः ॥ १९२ ॥

क्रोशार्धमात्रं गच्छेच्च रसकुण्डं च दृश्यते ।
अलाबुपात्रे संस्थाप्य कोटिवेधी भवेत्तु सः ॥ १९३ ॥

शिलामयो नीलवर्णश्शिखण्डी तत्र दृश्यते ।
तन्मुखाग्रेऽस्ति कुण्डं वितस्तिमात्रातिनीलकम् ॥१९४॥

शुष्कवंशं च तन्मध्ये क्षणं क्षिप्तं नवं भवेत् ।
पत्रं पुष्पं दिनैकेन भवत्येव न संशयः ॥ १९५ ॥

तत्र प्रस्थं रसं क्षिप्त्वा तावन्मात्रं जलं हरेत् ।
मधुतुल्यं पिबेत्तं च मूर्च्छा भवति तत्क्षणात् ॥ १९६ ॥

क्षणेन लब्धज्ञानस्स्याज्जीवेद्युगसहस्रकम् ।
श्रीगिरेर्वह्निदिग्भागे घटिकासिद्धखेचरः ॥ १९७ ॥

अस्ति तस्य पुरो भूमौ पञ्चहस्तं खनेत्सुधीः ।
बदराकारपाषाणा विद्यन्ते खगतिप्रदाः ॥ १९८ ॥

एकं वक्त्रे सदा धार्यं सिद्धैः खेगतिलिप्सुभिः ।

**सिद्धिक्रमः ॥**

श्रीशैले सर्वसिद्धीनामुक्तानां विधिरुच्यते ॥ १९९ ॥

मन्त्रन्यासं पुरा कृत्वा पश्चाल्लक्षं जपेन्मनुम्।
अघोरान्तेन वै शीघ्रं तत्तत्सिद्धिमवाप्नुयात्॥ २००॥

**अथ न्यासः॥**

ॐ ह्रीं महापर्वतवासिन्यै हृदयाय नमः। ॐ ह्रीं ज्येष्ठायै शिरसे स्वाहा। ॐ ह्रीं रौद्रै शिखायै वषट्। ॐ ह्रीं कनककुण्डलिन्यै कवचाय हुम्। ॐ ह्रीं सञ्जीविन्यै नेत्रेभ्यो वौषट्। ॐ ह्रीं मालिन्यै अस्त्राय फट्॥ इत्यङ्गषट्कं कुर्यात्॥

ॐ हुं शिवाय नमः - पादयोर्न्यसेत्। ॐ वं वामदेवाय नमः - जङ्घयोः। ॐ पं पद्मिन्यै नमः - गुह्ये। ॐ कां कन्याकुमार्यै नमः - नाभौ। ॐ ग्लौं नमः - कुक्षौ। ॐ द्रां ह्रीं दुर्गायै नमः - उरसि। ॐ हुं विन्ध्यवासिन्यै नमः - कण्ठमूले। ॐ लं नमः - ग्रीवायां। ॐ ह्रीं श्रीं अष्टभुजायै नमः - भुजयोः। ॐ हुं सर्वतोमुखिन्यै नमः - मुखे। ॐ प्रकाशिकायै नमः - नेत्रयोः। ॐ महिषमर्दिन्यै नमः - कर्णयोः। ॐ ह्रां सर्वाङ्गसुन्दर्यै नमः - मूर्ध्नि न्यसेत्॥

एवं अङ्गरक्षां कृत्वा क्षेत्रं पूजयेत्॥

ॐ ह्रीं श्रीं नमो भगवति सर्वेश्वरि देवि नमो मण्डलवासिनि क्रां क्रीं क्रूं हन हन पच पच मथ मथ शीघ्रमावेशय शीघ्रमावेशय एह्येहि भुवन वन्दिते स्वाहा। अनेन मन्त्रेण देवतामावाहयेत्॥

ॐ ह्रां ह्रीं ह्रूं त्रिभुवनेश्वर्यै नमः सान्निध्यं कुरु कुरु स्वाहा। अनेन मन्त्रेण तत्क्षेत्रदेवतां पूजयेत्॥

ॐ कृष्णवर्णिनि अपरामुख्यै नमः - पूर्वस्मिन्। ॐ सुधावर्षिण्यै नमः - आग्नेये। ॐ पर्वताकृष्णवर्णिनीरौद्रमुख्यै नमः - दक्षिणे। ॐ बालार्कवर्णिनीमहालक्ष्म्यै नमः - नैर्ऋत्ये। ओं खं रक्तपर्वतवर्णिनी

महामहिषासुरमर्दिन्यै नमः - पश्चिमे । ओं मां सर्ववर्णिनीहुङ्कारवाग्
नमः - वायव्ये । ओं सिंहवाहिन्यै नमः - उत्तरे । ओं शिवाशिवा
त्रिशूलहस्तायै नमः - ऐशान्ये । ओं ह्रां ह्रीं क्लीं मनोन्मन्यै नमः - आका
ओं ह्रां ह्रीं महामोहिन्यै नमः - पाताले । ओं ह्रां ह्रीं ह्रुं ह्रूँ ह्रों ह्रूं
महाविद्ये जंभय जंभय मोहय मोहय दर्शय दर्शय मूर्च्छय मूर्च्छय
मथ मथ आकर्षयाकर्षय हुं फट् स्वाहा । मध्ये च पूजयेत् ॥

एवं न्यासं रक्षां पूजां कृत्वा तत्कर्मणि लक्षमेकमघोरं जपे
ततः सिद्धिमवाप्नोति ॥

मन्त्रं यथा—

ओं ह्रां ह्रीं ह्रूं अघोरतर प्रस्फुर प्रस्फुर प्रकट प्रकट कह कह
शम ज़ात जात दह दह पातय पातय ओं ह्रैं ह्रां ह्रूं अघोरास्त्राय
अमुं मन्त्रं लक्षं जपेत् ॥

ततः स्वप्ने प्रत्यक्षीभूय देवता वरं ददाति ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ द्वादशोल्लासः

# ॥ त्रयोदश उल्लासः ॥

## गन्धकः ॥

श्रीभैरवी—

प्रणम्य शिरसा शम्भुमस्तौषीत्परमेश्वरी ।
श्रुतं तव प्रसादेन दिव्यं सर्वरसायनम् ॥ १ ॥

उत्पत्तिं गन्धकस्यापि जातिं संशोधनं तथा ।
सेवां रसायनफलं क्रमाद्ब्रूहि महेश्वर ! ॥ २ ॥

श्रीभैरवः—

देवि ! शृणु प्रवक्ष्यामि गन्धकस्य रसायनम् ।
श्वेतद्वीपे पुरा देवि ! लताकल्पद्रुमोज्ज्वले ॥ ३ ॥

नानामणिगणाकीर्णे नानापुष्पफलाकुले ।
सिद्धविद्याधरस्त्रीभिः किन्नर्यप्सरसां गणैः ॥ ४ ॥

अनेकनिर्जरस्त्रीभिः क्रीडन्ती त्वं मदोल्लसा ।
वेणुवीणाविनोदेन वाद्यनादैर्मनोहरैः ॥ ५ ॥

तालैर्झल्लरिकाढक्कानिनादैः करतालकैः ।
अत्यानन्देन देवेशि ! नृत्यन्ती त्वं सुरार्चिते ! ॥ ६

तदा ऋतुमती जाता सुस्राव च रजो महत् ।
सुगन्धिना तद्रजसा त्वद्वस्त्रं रक्ततां ययौ ॥ ७ ॥

विहाय तद्रक्तवस्त्रं स्नात्वा क्षीरमहोदधौ ।
अनेकामरकान्ताभिर्वृता कैलासमाव्रजः ॥ ८ ॥

वायुना तद्रजो वस्त्रं क्षिप्तं क्षीरमहोदधौ ।
मग्नं तत्रैव तद्वस्त्रं चिरकालं सुरेश्वरि ! ॥ ९ ॥

मथ्यमानान्महांभोधेरमृतेन सहोद्भवम् ।
श्लाघ्येन निजगन्धेन मोदयन्नसुरान्सुरान् ॥ १० ॥

तेनैव नाम्ना ऊचुस्ते शक्राद्यास्सुरपुङ्गवाः ।
गन्धकोऽयं भवत्वस्य नाम्ना जातं तु मत्प्रिये ! ॥ ११ ॥

चतुर्विधं शोणितं ते दिव्यं बलकरं परम् ।
समर्थोऽयं गन्धकस्तु रसबन्धे च जारणे ॥ १२ ॥

रसेन्द्रे ये गुणास्सन्ति ते गुणास्सन्ति गन्धके ।
इत्यूचुरिन्द्रप्रमुखा हृष्टा गन्धकगन्धतः ॥ १३ ॥

तदा प्रभृति लोकेऽस्मिन्ख्यातोऽयं गन्धकः प्रिये ! ।
जपाकुसुमसङ्काशः क्षत्रियश्चोत्तमः प्रिये ! ॥ १४ ॥

पीतो वैश्यो मध्यमस्स्याच्छ्वेतो विप्रोऽधमस्स्मृतः ।
कृष्णवर्णो भवेच्छूद्रः प्रिये ! स्यादधमाधमः ॥ १५ ॥

रक्तवर्णं लोहवेधि पीतवर्णं रसायनम् ।
श्वेतवर्णं च भैषज्ये कृष्णं कुष्ठादिलेपने ॥ १६ ॥

### गन्धकशुद्धिः ॥

अथ वक्ष्ये गन्धकस्य शोधनं सिद्धिदायकम् ।
तिलपर्ण्यजमोदाश्च ब्राह्मी भृङ्गी च धुत्तुरः ॥ १७ ॥

एतेषां च रसैर्भाव्यं चूर्णितं गन्धकं दिनम् ।
कान्तपात्रे विनिक्षिप्य समांशाज्येन पाचयेत् ॥ १८ ॥

मृद्वग्निना तु तत्पक्त्वा ह्यजाक्षीरे विनिक्षिपेत् ।
गोक्षीराज्यैः किञ्चिदूनं स्थाल्या वक्त्रं तु बन्धयेत् ॥

स्वच्छांशुकेन बद्धस्य चूर्णं तदुपरि क्षिपेत्।
तदूर्ध्वं श्रावकं रुद्ध्वा तत्स्थाप्यं गर्तकान्तरे ॥ २० ॥

वनोत्पलैर्मृदुपुटं दत्त्वा द्रवति गन्धकम्।
पुनश्च तिलपर्ण्याद्यैर्भावयेच्छोषयेत्त्रिधा ॥ २१ ॥

द्रावयेत्तत्समादाय मत्स्यपित्तेन सप्तधा।
भावयेज्ज्वालिनीबीजचूर्णैस्तत्परिपेषयेत् ॥ २२ ॥

ततो भृङ्गद्रवैर्भाव्यं सप्तकृत्वस्तपे खरे।
जलैः प्रक्षाल्य तत्सम्यक्छोषयेत्तत्पुनः पचेत् ॥ २३ ॥

मृद्वग्निना कान्तपात्रे घृताक्ते तु क्षणं ततः।
भृङ्गराजद्रवे क्षिप्त्वा शुद्धं तद्गन्धकं भवेत् ॥ २४ ॥

रसे रसायने योगे योज्यं सुखकरं भवेत्।

## गन्धकरसायनम् ॥

पूर्वोक्तवद्देहशुद्धिं कुर्याद्वान्तिविरेचनैः ॥ २५ ॥

सुमुहूर्ते सुनक्षत्रे पूजयित्वा परं शिवम्।
गणाधिपं क्षेत्रपालं श्रीगुरुं भिषजं क्रमात् ॥ २६ ॥

निष्कैकं त्रिफलाचूर्णं निष्कमेकं च गुग्गुलुम्।
गुञ्जोन्मेयं शुद्धगन्धं लिहेदेरण्डतैलतः ॥ २७ ॥

गुञ्जावृद्धिक्रमेणैव सेव्यं तत्प्रतिवासरम्।
दिनषोडशपर्यन्तं गुञ्जाषोडशमात्रकम् ॥ २८ ॥

तदा षोडशघस्रान्ते सेव्यं तत्प्रतिवासरम्।
गुञ्जाषोडशिकोन्मेयमपूर्वं त्रिफलां परम् ॥ २९ ॥

एतस्मादधिका वृद्धिर्न कार्या सिद्धिलिप्सुना।
एवं मासप्रयोगेण कुष्ठमष्टादशं हरेत् ॥ ३० ॥

तथा प्रमेहान्गुल्मानि कासश्वासक्षयज्वरान् ।
व्रणान्भगन्दरादींश्चाशीतिवातोद्भवान्गदान् ॥ ३१ ॥

मासद्वयप्रयोगेण बहुकान्तिं प्रयच्छति ।
सर्वव्याधिप्रशमनं भवेन्मासत्रयात्प्रिये ! ॥ ३२ ॥

ततष्षण्मासयोगेन वृद्धो यौवनमाप्नुयात् ।
एवमब्दप्रयोगेण सिद्धो भवति शांभवि ! ॥ ३३ ॥

तन्मूत्रमलयोगेन ताम्रं काञ्चनतां व्रजेत् ।
विधिं च प्रतिषेधं च कुर्यात्पूर्वोक्तवत्सुधीः ॥ ३४ ॥

रसादि पुण्यममलं यस्सेवेत रसायनम् ।
स एव कृतकृत्यस्स्याद्दैवतैरपि पूज्यते ॥ ३५ ॥

सर्वतीर्थेषु संस्नातः सर्वव्रतफलान्वितः ।
अश्वमेधादियज्ञानां सर्वेषां फलमाप्नुयात् ॥ ३६ ॥

धन्यः पुण्यतमश्श्रेष्ठश्श्लाघनीयो मनीषिभिः ।
स योगविज्ञस्सर्वज्ञस्सर्वानुग्राहकः प्रभुः ॥ ३७ ॥

शुद्धस्सर्वगतश्शान्तश्शूरस्सत्वगुणोज्ज्वलः ।
तस्य देहलयो नास्ति ह्यदृश्यश्शिवतां व्रजेत् ॥ ३८ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ त्रयोदशोल्लासः ॥



# ॥ चतुर्दश उल्लासः ॥



**विषम् ॥**

[विषोत्पत्तिः ।]

श्रीभैरवी—

श्रुतं सर्वं मया देव ! दिव्यं सर्वरसायनम् ।
विषोत्पत्तिं च जातिं च सेवां वद च तत्फलम् ॥ १ ॥

श्रीभैरवः—

क्षीरोदधौ मथ्यमाने मन्थनीकृतमन्दरैः ।
सिद्धकिन्नरगुह्यचेन्द्रपिशाचोरगराक्षसैः ॥ २ ॥

ब्रह्माद्यैरखिलैर्देवैरेकतो दनुजाधिपैः ।
दैत्यैरन्यत्र विपुलैर्महाबलपराक्रमैः ॥ ३ ॥

ततो जातानि रत्नानि कौस्तुभादीनि कामगौः ।
कल्पवृक्षो महालक्ष्मीरैरावतमहागजः ॥ ४ ॥

उच्चैःश्रवास्तथा चेन्दुर्धन्वन्तरिभिषग्वरः ।
अमृतं च लता दिव्या दिव्यसिद्धिप्रदायकाः ॥ ५ ॥

मन्दरभ्रमणश्रान्तनागराजमुखात्ततः ।
विषज्वाला समुत्पन्ना तीव्रा लोकभयङ्करी ॥ ६ ॥

ममज्ज क्षीरजलधावत्यन्तमथनात्पुनः ।
कालकूटं महाक्ष्वेलं कल्पान्तयमसन्निभम् ॥ ७ ॥

संवर्ताग्निप्रतीकाशं वीक्ष्य भीतास्सुरास्तदा ।
ममान्तिकं समाजग्मुस्स्तुवन्तो दीनमानसाः ॥ ८ ॥

स्वामिन्सर्वोत्तम ! त्राहि शरणागतपालक ! ।
इत्यादि बहुधा स्तोत्रं कुर्वाणास्ते सुरासुराः ॥ ९ ॥

अहं स्मितमुखं कृत्वा कालकूटं तदाऽपिबम् ।
तत्र तत्रावशिष्टं तद्बहुधा समभूद्भुवि ॥ १० ॥

क्वचिन्मूलस्वरूपेण क्वापि त्वग्रूपतः प्रिये ! ।
कुत्रापि पर्णरूपेण तोयरूपेण कुत्रचित् ॥ ११ ॥

एवं बहुविधं जातं तत्र तत्र विषं गतम् ।
तेषां श्रेष्ठं कन्दविषमष्टादशविधं प्रिये ! ॥ १२ ॥

[विषभेदाः ।]

क्रमाद्भेदं प्रवक्ष्यामि कालकूटं च दर्दुरम् ।
हालाहलं मेषशृङ्गं मोहदं ग्रन्थि कर्कटम् ॥ १३ ॥

रक्तशृङ्गि हरिद्रं च केसरं दशमं स्मृतम् ।
एते दशविधाः क्ष्वेला न प्रयोज्या रसायने ॥ १४ ॥

श्वेतशृङ्गी वत्सनाभं सर्षपं शृङ्गि वालुकम् ।
मुस्तकं सक्तुकं देवि ! चाष्टमं कर्दमं भवेत् ॥ १५ ॥

रसायने योजनीयास्त्वष्टौ भेदाः प्रकीर्तिताः ।
कालकूटं काकचञ्चुप्रभं दर्दुरसन्निभम् ॥ १६ ॥

दर्दुरं नीलवर्णं च हालाहलविषं समम् ।
मेषशृङ्गी तु मेषस्य शृङ्गाभं मोहदं पुनः ॥ १७ ॥

रक्तनीलप्रभं देवि ! ग्रन्थिकं ग्रन्थिसंयुतम् ।
कर्कटं कपिलाभं च रक्तशृङ्गि महाविषम् ॥ १८ ॥

कृष्णपिङ्गं च रक्ताभं हरिद्राभं हरिद्रकम् ।
केसरं पद्मकिंजल्कप्रभं दशविधन्त्विति ॥ १९ ॥

श्वेतशृङ्गीभदन्ताभं वत्सनाभं च पाण्डुरम् ।
सर्षपाकृतिभिर्युक्तं बिन्दुभिस्सर्षपं भवेत् ॥ २० ॥

शृङ्गी शृङ्गाकृतिर्ज्ञेयो वालुकं वालुकाकृति ।
मुस्ताकृतिर्मुस्तकं स्याच्छ्वेतवर्णं तु सक्तुकम् ॥ २१ ॥

मधूच्छिष्टाकृतिर्देवि ! कर्दमं विषमुत्तमम् ।
विषखण्डेषु भग्नेषु दृश्यन्ते येषु बिन्दवः ॥ २२ ॥

श्वेतरक्तपीतवर्णाः कृष्णा विप्रादयः क्रमात् ।
श्वेता रसायने रक्ता वश्ये पारदकर्मणि ॥ २३ ॥

क्षुद्रकर्मणि पीतास्स्युः कृष्णवर्णास्तु मारणे ।
विषं युक्त्याऽमृतं देवि ! तदयुक्त्या विषं भवेत् ॥

तस्माद्युक्त्या विषं सेव्यमयुक्त्या न कदाचन ।
रसाभ्रहेमकान्तानां वीर्येण सदृशं विषम् ॥ २५ ॥

[विषशुद्धिः ।]

रक्तसर्षपतैलेन लिप्ते वस्त्रे च बन्धयेत् ।
त्रिदिनान्ते समुद्धृत्य टङ्कणेन समं विषम् ॥ २६ ॥

मर्दयेच्छ्लक्ष्णचूर्णं तत्कारयेच्च विशुद्ध्यति ।
रोगे रसायने योज्यं सिद्धिदं स्याद्वरानने ! ॥ २७ ॥

[विषरसायनम् ।]

शुद्धदेहो विरेकाद्यैः पथ्याशी विषभुग्भवेत् ।
क्रमेण सेवनीयं तत्सर्षपं राजसर्षपम् ॥ २८ ॥

मुद्गव्रीहियवा माषा गुञ्जामात्रं परावधिः ।
शर्करासहितं सेव्यं क्ष्वेलं तदमृतं भवेत् ॥ २९ ॥

कट्वम्ललवणास्त्याज्या व्यायामोष्णातपादयः ।
तैलसर्षपखाद्याश्च वर्ज्या विषरसायने ॥ ३० ॥

गव्यं क्षीरं घृतं तक्रं स्निग्धं दधि च शर्करा ।
सेव्या स्वादुरसद्रव्या नोचेद्विकृतिकारणम् ॥ ३१ ॥

विषोपद्रवास्तच्चिकित्सा च ॥

मात्रया सेवितं क्ष्वेलममृतं भवति प्रिये ! ।
अतिमात्रं यदि भवेदमृतं च विषायते ॥ ३२ ॥

प्रमादादतिमात्रं चेत्तदा वेगा भवन्ति च ।
कष्टं प्रथमवेगे स्याद्वेपथुश्च द्वितीयके ॥ ३३ ॥

तृतीये च तृषा दाहो चतुर्थे गतिभञ्जनम् ।
फेनिलास्यः पञ्चमे स्यात्षष्ठे कन्धरभञ्जनम् ॥ ३४ ॥

सप्तमे च निरुत्थानं मरणं चाष्टमे भवेत् ।
तस्माच्छीघ्रं प्रतीकारः करणीयो वरानने ! ॥ ३५ ॥

किञ्चिन्मात्राधिकं क्ष्वेलं नानारोगान्करोति तत् ।
भ्रान्तिविस्मृतिशूलानि वान्त्यतीसारकं परम् ॥ ३६ ॥

स्वरसादं गद्गदत्वं दाहं दृष्टिभ्रमं तथा ।
कर्णरुक्श्वासकासादीनन्यान्वातोद्भवान्गदान् ॥ ३७ ॥

यदाऽतिमात्रं चिह्नानि दृश्यन्ते वपुषि प्रिये ! ।
तदा तु टङ्कणं निष्कमाज्यं चापि चतुर्गुणम् ॥ ३८ ॥

पेयं तत्परिहारार्थं जलैर्वा तण्डुलीयकम् ।
मज्जां वा पुत्रजीवस्य फलान्निष्कं जलान्वितम् ॥३९॥

तुत्थं पणद्वयोन्मेयं नृमूत्रैर्वा हरिद्रकम् ।
वचां वा देवदालीं वा सर्पाक्षीं वाऽथ सार्जुनीम् ॥४०॥

पटोलीं गिरिपर्णीं वा नृमूत्रैर्विषजित्पृथक्।
लांयांवांहांचतुर्वर्णैर्गारुडं संपुटीकृतम्॥ ४१॥

स्तंभस्तोभननिर्वाहनिर्विषीकरणं तथा।

"लां प्रों लां" अनेन मन्त्रेण स्तम्भनम्। शीतजलघटं अभिमन्त्र्य विषातुरस्य मस्तके जलं ढालयेत्। विषं नाक्रामति।

"यां प्रों यां" अनेन स्तोभनमन्त्रेण विषातुरस्य शिखिनमन्धयेत्।

"वां प्रों वां" अनेन निर्वाहमन्त्रेणार्कदण्डं वा धुत्तूरकाष्ठदण्डं वाऽभिमन्त्र्य विषातुरस्य सर्वाङ्गं स्पृष्ट्वा विषं निर्वाहयेत्॥

"हां प्रों हां" अनेन निर्विषीकरणमन्त्रेण निर्विषीकरणार्थं विषातुरस्य सर्वांगं दण्डेनापामार्जयेत्, स्वस्थो भवति॥

जीर्णे क्ष्वेलं शरीरे चेत्पित्तान्तं वमनं प्रिये!॥ ४२॥

आमान्तं रेचनं कार्यं तण्डुलीयकमूलभुक्।
सेवेत मांसं सघृतं विषदोषहरं भवेत्॥ ४३॥

पूर्वोक्तमात्रासेवी यो महाव्याधेर्विमुच्यते।
देवि! षण्मासयोगेन जरापलितखण्डनम्॥ ४४॥

संवत्सरोपयोगेन जीवेच्चन्द्रार्कतारकम्।
हिमशीतवसन्तेषु योज्यं विषरसायनम्॥ ४५॥

ग्रीष्मवर्षशरत्स्वेतन्न प्रयोज्यं कदाचन।
वातस्थविरगर्भिण्यः क्षुत्तृड्घर्माध्वपीडिताः॥ ४६॥

नपुंसका गदक्षीणाः पित्तक्रोधाधिकास्तथा।
यक्ष्मिणो नैव योग्यास्स्युस्सदा विषरसायने॥ ४७॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ चतुर्दशोल्लासः॥

# ॥ पञ्चदश उल्लासः ॥

## दिव्यौषधिरसायनानि ॥

श्रीभैरवी—

मलमायाविहीनेश! जराजन्मगदापह! ।
त्वत्प्रसादेन विदितं रसादीनां रसायनम् ॥ १ ॥

इतःपरमपि स्वामिन्! शुश्रूषे किमपि प्रभो! ।
सुखोपायोपयोग्यं च दिव्यौषधिरसायनम् ॥ २ ॥

ब्रूहि मे तद्विधं दिव्यं सर्वसिद्धि प्रदायकम् ।

श्रीभैरवः—

### १. ब्रह्मकल्पः ॥

[ब्रह्मवृक्षतैलकल्पः]

वक्ष्यामि ब्रह्मवृक्षादि दिव्यौषधिरसायनम् ॥ ३ ॥

तत्रादौ ब्रह्मवृक्षस्य शृणु देवि! रसायनम् ।
ब्रह्मवृक्षस्य बीजानि विदध्यान्निस्तुषाणि च ॥ ४ ॥

परिशोष्यातपे तीव्रे सूक्ष्मचूर्णानि कारयेत् ।
धात्रीफलेन सप्ताहं भावयेत्पयसाऽथवा ॥ ५ ॥

चक्रयन्त्रे क्षिपेत्तानि ततस्तत्तैलमाहरेत् ।
इत्थमुत्थापितं तैलं दोषघ्नं च रसायनम् ॥ ६ ॥

ब्रह्मबीजजतैलस्य प्रस्थमाज्यं च तत्समम् ।
निक्षिप्तं स्निग्धभाण्डे च धान्यराशौ विनिक्षि

मासार्धमासं देवेशि! तस्मात्तैलं समाहरेत् ।
शुद्धदेहो विरेकाद्यैरर्चिताग्निगुरुद्विजः ॥ ८ ॥

द्विपलं च गवां क्षीरं तत्तैलं निष्कमात्रकम् ।
संमिश्र्य च पिबेत्प्रातः पथ्याशी स्याज्जितेन्द्रियः ॥

एवं द्वितीयेऽपि दिने ह्येकाहान्तरिते क्रमात् ।
निष्कवृद्धिर्भवेदेवं यावत्षोडशनिष्ककम् ॥ १० ॥

एतत्तैलस्य परमा मात्रा ह्यस्यैवमीरिता ।
पीतमात्रे क्षणं मूर्च्छा जायते सिञ्चयेन्मुखम् ॥ ११ ॥

प्रबुद्धे सघृतं दद्याद्दुग्धान्नं शर्करान्वितम् ।
एवं तैलोपयोगेन मासाज्ज्ञानी भवेन्नरः ॥ १२ ॥

सकृद्ग्राही सुकान्तश्च षोडशाब्द इव स्थितः ।
द्वितीये नागबलवान् सर्वव्याधिविवर्जितः ॥ १३ ॥

इन्द्रोपमबलो धीरश्चतुर्थे मासि च क्रमात् ।
वज्रदेहो दिव्यदृष्टिः पञ्चमे खेचरो भवेत् ॥ १४ ॥

अणिमादिगुणोपेतस्सर्वगस्सर्वकालिकः ।
षष्ठे मासि स्वयं स्रष्टा भोक्ता हर्ता त्रिमूर्तिवत् ॥१५॥

वर्षैकसेवनाद्देवि ! भवेत्साक्षात्सदाशिवः ।
यावत्तैलोपजीवी स्यात्तावत्क्षीरौदनाशनः ॥ १६ ॥

वमनादिविशुद्धाङ्गः कृत्वा वैद्यद्विजार्चनम् ।
प्रातर्गोक्षीरकुडुबं तैलं किंशुकबीजजम् ॥ १७ ॥

कुडुबं पूर्ववज्जातमेकीकृत्य द्वयं पिबेत् ।
तत्पानमात्रे मूर्च्छा स्यात्कुर्यात्तं भस्मशायिनम् ॥ १८ ॥

सप्तरात्रे प्रबुद्धस्स्याद्वृद्धवच्छयने स्थितः ।
नाङ्गानि चालयेदेष जायते विचलेक्षणः ॥ १९ ॥

तैले जीर्णे समापन्ने संज्ञा भवति भैरवि ! ।
गोक्षीरं तस्य दातव्यं प्रत्यहं दशवासरम् ॥ २० ॥

स त्वचं च त्यजेद्देहात्कञ्चुकं भुजगो यथा ।
क्षीराहारी भवेन्नित्यमेकविंशतिवासरम् ॥ २१ ॥

वाचां पतिर्भवेद्धीरश्श्रुतं धारयते क्षणात् ।
दूरश्रावी दिव्यदृष्टिर्जीवेद्ब्रह्मदिनं सुधीः ॥ २२ ॥

[ब्रह्मवृक्षपल्लवकल्पः ।]

पुण्यर्क्षे ब्रह्मवृक्षस्य पल्लवानि समाहरेत् ।
क्रिमिकीटविहीनानि कोमलानि शुभानि च ॥ २३ ॥

आतपे शोषयेत्तीव्रे चूर्णितं वस्त्रगालितम् ।
कुर्यान्नूतनभाण्डे च निक्षिपेच्च प्रयत्नतः ॥ २४ ॥

वमनाद्यैर्विशुद्धाङ्गो ब्रह्मचारी जितेन्द्रियः ।
क्षाराम्लवर्जिताहारः क्षीरशाल्यन्नभोजनः ॥ २५ ॥

कोष्णं जलं पिबेन्नित्यं निवाते शयनं भजेत् ।
कर्षमात्रं च सेवेत मासं गोतक्रसंयुतम् ॥ २६ ॥

द्वितीये च तृतीये च वृद्धिः कर्षाधिका क्रमात् ।
एवं षोडशमासान्तं सतक्रं कुडुबं पिबेत् ॥ २७ ॥

एवं नित्योपसेवी यः कुञ्चितस्निग्धकुन्तलः ।
मत्तमातङ्गबलवान् जीवेद्ब्रह्मदिनं नरः ॥ २८ ॥

[ब्रह्मवृक्षपुष्पकल्पः ।]

ब्रह्मवृक्षस्य पुष्पाणि छायायां शोषयेत्सुधीः ।
चूर्णयेद्गालयेद्वस्त्रे नवभाण्डे विनिक्षिपेत् ॥ २९ ॥

विंशत्पलं पुष्पचूर्णं चतुर्विंशति गोघृतम् ।
पलमेकलं संमिश्रं धान्यराशौ निवेशयेत् ॥ ३० ॥

तदुद्धरेच्च मासान्ते कृत्वा भागांश्चतुर्दश ।
एकैकं प्रत्यहं सेव्यमेवं मासत्रयं भवेत ॥ ३१ ॥

भुञ्जीत शुल्बपात्रे च लवणाम्लादिवर्जितम् ।
पायसाशी कषायं च तृषार्तः खादिरं पिबेत् ॥ ३२ ॥

त्रिमासाज्जायते गात्रं वज्रवन्नात्र संशयः ।
नागायुतबलो धीरो वायुवेगगतिर्भवेत् ॥ ३३ ॥

अस्य वर्षोपयोगेन पुरीषमपि मूत्रकम् ।
वेधयेत्सर्वलोहानि काञ्चनानि च कारयेत् ॥ ३४ ॥

जीवेद्ब्रह्मदिनं साक्षाद्दैवतैस्सह मोदते ।

[ब्रह्मवृक्षबीजकल्पः ।]

ब्रह्मवृक्षस्य बीजानि चूर्णयेन्निक्षिपेद्घटे ॥ ३५ ॥

मध्वाज्यशर्करायुक्तं धान्यराशौ विनिक्षिपेत् ।
मासादूर्ध्वं समाहृत्य प्रत्यहं कर्षमात्रकम् ॥ ३६ ॥

उपयुञ्जीत शुद्धात्मा गोक्षीरं च पिबेदनु ।
यावत्पलं भवेद्वृद्धिस्तावदेवाधिकं न हि ॥ ३७ ॥

एवं संवत्सरात्सिद्धिर्जायते मृत्युवर्जिता ।
जीवेद्ब्रह्मदिनं शुद्धो मतङ्गजबलोपमः ॥ ३८ ॥

[ब्रह्मवृक्षवल्कलकल्पः ।]

सूक्ष्मचूर्णं प्रकुर्वीत ब्रह्मवृक्षस्य वल्कलम् ।
भावयेद्गव्यपयसा पलं चानुदिनं पिबेत् ॥ ३९ ॥

जितेन्द्रियश्च पथ्याशी भवेदावत्सरं सुधीः ।
दशवर्षसहस्राणि जीवेत्सिद्धो भवेद्ध्रुवम् ॥ ४० ॥

[ब्रह्मवृक्षनिर्यासकल्पः ।]

ब्राह्मी च मधुकं साज्यं निर्यासं ब्रह्मवृक्षजम् ।
समभागानि सेवेत पलं चानुपिबेत्पयः ॥ ४१ ॥

एवमेकाब्दयोगेन शुभंयुदर्शनश्शुचिः ।
जीवेद्ब्रह्मदिनं ज्ञानी वलीपलितवर्जितः ॥ ४२ ॥

[ब्रह्मवृक्षपञ्चाङ्गकल्पः ।]

पञ्चाङ्गं ब्रह्मवृक्षस्य विधिवत्तत्समाहरेत् ।
छायाशुष्कं प्रकुर्वीत चूर्णितं पटशोधितम् ॥ ४३ ॥

कर्षमात्रं लिहेच्छुद्धः क्षौद्राज्याभ्यां दिनोदये ।
वलीपलितनिर्मुक्तो वत्सराज्जायते नरः ॥ ४४ ॥

[ब्रह्मवृक्षमूलगुप्तधात्रीकल्पः ।]

अतिस्थूलतरं दीर्घं भेदयेद्ब्रह्मभूरुहम् ।
मूले त्रिहस्तशेषं च तदग्रे गर्तमारचेत् ॥ ४५ ॥

धात्रीफलानि पक्वानि तत्र संपूरयेत्प्रिये ! ।
तच्छिन्नकाष्ठशेषेण तद्गर्तं च निरोधयेत् ॥ ४६ ॥

कुशैस्संवेष्टयेत्सम्यगामूलाग्रं च लेपयेत् ।
मृद्गोमयाभ्यां मतिमांस्ततो वस्त्रेण वेष्टयेत् ॥ ४७ ॥

पुनर्मृद्गोमयाभ्यां च लेपयेच्छोषयेत्सुधीः ।
सम्यक्छुष्के च परितः करीषैः परिपूरयेत् ॥ ४८ ॥

दहेत्तं शीतलीभूते सान्द्रं तत्फलमाहरेत् ।
भाण्डे क्षौद्राज्यभरिते क्षिपेद्धात्रीफलं च तत् ॥ ४९ ॥

भूगृहे वा निवाते वा प्रदेशे च वसन्सुखी ।
यथेष्टं भक्षयेन्नित्यं क्षीराहारी जितेन्द्रियः ॥ ५० ॥

षण्मासात्पश्यति छिद्रं निधानानि च भूतले ।
त्यजेत्त्वचं सर्प इव जीवेद्ब्रह्मयुगं नरः ॥ ५१ ॥

## २. श्वेतब्रह्मवृक्षकल्पः॥

### [श्वेतब्रह्मवृक्षपञ्चाङ्गकल्पः।]

चूर्णयेच्छ्वेतपालाशपञ्चाङ्गं शोषयेत्प्रिये!।
छायायां वस्त्रगलितं मधुना च लिहेत्प्रिये!॥ ५२ ॥

कर्षमात्रं त्रिमासान्तर्जरामृत्युं जयेन्नरः।
संवत्सराच्च ब्रह्मायुस्सिद्धः सर्वगतो भवेत्॥ ५३ ॥

### [श्वेतब्रह्मबीजकल्पः।]

श्वेतपालाशबीजानि चैकैकानि समाहरेत्।
अजाघृतेनानुदिनं मासान्मृत्युं जरां जयेत्॥ ५४ ॥

संवत्सराद्ब्रह्मयुगं जीवेत्सिद्धिपुरोगमः।
ये प्रोक्ता रक्तपालाशतैलत्वक्पर्णकादिषु॥ ५५ ॥

ते गुणाश्श्वेतपालाशे सन्ति साधकसिद्धिदाः।

### [ब्रह्मवृक्षकल्पसिद्धिः।]

वक्ष्यामि ब्रह्मवृक्षस्य कल्पसिद्धिप्रदं मनुम्॥ ५६ ॥

ॐ ह्रीं अमृतं कुरु कुरु अमृतमालिन्यै नमः॥

पूर्वं विंशतिसाहस्रं पुरश्चरणमाचरेत्।
सुधाकुम्भवराक्षस्रग्ज्ञानमुद्रां कराम्बुजैः॥ ५७ ॥

बिभ्राणां मौक्तिकं पाशं ध्यायेदमृतमालिनीम्।
ग्रहणेऽष्टोत्तरशतं भक्षयेत्सप्तवारकम्॥ ५८ ॥

चन्द्रसूर्योपरागादिकालेष्वष्टसहस्रकम्।
मन्त्रं विना न सिद्धिस्स्यात्कल्पकोटिशतैरपि॥ ५९ ॥

समन्त्रे शीघ्रसिद्धिस्स्याच्चरेन्मन्त्रपुरस्सरः।

### ३. मुण्डीकल्पः ॥

अथ मुण्डीं प्रवक्ष्यामि साधकेष्टार्थदायिनीम् ॥ ६० ॥

चतुर्विधा भवेत्सा च रक्ता पीता सिताऽसिता ।
पुष्यार्के पूर्णमास्यां वा रेवत्यां श्रवणेऽपि वा ॥ ६१ ॥

उपरागादिकाले वा सिद्धयोगेषु वा हरेत् ।
केदारीं मुण्डिनीं तां च बलिपूजनपूर्वकम् ॥ ६२ ॥

समाहरेत्कृतस्नानो मौनी मन्त्रं समुच्चरन् ।

ॐ अमृतोद्भवाय अमृतं कुरु कुरु स्वाहा ह्रीं सः ॥

मन्त्रं द्वादशसाहस्रं पुरश्चर्यां समाचरेत् ॥ ६३ ॥

मूलं नालं फलं पुष्पं पत्रं पञ्चाङ्गमीरितम् ।
स पञ्चाङ्गं हरेन्मुण्डीं सम्यक्छीतेन वारिणा ॥ ६४ ॥

प्रक्षाल्य शोषयेत्तां च छायायां चूर्णयेत्ततः ।
वस्त्रेण शोधयेत्कुम्भे नूतने स्थापयेत्क्रमात् ॥ ६५ ॥

विशुद्धदेहस्तच्चूर्णं कर्षं गोपयसा सह ।
पिबेज्जीर्णे च भैषज्ये घृतमादौ पिबेन्नरः ॥ ६६ ॥

ततो भुञ्जीत लवणतैलाम्लादिविवर्जितम् ।
घृतपक्वं समधुरं षष्टिकान्नं पयोऽधिकम् ॥ ६७ ॥

षण्मासाज्जायते सिद्धिस्त्वचं सर्प इव त्यजेत् ।
पलितादिविनिर्मुक्तो दिव्यदृष्टिर्दृढं वपुः ॥ ६८ ॥

मत्तनागबलो धीरो युवा कन्दर्पविग्रहः ।
संवत्सरात्सर्वसिद्धिर्भवेद्ब्रह्मायुषो नरः ॥ ६९ ॥

घृतोपयुक्ता सा मुण्डी पूर्ववत्फलदा भवेत् ।

### ४. देवदालीकल्पः ॥

अथ वक्ष्याम्यहं देवि ! देवदालीरसायनम् ॥ ७० ॥

श्वेता कृष्णा च पीता च देवदाली त्रिधा मता ।
श्वेता रोगप्रशमनी कृष्णा पीता विशेषतः ॥ ७१ ॥

रसायने च फलदा लोहकर्मणि पार्वति ! ।
चन्द्रसूर्योपरागेषु पूर्णिमायां सुरार्चिते ! ॥ ७२ ॥

त्रयोदश्यां कृष्णपक्षे पञ्चम्यां वा यथाविधि ।
शुभाहे शुभनक्षत्रे चाहरेन्मन्त्रपूर्वकम् ॥ ७३ ॥

ॐ अमृतगणरुद्रगणान्ताय स्वाहा ।

अष्टोत्तरशतं जप्त्वा बलिपूर्वं समाहरेत् ।

ॐ नमो भगवते रुद्राय फट् स्वाहा ॥

साधकस्य शिखाबन्धनमन्त्रः ।

देवदाल्याश्च पञ्चाङ्गं छायायां शोषयेत्सुधीः ॥ ७४ ॥

वस्त्रेण शोधयेत्सम्यग्गव्यक्षीरेण भक्षयेत् ।
पचेत्तां लोहपात्रेण ततो मन्दाग्निना सुधीः ॥ ७५ ॥

मध्वाज्याभ्यां लिहेत्कर्षं शुद्धात्मा सप्तवासरम् ।
तस्य दिव्या भवेत्प्रज्ञा रोगहृन्माससेवया ॥ ७६ ॥

द्विमासभक्षणेनैव निध्यादिं पश्यति ध्रुवम् ।
धात्रीफलरसं क्षौद्रं देवदालीरसं घृतम् ॥ ७७ ॥

प्रत्येकं कर्षमात्रं स्यात्प्रत्यहं च पिबेल्लघु ।
एकविंशद्दिनादूर्ध्वं मेधावी श्रुतधारकः ॥ ७८ ॥

पञ्चाङ्गं चूर्णयेद्देवदाल्या वस्त्रेण शोधयेत् ।
शिवाम्बुना वा पयसा गोमूत्रैर्वा पिबेत्सदा ॥ ७९ ॥

पूर्ववत्सिद्धिदा सा स्यात्सर्वकुष्ठापहारिणी ।
कामिलाप्लीहपवनशूलं हन्ति भगन्दरान् ॥ ८० ॥

तद्रसो गन्धकोपेतो सर्वलोहं विलापयेत् ।
बध्नाति च रसं सम्यक् समं मूर्च्छति तत्क्षणात् ॥

गन्धर्वलज्जागान्धारीदेवदालीरसस्तथा ।
लेपनं मेषतैलेन स्तम्भयेदग्निमुज्ज्वलम् ॥ ८२ ॥

बीजानि देवदाल्याश्च सगुडानि च मर्दयेत् ।
तेन वर्तिं प्रकुर्वीत अर्शोघ्नी स्याद्गुदाङ्कुरे ॥ ८३ ॥

रसेन देवदाल्याश्च नयनं त्वञ्जयेन्नरः ।
पश्यत्यसौ भूतजालं तस्मै सर्वं प्रयच्छति ॥ ८४ ॥

घृतं धात्रीफलरसं देवदालीरसं मधु ।
रसं च लक्ष्मणायाश्च सर्वमेकपलं पिबेत् ॥ ८५ ॥

त्रिदिनं ऋतुकाले तु स्त्रीणां पुत्रप्रदायकम ।
देवदालीरसं क्षीरं मध्वाज्याभ्यां समं लिहेत् ॥ ८६ ॥

पुंसां कोमलबीजानां बीजं गर्भप्रदं भवेत् ।
भृङ्गगड् वाकुची वह्निस्सर्पाक्षी देवदालिकम् ॥ ८७ ॥

शिवांबुना चानुदिनं पिबेत्कर्षं महेश्वरि ! ।
धरित्र्याः पश्यति छिद्रं वर्षान्मृत्युं जरां जयेत् ॥८८॥

पुनर्नवादेवदाल्योः पलं क्षीरयुतं पिबेत् ।
शिवाम्बुना देवदालीं ससर्पाक्षीपलं पिबेत् ॥ ८९ ॥

पूर्ववज्जायते सिद्धिः शीघ्रमेव वरानने ! ।
शिवांबुना देवदाल्या निर्गुण्ड्याश्च पलं पिबेत् ! ॥

संवत्सराज्जरां हन्याज्जीवेदाचन्द्रतारकम् ।
" ॐ अमृतं कुरु कुरु अमृतेश्वराय स्वाहा "

एतन्मन्त्रं जपेदादौ देवदाल्युपयोगके ॥ ९१ ॥

### ५. श्वेतार्ककल्पः ॥

[श्वेतार्कमूलकल्पः।]

अथ श्वेतार्कमूलस्य कल्पं वक्ष्याम्यहं शृणु।
श्वेतार्कमूलं पुष्यार्के गृहीत्वा काष्ठवर्जितम् ॥ ९२ ॥

शुद्धां त्वचं च छायायां शोषयेत्पटशोधितम्।
चूर्णं कृत्वा कर्षमेकं सेव्यं गोपयसा सह ॥ ९३ ॥

पलद्वयेन षण्मासात्सर्वव्याधीञ्जरां हरेत्।
संवत्सराद्ब्रह्मदिनत्रयं जीवेन्न संशयः ॥ ९४ ॥

[श्वेतार्कपर्णकल्पः।]

श्वेतार्कपर्णस्वरसं भृङ्गराजरसं समम्।
एकीकृत्यातपे शोष्यं यावच्चूर्णत्वमाप्नुयात् ॥ ९५ ॥

चतुर्गुणे गवां क्षीरे तत्पचेन्मृदुवह्निना।
यावत्पिण्डं भवेत्तावत्सेव्यं तत्कर्षमात्रकम् ॥ ९६ ॥

गवां क्षीरं पलं पेयं पूर्ववत्फलमाप्नुयात्।
"ॐ आं हंसमालिनि स्वाहा" अयं भक्षण मन्त्रः ॥

### ६. हस्तिकर्णीकल्पः ॥

[हस्तिकर्णीपत्रकल्पः]

अथेन्दुवारसंयुक्तत्रयोदश्यां समाहरेत् ॥ ९७ ॥

हस्तिकर्णीपलाशानि छायाशुष्काणि चूर्णयेत्।
पलं सेव्यं गवां क्षीरं वर्षान्मृत्युं जरां जयेत् ॥ ९८ ॥

जीवेद्ब्रह्मायुषं मर्त्यस्सिद्धसाध्यादिसेवितः।

एषां समांशं संयोज्य निर्गुण्डीमूलचूर्णतः ॥ ११७ ॥

क्षौद्राज्याभ्यां लिहेद्धस्तादन्वहं पलमात्रकम् ।
आयुर्विरिञ्चित्रिदिनं भवेन्मृत्युजरोज्झितम् ॥ ११८ ॥

निर्गुण्डीमूलचूर्णं तु क्रिमिघ्नकटुकैस्समम् ।
पलमात्रमजाक्षीरैर्नित्यं शुद्धः पिबेद्बुधः ॥ ११९ ॥

वलीपलितनिर्मुक्तो निर्गदस्स्यात्त्रिमासतः ।

[निर्गुण्डीपत्रकल्पः ।]

निर्गुण्डीपत्रजद्रावं भाण्डे मृद्वग्निना पचेत् ॥ १२० ॥

गुडवत्पाकमापन्नं तं पिबेन्निष्कमालकम् ।
दिने दिने निष्कवृद्धिर्यावद्द्विपलिकं भवेत् ॥ १२१ ॥

तेनवान्तिर्विरेकस्स्यान्निर्यान्ति क्रिमयः परम् ।
अपानतो देहगता मुखनासाक्षिकर्णतः ॥ १२२ ॥

क्षयकुष्ठादिरोगाश्च नश्यन्ति मुनिवासरात् ।
मासत्रये जरां हन्ति जीवेद्वर्षशतत्रयम् ॥ १२३ ॥

[निर्गुण्डीपञ्चाङ्गकल्पः ।]

पञ्चाङ्गचूर्णं निर्गुण्ड्यास्तिलतैलेन सेवितम् ।
निष्कादिपलपर्यन्तं त्रिमासेन जरां जयेत् ॥ १२४ ॥

अशीतिं वातजान्रोगान् कुष्ठानपि गलामयान् ।
आस्यार्त्युपकुशादींश्च जयेत्तत्पर्णचर्वणात् ॥ १२५ ॥

सिन्धुवारकपञ्चाङ्गचूर्णं मधुघृतप्लुतम् ।
पलमात्रं लिहेत्प्रातस्ततो जीर्णे गवां पयः ॥ १२६ ॥

पिबेद्यथाऽनलबलं भुञ्जीताग्नौ क्रमेण च ।
निर्वाते निवसेद्धीमान्सिद्धिमाप्नोति वत्सरात् ॥ १२७ ॥

सिद्धदेहस्य मूत्रेण म्रियेते विषपारदौ ।
काले काले यथा प्राप्तं पञ्चाङ्गं सिन्धुवारकात् ॥

छायायां शोषितं चूर्णं त्रिमधुत्रिफलायुतम् ।
स्निग्धभाण्डे धान्यराशौ त्रिमासं स्थापयेत्ततः ॥१२९॥

निष्कादिपलपर्यन्तं सेवेताकर्षकं सुधीः ।
सर्वव्याधिविनिर्मुक्तो जरामरणवर्जितः ॥ १३० ॥

"ॐ नमो मायागणपतये कुबेराय स्वाहा"
अयं भक्षणमन्त्रः ॥

### ९. शुनकशाल्मलीकल्पः ॥

अथ वक्ष्यामि देवेशि ! कल्पं शुनकशाल्मलेः ।
अष्टम्यां कृष्णपक्षस्य स्नात्वा रात्रौ समाहितः ॥१३१॥

आवेष्ट्य कृष्णसूत्रैश्च वृक्षं शुनकशाल्मलिम् ।
तत्राघोरं जपेद्धीरस्सहस्रवसुसंमितम् ॥ १३२ ॥

[शुनकशाल्मलीमूलकल्पः ।]

तन्मूलवल्कलं ग्राह्य छायायां शोषयेत्ततः ।
चूर्णं कृत्वा तु मध्वाज्यैः खादेत्प्रातः पलं पलम् ।

वर्षाद्वलिजरामुक्तस्स जीवेद्ब्रह्मणो दिनम् ।

[शुनकशाल्मलीपुष्पकल्पः ।]

तस्याष्टादश पुष्पाणि गोक्षीरेऽष्टपले पचेत् ॥ १३४ ॥

पुष्पवर्ज्यं पिबेत्क्षीरमेवं च प्रतिवासरम् ।
मासेन दिव्यदेहस्स्याज्जीवेद्ब्रह्मदिनत्रयम् ॥ १३५ ॥

[शुनकशाल्मलीफलकल्पः ।]

तत्फलं तु गवां क्षीरे पाचयेत्कान्तपात्रके ।
फलं त्यक्त्वा पिबेत्क्षीरं दीप्तेऽग्नौ क्षीरभोजनम् ॥

कर्षं जलेन वाऽऽज्येन मधुना वा फलं निशि ।
वर्धयेज्जाठरं वह्निमिन्द्रियाणां प्रसादकृत् ॥ १५८ ॥

धात्रीचूर्णं लोहभस्म क्षौद्राज्यालुलितं लिहेत् ।
वलीपलितमृत्युघ्नं वत्सरात्पूर्ववद्विधिः ॥ १५९ ॥

क्षीरपक्वं च तद्भक्ष्यं पूर्ववत्सिद्धिदायकः ।
धात्रीचूर्णं भृङ्गचूर्णं मध्वाज्यसहितं लिहेत् ॥ १६० ॥

वलीपलितनिर्मुक्तो वत्सराद्भवति ध्रुवम् ।
निंबामलकयोश्चूर्णं मध्वाज्यसहितं लिहेत् ॥ १६१ ॥

पूर्ववच्च फलं देवि ! नात्र कार्या विचारणा ।

### १२. त्रिफलाकल्पः ॥

अथ ब्रवीमि ते देवि ! त्रिफलाया रसायनम् ॥१६२॥

एकं हरीतकीभागं द्विभागं च विभीतकम् ।
चतुर्भागं तथा धात्री सर्वमेकत्र चूर्णयेत् ॥ १६३ ॥

पिप्पल्या वा तुगाक्षीर्या सैन्धवैर्मधुकेन वा ।
क्षौद्रेण वा सर्पिषा वा वचया सितयाऽथवा ॥ १६४ ॥

सुवर्णै रजतैश्शुल्बैर्वङ्गैर्नागैस्तथाऽऽयसैः ।
संयुक्ता त्रिफला लीढा जरामरणनाशिनी ॥ १६५ ॥

त्रिफलायास्समांशास्तु योज्याश्चैकैकशस्तु ताः ।
पिप्पल्याद्यास्तु सौवर्णभस्मादीनां च कथ्यते ॥ १६६ ॥

सौवर्णं पणमात्रं च द्विपणं राजतं भवेत् ।
पणार्धं शुल्बचूर्णं च द्विपणं नागवङ्गजम् ॥ १६७ ॥

चूर्णं तथाऽऽयसं प्रोक्तं पणपञ्चकमात्रकम् ।
एवं यस्त्रिफलासेवी जीवेदाचन्द्रतारकम् ॥ १६८ ॥

एकां हरीतकीं प्रातर्भुक्तेः प्राग् द्विविभीतकम् ।
चतुरामलकं रात्रौ सर्वे ते घृतपाचिताः ॥ १६९ ॥

सेवेतावत्सरं धीमान् वलीपलितवर्जितः ।
अन्नोदकेन संपेष्य कान्तपात्रे लिहेन्निशि ॥ १७० ॥

सक्षौद्रं तल्लिहेत्प्रातरायुरारोग्यवर्धनम् ।
त्रिफलां भावयेत्पूर्वं खदिरासनयूषतः ॥ १७१ ॥

त्रिस्सप्तवारं देवेशि! ततः क्षौद्रघृताप्लुताम् ।
सेवेतानुदिनं कर्षं वर्षादिन्द्रायुषो भवेत् ॥ १७२ ॥

विडङ्गभृङ्गखदिरब्रह्मवृक्षरसैः पृथक् ।
पृथक्सप्तदिनं घर्मे भावयेत्त्रिफलां प्रिये! ॥ १७३ ॥

भक्षयेद्गुडसर्पिर्भ्यां कर्षं वर्षात्सुरोपमः ।
त्रिफलायाश्शतफलं चूर्णं भृङ्गरसैः पुरा ॥ १७४ ॥

त्रिस्सप्तवासरं भाव्यं लिहेन्मधुघृतान्वितम् ।
पलार्धं प्रत्यहं प्रातर्जीर्णेऽद्याद्दधिभक्तकम् ॥ १७५ ॥

वर्षात्प्रसन्नदृष्टिश्च जीवेत्षट्छतवत्सरम् ।
महाबलः कृष्णकेशस्स्मृतिबुद्धिसमन्वितः ॥ १७६ ॥

युवा शतस्त्रीरन्ता च धीरस्स सुभगो भवेत् ।

## १३. शुण्ठीकल्पः ॥

अथ वक्ष्यामि गिरिजे! दिव्यं शुण्ठीरसायनम् ॥

श्रेष्ठं नागरमादाय चूर्णयेत्पटगालितम् ।
गुडं चास्य समं योज्यं मधुना गोघृतेन च ॥ १७८ ॥

स्निग्धभाण्डे विनिक्षिप्य धान्यराशौ सुयन्त्रितम् ।
द्विमण्डलात्समाहृत्य शुद्धाङ्गः पुण्यवासरे ॥ १७९ ॥

कर्षं कर्षं लिहेन्नित्यं सप्ताहाद्रोगवर्जितः ।
षण्मासमुपभुञ्जानो जीवेद्वर्षशतद्वयम् ॥ १८० ॥

बुद्ध्या वाचस्पतिसमः पुराणागमशास्त्रवित् ।
मयाऽनुभूतं देवेशि ! कथितं तव सौहृदात् ॥ १८१ ॥

## १४. पिप्पलीकल्पः ॥

अथ प्रिये ! प्रवक्ष्यामि पिप्पलीनां रसायनम् ।
पिप्पलीं शोधयेत्पूर्वं किंशुकक्षारवारिणा ॥ १८२ ॥

सप्तधा च ततः कुर्यात्तासां च घृतभर्जनम् ।
ततस्सेवेत शुद्धाङ्गः पञ्चाष्टौ दश सप्तधा ॥ १८३ ॥

वर्षमेकं तु मध्वाज्यै रोगास्तस्य न सन्ति च ।
वलीपलितनिर्मुक्तो जीवेच्च शरदश्शतम् ॥ १८४ ॥

प्रातः प्राग्भोजनात्पश्चाद्भक्षयेत्त्रित्रिपिप्पलीः ।
वर्षाद्व्याधिं जरां हन्ति शतायुष्यमवाप्नुयात् ॥ १८५ ॥

एकद्वित्रिक्रमेणैव वर्धयेद्दशवासरम् ।
ह्रासयेत्पिप्पलीस्तद्वद्ध्रासवृद्धी पुनः पुनः ॥ १८६ ॥

गोक्षीरेण युतं यावत्पिप्पलीनां सहस्रकम् ।
तावत्सेवेत शुद्धाङ्गो जरारोगविवर्जितः ॥ १८७ ॥

अजाक्षीरेण संपेष्य पिबेद्युक्ता बलाधिका ।
क्षीरशृता मध्यफला पूर्ववद्ध्रासवृद्धयः ॥ १८८ ॥

यावत्सहस्रद्वितयं तावत्सेव्यं रसायनम् ।
कासश्वासक्षयाः पाण्डुप्लीहशोणितमारुताः ॥ १८९ ॥

मेहार्शोग्रहणीशोफहिध्मवमिगलग्रहाः ।
रसायनेन पिप्पल्या नश्यन्ति विषमज्वराः ॥ १९० ॥

जीवेद्वर्षशतं पूर्णं वलीपलितवर्जितः।

## १५. चित्रककल्पः॥

अथ चित्रककल्पं ते वक्ष्यामि शृणु पार्वति! ॥१९१॥

चित्रकस्त्रिविधो ज्ञेयः कृष्णो रक्तस्सितश्शिवे!।
कृष्णो रसायने रक्तो लोहे रोगे सितो भवेत् ॥१९२॥

श्रेष्ठमध्यकनीयांसो न हेमन्ते समाहरेत्।
वसन्ते कृष्णपञ्चम्यां कृष्णाम्बरधरश्शुचिः॥ १९३ ॥

कृष्णगन्धाक्षतैः पुष्पैः पूजयेत्कृष्णसूत्रकैः।
परिवेष्ट्य च पूर्वेद्युर्दद्यात्कृष्णोदनं बलिम् ॥ १९४ ॥

प्रातर्मौनी खनेच्छुद्धस्समूलं चित्रकं हरेत्।
न गोघ्रातं पदा स्पृष्टं शुचौ देशे विनिक्षिपेत् ॥१९५॥

क्षिप्तं क्षीरान्तरे कृष्णं वह्नौ क्षीरं तु कृष्णति।
रक्तचित्रं परीक्ष्यैवं क्षीरं रक्तत्वमाप्नुयात् ॥ १९६ ॥

एवं च रक्तचित्रस्य रक्तपुष्पाक्षतादिभिः।
कृष्णं वा लोहितं वाऽपि समूलमपि खण्डयेत् ॥१९७॥

सप्तधाऽऽमलकांभोभिर्भावयेच्छोषयेत्क्रमात्।
सञ्चूर्ण्य तार्क्षीताळत्वक्चित्रकत्रिफलास्समाः ॥१९८॥

एषां समं चाग्निचूर्णं सर्वं भाण्डे नवे क्षिपेत्।
ततश्शुद्धश्शुभदिने निष्कं निष्कं घृताप्लुतम ॥१९९॥

भक्षयेन्मासमात्रेण व्रणकुष्ठादिकृन्तनम्।
दन्तकेशनखा यान्ति पतनं च पुनर्भवम् ॥ २०० ॥

वलीपलितनिर्मुक्तो जीवेच्च शरदश्शतम्।
एवं च रक्तचित्रस्य योजना च फलं तथा ॥ २०१ ॥

### १६. भल्लातकीकल्पः ॥

अथ भल्लातकीकल्पं शृणु वक्ष्यामि पार्वति ! ।
पक्वं नवं सुतीक्ष्णं च भल्लातकफलं हरेत् ॥ २०२ ॥

गोक्षीरे फलमेकं तु सूचीभिन्नं पचेत्सुधीः ।
मध्वाज्यशर्करायुक्तं फलं त्यक्त्वा पयः पिबेत् ॥२०३॥

एकद्वित्रिक्रमेणैवं वर्धयेदेकविंशतिम् ।
फलानि च दिनान्येकविंशतिः क्रमशः प्रिये ! ॥२०४॥

सर्वे रोगा विनश्यन्ति षण्मासाद्दिव्यविग्रहः ।

### १७. भूमिकदम्बकल्पः ॥

अथ भूमिकदम्बस्य कल्पं वक्ष्यामि पार्वति ! ॥२०५॥

त्रिविधस्स तु विज्ञेयश्श्वेतो रक्तश्च मेचकः ।
शुक्लपक्षे च पुष्यार्के विधिवत्तं समाहरेत् ॥ २०६ ॥

समूलं शोषयेत्तं च छायायां चूर्णयेत्ततः ।
तच्चूर्णं कर्षमाज्येन लिहेच्छुद्धवपुः प्रिये ! ॥ २०७ ॥

तस्मिञ्जीर्णे प्रकुर्वीत क्षीरान्नं विजितेन्द्रियः ।
नश्यन्ति वलयस्तस्य षण्मासात्पलितानि च ॥ २०८ ॥

संवत्सरप्रयोगेण जीवेद्वर्षशतत्रयम् ।

### १८. पुनर्नवाकल्पः ॥

दिव्यं पुनर्नवाकल्पं वक्ष्यामि शृणु पार्वति ! ॥ २०९ ॥

पुनर्नवाख्या द्विविधा लोहिता धवला तथा ।
रसे रसायने श्वेता रोगे रक्ता प्रशस्यते ॥ २१० ॥

पुष्यार्के श्वेतशोफघ्नीं समूलामाहरेत्सुधीः ।
छायाशुष्कं चूर्णयित्वा गोक्षीरेण पलार्धकम् ॥ २११ ॥

पलं वाऽथ पिबेत्प्रातश्शुद्धाङ्गो वत्सरावधि ।
युवा भवति वृद्धोऽपि स जीवेच्छरदश्शतम् ॥ २१२ ॥

गोक्षीरेण च तन्मूलं क्षीरक्षीणं पचेत्प्रिये ! ।
चूर्णीकृत्य च तन्मूलं पक्वीकृतगुडे समम् ॥ २१३ ॥

गोघृतं च क्षिपेत्तत्र त्वेकीकृत्यावतारयेत् ।
पलं चानुदिनं लेह्यं क्षीरान्नाशी जितेन्द्रियः ॥ २१४ ॥

संवत्सरप्रयोगेण वलीपलितवर्जितः ।
तत्सेवकस्य नश्यन्ति विषाणि विविधानि च ॥२१५॥

त्वग्दोषः कफपाण्ड्वाद्या औदरा गुल्मपायुजाः ।
नश्यन्ति सकला रोगाश्छर्दिहिक्काक्षिकर्णजाः ॥

पुष्पितां फलितां पक्वामादाय च पुनर्नवाम् ।
खण्डितां नागरक्वाथसुस्विन्नां क्षीरपेषिताम् ॥ २१७ ॥

पिबेद्दिवा च चूर्णान्ते निशि क्षीरघृताशनः ।
षण्मासात्सिद्धिमाप्नोति योषिच्छतरतो भवेत् ॥२१८॥

## १९. भृङ्गराजकल्पः॥

अथ श्रीभृङ्गराजस्य कल्पं वच्मि महेश्वरि ! ।
समूलं तच्च पुष्यार्के समाहृत्याथ शोषयेत् ॥ २१९ ॥

छायायां चूर्णितं कृत्वा कर्षं सौवीरलोडितम् ।
प्रातः पिबेच्छुद्धदेहो मासाद्रोगान्व्यपोहति ॥ २२० ॥

ततष्षण्मासयोगेन वलीपलितखण्डनम् ।
घृतक्षीराशनो नित्यं जीवेद्वर्षशतत्रयम् ॥ २२१ ॥

युक्तः कृष्णतिलैरर्धैर्भृङ्गराजस्य पल्लवम् ।
उपयुञ्जीत षण्मासं वलीपलितकृन्तनम् ॥ २२२ ॥

भृङ्गराजफलं पुष्पं पत्रं मूलं च चूर्णयेत् ।
एतच्चूर्णस्य सदृशांश्चित्राद्यान्परिकल्पयेत् ॥ २२३ ॥

चित्रविश्वकणाबिल्वपथ्याधात्रीविडङ्गकम् ।
मरीचं व्याधिघातं च चक्रमर्दस्य बीजकम् ॥ २२४ ॥

लोध्रसर्षपराज्यश्च चूर्णिताश्च समाहृताः ।
एकीकृत्यैव भृङ्गस्य रसेन परिभावयेत् ॥ २२५ ॥

सप्तधा च ततस्सर्वं चूर्णीकृत्य पुनः प्रिये ! ।
कर्षं गोपयसा सार्धं शुद्धकोष्ठो लिहेत्प्रिये ! ॥२२६॥

षण्मासाज्जायते सिद्धिर्वलीपलितवर्जितः ।
पूर्वोक्तवद्विधिः प्रोक्तस्स्वर्णभृङ्गस्य पार्वति ! ॥ २२७ ॥

" ॐ नमो भगवते रुद्राय तिष्ठ तिष्ठ संगृह्याण स्वाहा ॥"
अयं ग्रहणमन्त्रः ॥

" ॐ नमो रुद्राय अमृतात्मने स्वाहा "
अयं आलोडनमन्त्रः ॥

ॐ उत्तिष्ठोत्तिष्ठ कल्याणि स्वाहा " ॥
अयं भक्षणमन्त्रः ॥

## २०. कुमारीकल्पः ॥

अथ वक्ष्याम्यहं देवि ! कुमारीकल्पमुत्तमम् ।
नदीतीरेऽथवा ग्रामे नगरेऽब्धितटेऽथवा ॥ २२८ ॥

मृदुकर्णकपत्राणि पीतान्यहिसमानि च ।
प्रवालसमपुष्पाणि सक्लेदहरितानि च ॥ २२९ ॥

यस्याः पत्राणि तिष्ठन्ति सा कुमारीति कथ्यते ।
शुचिः पुण्यदिने कन्यां सोपवासस्समाहरेत् ॥ २३० ॥

अर्चयित्वा बलिं दत्वा कुमारीं सिद्धिदायिनीम् ।

शुद्धकोष्ठः प्रगे खादेच्चतुरङ्गुलमात्रतः ॥ २३१ ॥

एवं मासं ततः खाद्यं यथा वृद्धिश्शनैश्शनैः ।
अत्यन्तं वर्जयेन्मध्यं खाद्यं भवति सर्वदा ॥ २३२ ॥

स्वशक्त्यनुगुणं सेव्यं स्वेच्छाहारविहारवान् ।
स्निग्धैर्मांसरसक्षीरैर्युक्त्या सेव्या कुमारिका ॥ २३३ ॥

हरत्यखिलरोगांश्च राजयक्ष्मादिकान्प्रिये ! ।
किन्नरैस्सदृशं गायेद्गृध्रदृष्टिर्महाबलः ॥ २३४ ॥

स्निग्धकेशश्च मतिमान्बालादित्यसमप्रभः ।
दशनागबलोपेतस्समीरसदृशो गतौ ॥ २३५ ॥

वलीपलितनिर्मुक्तो षोडशाब्दवया भवेत् ।
एवं वर्षप्रयोगेण भवत्येतैर्गुणैर्युतः ॥ २३६ ॥

यस्तु द्वादशवर्षान्तं सेवेत स सुरासुरैः ।
महोरगैरवध्यश्च त्रिंशन्नागबलान्वितः ॥ २३७ ॥

मयूरदृष्टिस्सर्वज्ञस्सर्वशास्त्रविशारदः ।
विद्याधरो भवेन्मर्त्यो नात्र कार्या विचारणा ॥ २३८ ॥

कुमार्या दलमादाय हस्तर्क्षे साधकेऽहनि ।
प्रातः प्रत्यहमास्वाद्य शुचिरग्निबलं यथा ॥ २३९ ॥

तन्मज्जां वा लिहेद्यस्तु मध्वाज्यव्योषसंयुताम् ।
मासं सेवेत नियमात्सर्वरोगैः प्रमुच्यते ॥ २४० ॥

षण्मासमुपयुञ्जानो वलीपलितवर्जितः ।
तस्याः क्लेदं समानीय व्योषक्षौद्राज्यसंयुतम् ॥ २४१ ॥

स्विन्नं मृद्वग्निना सेव्यं क्षीराहारो जितेन्द्रियः ।
मासाद्रोगा विनश्यन्ति द्विमासादृढविग्रहः ॥ २४२ ॥

दिव्यदृष्टिश्च तेजस्वी द्विमासाद्विषहृद्भवेत् ।
षण्मासयोगाद्वृद्धोऽपि युवा स्यात्सत्यमीश्वरि ! ॥ २४३ ॥

एवं वर्षोपयोगेन जीवेद्द्विशतवत्सरम् ।
तस्या दलं युगैस्सार्धं भक्षयेच्छुद्धकोष्ठवान् ॥ २४४ ॥

वलीपलितनाशस्स्याद्वत्सरान्नात्र संशयः ।

## २१. नीलीकल्पः ॥

अथ देवि ! प्रवक्ष्यामि महानीलीरसायनम् ॥ २४५ ॥

पुष्यार्के शुचिरादद्यान्महानीलीं विधानतः ।
मूलपुष्पफलोपेतां छायायां शोषयेत्प्रिये ! ॥ २४६ ॥

पटचूर्णं द्विनिष्कं स्यान्निष्कमभ्रं च योजयेत् ।
सर्वं च मधुनाऽऽलोड्य स्निग्धभाण्डे विनिक्षिपेत् ॥

धान्यराशौ न्यसेन्मासं उद्धृत्य च ततः प्रिये ! ।
शुद्धकोष्ठो लिहेत्प्रातर्बिडालपदमात्रकम् ॥ २४८ ॥

षण्मासाज्जायते मर्त्यो वलीपलितवर्जितः ।
महानीलीं च कृष्णाभ्रं मुसलीममृतालताम् ॥ २४९ ॥

समांशं चूर्णितान्कृत्वा मधुना कर्षमालिहेत् ।
एवं वर्षोपयोगेन जीर्णोऽपि तरुणायते ॥ २५० ॥

बलवान्मतिमान्धीरो जीवेद्वर्षशतद्वयम् ।
अभ्रकं च कुमारीं च काकजङ्घां शतावरीम् ॥ २५१ ॥

एतत्समां महानीलीं चूर्णयेत्स्निग्धभाण्डके ।
मधुना सहितं सप्तराज्यन्ते च समुद्धरेत् ॥ २५२ ॥

कर्षं लिहेत्क्षीरभोजी वर्षाद्वलिजरां जयेत् ।

## २२. मुसलीकल्पः ॥

अथ ब्रवीमि देवेशि ! मुसलीकल्पमुत्तमम् ॥ २५३ ॥

स्वर्णपुष्पी च खर्जूरपल्लवत्पत्रशोभिता ।
अन्तश्श्वेता च नाराचमूला सा मुसली स्मृता ॥२५४॥

तन्मूलं च समुद्धृत्य छायाशुष्कं च चूर्णयेत् ।
कर्षं मध्वाज्यलुलितं प्रातश्शुद्धतनुर्लिहेत् ॥ २५५ ॥

जीर्णे दुग्धान्नभोजी स्याद्रूक्षान्नं वर्जयेत्प्रिये !
षष्ठे मासि भवेद्बालो वृद्धोऽपि बलबुद्धिमान् ॥ २५६ ॥

पयसा मुसलीचूर्णं दध्ना वाऽपि पिबेच्छुचिः ।
वर्षाद्यौवनमाप्नोति शतस्त्रीगमने पटुः ॥ २५७ ॥

## २३. इन्द्रवल्लीकल्पः ॥

अथेन्द्रवल्लीकल्पं च व्याख्यामि शृणु पार्वति ! ।
मयोदिता सुरेन्द्रस्य दैत्यानां विजयाय च ॥ २५८ ॥

तदा प्रभृति लोकेषु ख्याता सा चेन्द्रवल्लिका ।
तामिमां भजतां पुंसां देहसिद्धिर्भवेद्ध्रुवम् ॥ २५९ ॥

समूलां तां समुद्धृत्य छायाशुष्कां विचूर्णयेत् ।
तच्चूर्णं द्वादशपलं वचाचूर्णं च तत्समम् ॥ २६० ॥

व्रणघ्नीचूर्णमेतस्य समांशं त्रिकटूद्भवम् ।
षट्पलं सर्वमेकत्र कृत्वा भाण्डे विनिक्षिपेत् ॥ २६१ ॥

कर्षं कर्षं मधुयुतं प्रातः प्रातर्लिहेत्सदा ।
षण्मासात्सर्वरोगघ्नं वत्सराद्देहसिद्धिदम् ॥ २६२ ॥

भूयो भूयश्च षण्मासान्नवं चूर्णं प्रकल्पयेत् ।

## २४. ज्योतिर्द्रुमकल्पः ॥

अथ ज्योतिर्द्रुमस्यापि पञ्चाङ्गान्याहरेत्प्रिये ! ॥ २६३ ॥

त्रिस्सप्तरात्रं सक्षौद्राण्याश्रयेद्धान्यराशिके ।
भक्षयेद्रोगनिर्मुक्तस्तेजस्वी देहसिद्धिभाक् ॥ २६४ ॥

## २५. अश्वगन्धाकल्पः ॥

अथाश्वगन्धाकन्दं च पौत्रीकोरण्टयोस्समम् ।
चूर्णितं मधुसर्पिर्भ्यां कर्षं प्रातर्लिहेच्छुचिः ॥ २६५ ॥

संवत्सरप्रयोगेण त्रिशतायुर्भवेन्नरः ।

## २६. ज्योतिष्मतीकल्पः ॥

अथ ज्योतिष्मतीकल्पं वक्ष्यामि शृणु पार्वति ! ॥२६६॥

दिव्या ज्योतिष्मती वल्ली तप्तकाञ्चनसन्निभा ।
बहुप्रताना स्वर्णाभा फलबीजा शुभप्रदा ॥ २६७ ॥

आषाढे शुक्लपक्षे च शुभर्क्षे शुभवासरे ।
कुङ्कुमाक्तेन सूत्रेण तां वल्लीं परिवेष्टयेत् ॥ २६८ ॥

रक्तगन्धाक्षतैः पुष्पैरर्चयित्वा प्रणम्य च ।
रक्तमाल्याम्बरधरः कुङ्कुमागरुचर्चितः ॥ २६९ ॥

तांबूलचर्वणं कुर्वन्हृष्टो नियतमानसः ।
अभीष्टदेवतामन्त्रैस्तारामन्त्रेण वाऽर्चयेत् ॥ २७० ॥

अभीष्टदेवतां ध्यात्वा ततश्चोदङ्मुखः प्रिये ! ।
पक्वबीजानि गृह्णीयादातपे शोषयेत्ततः ॥ २७१ ॥

त्वग्वर्ज्यानि निधायादौ चूर्णितानि विशेषतः ।
तेभ्यस्तैलं समाहृत्य तत्तैलसदृशं पयः ॥ २७२ ॥

पादांशं मधु संयोज्य तैलशेषं पचेच्छनैः ।
तस्मिन्कर्पूरतक्कोलत्वग्जातीफलमेव च ॥ २७३ ॥

एतानि समभागानि चूर्णयित्वा च कोविदः।
तत्तैलं षोडशपलं तच्चूर्णं पलमात्रकम् ॥ २७४ ॥

एकीकृत्यावलोड्याथ स्नेहभाण्डे विनिक्षिपेत्।
त्रिस्सप्तवासरं धान्यराशौ भाण्डे विनिक्षिपेत् ॥ २७५ ॥

दशाहमथवा त्रिंशत्षष्टिर्वा नवतिस्तथा।
अधिकं वा यथायोगं पश्चात्तैलं समाहरेत् ॥ २७६ ॥

शुद्धकोष्ठश्शुभदिने कृतदेवद्विजार्चनः।
सूर्योदये पिबेद्धीरो बिन्दुवृद्ध्या क्रमात्प्रिये! ॥२७७॥

पलान्तं साधकस्तेन निस्संज्ञत्वमवाप्यते।
मन्दं मन्दं लब्धसंज्ञो मुहुः क्रन्दति नन्दति ॥ २७८ ॥

रोदित्येव मुहुः कृच्छ्राल्लब्धसंज्ञो भवेन्नरः।
गोक्षीरं पाययेत्पश्चात्सक्षौद्रं श्रान्तचेतसे ॥ २७९ ॥

क्रमादेवं भवेत्स्वस्थस्साधकोऽसौ न संशयः।
षष्टिकान्नं सगोक्षीरं तैले जीर्णे च भोजनम् ॥ २८० ॥

एवं कुर्यात्प्रतिदिनं मासमेकं निरन्तरम्।
मासात्सूर्यसमस्साक्षात्तेजसा मन्त्रशास्त्रवित् ॥ २८१ ॥

साङ्गोपाङ्गश्रुतिं वेत्ति त्वनधीतोऽपि मानवः।
मध्याह्ने भास्करं पश्येत्पूर्णचन्द्रमिवापरम् ॥ २८२ ॥

वैनतेयसमा दृष्टिर्दिवा पश्यति तारकाः।
अन्नवज्जीर्यते क्ष्वेलं सुप्तोऽप्याकर्णयेद्ध्वनिम् ॥२८३॥

अष्टादशविधं कुष्ठं सर्वरोगान्विनाशयेत्।
फलं द्वितीयमासस्य शृणु वक्ष्यामि भैरवि! ॥ २८४ ॥

गन्धर्वोरगरक्षोभिस्सेव्यते तैलसेवकः।
महापातककर्तारो देवतापितृनिन्दकाः ॥ २८५ ॥

समयाचाररहितास्त एते मुक्तकिल्बिषाः ।
अमुष्य सेवया मुक्ताः प्रयान्ति परमां गतिम् ॥ २८६ ॥

फलं तृतीयमासस्य शृणु पार्वति ! वक्ष्यते ।
देवाश्च दिव्या ऋषयो वसवोऽष्टौ महोरगाः ॥ २८७ ॥

अमुष्य सेवां कुर्वन्ति प्रियं नित्यहितं तथा ।
तस्य मूत्रं ताम्रघटे पूरयित्वा खनेद्भुवम् ॥ २८८ ॥

तद्गर्ते विहितं कृत्वा षण्मासात्कनकं भवेत् ।
चतुर्थमासस्य फलं शर्वाणि ! शृणु सांप्रतम् ॥ २८९ ॥

अदृश्योऽसौ भवेन्मर्त्यस्सर्वैश्वर्ययुतो बली ।
दशब्रह्मदिनं जीवेत्सर्वलोकगतौ पटुः ॥ २९० ॥

तन्मूत्रमलघर्माबूद्वर्तनैस्ताम्रलेपनम् ।
कुर्याद्वह्नौ प्रतपनं तच्छुल्वं काञ्चनं भवेत् ॥ २९१ ॥

अथ पञ्चममासे तु सदेहः खेचरो भवेत् ।
साक्षाद्ब्रह्मा भवेद्देवि ! शृणु षाण्मासिकं फलम् ॥२९२॥

महासिद्धैः परिवृतः सर्वलोकान्यदृच्छया ।
विचरेच्छिवतुल्यस्स्यान्महातेजा महायशाः ॥ २९३ ॥

अथ सप्तममासस्य फलं कल्याणि ! वक्ष्यते ।
जितारिषड्वर्गमनाः सर्वभूतहिते रतः ॥ २९४ ॥

विष्ण्वायुष्यमवाप्नोति पुण्यापुण्यविवर्जितः ।
विचरेच्च महावीर्यश्श्रीमान्विष्णुरिवापरः ॥ २९५ ॥

अष्टमासफलं वच्मि शृणु त्वं सर्वमङ्गले ! ।
मत्प्रियो दिव्यकर्मा च सर्वज्ञो मुक्तिमाप्नुयात् ॥२९६॥

फलं नवममासस्य शृणु कात्यायनि प्रिये ! ।
द्वितीयचिन्तामणिवद्वीरोऽसौ कामरूपवान् ॥ २९७ ॥

ब्रह्मविष्ण्विन्द्रचन्द्राणां रूपं सृजति साधकः।
मनसा चिन्तितं यद्यत्तत्कर्तुं स्वयं प्रभुः ॥ २९८ ॥

एतद्रसायनं दिव्यं सुकरं मोक्षसाधनम्।
पुण्यं परमगुह्यं च गोपनीयं त्वया प्रिये! ॥ २९९ ॥

एतस्य सदृशं नास्ति देवानामपि दुर्लभम्।
बहुनाऽत्र किमुक्तेन त्वत्प्रियार्थं मयोदितम् ॥ ३०० ॥

रसायनमिदं दिव्यं न कुर्वन्ति च मानवाः।
अज्ञानोपहताः केचित्केचिन्नास्तीति शङ्कया ॥

अन्तरायेण केचिच्च तदलाभेन केचन।
तत्कल्पाज्ञानतः केचित्केचिद्गुरुविवर्जिताः ॥ ३०२ ॥

केचिद्रोगाकुला देवि! त्वित्थं तैरपि विघ्निताः।
यत्र ज्योतिष्मती वल्ली सा भूमिः पुण्यभूमिका ॥३०३॥

तत्रैव सर्वतीर्थानि सिद्धयो विविधा अपि।
ज्योतिष्मतीफलभवं सेव्यं दिव्यरसायनम् ॥ ३०४ ॥

## २७. गुग्गुलुकल्पः ॥

अथ गुग्गुलुकल्पं च शृणु त्वं चण्डिकेऽधुना।
चतुर्विधो गुग्गुलुस्स्यात्कुमुदः पद्मकस्तथा ॥ ३०५ ॥

महिषाक्षं च हेमाख्यस्तत्तद्वर्णसमुज्ज्वलः।
हेमाख्यं च मनुष्याणां रसायनमुदाहृतम् ॥ ३०६ ॥

कणशो गुग्गुलुं कृत्वा गोघृतेन शनैः पचेत्।
डोलायन्त्रे युक्तिपरो घृतभर्जितमांसवत् ॥ ३०७ ॥

पथ्याविभीतकौ धात्री गन्धकश्च पृथक्पृथक्।
समांशं तान्विचूर्ण्यैव एतत्सर्वसमं पुरम् ॥ ३०८ ॥

शुद्धकोष्ठो लिहेत्प्रातस्तैलं ह्येरण्डसंभवम् ।
लोलयित्वा निष्कमात्रं वृद्धिः कर्षावधिर्भवेत् ॥ ३०९ ॥

एवं वर्षप्रयोगेण शीतवातव्रणास्तथा ।
पिडकागण्डमालाद्या विनश्यन्ति महारुजः ॥ ३१० ॥

द्वादशाब्दप्रयोगेण वज्रकायो भवेन्नरः ।
यद्यद्द्रव्यं च सात्म्यं स्यात्तत्तद्द्रव्येण वा भजेत् ॥

यस्य यस्य च रोगस्य यद्यद्भेषजमीरितम् ।
तैस्तैस्सहैव सेवेत तत्तद्रोगहरं भवेत् ॥ ३१२ ॥

## २८. विजयाकल्पः ॥

### [विजयोत्पत्तिः ।]

श्रीभैरवी—

देवदेव जगन्नाथ सुरासुरनमस्कृत ! ।
पञ्चकृत्यप्रधानेश नमस्तुभ्यं परात्पर ! ॥ ३१३ ॥

सर्वेऽप्यौषधकल्पाश्च मत्प्रीत्या कथितास्त्वया ।
आश्चर्यं भूतदेवेश ! सद्यस्सिद्धिप्रदायकम् ॥ ३१४ ॥

सुखसेव्यं सुखकरं ज्ञानदं मुक्तिदं शुचिम् ।
अस्मत्सायुज्यदं ब्रूहि प्रीत्या मम रसायनम् ॥ ३१५ ॥

ततस्स्मितमुखो भूत्वा शङ्करो लोकशङ्करः ।

श्रीभैरवः—

देवि ! वक्ष्याम्यहं कल्पं स्पृहणीयं सुरासुरैः ॥ ३१६ ॥

सिद्धैश्च मुनिभिस्स्त्रीभिस्सर्ववर्णैश्च योगिभिः ।
बालैर्वृद्धैश्च रुग्णैश्च षण्डैश्च बहुयोषितैः ॥ ३१७ ॥

शृणु त्वममृतोद्भूतं सावधानेन चेतसा ।
आग्नेयो मामकोंऽशस्स्यात्सौम्यांशस्तावकः प्रिये ! ॥

अग्नीषोमात्मकं सर्वमौषधं जलधौ सुराः।
असुराः प्राक्षिपंश्चक्रुर्मथनं मन्दराद्रिणा ॥ ३१९ ॥

अतीव मथनात्तत्र देव्याग्नेयो ममांशकः।
ज्वलन्महाविषं घोरं जातं हालाहलाख्यकम् ॥ ३२० ॥

तेन व्याकुलिता म्लाना गतवेगास्सुरासुराः।
कृपया तन्मया सर्वं विषं च कबलीकृतम् ॥ ३२१ ॥

ततो देवा दितिसुता ममन्थुर्हृष्टमानसाः।
ततो लक्ष्मीप्रभृतयः प्रादुरासंस्ततोऽमृतम् ॥ ३२२ ॥

तदुद्भूतं परं दिव्यं जरामरणकृन्तनम्।
तदा तदा महाविष्णुर्मम हस्ताम्बुजेऽर्पयत् ॥ ३२३ ॥

त्रिवारं बिन्दवो दत्ताः परस्मै परमात्मने।
पराशक्तियुजे पश्चात्तुभ्यं दत्ते मया प्रिये! ॥ ३२४ ॥

पीतं त्वया च मे दत्तं मधुसूक्तमुदीर्य च।
स्वीकृतं च मया कान्ते! चिदानन्दात्मकामृतम् ॥

सान्द्रानन्देन च मया स्फूत्कृतिर्लज्जया कृता।
पतिता बिन्दवस्सूक्ष्मास्तेभ्यो जाता महौषधिः ॥

तामालोक्य शुभां दिव्यां मुदिताः पर्यपालयन्।
मत्करांबुजनीतेन पीयूषेण विवर्धितम् ॥ ३२७ ॥

तस्मात्त्रिशूलसदृशपर्णं च पटलं बहु।
तस्मान्महौषधिर्जाता मदादिष्टैर्गुणैर्वृता ॥ ३२८ ॥

कदाचिद्भैरवो दृष्ट्वा हृष्टस्तां प्रार्थयन्मया।
दत्ता तस्मै भैरवोऽपि योगिनीभ्यः समर्पिपत् ॥

ताश्च प्रीतास्स्वभक्तेभ्यो भक्तेभ्यः प्रददुश्च ते।
निन्युश्च भूतलं दिव्यामौषधिं सर्वसिद्धिदाम् ॥ ३३० ॥

[विजयाभेदाः ।]

श्रीभैरवी—

किन्नाम्नी सा कथंवीर्या सेवनीया कथं प्रभो ! ।
कीदृग्वर्णा कियद्भेदा कीदृग्रूपगुणा च सा ॥ ३२१ ॥

कथं वा सिद्धिदा सा स्यात्क्रमान्मे ब्रूहि वल्लभ ! ।

श्रीभैरवः—

अथ तस्याश्चतुर्वर्णा युगधर्माश्रिताः प्रिये ! ॥ ३२२ ॥

शुक्लवर्णा कृतयुगे त्रेतायां शोणितप्रभा ।
द्वापरे पीतवर्णा च नीलवर्णा कलौ युगे ॥ ३२३ ॥

एकपर्णा त्रिपर्णा च पञ्चपर्णा मुनिच्छदा ।
दशपर्णा रुद्रपर्णा त्रयोदशदलान्विता ॥ ३२४ ॥

नवपर्णेति विज्ञेया भेदा ह्येते सुरेश्वरि ! ।

[विजया लक्षणम् ।]

स्त्रीरूपा सफला वल्ली पुंरूपा च द्रुमाकृतिः ॥३२५॥

सफला तु मदं मूर्च्छां सुखं सत्वं करोति च ।
योगवाहा तिक्तरसा सा कटुश्चूग्रगन्धिनी ॥ ३३६ ॥

शिवमूली च विजया भङ्गी गञ्जा विमर्दिनी ।
दिव्या सिद्धा सिद्धिदा च सिद्धमूली मनोन्मनी ॥

मधुद्रवा चिदाह्लादा पशुपाशविनाशिनी ।
कालघ्नी सर्वरोगघ्नी नामान्येतानि पार्वति ! ॥ ३२८॥

शिवो मूलं भवेद्यस्याश्शिवमूलीति कथ्यते ।
त्रिलोकानरिषड्वर्गान्विजर्याख्या जयेदिति ॥ ३२९ ॥

तापत्रयादिदुःखानां भञ्जनाद्भङ्गिनी स्मृता ।
गञ्जेति मादयत्येषा मदिरास्थानकारिणी ॥ ३४० ॥

सदृशं मर्शनं यस्यास्सैव प्रोक्ता विमर्शिनी ।
क्रीडामोदद्युतिमदकान्तिदत्वाच्च दिव्यका ॥ ३४१ ॥

स्वतस्सिद्धेति सिद्धाख्या दिष्टसिद्धिप्रदायिका ।
सिद्धिदेति महासिद्धैस्सा नीता सिद्धमूलिका ॥ ३४२ ॥

मनश्चिन्तितकार्याणां साधनाच्च मनोन्मना ।
संविदानन्ददत्वाच्च चिदाह्लादेति कीर्तिता ॥ ३४३ ॥

ब्रह्मरन्ध्रस्थितसुधाद्रावणाच्च मधुद्रवा ।
जन्तूनां पाशनाशत्वात्पशुपाशविनाशिनी ॥ ३४४ ॥

मृत्युञ्जयत्वात्कालघ्नी रोगघ्नी सार्थनामिका ।

[विजयावर्धनक्रमः ।]

वर्धनक्रममाचक्षे शृणु लोकशिवङ्करि ! ॥ ३४५ ॥

शिलालोष्ठादितो वर्ज्या वालुकाशर्करादितः ।
भूमिः कृष्णा पांसुला च मृदुला सकरीषका ॥ ३४६ ॥

भुजङ्गमांससहिता तत्र बीजानि वापयेत् ।
अहिवक्त्रेषु सत्वञ्चि स्निग्धानि च गुरूणि च ॥

पुष्यार्के सिद्धयोगे वा श्रवणे शुक्लपक्षके ।
स्नातो लिप्ततनुर्गन्धैः कृतन्यासजपार्चनः ॥ ३४८ ॥

उदङ्मुखः प्राङ्मुखो वा ध्यात्वा च गुरुपादुकाम् ।
सक्षीराङ्कोलतैलेन जलेन परिषेचयेत् ॥ ३४९ ॥

अङ्कुरे च समुत्पन्ने सिञ्चेत्सघृतवारिणा ।
पर्णे कीटे समुत्पन्ने सामुद्रं वारि सेचयेत् ॥ ३५० ॥

ततोऽस्यां विततायां च शिरश्छित्वा च रन्ध्रयेत् ।
तत्र सूतं क्षिपेन्निष्कं निष्कं प्रत्येकमादरात् ॥ ३५१ ॥

निरोधयेत्तन्मुखानि कौशिकेन प्रयत्नतः ।
पुष्पिते फलिते मद्यमांसांबु च निषेचयेत् ॥ ३५२ ॥

एकैकपक्षपर्यन्तं क्षीरादि परिषेचयेत् ।
अस्यां बध्वा जटामांसीं सक्षौद्रं वारि सेचयेत् ॥

शेषं मद्येन वा वारा वर्द्धनीया महौषधिः ।
आदौ वा परमं मन्त्रं पश्चात्सेवनमन्त्रकम् ॥ ३५४ ॥

"ॐ क्षां क्षीं क्षूं क्षेत्रपालाय नमः सवीर्यं कुरु कुरु सिद्धिं देहि देहि स्वाहा ॥"

अयं स्थापनमन्त्रः ॥

"ॐ श्रीं ह्रीं क्लीं यरलवशषसह अमृतेश्वरि अमृतं कुरु कुरु आं ह्रां क्रों स्वाहा ॥"

अयं सेवनमन्त्रः ॥

फाल्गुने कृष्णपक्षस्य चतुर्दश्यां च साधकः ।
स्नातश्शुद्धाम्बरो गन्धपुष्पभूषणसंयुतः ॥ ३५५ ॥

अर्चयेद्भैरवं तत्र नन्दीशं च क्रमेण च ।
मद्यमांसोपहारेण रक्तपीतसितासितैः ॥ ३५६ ॥

तन्तुभिर्वेष्टयेद्देवि ! तन्मन्त्रं च निगद्यते ।

"ॐ ग्लौं सौं ह्रीं खेचरभूचरदिव्ययोगिनि इमां रक्ष रक्ष सर्वशत्रुप्रमथिनि स्वाहा ॥"

अयं तन्तुबन्धनमन्त्रः ॥

सहस्रं प्रत्यहं जप्यमघोरं मन्त्रनायकम् ॥ ३५७ ॥

एवं सप्तदिनं कार्यं पञ्चम्याममृतेश्वरीम् ।
ध्यात्वा कुन्देन्दुकर्पूरसङ्काशां धवलांबराम् ॥ ३५८ ॥

सितमाल्यानुलेपार्द्रां मुक्ताभरणमण्डिताम्।
दक्षिणेऽक्षगुणं वामे सुधापूर्णघटं ततः॥ ३५९॥

तदधो दक्षिणे वामे संवित्पुस्तकधारिणीम्।
तत्र स्थितां ततः कुर्याल्लवनं च समन्त्रकम्॥ ३६०॥

स्निग्धानि च सबीजानि सपर्णानि समाहरेत्।

"ॐ क्लीं वं सं क्रौं शिवानन्दामृतोद्भवे त्रिभुवन विजये विजयं प्रयच्छ स्वाहा॥"

अयं लावनमन्त्रः॥

मन्दातपे शुद्धदेशे शोषयेत्सप्तवासरम्॥ ३६१॥

निक्षिपेन्नूतने भाण्डे तत्पर्णानि सुचूर्णयेत्।
स्थालीद्वयं प्रताप्यादावेकस्यां प्रथमं पुटेत्॥ ३६२॥

ततोऽपरस्यां पुटयेदेवं कार्यं मुहुर्मुहुः।
यावत्सुपाकतां याति तज्ज्ञस्तावद्विपाचयेत्॥ ३६३॥

गुञ्जोन्मत्तश्च वल्ली च तासां पर्णरसैर्मुहुः।
स्थाल्यौ पृथक्पृथक् देवि! सप्तधा सप्तधा प्रिये!॥

मुण्डी ब्राह्मी कुमारी च वरी धात्री कटुद्वयम्।
सुगन्धिका क्रमाज्ज्ञेया चैकैकपलमानतः॥ ३६५॥

योजनीयाश्चूर्णिताश्च तत्सर्वसदृशा जयाः।
सिता सर्वसमा योज्या तत्समं गोपयः क्षिपेत्॥

क्षीरमध्ये सितां क्षिप्त्वा तन्तुपाकं भवेद्भिषक्।
मुण्डादिविजयान्तं च तच्चूर्णं तत्र निक्षिपेत्॥

लोलयित्वावतार्यैवं शैत्ये क्षौद्रं सितार्धकम्।
निक्षिप्य गोघृतं तुल्यं क्षौद्रस्य परिमेलयेत्॥ ३६८॥

पक्षद्वयं धान्यराशौ निधाय प्रत्यहं जपेत् ।
सहस्रं वा यथाशक्त्या महावटुकमन्त्रकम् ॥ ३६९ ॥

" ह्रीं श्रीं महाकालाग्निभैरवाय सर्वसिद्धिमातृब्रह्मालिङ्गितविग्रहाय सर्वापदां शोषकाय हुं फट् ठम् ॥ "

अयं अग्निपाक मन्त्रः ॥

मासादुद्धृत्य विधिवद्ग्रसेदामलकोपमम् ।
निवातमन्दिरे स्थायी क्षीरान्नाशी जितेन्द्रियः ॥३७०॥

गुरूपदिष्टदेवं वा तत्त्वं वा परमं स्मरेत् ।
द्विकालं वा त्रिकालं वा यथा सेवाबलं क्रमात् ॥३७१॥

एवं त्रिवर्षाज्जरया वलीभिश्च विवर्जितः ।
भूचरीसिद्धिमाप्नोति जीवेत्त्रिशतवत्सरम् ॥ ३७२ ॥

वाराही त्रिफला चित्रमश्वगन्धा क्रमेण च ।
एवं द्वित्रिचतुर्भागमश्वगन्धादि योजयेत् ॥ ३७३ ॥

एतत्समा च विजया मधुना लोलयेत्सुखम् ।
आतपे पक्षपर्यन्तं स्थापयेत्प्रतितापयेत् ॥ ३७४ ॥

धात्रीफलोपमं सेव्यं सूर्याभश्चाष्टमासतः ।
साधको जायते वर्षाज्जरामरणवर्जितः ॥ ३७५ ॥

जपन्मन्त्रमिमं भक्त्या देहसिद्ध्यै सुरेश्वरि ! ।

" ह्रीं श्रीं महाव्योमभास्कराय दीपिमातृकालिङ्गित-विग्रहाय तेजसां निधिं कुरु कुरु ठम् ॥ "

इति सूर्यपाकमन्त्रः ॥

पलत्रयं जयायाश्च यष्टीचूर्णं पलद्वयम् ॥ ३७६ ॥

पलमेलाभद्रचूर्णं चित्रमूलं पलार्धकम् ।
श्रीखण्डचूर्णं च पलं चैतत्सर्वसमा सिता ॥ ३७७ ॥

स्वर्णचूर्णं च निष्कार्धं निष्कं च हिमवालुकम्।
सर्वमाज्येन लुलितं ज्योत्स्नायां निक्षिपेत्सुधीः ॥३७८॥

शुक्लपक्षमिमारभ्य पक्षान्तं शशिभावना।
विधिवत्पूजयित्वा तु शुद्धकोष्ठो लिहेत्प्रिये! ॥३७९॥

अस्य मन्त्रं पुनर्वच्मि सर्वसिद्धिप्रदायकम्।

"ह्रीं श्रीं महाशशाङ्ककिरणविस्फारभैरवाय अमृतेश्वरी मातृकालिंगितविग्रहाय विस्फुरणं कुरु कुरु हुं फट् ठम्॥"

इति चन्द्रपाकमन्त्रः॥

एवंविधस्य कल्पस्य त्रिविधं मन्त्रमीरितम्॥ ३८०॥

एकैकमन्त्रमयुतं पुरश्चरणमाचरेत्।
वह्निपाकं चतुर्मासेष्वाषाढादिषु तन्यते॥ ३८१॥

फाल्गुनादौ प्रकुर्वीत रविपाकं सुरेश्वरि!।
कार्तिकादिषु चन्द्रस्य पाकस्स्यात्सिद्धिदायकः॥३८२॥

मुण्डीचित्रकनिर्गुण्डीसहिता कुष्ठनाशिनी।
ब्राह्मी कुमार्या युक्ता चेदपस्मारविनाशिनी॥ ३८३॥

जया वराव्योषयुता क्षयस्य क्षयकारिणी।
जया कार्पासमत्स्याक्षीपत्रयुक्ता च पित्तनुत्॥ ३८४॥

स्नुह्यर्कपत्रक्षारेण संयुता गुल्मशूलहृत्।
वचादूर्वारजोयुक्ता ज्ञानवृद्धिप्रदायिनी॥ ३८५॥

यष्टीगन्धकसंयुक्ता कुष्ठनुत्पुष्टिदायिनी।
शाल्मली पिच्छसंयुक्ता ससिता वीर्यवर्धिनी॥ ३८६॥

पाठातिक्तात्रिकटुकैर्युक्ता कफगदापहा।
शुक्लगुञ्जायुता नृणां महाविषविनाशिनी॥ ३८७॥

व्याघातचूर्णसहिता कुष्ठरोगविनाशिनी ।
आरण्यमरिचैरण्डयुक्ता वातविनाशिनी ॥ ३८८ ॥

एते द्वादशयोगाश्च मासेषु द्वादशेषु च ।
मन्त्रत्रयं च प्रजपेत्प्रतिमासेषु साधकः ॥ ३८९ ॥

साधकोऽनेन योगेन जरामरणवर्जितः ।
भवत्येव न सन्देहस्सत्यं सत्यं वरानने ! ॥ ३९० ॥

रसत्रिगन्धकृष्णाभ्ररुद्राक्षस्वर्णभस्म च ।
जयारसेन संमर्द्य पक्षमेकं तु भावयेत् ॥ ३९१ ॥

भूधरे संपुटे यन्त्रे पुटयेच्चूर्णयेत्ततः ।
एतच्चतुर्गुणजया शर्कराघृतसंयुता ॥ ३९२ ॥

सेव्या निष्कप्रमाणेन प्रातस्सायन्तनेऽथवा ।
महावटुकमन्त्रं च जपेल्लक्षावधि प्रिये ! ॥ ३९३ ॥

षष्ठमासे भवेत्सिद्धिर्जरामरणवर्जितः ।
वर्षान्मनोजवगतिर्नागायुतबलो भवेत् ॥ ३९४ ॥

वज्रकायश्च सिद्धोऽसौ जीवेदाचन्द्रतारकम् ।
वटाङ्कुरस्य चूर्णेन सितामध्वाज्यसंयुता ॥ ३९५ ॥

त्रिपक्षात्सेवितजया सर्वलोकवशङ्करी ।
अपामार्गरजोयुक्ता जया घृतसमन्विता ॥ ३९६ ॥

मन्त्रजापी भवेन्नित्यं षण्मासादमरो भवेत् ।
वरा सितजया चित्रस्त्रिवृता त्रिकटुर्वृषा ॥ ३९७ ॥

दूर्वा भृङ्गो मरीचश्च मधुकाजाजिसैन्धवम् ।
कर्पूरं च कचोरं च सर्वतुल्यं जयारजः ॥ ३९८ ॥

मधुत्रयेण लुलितं स्निग्धभाण्डे विनिक्षिपेत् ।
कर्षं प्रभाते सेवेत मण्डलात्सिद्धिभाग्भवेत् ॥ ३९९ ॥

स्याद्वर्षादिवसदृशो जीवेद्देवदिनत्रयम्।
अश्वगन्धा वचा व्योषं जयाचूर्णं च तत्समम् ॥४००॥

लिहेत्त्रिमधुरैर्युक्तं त्रिवर्षाद्देवतासमः।
गङ्गाचूर्णं चाष्टभागं चतुर्भागा च मुण्डिका ॥ ४०१ ॥

ब्राह्मीरजो द्विभागं स्याद्वाजिगन्धैकभागिका।
द्विभागस्त्र्यूषणस्यापि वराभागद्वयं तथा ॥ ४०२ ॥

भागमेकं शिलायाश्च भागैकं गन्धकस्य च।
रसराडेकभागस्स्यात्तदर्धं स्वर्णभस्म च ॥ ४०३ ॥

तत्समं मौक्तिकं योज्यं मुक्तातुल्यं प्रवालकम्।
मध्वाज्याभ्यां विलुलितं स्निग्धभाण्डे विनिक्षिपेत् ॥

सप्तरात्रं धान्यपाकं कृत्वा लक्षत्रयं जपम्।
निष्कमात्रवटी सेव्या क्षीराहारो जितेन्द्रियः ॥४०५॥

मण्डलात्सर्वरोगघ्नं त्वब्दात्पुष्पवदग्निभाक्।
अर्धवर्षाद्भैरवस्स्याज्जीवेदाचन्द्रतारकम् ॥ ४०६ ॥

त्रिसुगन्धिवराव्योषैस्समांशा शिवमूलिका।
मध्वाज्याभ्यां युता लेह्या कासघ्नी वह्निवर्धनी ॥ ४०७ ॥

मधुरप्रायभोजी चेत्सकासश्वासरोगजित्।
हरिद्रया च सहिता सर्वमेहविनाशिनी ॥ ४०८ ॥

मण्डूकपर्ण्या सहिता वचया वाङ्मतिप्रदा।
द्राक्षा सिता वल्लकी च खर्जूरी दुग्धपिण्डिका ॥

सहिता कन्दलीनीरैस्सर्वस्वादुरिति स्मृतः।
नारिकेलोदकैर्युक्ता कर्पूरसुरभीकृता ॥ ४१० ॥

सर्वस्वादुयुता सिद्धा पित्तघ्नी वीर्यवर्धनी।
स्वादोश्चतुर्गुणं क्षीरं मधुपाकं यथा भवेत् ॥ ४११ ॥

तद्वस्त्रगालितं कृत्वा कर्पूरं तत्र निक्षिपेत् ।
एलां च सर्वमधुरं जयां च पिबतस्ततः ॥ ४१२ ॥

शतस्त्रीगमने शक्तिः पित्तहृत्पुष्टिवर्धनम् ।
समांबुपयसि क्षिप्त्वा जयाबीजं सवस्त्रकम् ॥ ४१३ ॥

अवशिष्टं चतुर्थांशं पचेन्मृद्वग्निना प्रिये ! ।
तद्दधीकृत्य विधिवन्मन्थयेत्तत उद्धरेत् ॥ ४१४ ॥

नवनीतं क्षिपेत्तत्र कर्पूरैला सिता मधु ।
पुष्ट्यायुष्यद्युतिकरं बलारोग्यविवर्धनम् ॥ ४१५ ॥

शतधा स्तन्यधौतं तच्छतधौतमितीरितम् ।
नागकेसरकच्छूरलवङ्गैलागरुं तथा ॥ ४१६ ॥

कर्पूरचन्दनमृगनाभितक्कोलकुङ्कुमम् ।
एतत्समं जयाबीजं गोक्षीरेण च मर्दयेत् ॥ ४१७ ॥

निष्कनिष्कप्रमाणेन विदध्याद्वटिकास्सुधीः ।
सुपुष्पवासिताः कृत्वा सताम्बूलं मुखे क्षिपेत् ॥ ४१८ ॥

प्रसेकमुखवैरस्यमलपूतिहरी शुचिः ।
सौगन्ध्यवैशद्यकरी चित्तहर्षप्रदायिनी ॥ ४१९ ॥

गोक्षीरे चार्धसलिले धातकीकुसुमं क्षिपेत् ।
जातीफलं नागरं च तत्सर्वसदृशां जयाम् ॥ ४२० ॥

क्षीरावशिष्टं वस्त्रेण गालयेत्त्रिमधुप्लुतम् ।
सिद्धयोग इति ख्यातो वृष्यायुष्यबलप्रदः ॥ ४२१ ॥

अजमोदयुता वापि निशारजोयुताऽथवा ।
तन्मात्रसेविता चूर्णा पामाकिट्टिभनाशिनी ॥ ४२२ ॥

जया तालयुता हन्यात्प्रदरं श्वयथुं तथा ।
कण्डूप्रशमनी ज्ञेया विजया शिलया युता ॥ ४२३ ॥

तैलेन भावयेत्स्थाल्यां जयां पश्चाच्च फाणिते।
सान्द्रपाकं भवेद्धीमान्सघृतं भक्षयेत्सदा ॥ ४२४ ॥

साक्षात्पर्यायमदनोऽनेकयोषित्सुखप्रदः।
पथ्या भल्लातकगुडं तिलाश्चैते समांशिनः॥ ४२५ ॥

तत्समा विजया हन्ति गुदकीलांश्च षड्विधान्।
यवानी जीरकयुगमजमोदा समांशिनः॥ ४२६ ॥

एतत्समा च विजया सर्पिषा सेव्यतां बुधैः।
सन्धिवातं भ्रमं छर्दिमुन्मादं मस्तकव्यथाम् ॥ ४२७ ॥

शर्करां मधु विश्वं च मागधीं तत्समां जयाम्।
कृत्वाऽऽज्यगलितां गोलीमिमां पञ्चागदं विदुः॥४२८॥

हृद्रोगप्लीहजठरभगन्दरनिकृन्तनीम्।
सचित्रका वह्निकरी सवरा शूलभञ्जिनी ॥ ४२९ ॥

सव्योषा वातसंहर्त्री पित्तघ्नी शर्करायुता।
श्वेताद्रिकर्णिकाबीजं विजयां खरमूत्रतः॥ ४३० ॥

नस्येनापस्मृतिहरा भूतप्रेतादिभञ्जनी।
जयाचूर्णं समध्वाज्यं भजेदामलकोपमम् ॥ ४३१ ॥

वाक्पाटवं वीर्यवृद्धिं कुरुते विजया परम्।
मधुनाऽऽज्येन वा धात्र्या मुस्तया स्वरसेन वा ॥४३२॥

उपयुक्ता जया रात्रौ दृक्प्रसादकरी नृणाम्।
यौवनस्थैर्यमातन्यादायुष्यं परमं भवेत् ॥ ४३३ ॥

गुडोऽभया च विजया दुर्नामकुलभञ्जनी।
जयाकाष्ठेन दन्तानां शोधनं दन्तदार्ढ्यकृत् ॥ ४३४ ॥

तैलाक्तविजयाकाष्ठाद्रसज्ञाशोधनं यदि।
जिह्वापूतिमलान्हन्याद्यथार्था स्याद्रसज्ञता ॥ ४३५ ॥

नालिकेरभवक्षीरे पचेन्मृद्वग्निना जयाम् ।
त्रिमध्वक्तां पिबेद्रात्रौ ततो रामाशतं भजेत् ॥ ४३६ ॥

शुण्ठी हरीतकी तुल्ये तत्समा च जया तथा ।
सर्वतुल्या सिता योज्या योगस्त्रैलोक्यमोहनम् ॥

त्र्यूषणं मधुकं चव्यं चातुर्जातं फलं वरा ।
गोस्तनी पिप्पलीमूलं समांशं परिकल्पयेत् ॥ ४३८ ॥

प्रियालमज्जा तैस्तुल्या चैतत्सर्वसमा जया ।
त्रिगुणेन गुडे पक्वे तेषां चूर्णं क्षिपेच्छिवे ! ॥४३९॥

आलोड्य मोदकान्कुर्यात्कामी कन्दर्पमोदकान् ।
सर्वरोगोपशमनांस्त्रिदोषघ्नान्बलप्रदान् ॥ ४४० ॥

वृष्यान्पुष्टिकरान्धीमांस्त्रिसन्ध्यमनुवासरम् ।
भक्षयेच्छुद्धकोष्ठे तु त्रिवर्षात्सिद्धिरीदृशी ॥ ४४१ ॥

सदैवमुपयुञ्जानो जरामरणवर्जितः ।
मरीचं पिप्पली शुण्ठी त्वगेलां पत्रकं समम् ॥४४२॥

एतैश्च विजया तुल्या समगोधूमपिष्टकैः ।
द्विगुणेन गुडेनैव मोदकान्परिकल्पयेत् ॥ ४४३ ॥

कर्षमात्रान्प्रतिदिनं भक्षयेन्नियतेन्द्रियः ।
बलपुष्टियुतो वर्षाद्वलीपलितवर्जितः ॥ ४४४ ॥

चणकैर्माषकैर्मुद्गैराढकैर्वा तिलैस्तथा ।
निष्पावैर्वितुषैराज्यमर्जितैर्गुडसंयुतैः ॥ ४४५ ॥

सत्रिजातैश्च सव्योषैस्सजीरैस्समभागतः ।
संयोज्य विजयां कुर्यान्मोदकान्कर्षमात्रकान् ॥ ४४६ ॥

एकैकं प्रत्यहं खादेत्सायं प्रातर्विशुद्धधीः ।
सर्वरोगहरान्वृष्यान्बुद्धीन्द्रियबलप्रदान् ॥ ४४७ ॥

तक्कोलं चन्दनं सेव्यं कर्पूरं नागकेसरम्।
एलालवङ्गमधुकं पिप्पली मरिचं तथा ॥ ४४८ ॥

सर्वैस्समांशा विजया सिता सर्वसमा शुभा।
पञ्चबाणाभिधानोऽयं चूर्णं सर्वरुजापहम् ॥ ४४९ ॥

द्वादशाब्दोपयोगेन वलीपलितहा भवेत्।
वरा त्रिजातकश्चन्द्रखण्डबीजं कटुत्रयम् ॥ ४५० ॥

एतैस्समा सिद्धमूली सर्वतुल्या च शर्करा।
मधुना लोलिता लीढा दीपनी देहसिद्धिदा ॥ ४५१ ॥

शतावर्युत्तमाव्योषमुसलीद्विगुणान्वितः।
जया समा समसिता वृष्यायुष्यबलप्रदा ॥ ४५२ ॥

आयुर्घृतयुता धत्ते प्रातश्शुण्ठीसितायुता।
क्षीरसिद्धा जया वृष्या बल्या च निशि सेविता ॥

मधुना सेविता भुक्तेः पूर्वं सा वाजिगन्धया।
बलपुष्टिकरा सिद्धा रसायनमिदं परम् ॥ ४५४ ॥

निस्त्वञ्चर्कटिकाबीजं माषचूर्णं समा जया।
क्षीरे च माहिषे पक्त्वा रात्रौ सेव्याऽतिवृष्यकृत् ॥

विधिवच्छाल्मलीपिच्छवरीभृङ्गामृतारसैः।
कान्तपात्रे प्रतिरसैस्सप्तधा सप्तधाऽऽतपे ॥ ४५६ ॥

कुर्वीत भावनां पश्चाच्चूर्णयेत्तत्समां जयाम्।
मधुना च लिहेत्कर्षं जरामरणनाशिनी ॥ ४५७ ॥

पञ्चाङ्गं शाल्मलेर्ग्राह्यं तत्समं विजयारजः।
मध्वाज्याभ्यां लिहेत्कर्षं वलीपलितखण्डनम् ॥ ४५८ ॥

अथ पुष्यरवौ हस्तिकन्दं ग्राह्यं समूलकम्।
अनातपे च संशोष्य चूर्णयेत्तत्समां जयाम् ॥ ४५९ ॥

मधुनाऽऽलोडयेत्पश्चात्स्निग्धभाण्डे विनिक्षिपेत् ।
एकविंशद्दिनं धान्यराशौ स्थाप्यं ततोद्धरेत् ॥ ४६० ॥

प्रत्यहं पलमेकं तु भक्षयेन्मण्डलद्वयम् ।
कट्वम्लौ वर्जयेत्तावन्मृदु यूषान्नभोजनम् ॥ ४६१ ॥

मधुरं लघु पित्तघ्नं पललं जाङ्गलं हितम् ।
बालार्काभश्च मतिमान्पिकालापो बलान्वितः ॥ ४६२ ॥

शतयोजनपर्यन्तं दिनेनैकेन गच्छति ।
मुण्डीचूर्णं जयाचूर्णं समं मधुघृतान्वितम् ॥ ४६३ ॥

कर्षं प्रातः प्रतिदिनं लिहेदायुष्यपुष्टिकृत् ।
द्वादशाब्दं तु सेवेत भुञ्जीत घृतसंयुतम् ॥ ४६४ ॥

गोक्षीरं षष्टिकान्नं च लोणाम्लक्षारहीनकम् ।
भवेद्वलिजराहीनो दृश्यस्स्याल्लघुदेहवान् ॥ ४६५ ॥

पत्रं पुष्पं फलं श्वेतब्रह्मवृक्षस्य चाहरेत् ।
छायायां शोषयेच्चूर्णं तत्समं विजयारजः ॥ ४६६ ॥

मध्वाज्याभ्यां लिहेत्कर्षमब्दाद्यौवनमाप्नुयात् ।
जयाबीजानि च तिलान्भर्जयेत्सगुडान्प्रिये ! ॥ ४६७ ॥

विधाय लड्डुकान्प्रातर्भक्षयेद्गोघृताप्लुतान् ।
मनस्संमोहनकरान्कान्तासङ्गमसाधकान् ॥ ४६८ ॥

पाकार्हव्यञ्जनैस्सार्धं जयापत्राणि पाचयेत् ।
भर्जयेद्गोघृतेनैव गुडैलातीक्ष्णजीरकैः ॥ ४६९ ॥

संस्कृतस्सुखसेव्योऽयं नाम्ना व्यञ्जनयोगराट् ।
तण्डुलान्विजयाबीजं मुद्गं च विगतत्वचः ॥ ४७० ॥

सुरन्ध्रनालिकेरान्तः क्षिपेद्रन्ध्रं निरोधयेत् ।
बहिर्गोमयमृल्लिप्तं शोषयेन्मृदुवह्निना ॥ ४७१ ॥

पाचयेन्नालिकेरस्थं समज्जं तत्समाहरेत्।
मधुत्रयेण सहितं भुञ्जीत च यथाबलम्॥ ४७२॥

महावृष्यकरो योगष्षण्डानामपि पुंस्त्वदः।
गोक्षीरे विजयाबीजं वस्त्रबद्धं विनिक्षिपेत्॥ ४७३॥

अर्धावशिष्टे तत्क्षीरे व्यजनानिलशीतले।
वाराहीमर्कटीबीजकर्पूरैलालवङ्गकम्॥ ४७४॥

त्रिमधु त्रिसुगन्धं च निक्षिपेच्च समांशतः।
एकीकृत्य पिबेद्रात्रौ महावृष्यकरः परः॥ ४७५॥

वाराहीयोग एषोऽयं षण्डत्वादिनिकृन्तनः।
क्षीरशृतं च तद्बीजं पेषयेच्छिलया तनु॥ ४७६॥

रसेनोत्तमकन्यायाः कांस्यपात्रे प्रलेपयेत्।
तीव्रातपे धारयेत्तं तस्मात्स्नेहं समाहरेत्!॥ ४७७॥

स्नेहान्तरयुजा तेन नस्यकर्म समाचरेत्।
जत्रूर्ध्वगतरोगांश्च कासश्वासादिकान्हरेत्॥ ४७८॥

यस्य यस्य च रोगस्य विहितं यद्यदौषधम्।
तेन तेन युता सिद्धा तत्तद्रोगहरा भवेत्॥ ४७९॥

गुणा मया च कथ्यन्ते तान्शृणुष्व महेश्वरि!।
जिह्वार्द्रता मनस्सौख्यं तृप्तिस्सङ्कल्पसिद्धता॥ ४८०॥

वाक्पटुत्वं मुखोल्लासो भवेद्व्यायामपेशलः।
स्नानध्यानार्चनपरो मधुरास्वादलोलुपः॥ ४८१॥

मृष्टान्नाशी शीतवारि पिबन्नालापतत्परः।
यथेष्टालोकनपरः कामिनीसङ्गलोलुपः॥ ४८२॥

सर्वभूतदयाविष्टस्तत्वज्ञानविलीनधीः।
कविताख्यानविज्ञानोपन्यासैकपरायणः॥ ४८३॥

वादेषु विजयं कुर्यात्सङ्ग्रामे मल्लसङ्गरे ।
अन्येऽपि बहवस्सन्ति गुणास्त्वन्यत्र दुर्लभाः ॥ ४८४ ॥

[विजयाव्यापत्सिद्धी ।]

एतस्यास्सिद्धिमूल्याश्च भक्षणे त्वधिके सति ।
जायन्ते हि विकाराश्च शृणु तान्परमेश्वरि ! ॥ ४८५ ॥

आरक्तलोचनश्शुष्कजिह्वोष्ठपुटतालुकः ।
प्रथमे शुष्कनासाग्र उष्णकृच्छ्वासपार्श्वयोः ॥ ४८६ ॥

द्वितीयेऽक्षिनिमीलत्वं पटलीकृतविग्रहः ।
तृतीये पादहस्ताक्षिदाहकृद्गद्गदध्वनिः ॥ ४८७ ॥

चतुर्थे क्षुत्पिपासार्तो निद्राघूर्णितलोचनः ।
पञ्चमे गद्गदा वाणी स्वप्रोक्तं विस्मरेत्क्षणात् ॥ ४८८ ॥

षष्ठे विकारे सञ्जाते चित्तापस्मृतिकारणम् ।
सप्तमे करस्पादश्च देहे च रुचिरायते ॥ ४८९ ॥

महोर्मय इवोल्लासा जायन्ते च पुनः पुनः ।
अष्टमे दिग्भ्रमश्शान्तिर्भ्रूभङ्गश्चातिरोदनम् ॥ ४९० ॥

नवमे श्रोत्रहुङ्कारो मूर्च्छापस्मृतिकातरः ।
उद्गारः कूजनं भूमौ लुठनं दैन्यभाषणम् ॥ ४९१ ॥

अन्यथा भाषणं गुह्यं ब्रवन्सौख्यं न वेत्ति च ।
दुःखं च मृदुकल्पोऽयं स्विन्नाङ्गश्च भवेत्प्रिये ! ॥

अन्ये विकारा बहवस्सन्ति तेषां चिकित्सनम् ।
विरेकोऽम्लरसश्शीर्षस्नानं शीतांबुना ततः ॥ ४९३ ॥

चन्दनोशीरकर्पूरहिमांबुपरिलेपनम् ।
सुगन्धिशीतलीभूतमालालङ्कृतविग्रहः ॥ ४९४ ॥

मल्लिकाजातिचांपेयकमलोत्पलधारिणा ।
मृणालवलयोद्भासिशय्या च कदलीदलम् ॥ ४९५ ॥

कर्पूरैलालवङ्गाश्च तक्कोलं कटुकीफलम् ।
चर्वयेत्सहताम्बूलं तालवृन्तेन वीजनम् ॥ ४९६ ॥

सूक्ष्मकाषायवस्त्राणि सुगन्धीनि च धारयेत् ।
कङ्कणे चन्द्रमापश्यञ्ज्योत्स्नायां द्विमुहूर्तकम् ॥४९७ ॥

पीनोत्तुङ्गकुचद्वन्द्वगाढालिङ्गनतत्परः ।
शयीत शर्कराक्षीरघृतमांसरसादिकम् ॥ ४९८ ॥

पानकं मुद्गयूषं वा पेयं वा शार्करं मधु ।
केवलं शयनं कुर्याद्यद्यच्छीतं भजेच्च तत् ॥ ४९९ ॥

## २९. कञ्चुकीकल्पः ॥

अथ वक्ष्यामि देवेशि ! कञ्चुकीकल्पमुत्तमम् ।
सप्ताष्टच्छदसंयुक्ता मूलकोपमकन्दुका ॥ ५०० ॥

क्षीरान्विता मेघशब्दाज्जायन्ते पल्लवान्यपि ।
सा ज्ञेया पीतरक्ताभकाण्डा श्वेततनुः प्रिये ! ॥ ५०१ ॥

आषाढे कार्तिके मासे चैत्यदेशे प्ररोहति ।
पिष्टां पलाष्टके क्षीरे त्वङ्गुष्ठद्वयमालकम् ॥ ५०२ ॥

कुटीप्रवेशं कृत्वाऽऽदौ पीत्वा पश्चात्पयः पिबेत् ।
जीर्णे क्षीरं पुनः पेयं पेयां वा स्नेहवर्जिताम् ॥५०३॥

स्तोकोष्णलवणाम्लां तां न स्पृशेच्छीतलं जलम् ।
एवं सप्तदिनं सेव्यं खिलकुष्ठं विनाशयेत् ॥ ५०४ ॥

द्वितीये सप्तरात्रेण नश्यन्ति निखिला गदाः ।
तृतीये सप्तरात्रेण भुजङ्गः कञ्चुकं तथा ॥ ५०५ ॥

त्वक्केशनखदन्ताश्च स त्यजेत्स्वयमेव हि ।
जीवेत्पञ्चशतं वर्षं रूपमेधाबलान्वितः ॥ ५०६ ॥

चूर्णितं कञ्चुकीकन्दं तत्क्षीरेण विभावितम् ।
कर्षं गोक्षीरकुडुबैः पिष्ट्वा खण्डं पलं क्षिपेत् ॥ ५०७ ॥

नखकेशास्थिदन्तस्थान् रोगान्पानेन नाशयेत् ।
कञ्चुक्यास्तु पलं चूर्णं प्रस्थगोक्षीरवापितम् ॥ ५०८ ॥

चूर्णशेषं पचेत्तावद्गोघृतेन च भर्जयेत् ।
सितया मधुना लिह्यात्क्षीरान्नो मण्डलावधि ॥ ५०९ ॥

महागजबलोपेतो द्विरष्टवयसोज्ज्वलः ।
जीवेत्पञ्चशतं वर्षान्कामिनीकेलिमन्मथः ॥ ५१०

## ३०. कुक्कुटीकल्पः ॥

अथ वक्ष्यामि ते देवि! कुक्कुटीकल्पमुत्तमम् ।
सुरासुरैर्मथ्यमानादब्धेरमृतबिन्दवः ॥ ५११ ॥

पतितास्तेभ्य उत्पन्ना कुक्कुटी निर्जरस्वदा ।
पत्रैर्मरतकच्छायैर्खर्जूरीदलसन्निभैः ॥ ५१२ ॥

कन्दैश्च कुक्कुटास्याभैरीषत्कटुकपिच्छिलैः ।
लक्षिता कुक्कुटी ज्ञेया महारोगहरा परा ॥ ५१३ ॥

विशेषाद्वातरोगांश्च गुदकीलविषाणि च ।
घृतेन भर्जयेत्कन्दं शुद्धकोष्ठः कुटीं व्रजेत् ॥ ५१४ ॥

गुञ्जामात्रं प्रगे सेव्यं धारोष्णं गोपयः पिबेत् ।
जीर्णे क्षीरान्नमश्नीयाज्जलान्नं वा विचक्षणः ॥ ५१५ ॥

यथाबलं प्रतिदिनं वर्धयेन्मण्डलावधि ।
जत्रूर्ध्वरोगान्पाण्ड्वादीन्क्षयकुष्ठादिकान्हरेत् ॥ ५१६ ॥

स्थिरकेशद्विजनखो वलीपलितवर्जितः ।
जीवेद्द्विशतवर्षं च मेधाधैर्यबलान्वितः ॥ ५१७ ॥

शुक्लप्रतिपदारभ्य चैकैकं घृतवर्जितम् ।
कन्दं प्राश्नीय पर्वान्तं वर्धयेत्तद्यथाबलम् ॥ ५१८ ॥

तथैवासितपक्षादि नूनं कुर्याद्दिनाद्दिनम् ।
भुक्तेः प्रागुपयुञ्जीत पश्चात्क्षीराशनो भवेत् ॥ ५१९ ॥

दर्शान्तमेवं सेवेत प्रतिमासं पुनः पुनः ।
त्रिवर्षात्सिद्धिमाप्नोति जीवेद्वर्षायुतत्रयम् ॥ ५२० ॥

कुक्कुटीकन्दचूर्णं च गोक्षीरेण यथा बलम् ।
जीर्णे पिबेद्यवागूंश्च मासात्सिद्धिः प्रजायते ॥ ५२१ ॥

नानाविधगदान्हन्ति जीवेद्वर्षशतद्वयम् ।

### ३१. सोमलताकल्पः ॥

अथ सोमलताकल्पं दिव्यं वक्ष्यामि शङ्करि ! ॥ ५२२ ॥

सोमस्स्वयं मनुष्याणां हितायावनिमण्डलम् ।
प्रतिपेदे च तन्नाम्ना ख्याता सोमलता भुवि ॥ ५२३ ॥

चतुर्विंशतिधा प्रोक्ता स्थाननामादिभेदतः ।
पूर्वप्रतिपदारभ्य पूर्णान्तं प्रतिवासरम् ॥ ५२४ ॥

एकैकं जायते पर्णं तथैवापरपक्षके ।
पतति क्रमशः पर्णं दर्शे सैकावशिष्यते ॥ ५२५ ॥

पूर्णमास्यां पञ्चदशच्छदोपेता सदा भवेत् ।
नानाविधदलोपेताश्छदपञ्चदशात्मिकाः ॥ ५२६ ॥

क्षीरयुक्तलताकन्दाः सर्वास्सोमलतास्स्मृताः ।
तुषाराद्रावर्बुदे च सह्ये देवगिरौ तथा ॥ ५२७ ॥

श्रीपर्वते च मलये महेन्द्रे पारियात्रके ।
विन्ध्ये देवसहेऽद्रौ च देवसूतह्रदे तथा ॥ ५२८ ॥

वितस्तोत्तरतीरेऽस्ति प्रभासाख्यो महीधरः ।
सिन्धुह्रदोऽस्ति पाञ्चाले चन्द्रमाः प्लवतेऽत्र च ॥

तत्प्रदेशे च वाप्यस्ति त्वंशुमानथ मुञ्जवान् ।
दिव्यं सरोऽस्ति काश्मीरे ख्यातं क्षुद्रकमानसम् ॥

औष्णिक् त्रैष्टुभगायत्रो जागतस्त्र्यैष्टुभस्तथा ।
अन्याश्च पञ्च सन्त्यत्र मृगाङ्काभासवल्लिकाः ॥ ५३१ ॥

भाग्यहीना न पश्यन्ति देवाग्निद्विजनिन्दकाः ।
सर्वसोमलतानां च विधिरेक उपासने ॥ ५३२ ॥

चन्द्रमा स्वर्णसच्छायो विशदो रजतप्रभः ।
तौ रंभाकृतिकन्दौ तु चन्द्रमास्तु जलेचरः ॥ ५३३ ॥

लशुनच्छदनः पुण्यो मुञ्जवान्गरुडाहृतः ।
श्येनच्छदनिभः पाण्डुस्सर्पनिर्मोकवत्सदा ॥ ५३४ ॥

लम्बते पादपाग्रेषु विशेषं लक्षणं स्मृतम् ।
अंशुमांश्चन्द्रमाश्चैव शौनकी कर्णकोपमः ॥ ५३५ ॥

दूर्वासोमौ जाग्रतश्च कन्याभासश्च शाङ्करः ।
करवीरस्तालवृन्तः प्रतानश्च गवीनसः ॥ ५३६ ॥

पथ्यस्सोमप्रदश्चैव गरुडाहृतनामकः ।
अयःप्रभोऽग्निष्टोमस्स्यादौक्थ्यो रैवतकस्तथा ॥ ५३७ ॥

अंशुमान्सर्वमुख्यस्स्यादस्य सेवां प्रचक्षते ।
एतद्रसायनज्ञैश्च प्रीतैर्मन्त्रविदुत्तमैः ॥ ५३८ ॥

भिषग्वरैस्सुहृद्भिश्च संयुक्तश्शुद्धकोष्ठवान् ।
कुटीं प्रविश्य निवृतां पुण्यर्क्षे शुभवासरे ॥ ५३९ ॥

पूर्वेद्युर्देवि ! विप्राग्निसिद्धसामायिकान्गुरून् ।
योगिनीश्च कुमारीश्च बालकान्सिद्धसन्ततिम् ॥ ५४० ॥

गन्धपुष्पाक्षताद्यैश्च धूपैर्दीपैश्च पूजयेत् ।
भोजनैर्दक्षिणाभिश्च तोषयेच्च विधानतः ॥ ५४१ ॥

क्षीरमंशुमतः कन्दात्स्वर्णसूच्या विभेदितात् ।
हेमपात्रे समादाय तत्क्षीरं कुडुबं पिबेत् ॥ ५४२ ॥

सकृदेव पिबेत्सर्वं पीतशेषं जले क्षिपेत् ।
दिवा सुहृद्भिर्विहरेद्ग्राम्यतश्च वशी भवेत् ॥ ५४३ ॥

द्रव्यदेहोपदेशज्ञैः कुटयामास्तिकबुद्धिभिः ।
उपवासी जपरतस्सायं सन्ध्यार्चनापरः ॥ ५४४ ॥

प्रसुप्याद्दर्भशयने कृष्णाजिनतिरोहिते ।
पिपासितोऽपि पानीयं शीतलं मात्रया पिबेत् ॥ ५४५ ॥

प्रभाते च समुत्थाय कृतप्रागेतनक्रमः ।
विना सोमं तथाऽऽसीत जीर्णे क्षीरे सशोणितम् ॥

पित्तावसानं सकृमि वमनं भवति प्रिये ! ।
श्रृतशीतं च गोक्षीरं सायं पेयं सुसाधकैः ॥ ५४७ ॥

विरेको जायते तस्य तृतीयदिवसे महान् ।
तेन प्रमुच्यते मर्त्यः पूर्वकैर्दुष्टभोजनैः ॥ ५४८ ॥

स्नानं कुर्याद्दिनान्ते स श्रृतशीतं पिबेत्पयः ।
दर्भशय्यां सुमक्षौमछादितायां शयीत सः ॥ ५४९ ॥

ततश्चतुर्थे दिवसे श्वयथुस्तस्य जायते ।
अङ्गेभ्यः क्रिमयो बह्व्यस्सूक्ष्मा निर्यान्ति तद्दिने ॥

गोविड्भस्समयीं शय्यां शोधितां मृदुलां सुधीः ।
अधिशेत पिपासा चेच्छृतशीतं जलं पिबेत् ॥ ५५१ ॥

सायं गव्यं शृतं क्षीरं पीत्वा शिष्यसुहृद्वृतः ।
यथासुखं प्रसुप्याच्च निशि पञ्चमषष्ठयोः ॥ ५५२ ॥

अह्नो विधिरयं कार्यो द्विकालं पाययेत्पयः ।
सप्तमे दिवसे देहस्त्वगस्थिस्नायुशेषितः ॥ ५५३ ॥

मांसरक्तविहीनस्स्यात्सोमपः प्राणशेषितः ।
सुखोष्णैस्सिञ्चयेत्क्षीरैर्गव्यैरेतस्य विग्रहम् ॥ ५५४ ॥

श्रीखण्डतिलयष्ट्याह्वैः पिष्टैस्तं परिलेपयेत् ।
क्षीराशी कटशायी च क्षौममय्यां शयीत सः ॥ ५५५ ॥

अष्टमेऽह्नि नखं श्मश्रु त्वक्केशा रदना अपि ।
पतन्ति सद्योजातस्य देहवज्जायते वपुः ॥ ५५६ ॥

क्षीराशी स्यात्तु नवमेऽणुतैलाभ्यङ्गमाचरेत् ।
स्नायात्सोमलताकल्पं क्वथितेन जलेन च ॥ ५५७ ॥

ततस्तु नवमे त्वक्च स्थिरतां प्रतियाति च ।
तथैवैकादशदिनं प्रारभ्य षोडशं दिनम् ॥ ५५८ ॥

अभ्यङ्गं नाचरेत्स्नानं सोमवल्ककषायजम् ।
दिनात्सप्तदशादूर्ध्वं चतुर्विंशतिकावधि ॥ ५५९ ॥

स्थिरत्वं त्वगवाप्नोति दन्ता वज्रनिभोज्ज्वलाः ।
स्थिरा दृढतरा स्निग्धा जायन्ते समपङ्क्तयः ॥५६०॥

पञ्चविंशतमे घस्रे षष्ट्यन्नं गोपयोऽन्वितम् ।
भुञ्जीत नखरास्तस्य शुकचञ्चुनिभोज्ज्वलाः ॥५६१॥

त्वगस्य जायते स्निग्धा नीलोत्पलसमद्युतिः ।
सुलक्षणातसीपुष्पवैडूर्याम्बुदसन्निभा ॥ ५६२ ॥

मासादनन्तरं कुर्यात्तिलोशीरकचन्दनैः ।
पिष्टैः प्रलेपनं पश्चात्पयसा स्नपनक्रिया ॥ ५६३ ॥

रोहन्ति चिकुरास्तस्य भ्रमराञ्जनसन्निभाः ।
मासमप्तदिनादूर्ध्वं द्वितीयावरणस्थितिः ॥ ५६४ ॥

पुनस्तृतीयावरणे तिष्ठेत्सिद्धो मुहूर्तकम् ।
कुटीं विशेद्यथापूर्वं बलातैलाज्यलेपनम् ॥ ५६५ ॥

कुर्याद्दिनत्रयं पश्चाच्चत्वारिंशद्दिनात्परम् ।
करीषभस्मनोद्धूल्य देहं कल्कैर्विलेपयत् ॥ ५६६ ॥

अजशृङ्गीत्वगुद्भूतैस्स्नानं कोष्णजलेन च ।
चन्दनोशीरकर्पूरैर्लिप्ताङ्गो मुद्गधात्रिजैः ॥ ५६७ ॥

यूषैष्षष्ट्यन्नमश्नीयात्क्षीरैस्त्रिमधुसंयुतैः ।
घृतेनं वा द्वितीये तु वसेदावरणे सुधीः ॥ ५६८ ॥

दिवसं पञ्चकं तत्र किञ्चिद्वातातपे सुधीः ।
मध्ये मध्ये च सेवेत तथैव दशवासरम् ॥ ५६९ ॥

सोढवातातपस्तस्मात्तृतीयावरणं भजेत् ।
एकविंशद्दिनं तिष्ठन् स्थिरीकृतमनास्समुत् ॥ ५७० ॥

ततो द्वाविंशतिदिने देहसिद्धिः प्रजायते ।
बहिर्निर्गत्य च तदा पूजयेद्भैरवं पुरा ॥ ५७१ ॥

गुर्वग्निद्विजसिद्धानां चेतांसि परिमोदयन् ।
सर्वत्र स्वेच्छया नित्यं विहरेद्दुःखवर्जितः ॥ ५७२ ॥

वर्षायुतं नवं दिव्यं वपुर्धत्ते सुकान्तिमत् ।
बलं गजसहस्राणां भवेदस्य न संशयः ॥ ५७३ ॥

विषाग्नितोयशस्त्रास्त्रमृगादिभ्यो भयं न हि ।
ब्रह्मलोकादिलोकेषु विचरेत्स्वेच्छया सदा ॥ ५७४ ॥

कान्त्या द्वितीयश्चन्द्रस्स्याद्रूपेण मकरध्वजः ।
सर्वाह्लादकरश्शान्तस्सषडङ्गपदक्रमान् ॥ ५७५ ॥

वेदान्वेत्ति च शास्त्राणि भूलोकगतिनिर्जरः ।
ह्रस्वशाखाप्रतानायास्सोमवल्ल्यास्समाहरेत् ॥ ५७६ ॥

काण्डान्द्वात्रिंशतिं स्वर्णपात्रे पुण्ये यथाविधि ।
रौप्ये पात्रेऽथवा योज्यं द्विपलं गोपयस्तथा ॥ ५७७ ॥

सोमवल्लीरसं तद्वन्मेलयित्वा पिबेत्ततः ।
कुटीप्रवेशः पथ्यं च पूर्ववत्समुदाहृतम् ॥ ५७८ ॥

अणिमाद्यष्टसिद्धिस्स्यात्स साक्षादमरो भवेत् ।

## ३२. गुडूचीकल्पः ॥

अथामृतलताकल्पं वक्ष्यामि शृणु भैरवि! ॥ ५७९ ॥

साक्षात्सुधामृतलता व्याधिजन्मजरापहा ।
अमृतायाश्शतपलं त्रिप्रस्थं मधुरत्रयम् ॥ ५८० ॥

चूर्णं लिहेत्कर्षमात्रमेवं संवत्सरावधि ।
सर्वव्याधिप्रशमनं जीवेच्च शरदश्शतम् ॥ ५८१ ॥

अथ छिन्नरुहाचूर्णं पञ्चविंशत्पलं सिता ।
द्विगुणा च तवक्षीरी चात्मगुप्ताऽश्वगन्धिका ॥ ५८२ ॥

पुनर्नवाज्यं प्रत्येकं युञ्ज्याद्दशपलं प्रिये! ।
मृद्वीकाष्टपला यष्टी ततः पञ्चपला तथा ॥ ५८३ ॥

एकीकृत्य च तत्सर्वं स्निग्धभाण्डे विनिक्षिपेत् ।
पक्षमेकं धान्यराशौ निधाय प्रतिवासरम् ॥ ५८४ ॥

पलं पलं प्रयुञ्जीत मासं स्याद्व्याधिवर्जितः ।
षण्मासाद्गृध्रदृष्टिस्स्याद्वर्षं जीवेच्छतायुषम् ॥ ५८५ ॥

अमृतायाश्शतपलं चूर्णं षष्टिपलं मधु ।
चत्वारिंशत्पलं सर्पिर्द्विमासं धान्यराशिगम् ॥ ५८६ ॥

प्रत्यहं पलमात्राशी मासात्सर्वगदान्हरेत् ।
दिव्यदृष्टिश्शतं जीवेन्मेधाबलमहाद्युतिः ॥ ५८७ ॥

### ३३. तुवरककल्पः ॥

अथ वक्ष्याम्यहं देवि ! कल्पं तुवरकस्य च ।
वृक्षाः पश्चिमवारीशतटे तिष्ठन्ति सन्ततम् ॥ ५८८ ॥

तरङ्गानिलसंक्षुब्धशीकारार्द्रितपल्लवाः ।
वर्षर्त्तौ च सुपक्वानि तत्फलानि समाहरेत् ॥ ५८९ ॥

शोषयित्वाऽथ सञ्चूर्ण्य तिलवत्तैलमाहरेत् ।
अथवैरण्डवत्तैलं प्रयत्नेन समाहरेत् ॥ ५९० ॥

पुनर्वह्नौ पचेत्तैलं यावदंभःक्षयं भवेत् ।
तत्कर्षं निक्षिपेत्पक्षं ततोद्धृत्य प्रयत्नतः ॥ ५९१ ॥

चतुर्भक्तविहीनस्सन् शुद्धः कर्षं पिबेत्प्रिये ! ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयदच्युतः ॥ ५९२ ॥

मन्त्रेणानेन सेवेत सर्वो दोषो विनश्यति ।
एवं पञ्चदिनं सेव्यमहितानि च वर्जयेत् ॥ ५९३ ॥

मासं मुद्गरसाशी स्यात्सर्वकुष्ठविवर्जितः ।
ततः क्षौद्रघृताभ्यां च लिहेत्षाण्मासिकावधि ॥ ५९४ ॥

वलीपलितहीनश्च जीवेद्वर्षशतद्वयम् ।
तत्तैलं दिनपञ्चाशं नस्येद्धीरकवद्द्विजः ॥ ५९५ ॥

वलीपलितनिर्मुक्तश्श्रुतधारी दृढाङ्गवान् ।
जीवेद्द्विशतवर्षं च मेधावी गृध्रलोचनः ॥ ५९६ ॥

### ३४. सोमराजीकल्पः ॥

अथ वक्ष्याम्यहं देवि ! सोमराजीरसायनम् ।

संग्रहेत्तां पुष्यरवावातपे शोषयेत्ततः ॥ ५९७ ॥

चूर्णितां कोष्णसलिलैः पिबेत्प्रातर्विशुद्धये
त्रिदिवं च ततः क्षौद्रैः कर्षमात्रं लिहेत्प्रगे ॥ ५९८ ॥

मासेन रोगा नश्यन्ति षण्मासात्सिद्धिमाप्नुयात् ।

३५. वृद्धदारुककल्पः ॥

अथ ब्रवीमि देवेशि! वृद्धदारुककल्पकम् ॥ ५९९ ॥

नागवल्लीदलक्षौद्रैः सदुग्धैर्मृदुरोमकैः ।
पत्रैर्युतापि सफला रक्तपुष्पा प्रतानिका ॥ ६०० ॥

तिक्तोषणं कांबुतेति महिषाख्यलता स्मृता ।
तुलोन्मितं च तन्मूलं चूर्णितं सर्षपायुतम् ॥ ६०१ ॥

धान्यराशौ न्यसेत्पक्षं उद्धृत्योन्मितकर्षकम् ।
अनुपेयं च गोक्षीरं जीर्णे क्षीरान्नभोजनम् ॥ ६०२ ॥

वृद्धोऽपि तरुणो भूयाद्वर्षात्सर्वगदोज्झितः ।
एवं द्वादशवर्षाणि सेवेतालस्यवर्जितः ॥ ६०३ ॥

जीवेत्षट्शतवर्षं च वलीपलितवर्जितः ।
वृद्धदारुकचूर्णं च शुद्धं शतपलोन्मितम् ॥ ६०४ ॥

वाजिगन्धाकन्दचूर्णं शतत्रयपलं घृतैः ।
आलोड्य भक्षयेत्कर्षं स जीवेच्छरदां शतम् ॥ ६०५ ॥

तुरङ्गमसमो वेगे बले दन्तावलोपमः ।
कान्त्या हिमांशुसदृशस्तेजसा भास्करोपमः ॥ ६०६ ॥

शतावर्यश्वगन्धा च गोक्षुरो वृद्धदारुकः ।
समांशमखिलं सर्पिर्युक्तं कर्षं च खादयेत् ॥ ६०७ ॥

सप्ताहात्किन्नरध्वानो वत्सरात्सिद्धिभाग्भवेत् ।

वृद्धदारुकमूलं च वरीस्वरसपेषितम् ॥ ६०८ ॥
कर्षं पिबेद्वत्सरं यत्स जीवेच्छरदश्शतम् ।
वृद्धदारुकचूर्णं च धात्रीस्वरसभावितम् ॥ ६०९ ॥
एकविंशतिधा प्रातर्मध्वाज्याभ्यां तु कर्षकम् ।
लिहेदब्दं स जीवेच्च वर्षाणि च शतद्वयम् ॥ ६१० ॥
योवसापस्तथा(?)जीवेन्नीरुजस्स महान्भवेत् ।
गोदुग्धेन च तन्मूलं रसं धात्र्याश्च संमितम् ॥६११॥
पिबेत्संवत्सरं यस्तु स जीवेच्छरदश्शतम् ।
तत्सिद्धं सर्पिरश्नीयात्पूर्ववत्फलमाप्नुयात् ॥ ६१२ ॥
पुनर्नवा वरी शुण्ठी मागधी रजनीद्वयम् ।
एतत्सर्वं समं वृद्धदारुकं काञ्जिकान्वितम् ॥ ६१३ ॥
पलं प्रातः पिबेद्धीमान् दच्छदाद्धारमाचरेत् (?) ।
मासात्सर्वामयान्हन्ति वर्षादायुश्शतं भवेत् ॥ ६१४ ॥
द्वीपी शौण्डी वरा विश्वं मुस्तमेला समांशकम् ।
एतत्संयोज्य सिद्धं तच्चूर्णं वेल्लरिकं भवेत् ॥ ६१५ ॥
क्षौद्राज्यलुलितं खादेत्कर्षं वर्षेण सिद्ध्यति ।
तत्फलं स्वरसं कर्षं घृतं क्षौद्रं च तत्समम् ॥ ६१६ ॥
पिबेदनु गवां क्षीरं माहिषं वा पलोन्मितम् ।
मासेन सर्वरोगघ्नं वर्षाज्जीवेच्छतायुषम ॥ ६१७ ॥
चूर्णं वेल्लरिकामूलं फलं पिप्पलिकाभवम् ।
समवेल्लरिकामूलफलजैश्च रसैस्तथा ॥ ६१८ ॥
गुडूचीस्वरसेनापि भावयेदेकविंशतिम् ।
शुष्कं घृतप्लुतं भाण्डे स्निग्धे धान्यचये स्थितः ॥

त्रिसप्ताहात्तदुद्धृत्य कर्षं प्रातर्लिहेन्नरः ।
वर्षाद्वर्षसहस्रायुस्सर्वरोगविवर्जितः ॥ ६२० ॥

३६. वज्रवल्लीकल्पः ॥

अथ व्याख्याम्यहं देवि ! वज्रवल्लीरसायनम् ।
वज्रवल्लीं समूलां च छायाशुष्कां विचूर्णयेत् ॥ ६२१ ॥

वरा व्रणारिमूलं च प्रत्येकं भास्करं पलम् ।
रोगानशेषान्षण्मासाद्धन्यात्संवत्सराद्भवेत् ॥ ६२२ ॥

देहसिद्धिश्च षण्मासाच्चूर्णमन्यत्प्रकल्पयेत् ।

३७. तिलक्षीरिणिकाकल्पः ॥

तिलक्षीरिणिकाकल्पं कथयिष्यामि शांभवि ! ॥ ६२३ ॥

तिलक्षीरिणिकामूलं मौनेनोत्पाट्य साधकः ।
कोष्णेन वारिणा पिष्ट्वा प्राङ्मुखोदङ्मुखः पिबेत् ॥

गिलेद्वा गुलिकां कृत्वा क्षीराज्यानाशयेच्छुचिः ।
क्रमेणार्धद्वित्रिनिष्कं सेवेताब्दं स सिद्धिभाक् ॥ ६२५ ॥

दशाहाच्छुक्रवृद्धिस्स्यात्त्रिमासात्सर्वरोगजित् ।
षण्मासात्सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ ६२६ ॥

३८. ब्राह्मीकल्पः ॥

अथ वक्ष्यामि देवेशि ! ब्राह्मीकल्पमनुत्तमम् ।
समूलामुद्धरेद्ब्राह्मीं प्रक्षाल्य सलिलेन च ॥ ६२७ ॥

उलूखले कुट्टयित्वा पात्रे तत्रं समाहरेत् ।
जुहुयाच्छारदामन्त्रैस्तद्रसैश्च सहस्रकम् ॥ ६२८ ॥

अर्चयित्वा गुरून्विप्रान्प्राश्नीत हुतशेषकम् ।
पलमात्रं तद्रसं च जीर्णे क्षीरान्नभोजनम् ॥ ६२९ ॥

त्रिसप्ताहात्तदुद्धृत्य कर्षं प्रातर्लिहेन्नरः ।
वर्षाद्वर्षसहस्रायुस्सर्वरोगविवर्जितः ॥ ६२० ॥

### ३६. वज्रवल्लीकल्पः ॥

अथ व्याख्याम्यहं देवि ! वज्रवल्लीरसायनम् ।
वज्रवल्लीं समूलां च छायाशुष्कां विचूर्णयेत् ॥ ६२१ ॥

वरा व्रणारिमूलं च प्रत्येकं भास्करं पलम् ।
रोगानशेषान्षण्मासाद्धन्यात्संवत्सराद्भवेत् ॥ ६२२ ॥

देहसिद्धिश्च षण्मासाच्चूर्णमन्यत्प्रकल्पयेत् ।

### ३७. तिलक्षीरिणिकाकल्पः ॥

तिलक्षीरिणिकाकल्पं कथयिष्यामि शांभवि ! ॥ ६२३ ॥

तिलक्षीरिणिकामूलं मौनेनोत्पाट्य साधकः ।
कोष्णेन वारिणा पिष्ट्वा प्राङ्मुखोदङ्मुखः पिबेत् ॥

गिलेद्वा गुलिकां कृत्वा क्षीराज्यानाशयेच्छुचिः ।
क्रमेणार्धद्वित्रिनिष्कं सेवेताब्दं स सिद्धिभाक् ॥६२५॥

दशाहाच्छुक्रवृद्धिस्स्यात्त्रिमासात्सर्वरोगजित् ।
षण्मासात्सिद्धिमाप्नोति नात्र कार्या विचारणा ॥६२६॥

### ३८. ब्राह्मीकल्पः ॥

अथ वक्ष्यामि देवेशि ! ब्राह्मीकल्पमनुत्तमम् ।
समूलामुद्धरेद्ब्राह्मीं प्रक्षाल्य सलिलेन च ॥ ६२७ ॥

उलूखले कुट्टयित्वा पात्रे तत्रैं समाहरेत् ।
जुहुयाच्छारदामन्त्रैस्तद्रसैश्च सहस्रकम् ॥ ६२८ ॥

अर्चयित्वा गुरून्विप्रान्प्राश्नीत हुतशेषकम् ।
पलमात्रं तद्रसं च जीर्णे क्षीरान्नभोजनम् ॥ ६२९ ॥

एवं सप्तदिनं सेव्यं ब्रह्मचारी जपे रतः।
मेधावी ब्रह्मवर्चस्वी वाग्विशुद्धः प्रजायते ॥ ६३० ॥

ऊर्ध्वं सप्तदिनात्सेव्यं प्रबध्नातीच्छया अपि।
विस्मृतानपि वेत्त्येव श्रुतं शीघ्रं च धारयेत् ॥ ६३१ ॥

द्वितीये सप्तमादूर्ध्वं पूर्ववत्तद्रसं पिबेत्।
सकृच्छ्रुतं श्लोकशतं सहस्रमपि धारयेत् ॥ ६३२ ॥

एवं त्रिसप्तदिवसं पिबेद्ब्राह्मीरसं शुचिः।
देहादलक्ष्मीर्निर्याति वाणी विशति शाश्वती ॥ ६३३ ॥

भवेत्पुंरूपवाग्देवी सर्वशास्त्रार्थवेदिनी।
वेदवेदान्तविद्धीमाञ्जीवेत्पञ्चशताब्दकम् ॥ ६३४ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ पञ्चदशोल्लासः ॥

## ॥ षोडश उल्लासः ॥

### १. अङ्कोलकल्पः॥

अथ ब्रवीम्यहं देवि! कल्पमङ्कोलबीजकम्।
चतुर्भिस्साधकैर्धीरैर्विशुद्धैश्शुद्धिकांक्षिभिः ॥ १ ॥

समवेतस्साधकेन्द्रैः पुण्यर्क्षेष्वारभेच्च तत्।
अङ्कोलमूलं वितृणं कृत्वा संमार्ज्य शोधनम् ॥ २ ॥

तत्र लिङ्गं च संस्थाप्य तदग्रे स्थापयेद्घटम्।
एकसूत्रेण बध्नीयाल्लिङ्गाङ्कोलघटान्प्रिये! ॥ ३ ॥

गन्धपुष्पादिभिः पूजामघोरेण प्रकल्पयेत्।
प्रतिमासं दिवा नक्तं पुष्पादि फलितावधि ॥ ४ ॥

गृहीत्वा तत्फलं पक्वं पूरयेत्तद्घटं फलैः ।
योगिनीभैरवीप्रीत्यै महापूजां विधाय च ॥ ५ ॥

आनीय तद्घटं गेहे शोषयेदातपे फलम् ।
वितुषाणि च बीजानि कुर्यात्तन्मुखवर्षणम् ॥ ६ ॥

कुर्यात्ततो विशालास्ये पात्रे मृच्चूर्णलेपनम् ।
एकैकशश्चोर्ध्वमुखं रोपयेद्भुजगाकृति ॥ ७ ॥

ततस्तु टङ्कणं तद्वत्तत्तद्वक्त्रेषु लेपयेत् ।
तत्पात्रं कांस्यपात्रे च स्थापयेत्तदधोमुखम् ॥ ८ ॥

आतपे धारयेद्धीमान्पललैश्च तिरोदधेत् ।
दिने दिने च्युतं तैलं गृह्णीयाद्दिनपञ्चकम् ॥ ९ ॥

तत्तैलं काचकुप्यन्तस्स्थापयेच्च समन्तकम् ।
अर्धमात्राङ्कोलतैलं द्विगुणं तिलतैलकम् ॥ १० ॥

नासारन्ध्रद्वये नस्यं जरामृत्युविनाशनम् ।
स जीवेत्त्रिशतं वर्षं सर्वामयविवर्जितः ॥ ११ ॥

रोगादिजलपाशाद्यैर्भ्रमाद्यैश्च विषेण च ।
गतासूनां नृणां नस्यं कुर्यात्पुंशुक्लमिश्रितम् ॥ १२ ॥

मृतसूतं च तैलं ते जीवन्ति च न संशयः ।
मृतसञ्जीवनी विद्या पूर्वोक्ता कथिताऽनघे ! ॥ १३ ॥

**अन्ये रसायनकल्पाः॥**

एलाऽभया वचा काकतुण्डीफलमरुष्करः ।
सहदेवी निम्बपत्रं लाङ्गलीकन्दमेव च ॥ १४ ॥

समांशं शोषयेद्यन्त्रे पाताले तैलमाहरेत् ।
तत्तैलं नस्यमादद्यात्सप्ताहान्तरितं प्रिये ! ॥ १५ ॥

एवं वर्षे कृते नस्ये सहस्रायुर्भवेन्नरः।
नीलिकामूलसंयुक्तं तैलं चार्धपलं पिबेत् ॥ १६ ॥

वत्सराज्जायते सिद्धो वलीपलितवर्जितः।
जीवेद्ब्रह्मदिनं त्र्यब्दाद्वायुवेगो महाबलः ॥ १७ ॥

भृङ्गीरसं कृष्णजीरं प्रस्थं प्रस्थं प्रकल्पयेत्।
नीलोत्पलञ्च मधुकं प्रस्थार्धं च पृथग्भवेत् ॥ १८ ॥

तिलतैलं पञ्चपलं पाचयेत्सर्वमेकतः।
तैलावशिष्टं तत्तैलं जरा मृत्युश्च नश्यति ॥ १९ ॥

अर्धनिष्कं चैकनिष्कं सार्धनिष्कं क्रमेण च।
तैलप्रमाणमित्युक्तमब्दाज्जीवेच्छतत्रयम् ॥ २० ॥

इष्टि(षी)काक्षिपलं क्षिप्त्वा कर्षैकमुदकैः पिबेत्।
वत्सरात्पलितं हन्ति सहस्रायुर्भवेन्नरः ॥ २१ ॥

सर्पाक्षी काकमाची च सहदेवी च भृङ्गराट्।
काकतुण्डीफलं निम्बं पर्णं बाकुचिबीजकम् ॥ २२ ॥

समूलां देवदालीं च ब्राह्मीमूलं फलत्रयम्।
मूलं च वाजिगन्धाया नीलकोरण्डपत्रकम् ॥ २३ ॥

समं समं कन्यकाया द्रवैश्च परिभावयेत्।
सप्ताहं शोषयेच्चूर्णं छायायां त्रिमधुप्लुतम् ॥ २४ ॥

द्विकर्षं प्रत्यहं सेव्यं वत्सरेण जरां जयेत्।
आचन्द्रतारकं जीवेन्महाबलयुतस्सुखम् ॥ २५ ॥

### महाकामेश्वरकल्पः ॥

चातुर्जातकचोरचन्दनजलद्राक्षातुगारेणुकं
कस्तूरीतगरेन्दुकुङ्कुमजटाकुष्ठाश्वगन्धाब्दकम्।

कङ्कोलामरदारुचित्रकविषं द्वे जीरके सैन्धवं
भार्ङ्गीगोक्षुरदेवपुष्पमुसलीयष्टीबलाफेनकम् ॥ २६ ॥

रंभाकन्दफलत्रयं त्रिकटुकं जातीफलं वाशकं
तालीशं कटुकीफलं गजकणा माषामृताशर्करा ।
पिच्छाभृङ्गविदारिकामदनकं बीजं च कच्छूद्भवं
शाल्मल्यंघ्रिपुनर्नवागरुशतावर्यप्यथो दीप्यकम् ॥

पादांशं मृतमभ्रकं च विजया तुल्यौषधानां समा
सर्वेषां सदृशा सिता च मधुना चाज्येन संयोजिता ।
जातीचम्पककेतकादिकुसुमैस्सेवेत संवासितं
कर्षार्धं निशि देहसिद्धिदमहाकामेश्वरः कामदः ॥

पुंसां शुक्रविवृद्धिदार्ढ्यकरणे क्षीरानुपानं हितं
शाल्मल्यंघ्रिजलानुपानमथवाऽप्यन्यच्च यच्छुक्रलम् ।
प्रौढानां सुदृशां सुखातिसुखदो वश्यो महाद्रावकः
सङ्गे भङ्गुरकामकौतुकरसः क्रीडाकलामोददः ॥

संभोगे स्थविराग्नियोषिति मदे यूनां स्मरे दर्पहा
नित्यानन्दनिदानमादिपुरुषैरप्याहितास्वादनः ।
वाचां सिद्धिकरः प्रकृष्टकवितासन्दर्भसंपादनः
सौख्यारोग्यविशेषयौवनकलासामग्र्यसन्धायकः ॥

वृद्धत्वं हरते बलं च कुरुते मृत्युं निरस्येत्परं
व्याधिव्रातमपाकरोति कुरुते कान्तिं नयत्यार्जवम् ।
योगाभ्यासविधौ रतस्य सुलभां सिद्धिं विधत्तेतरां
अंहस्सन्ततिसंहृतिं कलयते स्त्रीणामपत्यप्रदः ॥

रोगाणां निचयं क्षयं क्षपयति क्षिप्रं महारुद्व्रणं
व्याहन्ति श्वसनं लयं गमयते छिन्ते च कासोदयम् ।
दुर्नामानि च षड्भिनत्ति हरते सर्वार्तिरोगोल्बणं
मेहौघं च लुनाति शोणितदरं विध्वंसते सेवनात् ॥

क्षीणे पोषमुपादधाति विपुलं पूर्णातिजीर्णोज्ज्वलं
मन्दाग्निं ग्रहणीं निकृन्ततितरां दोषानशेषानपि।
श्रेष्ठस्सर्वरसायनेषु विदुषां भोगार्थिनां योगिनां
सिद्धिं सम्यगिहातनोति वपुषस्संसेवनादन्वहम् ॥

मूलिकाकल्पेषु रसाभ्रकादिमेलनातिदेशः ॥

महावृक्षादिकल्पेषु प्रोक्तेष्वेतेषु साधकैः।
एष साधारणो योगः कर्तव्यस्सिद्धिकांक्षिभिः ॥ ३४ ॥

गुञ्जामात्रं शुद्धसूतं वाऽभ्रकं वा पणद्वयम्।
कान्तलोहं तथैवोपयोजयेद्भक्षयेन्नरः ॥ ३५ ॥

रसाभ्रलोहयोगेन सद्यस्सिद्धिमवाप्नुयात्।
जीवहीनो यथा देहो गन्धहीनं प्रसूनकम् ॥ ३६ ॥

तथैव मूलिकाकल्पा रसहीना न सिद्धिदाः।
तस्माद्रसेन सहितास्सद्यस्सिद्धिप्रदायकाः ॥ ३७ ॥

अभ्यङ्गरसायनम् ॥
[महानीलीतैलम्।]

महानीलीरसं प्रस्थं प्रस्थं भृङ्गरसं प्रिये!।
धात्रीफलरसं प्रस्थं काकतुण्डीफलोद्भवम् ॥ ३८ ॥

प्रस्थं कषायतिलजं तैलप्रस्थं च गोपयः।
आढकं योजयेत्सर्वं काकतुण्डीफलं पलम् ॥ ३९ ॥

त्रिपलं चामलं भृङ्गनीलीपत्ररजः पलम्।
पिष्ट्वा तस्मिन्निक्षिपेत्सर्वं पचेन्मन्दाग्निना प्रिये! ॥ ४० ॥

तैलावशिष्टं विपचेत्ततो वस्त्रेण शोधयेत्।
तैलेनानेन चाभ्यज्य शिरोऽभ्यङ्गं समाचरेत् ॥ ४१ ॥

प्रत्यहं कर्णपूरं च एवं कुर्याद्रसायनम् ।
केशा भ्रमरसङ्काशाश्श्रोत्रं दिगन्तपाटवम् ॥ ४२ ॥
जत्रूर्ध्वरोगा नश्यन्ति तथा पादहितं भवेत् ।

[चन्दनाद्यं तैलम् ।]

चन्दनागरुकर्पूरकस्तूरीकुङ्कुमं तथा ॥ ४३ ॥
उशीरद्वयकङ्कोलजातीफललवङ्गकम् ।
नलिकानलदास्पृक्कातुरुष्कस्थाणुलोचनम् ॥ ४४ ॥
हरेणुस्तगरं लाक्षा नखं स्थौणेयकं मुरा ।
नलदामलकं कुष्ठं चोरकं कटुकीफलम् ॥ ४५ ॥
प्रपौण्डरीकं खर्जूरं पद्मकं जातिपत्रिका ।
शैलेयं धातकीपुष्पं सरलं चैलवालुकम् ॥ ४६ ॥
पूगीफलं सप्तपर्णं तथा तामलकं प्रिये ! ।
एकैकं कर्षमात्रं स्यात्प्रस्थं तैलं च गोपयः ॥ ४७ ॥
आढकं तत्पचेत्सर्वं तैलशेषं समाहरेत् ।
तस्मिन्मृगाण्डं कस्तूरीं कर्पूरं कुङ्कुमं क्षिपेत् ॥ ४८ ॥
पृथक्कर्षं च जात्यादिकुसुमैर्वासयेद्बुधः ।
तेनाभ्यङ्गमधःकाये कुर्याद्दौर्गन्ध्यनाशनम् ॥ ४९ ॥
अशीतिवर्षदेशीयोऽप्यसौ स्यात्षोडशाब्दकः ।
कामिनीलोककन्दर्पस्सुभगश्शुक्लवृद्धिमान् ॥ ५० ॥
योषिच्छतं च रमते स जीवेच्छरदश्शतम् ।

[उद्वर्तनरसायनम् ।]

अथोद्वर्तनमाख्यामि वलीपलितभञ्जनम् ॥ ५१ ॥
सूतं गन्धं समं मर्द्यं स्तनदुग्धेन योषितः ।

मुण्डिका मेघनादश्च विष्णुक्रान्ता मुनिस्तथा ॥ ५२ ॥
सर्पाक्षी च द्रवैरासां दिनमेकं विमर्दयेत् ।
एतद्दशगुणं क्षारस्तिलस्य च यवस्य च ॥ ५३ ॥
एतत्सर्वं समध्वाज्यमनेनोद्वर्तनं वपुः ।
वलीपलितनाशस्स्याद्वर्षात्त्रिशतवत्सरः ॥ ५४ ॥
जीवेद्दिव्यवपुर्भूत्वा साधको नात्र संशयः ।
सनालमुत्पलं सूतं सप्ताहं परिमर्दयेत् ॥ ५५ ॥
आत्मीयशिवतोयेन ततश्चाङ्गं विमर्दयेत् ।
वत्सराज्जायते सिद्धिः पूर्ववद्दिव्यविग्रहः ॥ ५६ ॥
शिवांभसा च सूतेन्द्रं ब्रह्मदण्डीयमूलकम् ।
मर्दयेत्सप्तदिवसं सम्यग्देवि ! विमर्दयेत् ॥ ५७ ॥
वत्सराज्जायते सिद्धिः पूर्ववद्दिव्यविग्रहः ।
कटुतैलेन सुरभिं भावयेद्दिनसप्तकम् ॥ ५८ ॥
पलार्धं भक्षयेन्नित्यं वर्षाद्वज्रवपुर्भवेत् ।
त्रिशतायुस्स्वर्णवर्णो वलीपलितवर्जितः ॥ ५९ ॥
समध्वाज्यं कुष्ठचूर्णं कर्षं प्रातर्लिहेन्नरः ।
शतपुष्पसुगन्धाङ्गो जीवेद्वलिविवर्जितः ॥ ६० ॥

### केशरञ्जनकल्पाः ॥

काकतुण्डीफलं कान्तचूर्णमाम्राण्डतैलकम् ।
आलोड्य भाण्डे निक्षिप्य मासं धान्यमये क्षिपेत् ॥
उद्धृत्य लेपयेच्छीर्षं नस्यकर्मामुना भवेत् ।
त्र्यहात्केशास्सुनीलास्स्युष्षण्मासात्केशरञ्जनम् ॥ ६२ ॥
हरीतकी निष्कमेकं द्विपलं कान्तचूर्णकम् ।
पलमेकं नागचूर्णमम्लदध्ना प्रमर्दयेत् ॥ ६३ ॥

अभ्यक्तो निक्षिपेन्मूर्ध्नि मर्दयेन्नाडिकार्धकम् ।
एरण्डपत्रैस्संवेष्ट्य पुनर्वस्त्रेण बन्धयेत् ॥ ६४ ॥

स्नायात्पुनश्च त्रिदिनं पूर्ववत्केशरञ्जनम् ।
समूलौ नीलिकाभृङ्गावयश्चूर्णं वरासमम् ॥ ६५ ॥

चूर्णमेडकमूत्रेण दिनमेकं च भावयेत् ।
स्नानादि पूर्ववत्कृत्वा पूर्ववत्केशरञ्जनम् ॥ ६६ ॥

निस्त्वग्गुञ्जाफलं चैला देवदारु च कुष्ठकम् ।
समं चूर्णं भृङ्गरसैर्भाव्यमेकदिनं प्रिये ! ॥ ६७ ॥

अन्यच्चतुर्गुणं तैलं पचेन्मृद्वग्निना बुधः ।
यस्य तैलघृताभ्यङ्गात्केशा भ्रमरसन्निभाः ॥ ६८ ॥

हस्तिदन्तस्य दग्धस्य समभागं रसाञ्जनम् ।
छागीदुग्धेन संपेष्य लेपनात्केशरञ्जनम् ॥ ६९ ॥

कृष्णमृत्त्रिफलाभृङ्गरसायश्चूर्णकं समम् ।
आलोड्यैनं समं भाण्डे मासमेकं निरोधयेत् ॥ ७० ॥

तल्लेपाच्चिकुराः कृष्णा भवेयुः पञ्चमासतः ।
धात्रीफलं जपापुष्पं किट्टं पिष्ट्वा च मूर्धनि ॥ ७१ ॥

लेपयेत्त्रिदिनं तेन केशास्स्युर्भ्रमरोपमाः ।
चूर्णं सिन्दूरसदृशं तयोस्तुल्या च सांब्रणिः ॥ ७२ ॥

पिष्ट्वांभसा प्रलेपेन तत्क्षणात्केशरञ्जनम् ।
गोरोचनं कृष्णतिलान्शतपुष्पां शिवांबुना ॥ ७३ ॥

काकमाचीमिदं सर्वमयःपात्रे विमर्दयेत् ।
तेनैव दिवसादूर्ध्वं केशरञ्जनमुत्तमम् ॥ ७४ ॥

चूर्णं सिद्धार्थकं सर्जो यवक्षारं च काञ्जिकैः ।
नागपुष्परसैः पेष्यं लेपनं केशरञ्जनम् ॥ ७५ ॥

कदलीकन्दचूर्णं च सिन्दूराङ्गारकौ तथा।
रसैर्जम्बीरजैर्लोहमुष्ट्यायःपात्रके पिषेत् ॥ ७६ ॥
दिनैकलेपनात्तेन केशानां रञ्जनं भवेत्।
कासीसं नीलिकापत्रं दधिभृङ्गरसस्तथा ॥ ७७ ॥
समांशं लोहचूर्णं च लेपनात्केशरञ्जनम्।
नागदण्डेन पत्राणि कोरण्टस्य च मर्दयेत् ॥ ७८ ॥
दिनत्रयं च तल्लेपात्केशास्स्युर्भ्रमरोपमाः।
वरा भृङ्गी चूतबीजं मृणालं च प्रियङ्गुकम् ॥ ७९ ॥
नीली निशा लोहनागौ चूर्णिता निंबतैलकैः।
कान्तपात्रे लोडयित्वा मासमेकं विभावयेत् ॥ ८० ॥
तेन लिप्ताः कचाः कृष्णा रञ्जिता भ्रमरोपमाः।
तिलाः कृष्णाः काकमाचीबीजानि समभागतः ॥ ८१ ॥
तत्तैलयन्त्रतो ग्राह्यं तेन स्यात्केशरञ्जनम्।
कर्षं जपारसः क्षौद्रं सप्ताहं नस्यमाचरेत् ॥ ८२ ॥
तदूर्ध्वं रञ्जयेत्केशान्सर्वनस्योत्तमो ह्ययम्।
भृङ्गराजरसैः पिष्ट्वा त्रिफलां लोहचूर्णकम् ॥ ८३ ॥
तैलमेतत्समं योज्यं तथा भृङ्गरसैः पुनः।
मृद्वग्निना पचेत्सर्वं तैलशेषं यथा भवेत् ॥ ८४ ॥
स्निग्धभाण्डे च तत्तैलं मासं भूमौ विनिक्षिपेत्।
तैलेन लेपयेच्छीर्षं कारवल्लीदलैः पुरा ॥ ८५ ॥
वेष्टयेत्तत्तु वस्त्रेण निवाते क्षीरभोजनम्।
क्षालयेत्त्रिफलाक्वाथैः कुर्यात्सप्तदिनं प्रिये! ॥ ८६ ॥
कपालरञ्जनं कुर्याद्यावज्जीवं न संशयः।
श्रियालीकाकतुण्ड्याश्च बीजं निर्गुण्डिकारसैः ॥ ८७ ॥

जपापुष्परसैर्भाव्यं पृथक् दिनचतुष्टयम् ।
पातालयन्त्रे तत्तैलं पातयेत्तेन लेपनम् ॥ ८८ ॥

कुर्यान्मूर्ध्नि च गन्धर्वपत्रैश्च परिवेष्टयेत् ।
वस्त्रेण च ततो वातशून्यदेशे वसन्सुधीः ॥ ८९ ॥

क्षीराशी काञ्जिके स्नानं कुर्यात्सप्तदिनं त्विति ।
केशा भ्रमरसङ्काशा यावज्जीवं न संशयः ॥ ९० ॥

जलमण्डनिकाकाकमाचीभृङ्गास्समास्समाः ।
पिष्ट्वा तैलं पचेत्सूपं पुनस्तैलेन लेपयेत् ॥ ९१ ॥

मूर्धानं लेपयेत्तेन सप्ताहं केशरञ्जनम् ।
स्नानभोजनशय्यां च पूर्ववत्परिकल्पयेत् ॥ ९२ ॥

वराभृङ्गरसैः पिष्ट्वा कान्तपात्रे विलेपयेत् ।
अवाङ्मुखं विनिष्ठाप्य प्रातस्तं भृङ्गराड्रसैः ॥ ९३ ॥

पुनः पिष्ट्वा लिहेच्छीर्षं क्षालयेत्त्रिफलांबुना ।
एकविंशद्दिनं कुर्यात्पूर्ववत्फलमाप्नुयात् ॥ ९४ ॥

गरलं कृष्णजीरं च पिष्ट्वा रुद्ध्वा च तन्मुखम् ।
गृहाङ्गणे पङ्किले च खनित्वा स्थापयेत्सुधीः ॥ ९५ ॥

षण्मासात्तद्द्रवीभूतं कृष्णं साधु समुद्धरेत् ।
शिरोमध्ये क्षिपेत्कर्षं पूर्ववद्वेष्टनादिकम् ॥ ९६ ॥

आजन्म रञ्जयेत्केशांस्तच्च कापालरञ्जनम् ।
भृङ्गी नीली वरा कृष्णायसं मदनबीजकम् ॥ ९७ ॥

कोरण्टकुसुमं चूर्णमर्जुनस्य त्वचोद्भवम् ।
अंभोजमूलं जम्ब्वाश्च तत्सर्वं च समांशकम् ॥ ९८ ॥

लोहभाण्डगतं कुर्यात्पक्षं भूमौ विनिक्षिपेत् ।
हरेद्भाण्डगतं कल्कं कल्कात्तैलं चतुर्गुणम् ॥ ९९ ॥

तैलाच्चतुर्गुणं भृङ्गरसस्तस्माच्चतुर्गुणः ।
वराक्वाथस्सर्वमिदं मन्दवह्नौ विपाचयेत् ॥ १०० ॥

तैलावशिष्टं विपचेत्तत्पिष्ट्वाऽऽयसपालके ।
निक्षिपेच्च परीक्षार्थं काकपक्षं विलेपयेत् ॥ १०१ ॥

तैलेन यदि कृष्णं तदौषधं सिद्धिदं भवेत् ।
साधको मासमेकन्तु तस्मिन्पात्रे विपाचितम् ॥ १०२ ॥

तेन लिप्ताः कचास्तस्य षण्मासाद्भ्रमरोपमाः ।
चिञ्चाश्वत्थपलाशानां वासायाश्च द्रवैर्मुहुः ॥ १०३ ॥

द्रुतं पात्रगतं नागं चालयेद्भस्मतां व्रजेत् ।
तावत्पचेन्नागभस्म पलं लोहस्य चूर्णकम् ॥ १०४ ॥

द्विपलं च वराचूर्णं त्रिपलं दाडिमत्वचः ।
पलं चैतत्सर्वसमं काञ्जिकं लोहभाजने ॥ १०५ ॥

लोडयेत्पाचयेत्किंचित्क्षणं तल्लोहपालके ।
आतपे धारयेद्भृङ्गकोरण्टरसभावितम् ॥ १०६ ॥

एकविंशद्दिनं भाव्यं भूयो भूयो द्रवं द्रवम् ।
तेनैव लिप्ताश्चिकुराः पिञ्छतापिञ्छसन्निभाः ॥ १०७ ॥

कचरञ्जनयोगेषु कथिताकथितेषु च ।
निशि लेपं तथैरण्डपत्रैश्च परिवेष्टनम् ॥ १०८ ॥

प्रातस्स्नानमिदं कर्म सर्वसाधारणं स्मृतम् ।

### दिव्यौषधिग्रहणयोग्यस्थलनिर्देशः ॥

श्मशाने सलिले मार्गे गृहे देवालये तथा ॥ १०९ ॥

मलमूत्रयुतस्थाने ग्रामे गोष्ठे तरोरधः ।
छायायां च विषप्राये कुशीते चान्नबाधिते ॥ ११० ॥

एवं प्रायेषु देशेषु न ग्राह्या सिद्धमूलिका ।
अरण्ये पर्वते तीरे नद्या तपवने शुचौ ॥ १११ ॥

शिलासङ्गिशुचिक्षेत्रे सिद्धक्षेत्रेऽब्धिरोधसि ।
श्रीपर्वते हिमगिरौ तटाके विजने ह्रदे ॥ ११२ ॥

गृह्णीयान्मूलिका जाता देहसिद्धिप्रदायिकाः ।

**दिव्यौषधिग्रहणविधिः ॥**

सर्वेषां सिद्धमूलानां रक्षाबन्धनकर्मणि ॥ ११३ ॥

खननेषूत्पाटनेषु ग्रहणेषु क्रमेण वै ।
कथ्यन्ते मनवो दिव्यास्सर्वसाधारणास्स्मृताः ॥ ११४ ॥

पूर्वेद्युरेव सुस्नातः कृतदन्तविशोधनः ।
अनुलिप्तश्शुद्धवस्त्रो हृष्टस्संयतमानसः ॥ ११५ ॥

मौनी गन्धाक्षतोपेतो रक्षाबन्धनसूत्रिताम् ।
पूर्वमन्वेषितां गत्वा मूलिकां स्वेष्टदायिकाम् ॥११६॥

वितृणं परितः कृत्वा खात्वांऽबु परिषेचयेत् ।
गन्धपुष्पाक्षतैः पूजां कृत्वा सूत्रेण बन्धयेत् ॥११७॥

समन्त्रकं साधकेन्द्रस्सोपवासो जितेन्द्रियः ।
अत्रैव तिष्ठ कल्याणि ! मम कार्यकरी भव ॥ ११८ ॥

मम कार्यकरी सिद्धा ततस्स्वर्गं गमिष्यसि ।

"ओं ह्रीं नमस्तेऽमृतसंभूते बलवीर्यविवर्धिनि !
बलमायुश्च मे देहि पापं मे जहि दूरतः । ह्रीं फट् ॥"

अनेनैव तु मन्त्रेण त्रिधा सूत्रेण वेष्टितम् ॥ ११९ ॥

रक्षां बध्नीत तां स्पृष्ट्वा जपेदष्टोत्तरं शतम् ।
ततः प्रातस्समुत्थाय कृत्वा नित्यविधिं शुचिः ॥१२०॥

मूलिकां तां समासाद्य गन्धपुष्पाक्षतादिभिः ।
सर्वोपचारैस्संपूज्य बलिं दद्यात्सहेतुकाम् १२१ ॥

समन्त्रकं खनेद्धीमान्मन्त्रोऽयमपि कथ्यते ।
येन त्वां खनते ब्रह्मा येन त्वां खनते भृगुः ॥१२२॥

येनेन्द्रो वरुणो विष्णुस्तेन त्वामुपचक्रमे ।
त्वामेवाहं खनिष्यामि मन्त्रपूतेन पाणिना ॥ १२३ ॥

एवं संप्रार्थयित्वाऽऽदौ पश्चान्मन्त्रं समुच्चरेत् ।

ओं श्रीं ह्रीं तं अमृतेश्वरि एहि एहि मम सकलसिद्धिं कुरु हुं फट् ।

अनेनैव तु मन्त्रेण निखनेत्सिद्धिमूलिकाम् ॥ १२४ ॥

अथ तूत्पाटयेत्तां तु प्राञ्जलिः प्रार्थयेदिति ।
मा उत्पते मा निपते मा च ते चान्यथा भवेत् ॥

ओं ह्रीं चण्ड हुं फट् स्वाहा ।

उत्पाटयेदनेनैव मन्त्रेण परमेश्वरि! ।
अच्छिन्नमूलामादाय शुद्धवस्त्राभिवेष्टिताम् ॥ १२६ ॥

क्षिप्त्वा पटलिकायां च स्ववेश्मनि शुचिस्थले ।
निचये हृष्टमनसा निदध्यात्पारणं ततः ॥ १२७ ॥

ओं नमो भैरवाय महासिद्धिप्रदायकाय आपदुत्तरणाय हुं फट् ।

अनेनैव तु मन्त्रेण गृहीत्वा गृहमानयेत् ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ षोडशोल्लासः ॥



## ॥ सप्तदश उल्लासः ॥

उषःपानरसायनम् ॥

अथ प्रीतमना देवी पप्रच्छ परमेश्वरी ।

**श्रीभैरवी—**

आदिभैरव देवेश सृष्टिस्थित्यन्तकारण ! ॥ १ ॥

सर्वज्ञ शिव लोकेश त्वत्प्रसादान्मया विभो ! ।
रसायनानि दिव्यानि श्रुतानि विविधानि च ॥ २ ॥

सुसाध्यं सुलभं दिव्यं सद्यः प्रत्ययकारणम् ।
बालस्त्रीषण्डवृद्धानां रोगार्तानां विशेषतः ॥ ३ ॥

योग्यं रसायनार्हाणां ब्रूहि देव कृपानिधे ! ।
ततस्स्मेराननाम्भोजो भैरवो भवभैरवः ॥ ४ ॥

**श्रीभैरवः—**

शृणु देवि ! प्रवक्ष्यामि सर्वयोग्यं सुखङ्करम् ।
पावनं सुलभं चान्तर्बहिरंहोविनाशनम् ॥ ५ ॥

यस्माज्जगन्ति जातानि प्राणाः प्राणभृतामपि ।
त्रायते विश्वमखिलं सर्वदेवात्मकं प्रिये ! ॥ ६ ॥

त्रिदोषशमनं सौख्यं पथ्यं सर्वरसाधिकम् ।
षड्जीवनादिगुणयुग्रसयुक्तं बलप्रदम् ॥ ७ ॥

जीवनं च बलं प्रायः प्राणिनामग्निमूलकम् ।
तस्याग्निरिन्धनं तोयं तस्मात्तोयं पिबेद्बुधः ॥ ८ ॥

वैद्युतो वाडवो वह्निर्जाठरश्च त्रयोऽग्नयः ।
अबिन्धनास्स्युरन्येषां काष्ठादीनीन्धनानि हि ॥ ९ ॥

तस्माद्देवि ! शिवं वच्मि शृणु तोयरसायनम् ।
पूरयेन्नूतनघटे प्रातश्शोध्यैश्च वारिभिः ॥ १० ॥

गांगेयैर्वाऽथ नादेयैस्ताटाकैर्वापि सारसैः ।
कौपैर्वा चापि वै घर्मैर्वार्षिकैर्वा यथाभवैः ॥ ११ ॥

तद्धटं स्थापयेन्मञ्चे दिव्यभास्कररश्मिभिः ।
नष्टदोषं निशायां च चन्द्रामृतकराप्लुतम् ॥ १२ ॥

एलोशीरककर्पूरचन्दनैरधिवासितम् ।
पाटलीकेतकीजातिमल्लिकोत्पलवासितम् ॥ १३ ॥

उशीरतालवृन्तेन तोयसिक्तेन मन्द्रतः ।
मुहुर्मुहुर्वीजितं तु हंसोदकमुदाहृतम् ॥ १४ ॥

अनुराधोदयात्पूर्वं नास्पृष्टमलमूत्रकम् ।
पिबेत्तोयं ततः कुर्यान्मलमूत्रविसर्जनम् ॥ १५ ॥

सन्ध्यावन्दनकर्मादि कुर्वन्स्वेच्छाशनो भवेत् ।
एकाब्दबालको नित्यं पिबेत्तोयं पलं पलम् ॥ १६ ॥

एवं षोडशवर्षान्तं प्रत्यब्दं च पलं पलम् ।
वर्धयेत्क्रमशो धीमान्पलषोडशिकावधि ॥ १७ ॥

षोडशाब्दात्परं सेव्यं षोडशप्रसृतं जलम् ।
एवं विंशतिवर्षान्तं नित्यं सेवेत सादरम् ॥ १८ ॥

अनेन व्याधयस्सर्वे विनश्यन्ति न संशयः ।
जीवेद्वर्षशतं बुद्धिबलेन्द्रियसुखान्वितः ॥ १९ ॥

प्रसृतं च पिबेदष्टपलं दीर्घायुषाय च ।
यथा वह्निबलं तोयं त्र्यहाद्वा पञ्चवासरात् ॥ २० ॥

सप्ताहाद्वा क्रमात्प्राज्ञः प्रसृतं प्रसृतं तथा ।
पुनस्तु कुडवं वाऽपि वर्धयेत्तच्छनैश्शनैः ॥ २१ ॥

षोडशप्रसृतं यावत्तावत्सेव्यं ततः परम् ।
यथा यथांबुनो वृद्धिस्तथा दोषः प्रशाम्यति ॥ २२ ॥

षण्मासं वा वत्सरं वा याद्यन्तं वा पिबेज्जलम् ।
यथा वृद्धिस्तथा ह्रासो यावच्चुलुकमात्रकम् ॥ २३ ॥

उपवासं दिवा रात्रौ पथ्याशी तत्परित्यजेत् ।
आत्यन्तिके च व्यायामे सति वाञ्जलिमात्रकम् ॥२४॥

पादमर्धं त्रिपादं वा यथा सेवाञ्जलिं पिबेत् ।
मध्वाज्यतैलदुग्धाज्यजलाद्यन्यतमैर्युतम् ॥ २५ ॥

हन्याच्छीघ्रं वातरोगमथवाऽऽस्यस्थभेषजैः ।
तत्तद्रोगोपशमनं भक्षयित्वा च भेषजम् ॥ २६ ॥

ततो जलं वा प्रपिबेन्मुहूर्ते वा गते सति ।
जीर्णे वा सलिले सेव्यं भोजनान्तेऽथवा निशि ॥

ज्वरादिरोगे सञ्जात उपवासो भवेद्यदि ।
पिबेदर्धञ्च पूर्वस्माल्लध्वाहारी यथा सुखम् ॥ २८ ॥

उपवासो व्रतार्थं चेत्तत्क्षीरं वा पलं निशि ।
रात्रावभोजनं देवि! जठरे वारि शुष्यति ॥ २९ ॥

अर्धं वा प्राञ्जलिं वारि पिबेन्नित्यं प्रयत्नतः ।
सर्वत्राहारसत्वाग्निसाम्यं वारि पिबेत्सुधीः ॥ ३० ॥

विण्मूत्रोत्सर्जनं ब्राह्मान्मुहूर्तात्पूर्वतो यदि ।
ततः पीत्वैव सलिलं विण्मूत्रं च विसर्जयेत् ॥ ३१ ॥

वारि पूतं विषं त्वल्पं विण्मूत्रोत्सर्जनात्परम् ।
अज्ञातवेले रात्रौ चेत्पिबेत्तोयं पुनः प्रगे ॥ ३२ ॥

पादं वाथ चतुर्थांशमञ्जलिं वा पिबेज्जलम् ।

**जलपानकल्पे पथ्यमपथ्यञ्च ॥**

गोधूमषष्टिशाल्यन्नं यवजाङ्गलजाभिषम् ॥ ३३ ॥
गव्यं सर्पिर्दधि क्षीरमुदश्विन्नवनीतकम् ।
मध्विक्षुदाडिमद्राक्षामोचखर्जूरशर्कराः ॥ ३४ ॥

सहकारफलं धात्री नालिकेरजलं नवम् ।
कूष्माण्डालाबु(कोर्वा)रुनिम्बपत्रफलानि च ॥ ३५ ॥

पत्रपुष्पफलं शिग्रोर्मुद्गयूषरसौ कृतौ ।
सुनिषण्णकगोरण्टी जीवन्तीद्वयकं तथा ॥ ३६ ॥

राजवृक्षकशोथघ्नी चिल्ली वाऽपि लघुच्छदा ।
शतावरी तण्डुली च मत्स्याक्षी च बिदारिका ॥ ३७ ॥

उपोदकी च वार्ताकी कारवल्लीफलानि च ।
लघुकोशातकी लक्ष्मी पटोलं तालमूलकम् ॥ ३८ ॥

मोचायाः कुसुमं दण्डफलानि क्षुद्रदन्तिका ।
सदाफलं च मत्स्याण्डी शृङ्गबेरञ्च सैन्धवम् ॥ ३९ ॥

फलपूराम्लकं पक्वधात्रीफलमलर्ककः ।
वायसी कुन्तली चैव वसुकन्यालिका तथा ॥ ४० ॥

कुस्तुंबरी च सरसी शार्ङ्गेरी चक्रमर्दकः ।
मण्डूकपर्णी पालक्याः पत्रं गाङ्गेरुकं तथा ॥ ४१ ॥

आखुकर्णी कासमर्दपत्रं गांगेरुकं तथा ।
संस्कारार्थं च कैडर्यसैन्धवोषणजारकाः ॥ ४२ ॥

सर्वेऽपि मधुरप्रायास्स्वादुशीतास्सुखप्रदाः ।
कतकस्य च पथ्यायाश्शलाटुं लवणाक्तकम् ॥ ४३ ॥

नीलोत्पलाब्जयोर्नालपुष्पशालूककेसराः ।
स्नेहयुक्तं भजेत्स्नानं श्वेताम्बरधरश्शुचिः ॥ ४४ ॥

कस्तूरीचन्दनहिमकर्पूरैरनुलेपनम् ।
मन्दानिलं पुष्पमाल्यं कौमुदीरत्नभूषणम् ॥ ४५ ॥

पथ्यं रुच्यं जलीयं च स्वादुप्रायं च सद्रवम् ।
घृतक्षीरयुतं भक्तं भुञ्जीतोदकसेवकः ॥ ४६ ॥

ताम्बूलचर्वणं कुर्यात्सकर्पूरं सुखासनम् ।
नारिकेलजलं सायं निशि क्षीरं सशर्करम् ॥ ४७ ॥

शाल्मली तूलशय्या च निशि निद्रा यथासुखम् ।
ऊनातिमात्रविष्टंभिविबन्ध्युष्णखराणि च ॥ ४८ ॥

रूक्षाहृद्यस्थिरगुरुपिच्छिलाकालभोजनम् ।
कुल्माषबृहतीचोषद्वयालाबुनिरूढकम् ॥ ४९ ॥

कुलुत्थयूषकालिङ्गगुञ्जावृक्षफलं तथा ।
पलाण्डु लशुनं सर्वकन्दं सिद्धार्थकं तथा ॥ ५० ॥

अजाङ्गलं पलं मत्स्यं किंचित्क्षीरान्नभोजनम् ।
अनुक्तशाकमन्नं च फलं क्षीरयुतं पलम् ॥ ५१ ॥

सर्वक्षीरयुतान्सर्वान्रसानमधुरानपि ।
तिलतैलं च तत्कल्कमेतैस्संयुक्तमौषधम् ॥ ५२ ॥

बहुभाष्यातपच्छायासमचिन्ताध्वरोषणम् ।
शोकवाहनभीतिश्चालस्यात्यन्तरतं तथा ॥ ५३ ॥

मूर्ध्नि भारवहश्चांभस्तरणं चोपवासकम् ।
व्यायामेर्ष्यादिवास्वापो निशि जागरणं तथा ॥ ५४ ॥

पुरोवातो हिमं धूलिर्वातप्रायस्थलं तथा ।
धूमप्रायगृहं तल्पं कार्पासपरिकल्पितम् ॥ ५५ ॥

अग्निश्श्रमांबुजननं तथोष्णाम्बरधारणम् ।
कौशेयधारणं तूर्वोस्ताडनं कठिनासनम् ॥ ५६ ॥

उष्णालयक्षारकूपसलिलं कटुतिक्तकौ ।
अम्लः कषायतिक्तश्च रामठं च विरूक्षकम् ॥ ५७ ॥

मदिरा च वसा मज्जा मूत्रं दुष्टजलानि च ।
मद्यं शीतमनारोग्यं भोजनं तैलवर्जितम् ॥ ५८ ॥

अभ्यङ्गं काञ्जिकं शीतं रोगाभावे कषायकम् ।
विदाहि शोषणं मूर्ध्नि स्नानमप्युष्णवारिभिः ॥ ५९ ॥

कारणं दोषकोपानां निन्द्यमन्यद्विवर्जयेत् ।

## पीतजलजीर्णलक्षणम् ॥

स्वस्थः पीत्वा सुखासीनस्सलिलं वाग्यतश्शुचिः ॥ ६० ॥

विसर्जयेन्मलं मूत्रं ताम्बूलादींश्च वर्जयेत् ।
यावज्जलं पिबेत्तावन्मूत्रं निर्याति चेत्तदा ॥ ६१ ॥

जलं जीर्णं विजानीयादौषधेन विना यदा ।
निर्गच्छेत्सलिलं पीतं तदा स्वस्थतरो मतः ॥ ६२ ॥

निर्गते पीतसलिले निश्शेषे क्षुत्प्रजायते ।
तैलाभ्यङ्गं ततः कुर्याद्धितं पथ्यमाचरेत् ॥ ६३ ॥

## जलाजीर्णलक्षणं तत्परिहारश्च ॥

परिहारं विना रोगा जायन्ते नाविचारतः ।
भ्रमः क्लमश्च वमनं शिरस्तोदश्शिरोभ्रमः ॥ ६४ ॥

सलिलस्तम्भशोषौ चाभिष्यन्दो वेगरोधनम् ।
गुल्मोदावर्तकौ वह्निसदनं गात्रभञ्जनम् ॥ ६५ ॥

तोदो बस्तौ मेहने च वंक्षणे हृदि लोचने ।
जङ्घोद्वेष्टनकं श्वासो भुक्तिद्वेषस्त्वरोचकः ॥ ६६ ॥

अश्मरी पीनसः कासस्त्वतिसारश्च दुस्तरः ।
सकृदम्भोविशोषश्चेद्द्राक्षायासादिकर्मभिः ॥ ६७ ॥

स दोषो न तु विज्ञेयो दोषस्तंभोऽसकृद्यदि ।
प्रपीते सलिले स्तब्धे चिकित्साऽत्र विधीयते ॥ ६८ ॥

कूश्माण्डपत्रैरुदरं बस्तिं चाच्छादयेत्सुधीः ।
मूत्रमोचनकृल्लेपं विदध्याज्जलमुक्तये ॥ ६९ ॥

यद्वाऽऽज्यधात्रीलिप्ताङ्गस्नानं कुर्याद्रसायनम् ।
सगुडं वा पिबेत्क्षीरं तक्रं वा शर्करान्वितम् ॥ ७० ॥

नालिकेरोदकैर्वापि ससितोर्वारुबीजकम् ।
कष्टाज्जीर्णं जलं यस्य भुक्तेः प्राक्सर्पिराददेत् ॥ ७१ ॥

यद्वा तिष्ठेच्चिरं चाप्सु स्नायाद्धात्र्यादिभिर्हिमैः ।
यद्वा स्तब्धे जले पीते स्वादुशीतैर्विशोधयेत् ॥ ७२ ॥

कृष्णामदनसिन्धूत्थैः कल्कैर्मधुयुतैर्वमेत् ।
पथ्याचूर्णं नालिकेरजलैः पीत्वा विरेचयेत् ॥ ७३ ॥

यद्वा त्रिजातकव्योषक्रिमिघ्नामलकाब्दकैः ।
त्रिवृत्सर्वसमा योज्या ह्येतत्सर्वसमा सिता ॥ ७४ ॥

सक्षौद्रगुलिकां कृत्वा लिहेदम्भोविमुक्तये ।
रात्रौ वरा सेविता चेत्सर्वदोषविनाशिनी ॥ ७५ ॥

नाभेरधश्चार्द्रपटं क्षणमात्रं निधापयेत् ।
अवगाहेन शीताम्भो मूर्ध्नि वा शीतवारि च ॥ ७६ ॥

निक्षिपेदथवा सार्द्रसिकतातल्पशोभिते ।
धारागृहे वा चासीत त्रपुसोर्वारुबीजकम् ॥ ७७ ॥

वरीद्राक्षाम्बुना पेयं वा तु काश्मीरजं वृषम् ।
द्राक्षारसेन वा पेयं कर्कटीबीजकानि च ॥ ७८ ॥

तण्डुलक्षालनजलैर्मधुकं वाऽथ शर्कराम् ।
सद्राक्षं च गुडं दार्वीं तण्डुलोदकयोगतः ॥ ७९ ॥

यद्वा धात्रीफलरसैर्गोस्तनीं शर्करान्विताम् ।
वरीं वा शर्करायुक्तां द्राक्षां वा मस्तुना सह ॥ ८० ॥

जलेन वा गुडं पेयं नालिकेरजलेन वा ।
तुगाक्षीरीभवं कल्कं वापि कर्कारुबीजकम् ॥ ८१ ॥

कल्पं वा तामलक्याश्च मूलं वा यष्टिकल्ककम् ।
पिशाचकदलीपक्कफलं क्षौद्रसितान्वितम् ॥ ८२ ॥

नालिकेरजलैर्वापि तक्रैर्वा मस्तुनापि वा ।
रम्भाकन्दजलैर्वापि क्षीरैर्वाऽऽमलकीरसैः ॥ ८३ ॥

यद्वाऽमृतारसैर्वाऽपि कूश्माण्डस्वरसेन वा ।
दाडिमस्य रसैर्वाऽपि त्वभीरोश्च रसैस्तथा ॥ ८४ ॥

अलाबोश्च रसैर्वाऽपि पिबेदेलां सशर्कराम् ।
कदलीकन्दयष्ट्याह्वश्वदंष्ट्राश्च कशेरुकाः ॥ ८५ ॥

तृणपञ्चकमूलानि शुक्रा चैव शतावरी ।
एतेषां कदलीकन्दप्रमुखानां कषायकम् ॥ ८६ ॥

सक्षौद्रं ससितं वापि पेयं जलविमुक्तये ।

### उषःपानगुणाः ॥

एवं ब्राह्मे मुहूर्ते यत्पीतं वारि रसायनम् ॥ ८७ ॥

दोषानशेषान्शमयेद्रोगानपि विनाशयेत् ।
रक्तवातं च वातांश्च हृद्रोगं श्वासकासकम् ॥ ८८ ॥

रक्तपित्तं च पित्तानि ग्रहणीछर्दरोचकान् ।
क्षयमूर्च्छाकुष्ठमेहमोहगण्डार्बुदान्गदान् ॥ ८९ ॥

गुल्मप्लीहाश्मरीशूलानाहाजीर्णविषूचिकाः ।
क्रिमिं पाण्डुं कामिलां च हलीमकविसर्पकाः ॥ ९० ॥

व्रणं च श्वयथुं श्वित्रमग्निसादं त्रिधा विषम् ।
जत्रूर्ध्वगुह्यकान्रोगानपस्मारं च विभ्रमम् ॥ ९१ ॥

ज्वरानाध्मानजठरमूत्राघातगुदाङ्कुरान् ।
वलीपलितनिर्मुक्तो जीवेत्त्रिशतवत्सरम् ॥ ९२ ॥

स्थिरधीर्बलवान्धीरः कान्तः कान्तामनोभवः ।

**नासापानरसायनम् ॥**

नासापुटाभ्यां सलिलं यस्तु प्रातः पिबेन्नरः ॥ ९३ ॥

शुक्तिमात्रं प्रतिदिनं पथ्याशी विजितेन्द्रियः ।
इन्द्रियाणां पटुत्वं च वलीपलितनाशनम् ॥ ९४ ॥

शतायुष्यमवाप्नोति नासारन्ध्ररसायनम् ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ सप्तदशोल्लासः ॥

# ॥ अष्टादश उल्लासः ॥

सदाचाररसायनम् ॥

दिनचर्या ।

श्रीभैरवी—

देवदेव चिदानन्द सदाचारपरायण ! ।
परात्परतरं ब्रूहि सदाचारक्रमं प्रभो ! ॥ १ ॥

श्रीभैरवः—

साधु पृष्टं त्वया देवि ! लोकानां हितकारिणि ! ।
समासतस्सदाचारं ब्रवीमि शृणु पार्वति ! ॥ २ ॥

आचाराज्जायते धर्मो धर्मादर्थश्च वर्धते ।
तस्मात्प्रवर्तते कामस्तेन स्वर्गफलं भवेत् ॥ ३ ॥

आचारात्पापनाशस्स्यादायुर्वृद्धिर्दिने दिने ।
अधीता निगमास्सर्वे मन्त्राश्शास्त्राणि जातयः ॥ ४ ॥

समया देवतास्सर्वास्त्वाचारफलदाश्शुभाः ।
आचारहीनास्सर्वे ते न फलन्ति न संशयः ॥ ५ ॥

[प्रबोधविधिः ।]

अरुणोदयवेलायां स्वस्थश्शय्यातलस्थितः ।
गीतैर्मङ्गलवाद्यैश्च बोधितस्सुप्रसन्नधीः ॥ ६ ॥

गुरुं तं नामपूर्वं च द्विभुजं वरदाभयम् ।
शान्तं शुद्धस्मितं ध्यात्वा मूर्ध्नि स्वेष्टां च देवताम् ॥७॥

वारस्वरसञ्चरणचूडराणिवानमः(?) ॥

रविभौमार्किवारेषु सूर्यसौम्येन्दुभार्गवे ।
चन्द्रे गुरौ यथालाभं पश्यंश्चारस्वरं प्रिये ! ॥ ८ ॥

आप्ये भौमे सुखं तत्वे दुःखमन्येषु चोत्थितः ।
तत्तद्वारस्वराभावे पूर्णा नाडी पदं क्षिपेत् ॥ ९ ॥

जीर्णाजीर्णं विचिन्त्यादौ पुमान्पाणितलं निजम् ।
दक्षिणं विनतं वामे दीपं वह्निं च दर्पणम् ॥ १० ॥

सवत्सधेनुं धरणिमाकाशं रत्नमुत्तमम् ।
अन्यच्च मङ्गलं यद्यत्तत्तत्पश्येत्समुत्थितः ॥ ११ ॥

न पश्येन्मुण्डिनं षण्डं जटिलं हीनविग्रहम् ।
नग्नं पाषण्डिनं रुग्णं मुक्तकेशं च नास्तिकम् ॥ १२ ॥

सश्रृङ्खलमतिक्रूरं मलिनाङ्गाम्बरं खलम् ।
अभ्यक्तं कुष्ठिनं मत्तं सुप्तं कुब्जं च नापितम् ॥१३॥

अनेडमूकं दांशं च जडं भूतादिपीडितम् ।
चकितं च सुशोकार्तं रुदन्तीं भिक्षुकीं तथा ॥ १४ ॥

रजस्वलां च विधवामपत्नीकमपुत्रकम् ।
वेदाग्निगुरुदेवानां समयानां च निन्दकम् ॥ १५ ॥

रजकं च तथा कारुं खराजाविभुजङ्गमम् ।
श्वानमार्जालमहिषान्मुसलोलूखलं तृणम् ॥ १६ ॥

काष्ठं संमार्जनीं शूर्पं पाशं कषणकादिमान् ।

[विण्मूत्रोत्सर्जनविधिः ।]

उत्थायावश्यकं कर्म कुर्याद्देशे यथोचितम् ॥ १७ ॥

देवालये पथि शुचौ देशे कूपनदीतटे ।
चैत्यवृक्षे गवां गोष्ठे छायायां भस्मवारिणि ॥ १८ ॥

कृष्टे क्षेत्रे ससस्ये च देवताभिमुखं तथा ।
प्रत्यग्निसूर्यचन्द्रस्त्रीगोद्विजांबुनभस्वति ॥ १९ ॥

नोत्सृजेन्मलमूत्राणि मौनी वस्त्रावकुण्ठितः ।
उदङ्मुखो दिवा भूत्वा दक्षिणास्यस्सदा निशि ॥२०॥

समुत्सृजेज्जातवेगो न तु कृच्छ्रादुदीरयेत् ।

[शौचविधिः ।]

गन्धलेपापहं शौचं मृद्भिरद्भिस्समुद्धृतैः ॥ २१ ॥

कुर्याद्यत्नेन विधिवदलक्ष्मीकलिनाशनम् ।
शौचहीनाः क्रियास्सर्वा निष्फलास्ता महेश्वरि! ॥२२॥

हस्तौ पादौ जलैर्मृद्भिस्सम्यक्प्रक्षालयेत्सुधीः ।
पादरोगप्रशमनं चक्षुष्यं शुचि वृष्यकृत् ॥ २३ ॥

श्रमापहं च रक्षोघ्नं हर्षणं शुद्धिकारणम् ।

[आचमनविधिः ।]

अथाचमनमादध्यात्प्राङ्मुखो वाऽप्युदङ्मुखः ॥ २४ ॥

अन्तर्जानुस्समास्थाय मूलेऽङ्गुष्ठस्य वारि च ।
त्रिः पिबेद्द्विः प्रमृज्यादृभिरिन्द्रियाणि च संस्पृशेत् ॥

प्रच्युतान्नखकेशास्थिमलधातुवसादिकान् ।
उच्छिष्टं पुरुषं चाशु स्पृष्ट्वा ह्येतानिमानपि ॥ २६ ॥

रथ्यादिगमनं कृत्वा भुक्त्वा क्षुत्वा च मज्जनम् ।
कृत्वा पीत्वा च निष्ठीवगण्डूषानृतभाषणम् ॥ २७ ॥

पतितैस्सह संलापं पादप्रक्षालनं तथा ।
वाससी परिधायैव जपसन्ध्याभिवन्दनम् ॥ २८ ॥

दानहोमार्चनं कृत्यं कुर्यादाचमनं सुधीः ।
एतेष्वाचमनाशक्तश्श्रोत्राचमनमाचरेत् ॥ २९ ॥

क्षीरबुद्बुदफेनैश्च युक्तं सोष्णं सपूतिकम् ।
जलं सशब्दं नाचामेदन्यहस्तार्पितं प्रिये ! ॥ ३० ॥

अक्षालितांघ्रिहस्तश्च मुक्तकच्छकचस्स्थितः ।

[दन्तशोधनविधिः ।]

ततश्शुद्धतनुर्भूत्वा दन्तकाष्ठं समाचरेत् ॥ ३१ ॥

"आयुर्बलंकीर्तिवर्चांसि प्रजापशुधनानि च ।
ब्रह्मप्रज्ञाबलारोग्यं देहि मह्यं वनस्पते ! ॥ ३२ ॥

दन्तानां शोधनार्थाय हरामि त्वां पुनीहि माम् ।"
मन्त्रेणानेन गृह्णीयाद्यथार्हं दन्तकाष्ठकम् ॥ ३३ ॥

अर्कापामार्गखदिरकरञ्जप्लक्षचम्पकम् ।
न्यग्रोधार्जुनवासन्तीजात्याम्रातकजांबवाः ॥ ३४ ॥

आम्राशोकार्जुनोदुंबरपालाशकनिंबकम् ।
सर्जदाडिमकादम्बदारूणि हयमारकः ॥ ३५ ॥

अरिमेदाश्च सरलश्शिरीषाङ्कोलकासनम् ।
व्याघ्रीमधूकश्रीपर्णीबदरीवृषमादिकम् ॥ ३६ ॥

एतेषामेकमादाय यथालाभं च वाग्यतः ।
अथवा शुद्धमृज्जातं कादंबं मूलमेव वा ॥ ३७ ॥

कटुतिक्तकषायाणामन्येषां भूरुहामपि ।
कनिष्ठिकाग्रकस्थौल्यं द्वादशाङ्गुलमायतम् ॥ ३८ ॥

सत्वक्सान्द्रमृजुं शुद्धं समच्छेदमपर्वकम् ।
दन्तैर्वा शकलेनाथ शङ्कुना वाऽथ कूर्चितम् ॥ ३९ ॥

क्षुण्णाग्रं मृदुलं कार्यं दन्तकाष्ठं सुरेश्वरि ! ।
अयं विप्रोचितो धर्मो नृपादीनां तु योषिताम् ॥ ४० ॥

क्रमान्नवाष्ट सप्ताथ चत्वारोऽङ्गुलकास्स्मृताः ।
अथ द्विजानामेकैकं (अङ्गुलं ?)ग्रासतः क्रमात् ॥ ४१ ॥

दशाङ्गुलं समुद्दिष्टं नारीणां चतुरङ्गुलम् ।
प्रातश्च भोजनान्ते च द्वौ कालौ दन्तधावनम् ॥ ४२ ॥

वराव्योषत्रिजातैश्च सक्षौद्रैर्युक्तकूर्चिकान् ।
वामाधोदन्तपङ्क्तिं च पूर्वं मन्दं च घर्षयेत् ॥ ४३ ॥

ततोर्ध्वदन्तपङ्क्तिं च दन्तमांसमबाधयन् ।
आयुष्कामस्तु पूर्वास्यश्चासनस्थश्च वाग्यतः ॥ ४४ ॥

धनार्थी दक्षिणास्यस्सन्कीर्तिकामस्तु पण्डितः ।
पश्चिमास्यो दन्तशुद्धिं कुर्यान्नोदङ्मुखस्सदा ॥ ४५ ॥

अष्टाङ्गुलं मुमुक्षूणामङ्कोलस्तु प्रशस्यते ।
अर्केण दीप्तिजननं वश्यं स्याद्दन्तशूलहृत् ॥ ४६ ॥

अपामार्गेण तुष्टिस्स्याद्बुद्धिश्च ऋणमोचनम् ।
खदिरेणार्थलाभश्च भवेद्दन्तास्यरोगहृत् ॥ ४७ ॥

करञ्जेनास्यपूतिघ्नं लक्ष्मीं कुर्याद्रणे जयम् ।
प्लक्षेण कान्तिजननं चम्पकेनास्यपूतिहृत् ॥ ४८ ॥

न्यग्रोधेन व्रणघ्नस्स्याद्भाग्यकृद्दन्तदार्ढ्यकृत् ।
अर्जुनेनाधिकं भाग्यं दन्तानां शोधनं भवेत् ॥ ४९ ॥

वासन्त्या वाञ्छितार्थस्स्याज्जातिस्सर्ववशङ्करी ।
आम्रातको धान्यवृद्धिं जम्बूस्स्त्रीवश्यकृद्भवेत् ॥ ५० ॥

चूतस्सौभाग्यदायी स्यादशोकश्शोकनाशनः ।
इन्द्राणी दन्तशूलघ्नी यज्ञाङ्गो वक्त्रशुद्धिदः ॥ ५१ ॥

पलाशो वश्यकृद्धृष्यो निंबस्तु रुचिवित्तदः ।
सर्जः पापहरो भाग्यं शत्रुघ्नो गुरुभक्तिदः ॥ ५२ ॥

दाडिमी प्रीतिकृद्देवदारुस्त्रीवश्यदश्शुभः ।
दन्तहर्षहरो हृद्यो हयमारोऽग्निवृद्धिदः ॥ ५३ ॥

अरिमेदो दन्तकान्ति सरलो दन्तदार्ढ्यकृत् ।
स्त्रीवश्यदश्शिरीषस्तु लक्ष्मीं च स्थिरतां नयेत् ॥५४॥

अङ्कोलो दीप्तिजनको दन्तानां भाग्यदायकः ।
असनस्स्त्रीवश्यकारी व्याघ्री चायुष्यवर्धनी ॥ ५५ ॥

मधूकः पुत्रपौत्राणां वृद्धिं श्रीपर्णिका द्युतिम् ।
करोति बदरी वश्यं वाशा राजवशङ्करी ॥ ५६ ॥

कृताधिवासं प्रागेव दन्तकाष्ठं महोत्तमम् ।
पथ्याचूर्णयुते क्षिप्त्वा गोमूत्रे सप्तवासरम् ॥ ५७ ॥

त्रिजातकुष्ठमरिचमध्वञ्जनयुतेऽम्भसि ।
सनागकेसरे क्षिप्त्वा दन्तकाष्ठं क्षणं पुनः ॥ ५८ ॥

उद्धृत्य शोधयेद्दन्तान्घर्षणद्रव्यसंयुतान् ।
दन्तदार्ढ्यप्रजननं मुखकान्तिकरं शुभम् ॥ ५९ ॥

आस्यवैशद्यसौगन्ध्यजननं श्लेष्मनाशनम् ।
रुच्यं पित्तहरं श्रोत्रनाडीशोधनकारणम् ॥ ६० ॥

पावनं पुण्यजननं संभवेद्दन्तधावनम् ।

[विशिष्टरोगेषु दन्तकाष्ठधावनवर्जनातिदेशः ।]

ज्वरच्छर्दिश्वासकासाऽजीर्णार्दितमदभ्रमाः ॥ ६१ ॥

मूर्च्छाऽऽस्यपाकहृन्नेत्रश्रोत्रमूर्धरुजस्तथा ।
व्रणक्लेदयुता ये च बलहीनातिसारिणः ॥ ६२ ॥

एतैश्च दन्तकाष्ठानि वर्जनीयानि पार्वति ! ।

[वर्ज्यानि दन्तकाष्ठानि।]

धन्वयासो धवोऽक्षश्च तिन्त्रिणी शिग्रुकाद्वयम् ॥ ६३ ॥

शेलुश्शाल्मलिकाश्वत्थो निचुलो बिल्वतिन्दुकौ।
पीलुश्शमी गुग्गुलुश्च मल्लिका तिल्वकेंगुदी ॥ ६४ ॥

पलाशः कोविदारश्च नाकुलिश्चित्रकाकुली।
मोचा च तिन्दुकश्शाकः फेनिलः कट्तृणस्तथा ॥

त्वक्सारशणखर्जूरपूगतालाश्च केतकी।
महावटो नालिकेरो हिन्तालैरण्डको डहुः ॥ ६६ ॥

शीर्णं सपिच्छिलं छिद्रं सपर्णं पूतिगन्धिकम्।
निस्त्वक्कं च तथा शुष्कमज्ञातं कण्टकान्वितम् ॥

मधुरं लवणं चाम्लं वक्रं च क्रिमिदूषितम्।
एतानि दन्तकाष्ठानि हितार्थी परिवर्जयेत् ॥ ६८ ॥

[विशिष्टे काले दन्तकाष्ठधावननिषेधः।]

जन्मर्क्षे च विपत्तारे प्रत्यरे च वधर्क्षके।
चन्द्रेऽष्टमे तु प्रतिपन्नवमीद्वादशीषु च ॥ ६९ ॥

पर्वषष्ठ्योः प्रजान्वेषी वर्जयेद्दन्तधावनम्।
अकीर्तिर्भास्करे राजमान्यं सोमे क्षितिः कुजे ॥ ७० ।

कान्तिर्बुधे सुखं जीवे भाग्यं शुक्रे शनौ शुचिः।
निषिद्धवारनक्षत्रे तिथौ वा दन्तधावनम् ॥ ७१ ॥

अलब्धे सति शुद्ध्यर्थमङ्गुल्या परिघर्षयेत्।
सूक्ष्मं ज्योतिष्मतीचूर्णं वराभिर्वा कटुत्रयैः ॥ ७२ ॥

युक्तं क्षौद्रयुतं वाऽपि सतैलं वा ससैन्धवम्।
अङ्गुल्या च समादाय शनैर्दन्तान्विघर्षयेत् ॥ ७३ ॥

तदलाभे शुद्धपर्णैः कटुतिक्तकषायकैः ।
कर्षयेद्दन्तपङ्क्तिं च ततः कोष्णजलेन च ॥ ७४ ॥

कुर्याद्द्वादशगण्डूषं मुखशुद्धिर्भवेत्प्रिये ।
उपदेहास्यदौर्गन्ध्यश्लेष्मघ्नं दन्तदोषहृत् ॥ ७५ ॥

दृढत्वं दन्तपंक्तेश्च भवेदङ्गुलिघर्षणात् ।
हैमया वा रौप्यया वा नैम्बया वा शलाकया ॥ ७६ ॥

शर्करादन्तशल्यानि मेदस्स्कन्नं हरेच्छनैः ।

[जिह्वाविलेखनविधिः ।]

दशाङ्गुलायतं सम्यक्तर्जन्यग्रप्रमाणकम् ॥ ७७ ॥

हैमं रौप्यं तथा ताक्ष्र्यं शाखां वा पाटितामपि ।
तालपत्रभवं वाऽपि श्लक्ष्णं जिह्वाविलेखनम् ॥ ७८ ॥

तेन जिह्वामलं कर्षेन्मन्दं मन्दं मुहुर्मुहुः ।
जिह्वास्ययोर्मलं हन्याद्वैरस्यं च प्रसेकहृत् ॥ ७९ ॥

पूतिगन्धहरं रुच्यं वैशद्यं च प्रजायते ।
उन्मादमूर्च्छाहिक्कार्तिच्छर्दिशोषक्षयैर्युताः ॥ ८० ॥

श्वासकासाजीर्णयुताः पानाहारविवर्जिताः ।
न कुर्युस्ते नरा नित्यं जिह्वालेखनकर्म च ॥ ८१ ॥

अञ्जनविधिः ॥

ततोऽञ्जयेद्वामदृशमादौ पश्चाच्च दक्षिणाम् ।
वामाक्षि वामहस्तेन दक्षहस्तेन दक्षिणम् ॥ ८२ ॥

मुद्गप्रमाणं सौवीरमञ्जनं नित्यशो हितम् ।
तेनाक्षिणी निर्मले च व्यक्तवर्णे तथोज्ज्वले ॥ ८३ ॥

स्यातां घनतरस्निग्धपक्ष्मणी सूक्ष्मदर्शने ।
नेत्रयोश्श्लेष्मणो भीतिर्विशेषात्स्रावणं हितम् ॥ ८४ ॥

सप्ताहाच्छ्लेष्मकृद्वारिस्रावकं चाञ्जनं निशि ।
अञ्जनोत्क्लेशितश्श्लेष्मा नासानाडीगतो भवेत् ॥ ८५ ॥

तस्य निर्हरणार्थाय नावनं नित्यमाचरेत् ।

### नस्यविधिः ॥

सर्वर्तुष्वणुतैलेन नस्यं श्रेष्ठतमं प्रिये ! ॥ ८६ ॥

अभावे त्वणुतैलस्य नस्यं शुण्ठ्यादिकैर्हितम् ।
हेमन्ते शिशिरे शुण्ठीपिप्पलीगुडसंयुतम् ॥ ८७ ॥

कोष्णेन वारिणा घृष्टमादौ वामपुटान्तरे ।
षड्बिन्दून्निक्षिपेदन्यन्नासारन्ध्रं पिधाय च ॥ ८८ ॥

पश्चादितररन्ध्रे च क्षिपेद्वामं पिधाय च ।
मधौ विश्वगुडस्तन्यघृष्टं नस्यमुदाहृतम् ॥ ८९ ॥

ग्रीष्मे स्तन्ययुता शुण्ठी नस्यं वृष्टौ तिलोद्भवम् ।
तैलं शरदि सस्तन्यं शुण्ठी कर्पूरनावनम् ॥ ९० ॥

जत्रूर्ध्वरोगा नश्यन्ति नावनेन न संशयः ।
सप्तवर्षात्परं नस्यं हितमाशीतिवत्सरम् ॥ ९१ ॥

आजन्म मरणान्तं स्यादणुतैलं हितङ्करम् ।
मन्यास्तंभो हनुस्तम्भश्शिरोरुक्कंपनादिकम् ॥ ९२ ॥

अघ्राणस्रुतिरोधौ च वैस्वर्यं पीनसं तथा ।
केशच्युतिश्च खलतिर्जरा नस्येन नश्यति ॥ ९३ ॥

स्नायुसन्धिशिरोऽस्थ्नां च बलदार्ढ्यकरं प्रिये ! ।
वृद्धिकार्ष्ण्यप्रदं केशश्मश्रूणां सकलेन्द्रिये ॥ ९४ ॥

ओजस्करं विषहरं त्रिकालं नस्यमिष्यते ।

अणुतैलम् ॥

अथाणुतैलं वक्ष्यामि जीवन्त्यंबुदवारि च ॥ ९५ ॥

सेव्यत्वग्देवदारूणि दार्वी त्वग्गोपयष्टिका ।
हिमप्लवागरुवरीपुण्ड्रेक्षूत्पलबिल्वकम् ॥ ९६ ॥

सुरभिस्थिरधावन्यौ रेणुकैले च पत्रकम् ।
बलाकमलकिञ्जल्कौ क्रिमिघ्नं च सुरेश्वरि ! ॥ ९७ ॥

षड्विंशत्यौषधं चैतत्प्रत्येकं तु चतुष्पलम् ।
तत्सर्वं खण्डशः कृत्वा दिव्येऽयुतपलेऽम्भसि ॥ ९८ ॥

पचेद्दशांशशेषं च दशधा विपचेत्समम् ।
तस्माद्विभक्त एकांशे काथे तैलं च तत्समम् ॥ ९९ ॥

पचेद्यावत्तैलशेषं पचेत्तच्च द्वितीयके ।
भागे पुनः पचेदेवं तृतीयेऽपि चतुर्थके ॥ १०० ॥

क्षिप्त्वा क्षिप्त्वा तैलशेषं भूयो भूयः पचेदिति ।
एवं नवमभागान्तं कुर्याच्च दशमे पुनः ॥ १०१ ॥

आजं पयस्तैलसमं काथे क्षिप्त्वा पचेच्छनैः ।
तैलशेषं नवे वस्त्रे द्विगुणे पीडयेद्दृढम् ॥ १०२ ॥

अणुतैलमिदं श्रेष्ठं नस्यकर्मणि सर्वदा ।
अतिसूक्ष्मसिरामार्गव्यापकत्वाच्च सन्ततम् ॥ १०३ ॥

इन्द्रियस्थैर्यदायित्वादणुतैलमिति स्मृतम् ।

गण्डूषविधिः ॥

ततो गण्डूषमादध्यान्मातुलुङ्गस्य केसरम् ॥ १०४ ॥

पलं निष्कत्रयं व्योषं कर्षं सैन्धवजं रजः ।
क्षौद्रं कर्षं सिता कर्षमिति द्विपलमात्रकम् ॥ १०५ ॥

कर्षं चान्तर्मुखं क्षिप्त्वा यावच्छ्लेष्मावृतं मुखम्।
बहिः क्षिपेच्च कवलं पुनस्तद्वच्च पूरयेत्॥ १०६॥

एवं षड्वारमाकल्प्यं कासश्वासास्यरोगहृत्।
दीपनं रुचिकृद्धृद्यं भवेद्गण्डूषधारणम्॥ १०७॥

अथ स्नेहस्य गण्डूषं कुर्याद्गव्यं घृतं पलम्।
मुखे क्षिप्त्वा पिधायास्यं निश्चलः किञ्चिदुन्मुखः॥

यावच्छ्लेष्मावृतस्वान्तः पश्चान्निष्ठीवयेत्प्रिये॥
यूषाद्दाहयुते पाके ह्यन्नस्यागन्तुके क्षते॥ १०९॥

अग्निक्षारविषप्लुष्टे घृतगण्डूषमुत्तमम्।
पञ्चवर्षात्परं कार्यं गण्डूषं सततं हितम्॥ ११०॥

## धूमपानविधिः॥

निशाकर्पूरशुण्ठीभिर्धूमस्सर्वर्तुषु प्रिये!।
पीतः कासश्वासजित्स्याच्चक्षुष्यो वक्त्रपूतिहा॥ १११॥

कालदोषानुगुण्येन भेषजेन प्रयोजितम्।
धूमं पिबेत्सदा प्राज्ञे नरो रोगविवर्जितः॥ ११२॥

वामनासापुटेनादौ दक्षिणं च निरोधयन्।
यथासुखं पिबेद्धूमं तथा दक्षिणरन्ध्रतः॥ ११३॥

नासापानोत्क्लेशितश्च दोषः कण्ठं समाश्रयेत्।
तन्निराहरणार्थं च पिबेद्वक्त्रेण धूमकम्॥ ११४॥

वक्त्रपीतं तु वक्त्रेण नोत्सृजेत्तं च नासया।
नासापीतं नसोत्सर्ज्यं वक्त्रेण च न नासया॥ ११५॥

उत्सृजेद्यद्यशक्येन गलहृद्रोगभाग्भवेत्।
सम्यङ्निषेवितो धूमः कफवातोत्तरान्गदान्॥ ११६॥

जत्रूर्ध्वजान्निर्हरंश्च तानजातान्करोति च ।
मोहातिसारासृक्पित्ततिमिरोर्ध्वानिलामयान् ॥ ११७ ॥

रोहिण्याध्मानरिक्ताङ्गविरिक्तोदरपाण्डुकाः ।
जागरूकशिरस्तोदकृतवस्तिमदात्ययाः ॥ ११८ ॥

मद्यमत्स्यपयःक्षौद्रदधिक्ष्वेलपिपासिताः ।
त्यजेयुस्ते धूमपानं तथैव स्नेहभोजनाः ॥ ११९ ॥

अष्टादशाब्दात्परतो धूमपानं हितं स्मृतम् ।
धूमपानात्परं कुर्याद्गण्डूषं तिलकल्कजम् ॥ १२० ॥

सुखोष्णसलिलैर्युक्तमामवातामयापहम् ।

### ताम्बूलचर्वणविधिः ॥

हर्षणं चलनं हन्याद्दन्तानां दार्ढ्यकारणम् ॥ १२१ ॥

चर्वयेदथ तांबूलं चिक्कणादिगुणान्वितम् ।
क्रमुकं नागवल्ल्याश्च पक्वं शुभ्रदलानि च ॥ १२२ ॥

चूर्णं पाषाणजं श्रेष्ठं कर्पूरकट्ठकीफलैः ।
तक्कोलदेवकुसुमजातीखदिरसारकैः ॥ १२३ ॥

मूलाग्रमध्यमशिरा नागवल्ल्या विवर्जयेत् ।
द्विपर्णं चूर्णमुक्तं च सार्द्रं बालमशोधितम् ॥ १२४ ॥

संयुक्तं च क्षणं धृत्वा वक्त्रे तच्च विवर्जयेत् ।
क्लेशिता वक्त्ररदनजिह्वास्स्युर्निर्व्रूणास्सुखाः ॥ १२५ ॥

### नेत्रप्रक्षालनविधिः ॥

अथ प्रक्षालनं नेत्र उन्मील्यास्यं प्रपूरयेत् ।
अवमृज्याञ्जलिजलैर्निष्ठीवेन्मुखवारि च ॥ १२६ ॥

एवं त्रिधा विधायैतच्चक्षुषोरमृतं हितम् ।
दृक्षण्णवतिरोगघ्नं रुचिवैशद्यदायि च ॥ १२७ ॥

हेमन्ते शिशिरर्तौ तु द्वादशाञ्जलिभिर्दृशौ ।
वसन्तप्रावृषोरद्भिर्विंशत्यञ्जलिभिस्सुधीः ॥ १२८ ॥

पञ्चविंशतिभिर्ग्रीष्मे द्वाविंशच्छरदि प्रिये ! ।
पिटकाशोषपित्तास्रनाडिकाम्लजहृद्भवेत् ॥ १२९ ॥

नेत्रप्रक्षाळनादेवि ! दृक्प्रसादकरं हितम् ।

## व्यायामविधिः ॥

व्यायाममाचरेन्नित्यं यथासात्म्यं सुखावहम् ॥ १३० ॥

जातिशक्त्यानुकूल्येन स्निग्धाशी बलवान्भवेत् ।
कार्यं शीते वसन्ते च स्वशक्त्याऽर्धं यथा मृदु ॥ १३१ ॥

अन्यदा मन्दमादध्यादन्यथा रोगभाग्भवेत् ।
कर्मक्षमः क्षीणमेदा लघ्वङ्गो दीपितानलः ॥ १३२ ॥

विभक्तघनकायस्स्यादुक्तव्यायामकर्मणा ।
बालो वृद्धो वातपित्तकोपी चाजीर्णितस्त्यजेत् ॥१३३॥

अतिव्यायामतस्तृष्णा क्षयः कासो ज्वरो भ्रमः ।
रक्तपित्तं श्रमश्छर्दिस्तमकश्च प्रजायते ॥ १३४ ॥

## उद्वर्तनविधिः ॥

कृतव्यायामकं देहं मर्दयेच्च यथासुखम् ।
सुगन्धद्रव्यकल्केन कुर्यादुद्वर्तनं सुखम् ॥ १३५ ॥

वलिघ्नं कान्तिजननं मेदःकफविनाशनम् ।
अङ्गस्थिरीकर्मकारि भवेदुद्वर्तनं प्रिये ! ॥ १३६ ॥

अभ्यङ्गविधिः ॥

अथाभ्यङ्गविधिं कुर्यात्पूर्वाभ्यश्चासनस्थितः ।
रसायनोक्ततैलेन शिरः कर्णौ च पूरयेत् ॥ १३७ ॥

शिरोऽर्हेणैव मूर्धानं शरीरार्हेण विग्रहम् ।
विशेषेण शिर कर्णनासापादेषु लेपयेत् ॥ १३८ ॥

बलातैलेन वाऽन्येन सिद्धेनाभ्यङ्गमाचरेत् ।

[बलातैलम् ।]

अथ वक्ष्ये बलातैलं चतुर्विंशत्पलानि च ॥ १३९ ॥

बलामूलानि कणशः कृत्वा तत्षोडशे गुणे ।
जले क्षिप्त्वा पादशेषं पचेत्तत्समभागिकम् ॥ १४० ॥

गव्यं पयश्च देवेशि ! तर्कारी पाटली तथा ।
काश्मरीबिल्वबृहतीद्वयगोक्षुरटुण्टुकाः ॥ १४१ ॥

कोलमंशुमतीयुग्मकुलुत्थयवकाः पृथक् ।
चतुर्निष्कप्रमाणास्स्युश्चतुष्षष्टिपले जले ॥ १४२ ॥

पादशेषं पचेत्सर्वं तिलतैलं च षोडश ।
पलमेतत्समस्तं च तत्क्षिपेत्ताम्रभाजने ॥ १४३ ॥

मेदाकाकोलिकासूप्यपर्णीयुग्मानि जीवकः ।
ऋषभो दारुमञ्जिष्ठाचन्दनागरुसैन्धवम् ॥ १४४ ॥

शैलेयशारिबाकुष्ठतगरोत्पलशारिबाः ।
वचापुनर्नवाचोरत्रिफलात्रिसुगन्धिकम् ॥ १४५ ॥

शतावरीविदार्यश्वगन्धायष्टिशताह्वयाः ।
प्रत्येकमर्धकर्षं च श्लक्ष्णं संपेष्य कल्कयेत् ॥ १४६ ॥

सर्वं पचेत्तैलशेषं मृद्वग्नौ सावधानतः ।
नवद्विगुणवस्त्रेण पीडयेत्सुदृढं सुधीः ॥ १४७ ॥

सर्ववातप्रशमनं गुल्मोन्मादग्रहापहम् ।
मूत्राघातान्त्रवृद्धिघ्नं ज्वरघ्नं सूतिकाहितम् ॥ १४८ ॥

बालानां च हितं चास्थिमर्मक्षतयुजामपि ।
यक्ष्मिणः क्षीणसत्वस्य सन्निपाते विशेषतः ॥ १४९ ॥

पाने बस्तौ तथाऽभ्यङ्गे नस्यधारावगाहने ।
गण्डूषधारणे देवि ! हितं स्यात्पादलेपने ॥ १५० ॥

बलातैलमिदं श्रेष्ठं सर्वेषां सर्वदा हितम् ।

## स्नानविधिः ॥

तैलापहारिकैस्स्कैश्च कषायैर्हततैलकः ॥ १५१ ॥

कोष्णेन वारिणा शीर्षं क्षालयेदथ विग्रहम् ।
यथा सुखोष्णसलिलैर्भूरिभिस्सर्वखानि च ॥ १५२ ॥

जरावातश्रमहरः पुष्ट्यायुर्दृक्प्रसादकः ।
दार्ढ्यनिद्रासुचर्मत्वकारी वृष्यो द्युतिप्रदः ॥ १५३ ॥

उष्णांबुना शिरस्स्नानादृदृक्केशबलहृच्छ्रमः ।
वपुषे कोष्णसलिलं बलकृद्वातशूलहृत् ॥ १५४ ॥

नेत्रार्दितास्यकर्णार्त्यजीर्णातीसाररोगिणाम् ।
आध्मानपीनसश्लेष्मयुजां भुक्तवतामपि ॥ १५५ ॥

कृतसंशुद्धिदेहानां प्रातस्स्नानं तु गर्हितम् ।
पूर्वोत्तरार्द्राश्रवणत्रिजन्मरविसङ्क्रमम् ॥ १५६ ॥

पर्वणी प्रतिपत्षष्ठीं चाष्टमीं दशमीं तथा ।
चतुर्दशीं व्यतीपातं वैधृतिं ग्रहणद्वयम् ॥ १५७ ॥

कुजार्कगुरुशुक्राणां वारानभ्यञ्जने त्यजेत् ।
बालस्थविरवृद्धानां न दोषस्सर्वदा भवेत् ॥ १५८ ॥

सौम्ये मरकतं जीवे पुष्यरागं भृगौ पविम् ।
शनौ नीलं पर्वणोस्तु राहुकेतुप्रियाय च ॥ १७९ ॥

धार्यौ गोमेदवैडूर्यौ सखुवर्णं सुनिर्मितम् ।
आयुरारोग्यमैश्वर्यं धन्यं दुःखापहं सुखम् ॥ १८० ॥

काम्यमोजस्करं पुष्टितुष्टिकृद्विषनाशनम् ।
पापघ्नं च भवेन्नित्यं रत्नाभरणधारणम् ॥ १८१ ॥

माणिक्यमायुर्विजयमोजो वित्तं करोति तत् ।
मौक्तिकं रक्तपित्तघ्नं दाहमूर्च्छाविषापहम् ॥ १८२ ॥

वज्रं भाग्यायुरोजश्रीकीर्तिदं विषपापहृत् ।
घोरव्यालाग्निचोराभिचारवारिभयापहृत् ॥ १८३ ॥

नीलं लक्ष्म्यायुरारोग्यपुण्यकीर्तिबलप्रदम् ।
स्निग्धं मरकतं सर्वदोषघ्नं विषभूतहृत् ॥ १८४ ॥

गोमेदं कान्तिकीर्तिश्रीमङ्गल्यं विषजिद्भवेत् ।
पुष्यरागं सुखं कीर्तिं वाक्पटुत्वं ददाति च ॥ १८५ ॥

वैडूर्यं स्निग्धमोजस्यं मङ्गल्यं विषनाशनम् ।
प्रवालं श्रीकरं धान्यकान्तिदं विषनाशनम् ॥ १८६ ॥

सर्वाभरणसंयुक्तो दर्पणं देवमानुषम् ।
आलोकयेच्छुचि देवि ! पुण्यं पापविनाशनम् ॥ १८७ ॥

काम्यमागन्तुदोषघ्नं श्रीकरं हर्षकृत्परम् ।

[कञ्चुकोष्णीषपादत्रधारणविधिः ।]

कार्पासयुगलच्छन्नो मध्ये पट्टांशुकावृतः ॥ १८८ ॥

कञ्चुकोष्णीषधारी स्यात्ससन्धान(या)स्सुखासनः ।
त्वक्प्रसादकरं वृष्यं रजश्शीतातपापहम् ॥ १८९ ॥

केश्यं वातप्रशमनं कञ्चुकोष्णीषधारणम् ।
मृदुचर्मकृतं स्निग्धं पादत्राणं भजेत्सदा ॥ १९० ॥

वृष्यमोजस्यमायुष्यं चक्षुष्यं बलवर्धनम् ।
सुखप्रचारकृच्छल्यक्रिमिकण्टकनाशनम् ॥ १९१ ॥

हृतशार्करपाषाणदुःखं सर्वजनोचितम् ।
मृद्वासने समासीनस्सुहृद्भिर्बन्धुभिस्सुतैः ॥ १९२ ॥
आर्यैः पूज्यैः परिवृतस्सल्लापामृतमाचरेत् ।

[भोजनविधिः ।]

ततो मध्याह्नवेलायां पूजयेदिष्टदेवताम् ॥ १९३ ॥

पञ्चयज्ञांश्च कुर्वीत दैवं पित्र्यं च मानुषम् ।
ब्राह्मं भौतं बलिं दद्यात्ततो भुञ्जीत मानवः ॥ १९४ ॥

उत्सृष्टमलमूत्रश्च विशुद्धोद्गारकोष्ठवान् ।
स्वमार्गगतदोषश्च क्षुदुद्वारानुगतानिलः ॥ १९५ ॥

उत्पन्नजाठराग्निश्च लघ्वङ्गो विजितेन्द्रियः ।
मृदुलासनमासीनः प्राङ्मुखो दीर्घमायुषे ॥ १९६ ॥

यशसे दक्षिणास्यस्स्याच्छ्रियै प्रत्यङ्मुखस्सदा ।
नोदङ्मुखः कदाचित्स्यात्त्रिपात्पीठं पुरस्स्थितम् ॥

आच्छाद्य शुद्धवस्त्रेण पात्रं तदुपरि न्यसेत् ।
रौक्मं वा राजतं कांस्यं यथालाभं सुशोधितम् ॥ १९८ ॥

रौक्मं पथ्यं पुष्टिकरं सौभाग्यं बृंहणं परम् ।
वातपित्तहरं वृष्यं गरघ्नं विषनाशनम् ॥ १९९ ॥

मङ्गल्यमपि रौप्यं तु वातघ्नं शुचि शीतलम् ।
कफपित्तहरं रुच्यं लेखनं भाग्यकान्तिकृत् ॥ २०० ॥

कांस्यं च रक्तपित्तघ्नं चक्षुष्यं लेखनं रुचि ।
हृद्यं श्लेष्महरं देवि! रूक्षं वैशद्यकारि तत् ॥ २०१ ॥

आयसं सिद्धिदं पाण्डुकामिलाऽरुचिनाशनम् ।
हैमे सर्पिश्च रौप्ये तु चोष्याणि प्रद्रवाणि च ॥२०२॥

कृताकृतान्सूसान्रौक्म्यपात्रे सोष्णं पयः क्षिपेत् ।
द्रव्याणि शुष्कदग्धानि कांस्ये तु कलबांबलौ ॥ २०३ ॥

रागषाडबसट्टांश्च वज्रवैडूर्यनिर्मिते ।
मृत्तिकाकाचकनकै रचिते पानकं जलम् ॥ २०४ ॥

दक्षिणे भक्षपिशितशाककन्दफलानि च ।
पर्पटान्वटकान्वामे चूषपानीयपानकम् ॥ २०५ ॥

लेह्यं पयः प्रद्रवाणि रसान्पेयान्खलान्न्यसेत् ।
पुरस्ताद्दधिमध्विक्षुविकृतिं सक्तुविक्रियाम् ॥ २०६ ॥

रागषाडबसट्टांश्च स्थापयेत्परमेश्वरि! ।
गोधूमयवशाल्यन्नं जाङ्गलं पिशितं नवम् ॥ २०७ ॥

मुद्गसैन्धवमृद्वीकापथ्यामलकशर्कराः ।
पटोलं क्षौद्रमुदकं दिव्यं गव्यं घृतं नवम् ॥ २०८ ॥

दाडिमं गोपयस्सिद्धं दधि तक्रादिकं हितम् ।
यद्यत्स्वस्थहितं रुच्यं रोगघ्नं तत्तदाहरेत् ॥ २०९ ॥

मोचेक्षुचोचाम्रबिसतर्कारीमोदकं हितम् ।
भक्ष्यं भोज्यं लेह्यचोष्यं सषड्रसमनोहरम् ॥ २१० ॥

स्निग्धोष्णं लघु पथ्यं च शुद्धं मात्रानियन्त्रितम् ।
अतिमात्रं हीनमात्रं न भुञ्जीत सुखाय च ॥ २११ ॥

यथाऽर्धतृप्ति गुरुभिर्लघुभिश्चाऽऽत्रिपात्तथा ।
यथामात्रं समश्नीयाच्छीघ्रं जीर्यति सौख्यकृत् ॥

अतिमात्राशनाद्दोषा वाताद्याः पीडिताः परम् ।
कुप्यन्ति हीनमात्रा या भुक्तिरोजोबलापहा ॥ २१३ ॥

वातहृन्मात्रया भोजी मात्रा स्यादग्निवर्धनी ।
गुरुशिष्टातिथीन्बन्धून्पूज्यानन्यांश्च दक्षिणे ॥ २१४ ॥

पुत्रपौत्रादिकान्वामे दौहित्रान्सकलान्पुनः ।
स्थापयेत्तांश्च शाकाद्यैः पंक्तिभेदमकारयन् ॥ २१५ ॥

इतिहासपुराणानि शृण्वन्नापोऽशनं ततः ।
कुर्याच्च परिविष्टान्नं सर्वं सर्वेश्वरार्पितम् ॥ २१६ ॥

भावयन्नमृतं चास्तु ब्रुवन्भुञ्जीत हृष्टधीः ।
जठराग्निप्रतापेन वातपित्ते विजृंभिते ॥ २१७ ॥

स्यातां तयोः प्रशान्त्यर्थमादौ मधुरमाहरेत् ।
मध्येऽम्लं लवणं चाद्याज्जठरानलवर्धनम् ॥ २१८ ॥

कटुतिक्तकषायांश्च भुञ्जीतान्ते च मात्रया ।
पानीयममृतं शीतं त्रिचतुर्वारमापिबेत् ॥ २१९ ॥

अग्न्यङ्गयोः कार्श्यमादौ मध्ये साम्यं तयोर्भवेत् ।
अन्ते स्थूलवपुर्वारि पीतं यद्भोजनस्य च ॥ २२० ॥

जलातिपानापीताभ्यां भुक्तमन्नं न पच्यते ।
तस्मादग्निविवृद्ध्यर्थं मात्रया सलिलं मुहुः ॥ २२१ ॥

जाठराग्नौ प्रदीप्ते च यो न भुंक्तेऽन्यकार्यतः ।
क्षीयते जाठराग्निश्च यथाऽनाहुतिपावकः ॥ २२२ ॥

जठरस्य द्विभागौ च पूर्यमन्नेन चांभसा ।
तृतीयभागं संपूर्य चतुर्थं परिशिष्यते ॥ २२३ ॥

वातादीनां प्रचारार्थमित्थं भोजनमाचरेत् ।
पर्वणोर्र्कवारे च पितृपिण्डप्रदे दिने ॥ २२४ ॥

व्यतीपातेऽध्वरे चैव वर्जयेद्रात्रिभोजनम् ।
उपोष्यादथवा रात्रौ पानेनापि विशेषतः ॥ २२५ ॥

द्विधा भुक्तिं न कुर्याच्च चतुर्दश्यष्टमीषु च ।
द्विवारं भोजनं पथ्यं द्विजातीनां बलं हितम् ॥ २२६ ॥

स्त्रीबालवृद्धाशक्तानां भवेदन्नं यथासुखम् ।
आरोग्यमेकभुक्तेन बल्यं वृष्यं द्विभोजनम् ॥ २२७ ॥

त्रिवारभुक्त्या रोगास्स्युर्भुञ्जीताऽऽरोग्यरूपतः ।
असाक्षिणैकवस्त्रेण न तिष्ठंश्च न निद्रितः ॥ २२८ ॥

अतिमात्रं न भोक्तव्यमामदोषप्रदायकम् ।
अमित्रक्रीतगणिकासङ्कीर्णगणकाशनम् ॥ २२९ ॥

अपक्वदुग्धविष्टंभि शीतलाशुचिरूक्षकम् ।
विदाहिगुरुशुष्कान्नप्लावितं च पुरातनम् ॥ २३० ॥

विहगोच्छिष्टगोघ्रातमार्जारादिविदूषितम् ।
उदक्या स्पृष्टसंक्लिष्टभुक्तशेषांघ्रिदूषितम् ॥ २३१ ॥

सीमन्तसूतिकान्नादि पथ्याय परिवर्जयेत् ।
समान्नं विषमान्नं यदधिकान्नं च वर्जयेत् ॥ २३२ ॥

क्रोधशोकक्षुधातापयुक्तं पथ्यमपथ्यकम् ।
मिश्रं भुक्तं तदन्ने तु समन्नमिति कीर्तितम् ॥२३३॥

अल्पं वा बहुभुक्तं यदकाले विषमाशनम् ।
भुक्तत्यन्ते भोजनं सद्यश्चाधिकान्नं तदुच्यते ॥ २३४ ॥

एतत्त्रयान्नं नयति मृत्युं वा तीव्रमामयम् ।
सदोषमतिमात्रं वा गुरु भुक्तं च यत्क्षणात् ॥ २३५॥

प्रजीर्यते तदन्नं च यथोक्तादनुपानतः ।

### अनुपानविधिः ॥

अनुपानं हितं ज्ञेयं देहदार्ढ्यं मनोज्ञताम् ॥ २३६ ॥

व्याप्तिं तृप्तिं च कुरुते भुक्तान्नस्य विशेषतः ।
संघातमपि शैथिल्यं विक्लित्तिं जरणं तथा ॥ २३७ ॥

पीनसोरःक्षतश्वासकासजत्रूर्ध्वरोगहृत् ।
गीताध्ययनसंभाष्यस्वरसादे च तद्धितम् ॥ २३८ ॥

षोढानुपानमन्नस्य सात्म्यं वीर्यघ्नकं ततः ।
अनुलोमं वैपरीत्यं शोधनीयं च जीर्णकम् ॥ २३९ ॥

सात्म्यं तु शीतलं वारि स्वादुरुष्णं घृतस्य च ।
वीर्यघ्नमजमांसस्य खादिरोदकमिष्यते ॥ २४० ॥

अनुलोमं सौकरस्य मांसस्याम्लकलावणे ।
तज्जातविकृतेश्शान्तिं नयत्येवानुलोमतः ॥ २४१ ॥

वैपरीत्यं तु पुष्टिस्स्याल्लवणाम्भः प्रकीर्तितम् ।
वैपरीत्येन यत्तस्य हितं तद्विपरीतकम् ॥ २४२ ॥

शोधनीयं तु भुक्तान्नं मांसवच्छोधयेदतः ।
तेन शोधनमित्युक्तं जीर्णकं तेन जीर्यते ॥ २४३ ॥

मांसं यतो जीर्णकं तद्विख्यातं भुवनेश्वरि ! ।
यवगोधूमयोश्शीतमनुपानं जलं हितम् ॥ २४४ ॥

विषमद्यदधिक्षौद्रपिष्टकेषु कदुष्णकम् ।
मुद्गशाकादिविकृतौ तक्रमस्त्वम्लकाञ्जिकम् ॥ २४५ ॥

कृशानां पुष्टिकृन्मद्यं स्थूलानां सोदकं मधु ।
पुष्टिकृत्क्षयरोगे च कोष्णमांसरसो हितः ॥ २४६ ॥

धात्वग्निबलहीनेषु मद्यं मांसे हितं बलम् ।
रत्यध्वभाररोगार्तिभेषजानशनातपैः ॥ २४७ ॥

क्लेशितानां क्षये बालवृद्धानाममृतं पयः ।
व्रणाक्षिगलमेहार्तास्त्यजेयुः क्लिन्नविग्रहाः ॥ २४८ ॥

अनुपानं च निद्राध्वभाषणानि च सङ्गमम् ।
भुक्त्वा स्नात्वा च पीत्वा च वाहनाग्न्यातपाथसम् ॥

व्यायामयानप्लवनकर्माणि परिवर्जयेत् ।
विषयुक्तं भक्ष्यभोज्यलेह्यचोष्यादि वर्जयेत् ॥ २५० ॥

## विषयुक्तौदनलक्षणम् ॥:

विषयुक्तौदने चिह्नं स्राव्यविस्राव्यतोऽञ्जितम् ।
पाकश्चिरेण भवति पक्वः पर्युषितोपमः ॥ २५१ ॥

केकिग्रीवोपमोष्मा स्याद्गन्धवर्णविवर्जितः ।
क्लिन्नश्च चन्द्रिकायुक्तो मूर्च्छाऽज्ञानप्रसेकदः ॥

श्यावकथितशुष्कोर्ध्वराजीसीमन्तभाञ्जि च ।
फेनबुद्बुदतन्तूनि व्यञ्जनानि भवन्ति च ॥ २५३ ॥

रागषाडबमांसानि विच्छिन्नविरसानि च ।
कृष्णा राजी मांसरसेऽरुणा क्षीरे महेश्वरि ! ॥ २५४ ॥

श्यावा दध्न्यसिता पीता तक्रे नीरनिभा घृते ।
कपोताभस्तु सूपे स्यात्कृष्णा राजी तुषोदके ॥ २५५ ॥

काली मद्ये च सलिलेऽरुणा तैले प्रशस्यते ।
हरिद्वर्णा भवेत्क्षौद्रे त्वामं पक्वं भवेत्फलम् ॥ २५६ ॥

पक्वं तु कुथितं वापि स्रवद्भवति भैरवि ! ।
आर्द्राणि म्लानतां यान्ति शुष्काणि च विवर्णताम् ॥

मृदूनि यान्ति काठिन्यं कठिनानि च मार्दवम् ।
विषान्नमग्नौ निक्षिप्तं चैकावर्तं स्फुटत्यति ॥ २५८ ॥

धूमार्चिषी मयूरस्य कण्ठाभावुग्रगन्धवान्।
गतार्चिर्वा भवेदग्निर्निर्जीवाः प्राश्य मक्षिकाः॥२५९॥

भक्षणादेव काकश्च वैस्वर्यं यान्ति तत्क्षणात्।
शारिकाश्शुकदात्यूहाः कुर्वन्त्युत्क्रोशमुच्चकैः॥ २६०॥

हंसस्स्खालित्यमाप्नोति क्रौञ्चस्य स्यान्मदोदयः।
जीवञ्जीवस्य च ग्लानिश्चकोराक्ष्णोर्विरागिता॥ २६१॥

प्राणांस्त्यजन्ति परभृद्दक्षचक्रकपोतकाः।
उद्विग्नतां बिडालाश्च यान्ति मुञ्चन्ति वानराः॥

कपोताश्शुकसारङ्गाश्शारिका भीषिताः क्रमात्।
मत्ता मयूरा नृत्यन्ति विषान्नस्य विलोकनात्॥२६३॥

एतेषां दृष्टिपातेन भवेदन्नादि निर्विषम्।

### विरुद्धान्नस्वरूपम्, तद्वर्जनोपदेशश्च॥

विरुद्धान्नं न भुञ्जीत तत्स्याद्गरविषोपमम्॥ २६४॥

विषं क्षौद्रं विरूढैश्च माषक्षीरैरनूपजम्।
मांसं विषोपमं सद्यः प्राणानपहरेत्क्षणात्॥ २६५॥

गुडेन पयसा वाऽपि मूलकैर्मत्स्यभक्षणम्।
तस्मिंश्चिलिचिमा वर्ज्याः क्षीरेणाम्लं फलं सह॥

सर्वं शाकं कुलुत्थं च कोद्रवो वरकस्तथा।
वेल्लो मकुष्टकश्चैते विवर्ज्याः पयसा सह॥ २६७॥

गुडमूलकदुग्धैश्च वर्ज्यं हरितकं सह।
श्वाविधा कोलमांसं च दध्ना पृषदकुक्कुरौ॥ २६८॥

पित्तेनापक्वपिशितं मूलकैर्माषसूपकम्।
अविमांसं च कौसुंभैर्बिसैस्सह विरूढकम्॥ २६९॥

मध्वाज्यमाषसूपैश्च दध्ना सिद्धगुडेन च ।
लकुचं वर्जयेत्तत्र दधि तालफलैस्सह ॥ २७० ॥

रंभापक्वफलं वर्ज्यं गुडक्षौद्रकणोषणैः ।
काकमाची विषसमा सुरया सह पायसम् ॥ २७१ ॥

कृसरान्नं घृतक्षौद्रं वसातैलजलानि च ।
द्विशस्त्रिशो वा चैकत्र समभागगतानि चेत् ॥ २७२ ॥

अन्योन्यं विषतुल्यानि तिलकल्कैरुपोदकी ।
वारुण्या बककुल्माषौ वर्ज्यौ कौलवसा कृता ॥ २७३ ॥

बलाका तु हरेत्प्राणान् लावतित्तिरिगोधिकाः ।
कपिञ्जलश्च पत्राढ्य एरण्डेन्धनपाचिताः ॥ २७४ ॥

एरण्डतैलसंभृष्टास्सद्यः प्राणान्हरन्ति ते ।
हारिद्राग्नौ विपक्वं चेत्प्रोतं हारिद्रशूलके ॥ २७५ ॥

हारीतमांसं प्राणघ्नं सविषाणि विवर्जयेत् ।
कृमिकेशतृणैर्युक्तं पुनरुष्णीकृतं त्यजेत् ॥ २७६ ॥

अत्युष्णावरशाकानि निन्द्यैकरसनीरसम् ।
शुक्तामम्लकदधिक्षारकीलाटकूर्चिकाः ॥ २७७ ॥

गोवराहाविमहिषमत्स्यांश्च परिवर्जयेत् ।
पूतिशुष्ककृशव्याधिविषवार्यादिभिर्हतम् ॥ २७८ ॥

शालूकबिसनिष्पावपिष्टमाषविरूढकम् ।
फाणितं यवकान्शुष्कशाकानि च विवर्जयेत् ॥ २७९ ॥

अत्यन्तकटुतिक्ताम्लकषायलवणान्वितम् ।
अज्ञातदोषजननं कुत्स्यं शास्त्रविगर्हितम् ॥ २८० ॥

असंस्कृतमदेवार्हं स्पृष्टं च पशुरोमभिः ।
हस्तदत्तं लेह्यपेयपायसं लवण घृतम् ॥ २८१ ॥

तैलं च समशाकानि व्यञ्जनानि च वर्जयेत्।
स्त्रैणं चैकशफं चौष्ट्रं मांसं वन्याविकं त्यजेत् ॥२८२॥

अकालजानि पुष्पाणि प्ररूढानि फलानि च।
संधिन्यवत्साऽसंपूर्णदशाहायाश्च गोः पयः ॥ २८३ ॥

[भोजने वर्ज्याः प्रकाराः।]

न प्रातरेव भुञ्जीत सायं सन्ध्याऽर्धरात्रके।
अन्धकारातपज्योत्स्नाव्योमपादपमूलके ॥ २८४ ॥

शय्यायां द्वारि मार्गेषु कोणे धूसरितस्थले।
न भुञ्जीत क्रियादुष्टे भिन्ने भावादिदूषिते ॥ २८५ ॥

स्वल्पे पात्रेऽन्यभोज्ये च पात्रभोजनगर्हिते।
उन्नम्य तर्जनीं राजदेवतागुरुसन्निधौ ॥ २८६ ॥

अन्यचेता न भुञ्जीत न शीघ्रं न चिरेण च।
बुभुक्षितोऽम्बु न पिबेत्पिपासुर्नाशनं भजेत् ॥ २८७ ॥

गुल्मी भवेत्पिपासार्तो बुभुक्षुश्च भगन्दरी।
पशुवद्वामहस्तेन तोयमञ्जलिना न च ॥ २८८ ॥

परहस्तेन वा पीतशेषं च लवणोदकम्।

[भोजनानन्तरकर्तव्यम्।]

एवं भुक्त्वा ततः कुर्यादमृतस्य पिधानकम् ॥ २८९ ॥

उत्थायासनमास्थाय क्षालयेदाननं करम्।
सुखोष्णवारिणा शश्वद्गण्डूषं ष्ठीवयन्मुहुः ॥ २९० ॥

दन्तशोधनतः कार्यं दन्तसन्धिविशोधनम्।
प्रातरेव बुभुक्षूणां दन्तशोधनमुच्यते ॥ २९१ ॥

प्रातर्भुक्त्वा च कर्तव्यं बुभुक्षूणां विधानतः ।
ततो विधिवदाचम्य मृद्वासनमुपेयिवान् ।। २९२ ॥

आलोलहृष्टचेताश्च संस्मरन्स्वेष्टदेवताम् ।
प्राणादीनां च वायूनां धातूनां पुष्टिकृत्सदा ॥ २९३ ॥

तवान्नामृतमेवास्तु बलमारोग्यमुज्ज्वलम् ।
पीताब्धितोयो वातापिभक्षितः खादितं मया ।। २९४ ॥

पीतं संजरयेत्सर्वं लोपामुद्रापतिर्मुनिः ।
बडबाग्निं दिनाधीशं नासत्यौ सप्तजिह्वकम् ॥ २९५ ॥

कुम्भकर्णं शनिं स्मृत्वा शीघ्रमाहारजीर्णकृत् ।
अनेनैव तु मन्त्रेण स्वनाभिं पाणिना स्पृशेत् ॥ २९६ ॥

भुक्तोत्तरोद्भवकफं धूमेन शमयेत्प्रिये ! ।
अथवा कटुकैस्तिक्तैः कषायैर्वा मनोहरैः ।। २९७ ॥

ततश्चर्विततांबूलो मन्दं शतपदं चरेत् ।
वामे च दक्षिणे पार्श्वे मध्ये तु क्रमशः स्मृतम् ॥

द्वात्रिंशत्पञ्चविंशच्च मात्रा स्याद्द्वादश क्रमात् ।
शयीतापि च नो कुर्याव्द्यायामं चासनं सुधीः ।। २९९॥

भुक्त्वा दिनोत्तरं भूरि स्वानुकूलं समाचरेत् ।
भुक्त्वोपविष्टस्स्थूलस्स्यात्तिष्ठंस्तु बलवान् भवेत् ॥३००॥

सञ्चरन्सुखमायुष्यं स्वपन्धावन्मृतिं व्रजेत् ।
भुक्त्वाऽऽतपाग्नियानांबुप्लावनं च परित्यजेत् ॥ ३०१ ॥

स्पर्शं शब्दं रसं गन्धं रूपं चानुभवेत्सुखम् ।
तेनान्नं जीर्यते क्षिप्रमौद्धत्यं कर्म नाचरेत् ॥ ३०२ ॥

**अन्ये स्वस्थहिता धर्म्या आचाराः॥**

कथा धर्मोत्तराः पुण्याश्शृण्वन्पुण्यपरायणैः।
परोपकारनिरतैरास्तिकैस्स्निग्धमानसैः॥ ३०३॥

रागादिरहितैश्शान्तैर्वेदशास्त्रार्थवेदिभिः।
स्वजनैस्सहितो नित्यं लोकयात्रानुसारिभिः॥ ३०४॥

क्षणं तदितरैस्सार्धं न वदेन्न वसेत्क्वचित्॥।
न स्निग्धेन द्विषेत्किञ्चिन्न दद्यान्न समाचरेत्॥ ३०५॥

वेगान्निरुन्ध्यात्तान्नैव बलान्नोदीरयेत्सदा।
सति वेगे नान्यकारी साध्यरोगाननाशयन्॥ ३०६॥

ऐहिकामुष्मिकसुखं विना धर्मं न लभ्यते।
सर्वेषां प्राणिनां सर्वं कार्यं सुखनिमित्तकम्॥ ३०७॥

भवेद्धर्मरतस्तस्मात्सुखार्थी सततं नरः।
पूज्यैस्सद्भिस्सहासीत न नरैर्दुष्टकर्मभिः॥ ३०८॥

कायेन मनसा वाचा न कुर्यात्पापलेशकम्।
अगम्यागमनं स्तेयं हिंसाताडनघातनम्॥ ३०९॥

पाणिपद्भ्यां दृशा स्त्रीणामन्येषां च विलोकनम्।
श्रुतिं पापकथानां च वृक्षादीनां च भञ्जनम्॥३१०॥

आदा(धा)नं सर्वकाले च समादा(धा)नं च सर्वतः।
द्रोहचिन्तां पापचिन्तां परद्रव्याभिलाषिताम्॥ ३११॥

शास्त्रदृष्टे वैपरीत्यं महावाक्यान्यथाकृतिम्।
नास्तिक्यचिन्तामज्ञानमसतामादरं तथा॥ ३१२॥

असंबद्धप्रलापं च पारुष्यमनृतं तथा।
निष्ठुरोक्तिं च पैशुन्यममर्मोद्घाटनकं तथा॥ ३१३॥

विरोधशोककजननमहितं बहुभाषणम्।

सन्त्यजेत्सततं विद्वान् देवि! त्रिपुरभैरवि! ॥ ३१४ ॥

शोकदारिद्र्यरोगार्तान्तोषयेच्च यथाबलम् ।
ब्रह्मादिकीटपर्यन्तं पश्येदात्मवदीश्वरि! ॥ ३१५ ॥

मानयेद्देवताविप्रगोभिषग्वृद्धभूमिपान् ।
गुरूनभ्यागतान्बन्धूनतिथीन्व्रतिनो यतीन् ॥ ३१६ ॥

याचकान्नावमन्येत नाक्षिपेत्तान्कदाचन ।
अहितार्थपरे शत्रावुपकारपरस्सदा ॥ ३१७ ॥

सुखे दुःखे चैकमनाश्श्रुतत्यागादिहेतुके ।
रूपाभरणवस्त्राद्यैः फले चेर्ष्यां न कारयेत् ॥ ३१८ ॥

प्राप्तकाले हितं स्वल्पं सत्यं मृदु मनोरमम् ।
सदाचारः कृपालुश्च स्मितास्यः पूर्वभाषकः ॥ ३१९ ॥

न सर्वत्रापि विश्वस्तो न च सर्वत्र शंकितः ।
नैक एव सुखार्थी स्यात्किञ्चिच्छल्यं न कारयेत् ॥

स्वयं पराहितो न स्यात्प्रभोर्निस्नेहतामपि ।
अपमानं न प्रकाश्यं स्वकृतं धर्ममीश्वरि! ॥ ३२१ ॥

पराराधनदक्षस्तु यस्य चित्तं यथा भवेत् ।
तथैव तमनुब्रूयात् तस्य सन्तोषहेतवे ॥ ३२२ ॥

धर्मार्थकामहीनं च कर्म नैव भजेत्सदा ।
तथा परस्परेणैव विरोधं न समाचरेत् ॥ ३२३ ॥

लालनं पीडनं नित्यमिन्द्रियाणां न चाचरेत् ।
सर्वधर्मेषु सामान्यं कर्म नित्यं समाचरेत् ॥ ३२४ ॥

अदीर्घनखरश्शुद्धहस्तपादेन्द्रियस्सदा ।
स्निग्धकेशश्मश्रुवर्णस्स्वसौभाग्यमनुद्धतः ॥ ३२५ ॥

सुवेषस्नाननिरतश्छत्रोपानट्समन्वितः ।
युगप्रमाणमापश्यन्धारयेद्रत्नभूषणम् ॥ ३२६ ॥
दिव्यौषधं विषहरं सिद्धमन्त्रसुयन्त्रकम् ।
रात्रावात्यन्तिके कार्ये नैको गच्छेन्न दण्डभृत् ॥३२७॥
न वेष्टितशिरा नैव तमिस्रे शङ्कितस्थले ।
तुषोच्छिष्टाशुचिस्नानशर्कराबलिभूमयः ॥ ३२८ ॥
लोष्टभस्मध्वजाशस्तचैत्यार्यवनिताश्रिताः ।
छाया नाक्रमणीया स्यान्न दोर्भ्यां तटिनीं तरेत् ॥
उरसा स्यन्दनगजशिबिकानौमहीरुहान् ।
नारोहेन्न च वह्निं च दुष्टसत्वान्प्रति व्रजेत् ॥ ३३० ॥
क्षुतं विजृम्भहास्यं च न कुर्याद्विवृताननः ।
न पीडयेद्घ्राणरन्ध्रं लिखेद्भूमिमकारणम् ॥ ३३१ ॥
अङ्गानि न विचेष्टेत विपरीतानि भैरवि ! ।
नोर्ध्वजानुश्चिरं तिष्ठेत्तथा नोत्कटकासनः ॥ ३३२ ॥
श्रमो वा यदि वाक्कायमनसां च प्रजायते ।
तस्मात्पूर्वं त्यजेत्कर्म वृक्षच्छायां त्यजेन्निशि ॥३३३॥
दिवा कपित्थच्छायायां रात्रौ बोधिद्रुमस्य च ।
दिवानिशं विभीतस्य छायां च परिवर्जयेत् ॥ ३३४ ॥
चैत्यान्तश्चत्वरं देवभवनं च चतुष्पथम् ।
नक्तं न सेवेत दिवा वध्यशून्यगृहाटवीम् ॥ ३३५ ॥
पितृभूमिं चण्डरश्मिं न संपश्येत्कदाचन ।
सूक्ष्ममप्रियमादीप्तममेध्यं न विलोकयेत् ॥ ३३६ ॥
न धार्यश्शिरसा भारो विक्रेयं नासवं क्वचित् ।
तथा रसांश्च पुरुषवातवात्यापुरोऽनिलान् ॥ ३३७ ॥

रजोहिमातपान्वादं महद्भिश्च विवर्जयेत् ।
मैथुनक्षवथूद्गारकासनिद्रान्नपानकम् ॥ ३३८ ॥

वक्राङ्गो न च सेवेत दंष्ट्राहिव्यालशृङ्गिणाम् ।
तटच्छायानीचदुष्टानार्यराजद्विषामपि ॥ ३३९ ॥

बालातिचतुराणां च स्त्रीणां सेवां विवर्जयेत् ।
निद्राध्ययनसम्भोगभोजनानि न सन्ध्ययोः ॥ ३४० ॥

नखाङ्गास्यैश्शब्दवाद्यं केशानां धूननं करैः ।
पूज्यांब्वग्न्यन्तरायानं सवधूनं च वर्जयेत् ॥ ३४१ ॥

स्त्रीषु वैरस्यविश्वासस्वातन्त्र्याधिकसक्तताम् ।
व्यसनेषु च सर्वेषु वर्जयेदतिसक्तताम् ॥ ३४२ ॥

दैवाग्निगुरुराजानामनृताप्रियकोपनम् ।
लीलालापविनोदस्त्रीभाषणं शयनान्तरम् ॥ ३४३ ॥

वाणिज्यद्व्ययवादानि हासोच्छिष्टाशुचित्वकम् ।
आकुण्ठनं च शपथं सदा वासं विवर्जयेत् ॥ ३४४ ॥

स्नायान्न नग्नः कर्माणि निष्फलानि न चाचरेत् ।
न बोधयेच्छयालुं च नार्द्राङ्घ्रियुगलस्स्वपेत् ॥ ३४५ ॥

सक्लेशो नार्जयेद्वित्तं मर्मस्पृङ्नैव कस्यचित् ।
देवाग्निगुरुवृद्धानां पूज्यानां योषितामपि ॥ ३४६ ॥

वेदशास्त्रकुमारीणां वाममार्गानुसारिणाम् ।
ऊनातिरिक्तदेहानां विद्याहीनकुरूपिणाम् ॥ ३४७ ॥

दरिद्राणां च हीनानां निन्दां कुर्यात्कदापि न ।
न स्त्रीपरयुतोऽश्नीयाज्जृम्भमाणां समानताम् ॥३४८॥

नग्नामन्ययुतां ह्रीणां स्रवन्तीं च रजस्वलाम् ।
यदृच्छया समासीनां न पश्येत्क्षुद्वतीं स्त्रियम् ॥

न कण्डूयेद्द्विहस्ताभ्यां मूर्धानं निजमीश्वरि ! ।
स्वकं जन्मर्क्षलग्नं च गृहच्छिद्रं धनं वयः ॥ ३५० ॥

जप्यं मन्त्रं न कथयेच्छ्रुतान्वयधनस्य च ।
वयोवाग्वेषबुद्धीनां कर्मणां सदृशीं प्रिये ! ॥ ३५१ ॥

शङ्काकौटिल्यरहितां शुभां वृत्तिं समाचरेत् ।
वृद्ध्याजीवै रोगिभिश्च स्तेनैः पातकिभिस्सह ॥३५२॥

न विटैर्न वसेड्डंभैर्न जीवेत्क्षात्रकर्मणा ।
विट्शूद्रकर्मणा वाऽपि हीनवृत्त्या द्विजस्सदा ॥३५३॥

आयुरारोग्यवित्तेषु यौवनेष्वस्थिरं स्मरेत् ।
अवैद्ये व्याधिबहुले दुर्बले जलवर्जिते ॥ ३५४ ॥

अधर्मिलोकेऽद्रितटे वने नायकवर्जिते ।
बहुनाथेऽबलानाथे बालनाथे ह्यदातृके ॥ ३५५ ॥

उपद्रुते देवविप्रबन्धुभिश्च विवर्जिते ।
ऋणदातृविहीने च विद्याधनविवर्जिते ॥ ३५६ ॥

प्रियसंमानरहिते देशेऽस्मिन्न वसेद्दिनम् ।
स्वयं न कुर्यात्पुष्पस्रक्क्षौरचन्दनघर्षणम् ॥ ३५७ ॥

पादाभ्यङ्गोद्वर्तनानि केशशुद्धिं च पादयोः ।
क्षालनं च स्वयं कुर्यान्मुखप्रक्षालनं तथा ॥ ३५८ ॥

शौचं नवमलद्वारशोधनं दानभोजनम् ।
अवरोधं कोशगृहं गच्छेत्तिष्ठेच्चिरं न च ॥ ३५९ ॥

अल्पलाभे तुष्टचेता बहुलाभेऽपि नोद्धतः ।
राजाग्निस्त्रीगुरूणां च ह्यत्यासन्नातिदूरताम् ॥ ३६० ॥

वर्जयेद्भुजगक्रीडां लीलया विषभक्षणम् ।
आतपं पृष्ठभागेन सर्वलोकानृजुत्वतः ॥ ३६१ ॥

नेर्ष्यालुः परवृद्धौ च संयोगी बन्धुभिस्सह ।
उदग्रस्मृतिमान्वाग्मी बली ह्रीमांश्च बुद्धिमान् ॥
अरिषड्वर्गरहितो वृद्धसेवापरायणः ।
पितृपिण्डप्रदाता स्यात्कृपालुर्यागहोमकृत् ॥ ३६३ ॥
क्रुद्धानुनेता भीतानामाश्वासी शान्तलोचनः ।
विमृश्यकारी दक्षश्च क्षमी दाक्षिण्यतत्परः ॥ ३६४ ॥
कुलविद्याधैर्यशौर्यशिल्पविज्ञानतत्परः ।
इन्द्रियद्विरदान्रुन्ध्ये तीक्ष्णज्ञानाङ्कुशेन च ॥ ३६५ ॥
प्रेरकं चेन्द्रियाणां यत्तन्निरुन्ध्यान्मनस्सदा ।
तस्मिन्बद्धे तु बद्धानि भवन्त्येवेन्द्रियाणि च ॥३६६॥
सेवेत काले विषयान्न भजेत्तदधीनताम् ।
इच्छेच्छ्रियं च मरणं विद्याज्ञानार्जनं तथा ॥ ३६७ ॥
प्रियवाक्येन लोकानां चित्तमाह्लादयेत्सुधीः ।
विश्राणितार्थोऽप्यसकृदुग्रवाक्त्यज्यते भयात् ॥ ३६८ ॥
आत्मनोऽप्यहिते याते परेषां हितभाग्भवेत् ।
धर्मं सर्वप्रियं तथ्यं हितमर्थं वचो वदेत् ॥ ३६९ ॥
अश्राव्यमुग्रमसह्यमप्रत्यक्षं न तद्वदेत् ।
नारीं भृत्यं सुतं प्रीतिदानैर्लुब्धं च दानतः ॥ ३७० ॥
अन्यान्दाक्षिण्ययोगेन मूर्खांश्छन्दानुभाषणात् ।
प्रणत्या स्तब्धहृदयान्विद्वांसं सत्यभाषणात् ॥ ३७१ ॥
विद्यावयोबन्धुवित्तयुक्ताः पूज्या यथाक्रमम् ।
न कुर्यात्स्पर्धया वैरं महद्भिश्च प्रधानकैः ॥ ३७२ ॥
सुखे सुखाधिकान्दृष्ट्वा दुःखे दुःखाधिकांस्तथा ।
अहिताभ्यामिवोभाभ्यां न दद्यादात्मजीवितम् ॥३७३॥

धर्मज्ञान्दु.खसंभार्यान् बन्धूंश्च सुहृदः प्रियान् ।
दासानकुपितान्कुर्यात्तेषां दोषान्न च स्मरेत् ॥ ३७४ ॥

परस्परं न कण्डूयेत्क्षालनीये पदे न च ।
पादं पदेन नाक्रम्य जुहुयान्नाशुचिस्सदा ॥ ३७५ ॥

अनर्चिषं हव्यवाहं नैकशय्यस्स्त्रिया सह ।
परासनगृहारामशय्यायानांशुकं त्यजेत् ॥ ३७६ ॥

कोऽयं कालः कश्च देशः सहायः को व्ययागमौ ।
कोऽन्वहं का च मे शक्तिरिति चिन्त्यं क्षणे क्षणे ॥

सदाचारप्रवृत्तानां महतां शीलवर्तनम् ।
समाचरेत्परीक्ष्यैव शिष्टास्त्वाचार्यका नृणाम् ॥ ३७८ ॥

दानी कृपार्द्रचित्तश्च वाग्यतः कामविग्रहः ।
परकार्योद्यतो नित्यं भवेन्मुक्तिपरायणः ॥ ३७९ ॥

दिनानि मे किं सुकृतैः दुष्कृतैर्वा प्रयान्ति किम् ।
दिवा नक्तमिति ज्ञात्वा न भवेत्स तु दुःखभाक् ॥

एवं संक्षेपतः प्रोक्तमाचरन्यो भवेन्नरः ।
कीर्त्यारोग्यधनायूंषि मुक्तिमन्ते च गच्छति ॥ ३८१ ॥

## रात्रिचर्या ॥

एवमशेषं दिवसं क्षपयेच्च पितृप्रसूम् ।
प्रणम्यार्घ्याञ्जलिं दत्वा कल्ये वास्तमिते रवौ ॥ ३८२ ॥

गायत्रीं च जपेच्चैव वह्न्यौपासनमाचरेत् ।
गुरून्प्रणम्य विप्रांश्च तैः कृताशीस्ततः परम् ॥ ३८३ ॥

भजेन्नीराजनं दीपं दिव्यांभस्सुरपार्श्वयोः ।
कृत्वा पिष्टमयं दीपराजनं घृतपूरितम् ॥ ३८४ ॥

अच्छवर्तियुतं स्थाल्यां पुष्पदूर्वातिलानपि ।
सुरसां सहदेवीं च विष्णुक्रान्तां च सर्षपम् ॥

स्थापयित्वोद्दीपयेत दिनं नीराजनं प्रिये ! ।
सशङ्खघोषं कान्ताभिर्जयशब्दपुरस्सरम् ॥ ३८६ ॥

सुवासिनीभिस्सस्त्रीकः कृतनीराजनक्रमः ।
ईतयस्सकला रोगाः शाम्यन्तु दुरितानि च ॥ ३८७ ॥

दुर्दृष्टिदोषाश्श्रेयांसि चारोग्यायूंषि सन्तु ते ।
एवं समुच्चरन्तीभिर्ब्राह्मणैश्च शुभं कृतम् ॥ ३८८ ॥

घृताक्तवर्तिसान्द्रश्च दीर्घैकाग्रो विनिश्चलः ।
प्रदक्षिणार्चिरुचिरस्तप्तहाटकदीप्तिमान् ॥ ३८९ ॥

वैडूर्याभ्रमयो दीपो ज्ञेयो मङ्गल्यदः परम् ।
निष्टप्ततनिया(?)यज्ञे दीप्तिमाननलो यदि ॥ ३९० ॥

प्रदक्षिणार्चिर्वेद्यां च तस्यैश्वर्यमखण्डितम् ।
यथोक्तलक्षणाद्धीना दीपहोमाग्नयो यदि ॥ ३९१ ॥

लक्ष्म्यै तदशुभं ज्ञेयं शलभानिलनाशितम् ।
सङ्गीतशास्त्रचतुरैस्सर्वशास्त्रविशारदैः ॥ ३९२ ॥

धर्मज्ञैर्योगिभिर्युक्तः पुराणार्थप्रवर्तकैः ।
एवं षण्णाडिका नीत्वाऽश्नीयात्प्रक्षालितांघ्रिकः ॥

## रात्रिभोजननियमाः ॥

प्रातर्भुक्तिरजीर्णा चेद्रात्रिभुक्तिं विवर्जयेत् ।
रात्रिभुक्तिरजीर्णा चेद्दिवाभुक्तिं विवर्जयेत् ॥ ३९४ ॥

अर्कोदये तु हृदयं बुध्यते कमलं यथा ।
तस्मात्स्रोतांसि सर्वाणि विवृतानि भवन्ति च ॥

इन्द्रियाणां विकासाच्च व्यायामाच्च विशेषतः।
चित्तविक्षेपतो यान्ति धातवः क्लेदहीनताम्॥ ३९६॥

तस्मान्निशि कृता भुक्तिरधिकाऽपि हि पच्यते।
दिवाभुक्तिविदाहे तु पित्तकोपः प्रजायते॥ ३९७॥

तस्मात्पयो हितं रात्रौ नान्यद्भुञ्जीत पित्तकृत्।
रवावस्तमिते तेजो विशति ज्वलनं निशि॥ ३९८॥

प्रकाशन्तेऽग्नयस्सर्वे जाठरश्च विशेषतः।
तस्माद्रात्रौ हि भुञ्जीत न कुर्यात्तं निरिन्धनम्॥३९९॥

न लंघयेन्नाडिकां च दशमीं रात्रिभोजने।
अष्टनाड्यन्तरे चैव निशि भोजनमुत्तमम्॥ ४००॥

दिवा द्वादशनाड्यास्तु पूर्वं भुक्तिं न चाचरेत्।
नातिक्रमेत घटिकां षोडशीं चान्वहं प्रिये!॥ ४०१॥

निस्तालितैस्समरिचैस्स्नेहपक्वैर्हितैर्मितैः।
व्यञ्जनैश्चोपयुञ्जीत क्षीरान्नं मधुसितायुतम्॥ ४०२॥

क्षीरप्राया निशा भुक्ती रम्भाम्रपनसैः फलैः।
हितं भुक्त्वा लघुतरं हस्तास्ये क्षालयेन्नरः॥ ४०३॥

आचम्य विधिवत्तुष्टचेता भूत्वा सुखासनः।
मुहूर्तमात्रेऽतीते तु कुर्यात्ताम्बूलचर्वणम्॥ ४०४॥

सकर्पूरं च सूक्ष्माच्छवस्त्रैश्च परिशोधितः।
यक्षकर्दमलिप्ताङ्गस्सुगन्धिकुसुमोज्ज्वलः॥ ४०५॥

### कामसेवाप्रकारः॥

स्नातां शुद्धांबरधरामङ्गरागविलेपिताम्।
सुगन्धि पुष्पसुरभिं तांबूलापूरिताननाम्॥ ४०६॥

हृष्टां शुद्धान्वयां कान्तां युवतीं चतुरां रतौ ।
सङ्गच्छेत प्रियां हृष्टो विस्रब्धः कामलोलुपः ॥ ४०७ ॥

प्रियवाक्यैस्तदुचितैस्तां च सन्तोषयेद्युवा ।
ऋज्वङ्गो मुक्तमूत्रादिरक्रोधोऽनन्यचिन्तनः ॥ ४०८ ॥

अस्नातां मलिनामार्तां मलिनाम्बरधारिणीम् ।
उदक्यां चेटिकां क्रुद्धामप्रियां मर्मभेदिनीम् ॥ ४०९ ॥

वयोऽतीतां कृशां स्थूलां पिङ्गाक्षीं मधुपिङ्गलाम् ।
अतिकृष्णां च विधवां कन्यकां व्रतचारिणीम् ॥ ४१० ॥

तपस्विनीं कुरूपां च दुर्गन्धामशुचिं शठाम् ।
परस्त्रियं स्वैरिणीं च दाक्षिण्यां च स्वगोत्रजाम् ॥

वर्णाधिकां गुरुभ्रातृमातुलानीस्वसृसुताम् ।
मित्रबन्धुस्यालकानां नृपादीनां च योषितः ॥ ४१२ ॥

वर्जयेत्पार्श्वशयनामनुत्तानामधोमुखीम ।
अनुजां पुत्रकामीयो न गच्छेत्कामिनीं प्रिये ! ॥ ४१३ ॥

पशुयोनावयोनौ च न कुर्याच्छुक्रमोचनम् ।
उद्याने सलिले रम्ये गिरौ पयसि चाध्वरे ॥ ४१४ ॥

चतुष्पथे च चैत्ये च पितृभूमौ नदीतटे ।
देवद्विजगुरुक्ष्मापभोगेषु परिवर्जयेत् ॥ ४१५ ॥

अह्नि सन्ध्यासु जन्मर्क्षे व्यतीपाते च सङ्क्रमे ।
पर्वस्वकल्पसङ्कल्पो वृष्यभेषजवर्जितः ॥ ४१६ ॥

क्षुधार्तश्चातिभुक्तश्च श्रान्तस्तृष्णायुतो नरः ।
अतिबालोऽतिवृद्धश्च न रमेत वधूं प्रिये ! ॥ ४१७ ॥

अत्युग्रा प्राणसंहर्त्री विधवा रोगमृत्युदा ।
पराङ्गना हरेदायुरैहिकामुष्मिकं फलम् ॥ ४१८ ॥

दुःखश्चाधोगतिर्वाच्यमुदक्या हग्विनाशनम् ।
पुण्यायुष्यक्षयं कुर्यादतिसारं च दुस्तरम् ॥ ४१९ ॥

बलवान्वृष्यभैषज्यं भक्षयित्वाऽनुवासरम् ।
हेमन्ते शिशिरे चैव स्त्रियं गच्छेन्नरस्सदा ॥ ४२० ॥

त्रिवासराद्वसन्ते च शरदि स्याच्च पक्षतः ।
ग्रीष्मे वर्षासु सेवेत नाभुक्तं च कदाचन ॥ ४२१ ॥

पतनाभिमुखं शुक्रं न रुन्ध्यात्सुखकाङ्क्षया ।
पूर्वं षोडशवर्षाच्च परं सप्ततिवत्सरात् ॥ ४२२ ॥

स्त्रियं न गच्छेद्बलवानपि रोगयुतोऽन्यथा ।
अपूर्णधातुर्बालस्तु यदि गच्छेत्स्त्रियं प्रिये ! ॥ ४२३ ॥

क्षुभ्यन्ति धातवो घर्मात्तटाकोऽल्पजलो यथा ।
क्रिमिदष्टं जर्जरितं काष्ठं शुष्कं च रूक्षितम् ॥ ४२४ ॥

स्पृष्टमात्राद्विशीर्णस्स्याद्गत्या वृद्धस्तथा भवेत् ।
शुक्रं तनोः प्रसन्नोऽच्छस्त्वन्नसारात्सुसारकम् ॥ ४२५ ॥

तस्मिन्सुरक्षिते देहे दार्ढ्यं स्यात्सततं तथा ।
रतान्ते सेवनीयानि श्रमविच्छित्तये नरैः ॥ ४२६ ॥

स्नानं विलेपनं तालवृन्तं शीतं जलं पयः ।
मद्यं मांसं तथा ज्योत्स्नामिक्षुं भक्ष्यान्सशर्करान् ॥ ४२७ ॥

रसालां मधुरप्रायरसां निद्रां च भैरवि ! ।

## शयनीयप्रकाराः शयनविधिश्च ॥

खट्वां सुरञ्जितां तन्तुनिर्मितायतपट्टकैः ॥ ४२८ ॥

संवीतां तूलसंघातशयनीयविराजिताम् ।
स्वच्छोत्तरच्छदयुतामुपधानयुगोज्ज्वलाम् ॥ ४२९ ॥

शय्यामासाद्य निद्रां च भजेत्स्मृत्वेष्टदेवताम् ।
पूर्वस्यां दक्षिणस्यां वा दिशि संस्थापयेच्छिरः ॥४३०॥

मेधावी पूर्वमूर्धा स्यादायुष्मान्यमराट्दिशि ।
मनस्तापश्च वारुण्यामुदीच्यां मरणं भवेत् ॥ ४३१ ॥

प्रवासे पश्चिमशिरा न कदाचिदुदक्छिराः ।
हंसपुच्छोदरोद्भूतमृदुपक्षविनिर्मिता ॥ ४३२ ॥

चर्मणा मृदुना बद्धा सा श्रेष्ठा हंसतूलिका ।
त्रिदोषशमनी राज्ञां मृद्वी सौभाग्यवर्धनी ॥ ४३३ ॥

अबीजैश्शाल्मलीतूलैस्सुपक्कफलजैः कृता ।
सान्द्रवस्त्रैः पिष्टयत्ता शाल्मलीतूलिका मता ॥४३४॥

सर्वदोषप्रशमनी वृष्या रक्तप्रदायिका ।
मृद्वी च शीतला लघ्वी सौकुमार्यप्रदायिनी ॥ ४३५ ॥

बीजवर्जं च सहितं कार्पासं गुणताडितम् ।
सवस्त्रं सीवयेत्तच्च ख्याता कार्पासतूलिका ॥ ४३६ ॥

सोष्णा वातकफघ्नी स्याद्दुःखदोदकसेविनाम् ।
केसरैः पद्मजैर्वाऽपि नागपुष्पसमुद्भवैः ॥ ४३७ ॥

सुगन्धिपुष्पजनितैर्यद्वा कुङ्कुमसम्भवैः ।
चक्रितं पट्टवस्त्रेण ख्याता केसरतूलिका ॥ ४३८ ॥

चक्षुष्या वृष्यदा राज्ञस्सुखसौगन्ध्यदा शुभा ।
कल्हारोत्पलपद्मानां कङ्केलिकदलीभवैः ॥ ४३९ ॥

कल्पिता पल्लवैस्सा तु ख्याता पल्लवतूलिका ।
शीतला दाहपित्तघ्नी ग्लानितृड्ज्वरनाशिनी ॥ ४४० ॥

पाटलीमल्लिकाजातियूथीचम्पककेसरैः ।
केतकीकोमलदलैः कल्हारैर्वा सुगन्धिभिः ॥ ४४१ ॥

अवृन्तैरन्यपुष्पैर्वा रचिता पुष्पतूलिका।
स्यूता निर्मलवस्त्रेण वृष्यदा कामकेलिषु॥ ४४२॥

क्लमश्रमघ्नी शैत्यं च कामज्वरनिबर्हणी।
सान्द्रश्लक्ष्णाजिने पूर्णा वारुणी तोयतूलिका॥४४३॥

रक्तपित्तप्रशमनी निदाघेऽह्नि सुखप्रदा।
हेमन्ते शिशिरप्रावृट्काले कार्पासतूलिका॥ ४४४॥

वसन्ते हंसतूली स्याद्ग्रीष्मे मध्येऽह्नि तोयजा।
शाल्मलीतूलिका ग्रीष्मरात्रौ शरदि सर्वदा॥ ४४५॥

क्रीडायां पुष्पजा सेव्या तथा पल्लवतूलिका।
भूमिशय्याऽनिलहरा वृष्या बृह्मणदायिनी॥ ४४६॥

जानुदघ्नं च मृदुलं समास्तीर्णसुवस्त्रकम्।
भजेत शयनं वातश्रमघ्नं बलपुष्टिदम्॥ ४४७॥

निद्रासुखप्रदं वृष्यं तत्तद्द्रव्यगुणावहम्।
असमामविशालां चानायतां क्रिमिदूषिताम्॥ ४४८॥

भग्नां च मलिनां शय्यां नास्तृतां न भजेत्क्वचित्।
सर्पप्रेतपिशाचेभ्यस्त्रातुमात्मानमीश्वरि!॥ ४४९॥

वैदिकान्विषघ्नमन्त्रांश्च जपित्वा गारुडान्मनून्।
धौतशुष्कपदोऽगस्त्यं मुचुकुन्दं च माधवम्॥ ४५०॥

आस्तिकं च श्वफल्कं च हनूमन्तं षडाननम्।
गरुडं नर्मदां देवं भैरवं भैरवीं तथा॥ ४५१॥

दुर्गां च त्वरितां वीरमघोरं नरसिंहकम्।
वीरभद्रं स्मरेन्नित्यं षोडशैतान्सदा निशि॥ ४५२॥

भूतप्रेतपिशाचादिवृश्चिकादिभयापहान्।
यक्षराक्षसकूष्माण्डग्रहज्वरविनाशकान्॥ ४५३॥

स्मृत्वा स्वप्यात्सुखं यस्मान्निद्रालुश्चाप्रबोधितः ।

## निद्रास्वरूपम् ॥

निद्रा हि लोके सृष्टाऽऽदौ प्रकृतिश्चादिमा स्मृता ॥

सा मूलं तमसो देवि ! तमोरूपा च सा भवेत् ।
सर्वप्राणिशरीरेषु प्रकृतिस्साऽभिधीयते ॥ ४५५ ॥

प्रकृतिः पुरुषं यायाद्यदा निद्रेति सा स्मृता ।
सैव सृष्टिं स्थितं नाशं सूचयत्यनुवासरम् ॥ ४५६ ॥

प्रातर्ब्राह्मी सृजत्येषा मध्याह्ने वैष्णवी जगत् ।
त्राति चास्तमये रौद्री सदा संहरति क्रमात् ॥ ४५७ ॥

एतया मोहिता देवा बोधिताश्चानया सदा ।
तस्मात्प्रायेण सा निद्रा मोहयेत्सर्वजीविनः ॥ ४५८ ॥

श्रमात्स्वकर्मविरतेष्विन्द्रियेष्वखिलेषु च ।
श्लेष्मापूर्णेऽखिले द्वारे निद्रा प्राणिषु वर्तते ॥४५९॥

क्लान्ते चित्ते स्वविषयान्मुक्ते कर्मेन्द्रिये यदा ।
क्लमान्विते तदा निद्रा जायते प्राणिनां सती ॥४६०॥

सर्वेन्द्रियक्रियाशून्ये मनोविषयवर्जिते ।
पश्येद्बहुविधान्स्वप्नान्सर्वेन्द्रियगुणानुगान् ॥ ४६१ ॥

## निद्रासेवने नियमाः ॥

बलाबलं पुष्टिकार्श्यं सुखदुःखे च षण्डता ।
वृष्यमज्ञानिता ज्ञानमायुष्यं मरणं भवेत् ॥ ४६२ ॥

निद्रायास्सर्वमेतच्च युक्तायुक्तनिषेवणात् ।
योषिद्वाहनगीताध्वमद्याध्ययनकर्मसु ॥ ४६३ ॥

भारव्यायामयोस्सक्ताश्शिशुवृद्धाबलाः कृशाः ।
उपोषिताः क्षीणकफा दिवानिद्रोचिता नराः ॥ ४६४ ॥

एते सर्वे स्वपन्त्यह्नि पूर्वं भुक्तेर्यथासुखम्।
दिवास्वापोचिता ये च न स्वप्युस्ते दिवा यदि॥

वातादयः प्रकुपितास्तेषामेव भवन्ति हि।
दिवास्वप्नोचितानां च धातुसाम्यं बलं भवेत्॥४६६॥

श्लेष्मा पुष्टिस्स्थिरायुश्च दिवास्वापेन पार्वति!।
आदानत्वाद्रूक्षता स्याद्ग्रीष्मो वाताधिको यतः॥

अल्पत्वाच्च त्रियामाया दिवास्वापस्ततो भवेत्।
स्नेहनित्याश्च कफिनो मेदोयुक्ता विषार्दिताः॥४६८॥

श्लेष्मलाहारनिरता न स्वप्युस्ते दिवा क्वचित्।
अङ्गमर्दो गुरुत्वं च शिरस्तोदो हलीमकः॥ ४६९॥

स्तैमित्यमग्निसादश्च हृल्लासोऽर्धशिरोव्यथा।
पीनसं हृत्प्रलेपश्च शोफः कर्णरुजाऽरुची॥ ४७०॥

गलामयः कासकोठपिडकास्मृतिवैकृतम्।
तन्द्रा ज्वरः प्रमेहाश्च स्रोतोरोधो विषोद्धतिः॥४७१॥

अपाटवं चेन्द्रियाणां दिवास्वापात्प्रजायते।
निशि जागरणाद्रूक्षो वातकोपश्च जायते॥ ४७२॥

दिवास्वापात्तया स्निग्धश्श्लेष्मा पित्तं च कुप्यति।
निषण्णोच्चलनस्वापादृबृह्मणास्यन्दिता भवेत्॥ ४७३॥

निद्रानाशे जृंभिकाङ्गमर्दगौरवतन्द्रिताः।
आलस्यं वातकोपश्च श्रमग्लानिजडत्वकम्॥ ४७४॥

पक्तिशूलं भवत्येव वक्त्रशोषस्स्वरक्षयः।
स्वात्मानुरूपं स्वप्याच्च दिवा च निशि वा सदा॥

रात्रिप्रजागरात्कालादर्धं स्वप्याद्दिवा नरः।
नित्याचारस्समासेन प्रोक्तस्त्रिपुरभैरवि!॥ ४७६॥

य इत्थमाचरेन्नित्यमावयोर्भक्तिमान्स हि ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ अष्टादशोल्लासः ॥

## ॥ एकोनविंश उल्लासः ॥

### ऋतुचर्या ।

### कालविभागः ॥

श्रीभैरवी—

भगवन्! त्वत्प्रसादेन नित्याचारक्रमश्श्रुतः ।
स्वामिन्नैमित्तिकाचारं श्रोतुं वाञ्छाऽस्ति मे वद ॥ १ ॥

श्रीभैरवः—

तच्छृणु त्वं महादेवि! ब्रूमि नैमित्तिकीं विधिम् ।
कालाधीनस्स तु भवेदनपायोऽमितस्सदा ॥ २ ॥

अनादिनिधनस्सूक्ष्मस्स्थूलो व्याप्तस्सदातनः ।
ब्रह्मादयश्च सूर्याद्या महाभूतादयः परे ॥ ३ ॥

कालानुसारिणस्सर्वे प्रयत्ने कालरूपिणः ।
कालादेव हि जायन्ते लीयन्ते तत्र सर्वदा ॥ ४ ॥

यःकालस्सोऽहमेवेति त्वं च कालप्रवर्तिनी ।
तस्माज्जन्मभृतां जन्मनिधनाय निवेद्यते ॥ ५ ॥

अविभाज्यो हि कालोऽयं तथाऽपि प्रविभज्यते ।
तीक्ष्णसूच्याऽब्दपत्रं तु यावत्कालेन भिद्यते ॥ ६ ॥

स कालो लव इत्युक्तस्त्रुटी त्रिंशल्लवैर्भवेत् ।
तद्योऽयं स्यात्त्रुटिःकालो मात्रा स्यात्तद्द्वयान्विता ॥ ७ ॥

दृक्पक्ष्मणोः परिक्षेपस्स तु मात्रा प्रशस्यते ।
मात्राष्टादशभिः काष्ठा काष्ठात्रिंशद्युता कला ॥ ८ ॥

कलात्रिंशत्क्षणः प्रोक्तः क्षणैष्षड्भिश्च नाडिका ।
नाडीद्वयं मुहूर्तस्स्यात्तैश्चतुर्भिश्च यामकः ॥ ९ ॥

यामैश्चतुर्भिर्दिवसस्तथा रात्रिर्भवेत्प्रिये ! ।
एवं दिवाऽनिशं किं तु पूर्वाह्णो दश नाडिकाः ॥ १० ॥

मध्याह्ने दश नाडी स्यादपराह्णस्तथैव च ।
पूर्वरात्रं चार्धरात्रं तथैवापररात्रकम् ॥ ११ ॥

दिवसैः पञ्चदशभिः पक्षस्स्याच्छुक्लसंज्ञकः ।
द्वितीयः कृष्णपक्षस्स्याद्द्वाभ्यां मासस्तु जायते ॥ १२ ॥

मासाभ्यामृतुसंज्ञा स्यादृतुभ्यां कालसंज्ञकः ।
ऋतुत्रयं स्यादयनं द्वाभ्यां संवत्सरो भवेत् ॥ १३ ॥

अष्टादशप्रकारेण कालस्तस्माद्विभज्यते ।
माघादिमासाः क्रमशो भवन्ति शिशिरादयः ॥ १४ ॥

शिशिरश्च वसन्तश्च ग्रीष्मो वर्षा शरद्धिमः ।
ऋतवो दक्षिणं तेषां कथयामि शृणु प्रिये ! ॥ १५ ॥

### हेमन्तर्तुस्वरूपम् ॥

तत्र सूर्यो दिशश्चैव हिमानीकलुषीकृताः ।
धूमधूम्ररजोमन्दो वायुश्शीतप्रबोधनः ॥ १६ ॥

रोमाञ्चकारी कौबेरो लवल्यः पुष्पितास्तदा ।
पुन्नागलोध्रफलिनीपुष्पामोदितषट्पदाः ॥ १७ ॥

गजवाजीगोमहिषीकाकाजाद्याश्च गर्विताः ।
सरित्प्रालेयपटलसञ्छन्नशकुनादयः ॥ १८ ॥

सोष्णबाष्पजलाः कूपाः पश्य हैमन्तिके ऋतौ ।

शिशिरर्तुस्वरूपम् ॥

एवं हि शिशिरे काले चयं याति कफस्ततः ॥ १९ ॥

वसन्तर्तुस्वरूपम् ॥

वसन्ते विमला दिक्कास्सूर्यश्चारुणदीधितः ।
मलयानिलसञ्चारो नवपल्लवशोभिताः ॥ २० ॥

नवीनत्वक्पलाशाढ्या वृक्षास्सर्वत्र पुष्पिताः ।
सहकाशोकवकुलमाधवीचम्पकोद्भवैः ॥ २१ ॥

पलाशकादिमैः पुष्पैः प्रविभाति वनस्थली ।
भ्रमद्भ्रमरनिध्वानकोकिलालापसङ्कुला ॥ २२ ॥

श्लेष्मकोपश्च भवति कालस्सर्वोत्तमो ह्ययम् ।

ग्रीष्मर्तुस्वरूपम् ॥

ग्रीष्मे तीक्ष्णकरश्चण्डोऽतसीकुसुमसन्निभः ॥ २३ ॥

सन्तापितमहीदिक्कश्शोषिताशेषभूरसः ।
दावाग्निनाऽतिज्वलिता दिशो भूमिश्च धूसराः ॥ २४ ॥

नैर्ऋतो वायुरत्युग्रो वात्या चोग्राऽसुखा भवेत् ।
आतपस्वेदपवनैः प्राणिनो ज्वरिता इव ॥ २५ ॥

सन्तप्तक्रोडमहिषमातङ्गैराकुलीकृताः ।
चण्डांशुकिरणोत्तप्तशुष्कस्वल्पजलान्विताः ॥ २६ ॥

कल्लोलितास्तटाकाद्यास्सन्तप्तजलजन्तवः ।
जीर्णशुष्कविशीर्णैश्च पर्णैश्च पतितैर्द्रुमाः ॥ २७ ॥

सोष्माश्छायाविहीनाश्च वायुव्याकुलिता भृशम् ।
शुष्कपत्रलतागुल्माश्शिरीषाः कुसुमोज्ज्वलाः ॥ २८ ॥

श्लेष्मक्षयश्चानुदिनं तस्माद्वायोश्चयो भवेत्।

## वर्षर्तुस्वरूपम्॥

वर्षर्तौ पश्चिमो वायुर्मही नवतृणावृता॥ २९॥

भिन्नैस्तथाऽञ्जनाभैश्च जलदैश्छादिताऽखिला।
शक्रगोपावृता पृथ्वी सर्वसस्यमनोहरा॥ ३०॥

भूलतानिवहच्छन्ना जलक्लिन्ना च पङ्किला।
मत्तकेकिकुलक्रीडानृत्तविस्तीर्णपिञ्छका॥ ३१॥

भेकभीकरनिध्वानबधिरीकृतदिङ्मुखा।
कदम्बकदलीजातिकुटजामोदमेदुरा॥ ३२॥

धाराधराम्बुधाराभिघातनष्टसरोरुहा।
प्रभूतसलिलापूर्णसोपाना दीर्घिका भृशम्॥ ३३॥

पतिसंयोगसदृशमहाकारा महाजलाः।
पूर्णोभयतटान्ताश्च नद्यस्सकलुषोदकाः॥ ३४॥

नभस्स्तनितजीमूतप्रोद्यद्विद्युत्प्रदीपितम्।
अन्योन्याम्बुदसंघट्टजातनिर्घोषभीकरम्॥ ३५॥

इन्द्रचापलसन्मेघच्छादितार्केन्दुमण्डलम्।
वनं हृष्टाजमहिषकिटिचातकसङ्कुलम्॥ ३६॥

श्लेष्मा क्षीणतरो वायोः कोपः पित्तचयस्तदा।

## शरदृतुस्वरूपम्॥

शरदि स्फुरिताभाश्च भानोस्तीक्ष्णा मरीचयः॥ ३७॥

प्रक्षीणवारिविमलवारिदोन्मुक्तमार्गकाः।
ज्योत्स्नामृतरसासिक्तमोदिताखिलजन्तवः॥ ३८॥

स्फुरितोडुकुलाकीर्णा रात्रयश्च मनोहराः ।
विमलाकाशरुचिराः कामलीलोत्सवप्रदाः ॥ ३९ ॥

मही चाश्यानपङ्का च कणिकापूर्णशालिका ।
सदस्यः फुल्लकमलकुमुदोत्पलमण्डिताः ॥ ४० ॥

प्रहृष्टमीनहंसालीलीलालोलतरङ्गिकाः ।
अमलांबुसराकीर्णास्स्नानपानहितप्रदाः ॥ ४१ ॥

दिशः प्रफुल्लरुचिरकाशचामरशोभिताः ।
विमलामोदितक्रौञ्चमल्लिकापरिमण्डिताः ॥ ४२ ॥

ससच्छदरजोयोगद्दसदन्तिकुलं वनम् ।
प्रक्षीयते तदा वायुः पित्तं कुप्यति पार्वति ! ॥ ४३ ॥

**आदानविसर्गकालस्वरूपम् ॥**

दिवानिशादिमध्यान्ते श्लेष्मपित्तसमीरणाः ।
कुप्यन्ति ऋतवस्सर्वे प्रवर्तन्ते क्रमाच्छिवे ! ॥ ४४ ॥

दिनमाग्नेयरूपं स्याद्रात्रिस्सौम्यमयी भवेत् ।
द्वौ च पक्षौ तदा देवि ! ऋतू हेमन्तशैशिरौ ॥ ४५ ॥

तौ ऋतू हिमकालस्स्यादुष्णौ मधुनिदाघकौ ।
प्रावृट्शरदृतू ज्ञेयौ वर्षाकालस्स उच्यते ॥ ४६ ॥

ऋतुभिश्शिशिराद्यैस्तत्त्रिभिस्स्यादुत्तरायणम् ।
तदा ज्ञेयमिति ज्ञेयमादानं तद्भवेत्प्रिये ! ॥ ४७ ॥

सूर्यानिलौ स्वभावेन भूमिसौम्यरसापहौ ।
किन्तु मार्गवशादेतावत्युष्णखररूक्षकौ ॥ ४८ ॥

आददाते बलं तेजः प्राणिनां प्रतिवासरम् ।
तिक्तः कषायकटुकौ प्रबलास्स्युर्यथोत्तरम् ॥ ४९ ॥

प्रावृडाद्यैश्च ऋतुभिस्त्रिभिस्स्याद्दक्षिणायनम् ।
एतत्सोमात्मकं विद्धि विसर्गाख्यमिति स्मृतम् ॥ ५० ॥

प्रकृत्या शीतला वृष्ट्या वायुसोमांबुदाः परम् ।
बलिनस्स्युर्यतस्तस्मात्सूर्यः क्षीणरुचिर्भवेत् ॥ ५१ ॥

गते भूतलतापेऽस्मिन् प्राणिनां प्रतिवासरम् ।
कालो बलं विसृजति प्रबलास्स्युर्यथोत्तरम् ॥ ५२ ॥

अत्राम्ललवणौ स्वादू रसास्स्निग्धा भवन्ति हि ।
हेमन्ते शिशिरे पूर्णं मधौ शरदि मध्यमम् ॥ ५३ ॥

ग्रीष्मे प्रावृषि शीतं स्यात्सर्वेषां प्राणिनां बलम् ।

## हेमन्तर्तुचर्या ॥

रसस्य बलिनश्शीतसंवृतत्वाद्धिमागमे ॥ ५४ ॥

कोष्ठाग्नेश्चाविकीर्णत्वात्पिण्डितो जठरे यतः ।
ततो बलीयान्कोष्ठाग्निस्तस्मिन्स्वल्पाशनो यदि ॥ ५५ ॥

वायुना दीप्यते वह्निः पचेद्धातून्रसादिकान् ।
तस्माद्धिमागमे सेव्यो मधुरो लवणाम्लकः ॥ ५६ ॥

अथ दैर्घ्यान्निशानां तु क्षुधा प्रातस्तरां भवेत् ।
दिनचर्याप्रकारेण विसृजन्मलमूत्रकम् ॥ ५७ ॥

दन्तकाष्ठादिकं सर्वं विदध्यात्परमेश्वरि ! ।
ततो मूर्धार्हवातघ्नतैलेनाभ्यङ्गमाचरेत् ॥ ५८ ॥

गात्राभ्यङ्गं मर्दनं च यावच्छक्यं च यथा सुखम् ।
कुशलैर्बाहुयुद्धं च यावच्छक्यं भजेत्ततः ॥ ५९ ॥

गोधूमचणकैर्मुद्गैर्हृततैलो यथाविधि ।
स्नात्वा कौशेयके रक्ते लघुन्युष्णे सुसान्द्रके ॥ ६० ॥

वाससी परिधायैव कस्तूर्या कुङ्कुमेन च ।
कालागरुद्रवेणैव चर्चां कुर्वीत विग्रहे ॥ ६१ ॥

धूपयेद्देहचिकुरान्कालागरुजधूपतः ।
चम्पकं वकुलं पुष्पं शतपत्रं च कैतकम् ॥ ६२ ॥

जवाद्यैरुपलिप्तानि कृत्वा शिरसि धारयेत् ।
गुडासवं मद्यमण्डं मद्यं मांसं च मेदुरम् ॥ ६३ ॥

स्निग्धं मांसरसं सोष्णं माषगोधूमपिष्टजान् ।
इक्षुक्षीरविकारांश्च सोष्णमन्नं तिलोद्भवम् ॥ ६४ ॥

शौचे सुखोष्णं सलिलं सोष्मलं चारु मन्दिरम् ।
शयनं कौथकश्लक्ष्णमृदुलाजिनकम्बलैः ॥ ६५ ॥

प्रावारैश्शुभकौशेयैः क्रमेणास्तृतमुज्ज्वलम् ।
भजेदवृद्धसूर्यांशून्पृष्ठभागेन शांभवि ! ॥ ६६ ॥

स्वेदं चोपानहं नित्यं हसन्तीतीव्रतापिते ।
गर्भगेहे निवासं च वृत्तपीनोन्नतस्तनीः ॥ ६७ ॥

रथाङ्गवृत्तसुश्रोण्यो रम्भास्तम्भोरुमण्डिताः ।
मद्यपानमदोन्मत्ता वस्त्रस्रग्गन्धशोभिताः ॥ ६८ ॥

प्रियाः प्रीतास्समाश्लिष्येन्न बाधा शीतदोषजा ।
कस्तूरी कुङ्कुमं चन्द्रं लवङ्गं जातिकाफलम् ॥ ६९ ॥

प्रत्येकं निष्कमेकं स्यात्सारः खदिरसम्भवः ।
युञ्ज्यात्षोडशनिष्कं च सर्वं पेष्यं हिमांबुना ॥ ७० ॥

गुलिकां मरिचाकारां कुर्याद्दौर्गन्ध्यनाशिनीम् ।
वातश्लेष्महरा रुच्या गुटिकैषा प्रकीर्तिता ॥ ७१ ॥

गुट्यन्वितं च ताम्बूलं यथेष्टं भक्षयेत्सदा ।
एवं हेमन्तचर्या स्यात्

## शिशिरर्तुचर्या ॥

शिशिरेप्यमुमाचरेत् ॥ ७२ ॥

श्लेष्मा चितस्स्यान्नितरां भजेद्धैमन्तिकं विधिम्।
अतादानभवं रूक्षं भवेच्छीतो महत्तरः ॥ ७३ ॥

## वसन्तर्तुचर्या ॥

शिशिरे तु चितश्श्लेष्मा वसन्तेऽर्कांशुविद्रुतः।
नाशयेज्जाठरं वह्निं स्वयं तोयस्वभावतः ॥ ७४ ॥

जनयेद्रोगमखिलं तस्माच्छीघ्रं कफं जयेत्।
अथ वासन्तिकां चर्यां कथयामि मम प्रिये! ॥ ७५ ॥

तीक्ष्णाञ्जनच्छर्दिनस्यैर्व्यायामोद्वर्तनैरपि।
पादाभ्यां मर्दनेनोष्णवारिस्नानेन तं हरेत् ॥ ७६ ॥

काषायरक्तकौसुम्भकौशेयवसनानि च।
परिधाय सकर्पूरागरुणाऽङ्गानि धूपयेत् ॥ ७७ ॥

कस्तूरीकुङ्कुमहिमैश्चन्दनैर्लेपयेत्तनुम्।
चूतचम्पकपुन्नागपूगकेसरपाटलम् ॥ ७८ ॥

माधवीकेतकीमल्लिकाशोकनवमालिकाः।
जवाद्यैर्लेपिताः कृत्वा वहेत्कल्हारमुत्पलम् ॥ ७९ ॥

मद्यं पञ्चविधं प्रोक्तं सर्वव्याधिहरं परम्।
माधवारिष्टमार्द्वीकासवशीधुरितीरिताः ॥ ८० ॥

क्षौद्रैर्मदकरद्रव्यै रचितो माधवस्स्मृतः।
चिरं मदकरद्रव्यं खनित्वा स्थापितं भुवि ॥ ८१ ॥

अरिष्टोऽयमिति ज्ञेयो मार्द्वीको गोस्तनीभवः।
आसवो मदकृद्द्रव्यसवनाद्वा समुद्भवः ॥ ८२ ॥

शीधुरिक्षुरसाज्जातस्सेव्याः पञ्च मया मताः ।
कामिनीवदनाम्भोजवासिताश्चित्तहारिणः ॥ ८३ ॥

पुष्पादिवासिता हृद्याः कान्तानयनरञ्जिताः ।
पुराणाः कटुकास्तिक्ताः कषायाश्श्लेष्महारिणः ॥ ८४ ॥

मातुलुङ्गाम्रजम्बूनां पत्रपुष्पफलान्विताः ।
सुहृद्भिस्सह जंबीररसार्द्रकपलाण्डुकम् ॥ ८५ ॥

जाङ्गलं पललं शूल्यं तद्रसं च कृतं नवम् ।
पुराणक्षौद्रगोधूमयवषष्टिकशालिकान् ॥ ८६ ॥

भजेत्कफघ्नं शाकं च व्यञ्जनं पानकं तथा ।
अमद्यपस्तु शुण्ठ्यम्बु मुस्ताम्बु क्षौद्रवारि वा ॥ ८७ ॥

खदिरासनसारोत्थक्वथितं वारि वा पिबेत् ।
उद्याने सौधकाचाद्यैर्मणिनीकाशरोचिभिः ॥ ८८ ॥

कुट्टिमैर्मण्डिते चारुमण्डपे सुरतोचिते ।
कोकिलालापरुचिरे सुगन्धिकुसुमोज्ज्वले ॥ ८९ ॥

बहुपादपसच्छायावारितोष्णांशुदीधितौ ।
समन्तात्सलिलापूर्णकुल्याभिश्शीतलीकृते ॥ ९० ॥

मलयानिलसञ्चारशमितश्रमवारिणि ।
नानाप्रसूनसुभगशाखिनीनालनन्दिते ॥ ९१ ॥

लम्बमानसुगन्धस्रङ्मकरन्दाभिषेचिते ।
उशीरपाटलीपंक्तिशोभिते बिसविस्तृते ॥ ९२ ॥

पुष्पैराकीर्णिते मन्दतालवृन्तानिलोज्ज्वले ।
समासीनः प्रियालापचतुराः कामलोलुपाः ॥ ९३ ॥

कन्दर्पदर्पसर्वस्वास्सूक्ष्मस्वच्छांबराः प्रियाः ।
तरुणी रमयन् गोष्ठीः कुर्वंस्ताभिर्मनोहराः ॥ ९४ ॥

सुहृद्भिराप्तैस्सहितो मध्याह्नं गमयेत्सुखी ।
अतिशीतगुरुस्निग्धस्वाद्वम्ललवणानि च ॥ ९५ ॥

तिलेक्षुक्षीरविकृतिदिवास्वप्नातिपिच्छिलम् ।
मत्स्यं क्षारोदकं पूपं श्लेष्मलं वर्जयेन्मधौ ॥ ९६ ॥

## ग्रीष्मर्तुचर्या ॥

ग्रीष्मे ह्यत्यर्थतीक्ष्णस्स्याद्धर्मभानुर्भुवो रसान् ।
स्निग्धान्गुणांश्च क्षपयेत्कफस्तस्मात्क्षयं व्रजेत् ॥ ९७ ॥

तेन वायुश्चितस्स्याच्च पूरितैश्शीतलैर्जलैः ।
चन्दनागरुकस्तूरीकुङ्कुमैश्च सुगन्धिभिः ॥ ९८ ॥

प्रसूनैर्विविधैः फुल्लैर्वासिते मल्लिकादिभिः ।
कामिनीपीनवक्षोजदघ्नांबुनि सुशोधिते ॥ ९९ ॥

ह्रदे वा दीर्घिकायां वा संस्कृतायां यथाविधि ।
आकर्णपूर्णनयनविराजितमुखेन्दुभिः ॥ १०० ॥

मृणालभूषणोद्भासिशिरीषमृदुबाहुभिः ।
कर्पूरमुक्ताकुसुममालामलयजोज्ज्वलैः ॥ १०१ ॥

सूक्ष्मकौसुम्भवसनबद्धमध्यनितम्बिभिः ।
स्वनूपुररवाकृष्टसारसारावरञ्जितैः ॥ १०२ ॥

जलक्रीडातिचतुरैस्संयुक्तः कामिनीजनैः ।
संक्रीडेत करोन्मुक्तवारिसिक्ताङ्गनामुखः ॥ १०३ ॥

द्रुतिशृङ्गमुखोत्सृष्टवारिसेचितविग्रहः ।
ताभिर्भुजान्तरं श्लिष्यन्कुर्वन् लीलां मुहुर्मुहुः ॥१०४॥

उत्तीर्य च वपुर्वस्त्रैरुद्वर्त्य चिकुरान्सुखम् ।
स्वच्छे सूक्ष्मे कषाये च वसने धारयेत्ततः ॥ १०५ ॥

चन्दनागरुकर्पूरैर्धूपयेत्केशविग्रहौ ।
श्रीखण्डचन्द्रकस्तूरीपङ्कचर्चितविग्रहः ॥ १०६ ॥

नेपालमालतीमल्लीपाटलीशतपत्रकाः ।
सौगन्धिकं मरुवकं ह्रीबेरं च मृगाण्डजैः ॥ १०७ ॥

सुगन्धतैलैर्लिप्तानि धारयेत्कुसुमानि च ।
अत्र मद्यं न पेयं स्यादथवा मद्यसात्म्यकैः ॥ १०८ ॥

स्वल्पं पेयं तु तेनैषन्न तृप्तिश्चेत्तदा जलैः ।
स्वादुभिर्बहुभिर्युक्तं पिबेन्मद्यं यथासुखम् ॥ १०९ ॥

तथा नोचेद्भवेद्धातुशोषोऽन्तर्दाहमोहभाक् ।
शिथिलावयवक्षीणप्राणबुद्धिबलः प्रिये ! ॥ ११० ॥

मधुरं शीतलं स्निग्धं द्रवं लघु हितं भजेत् ।
सद्यस्सशर्करं लिह्याच्छालेयं जाङ्गलं पलम् ॥ १११ ॥

अमेदुरं मांसरसं रसालां पानकं पिबेत् ।
पञ्चसारं च रागं च षाडवं चाऽथवा हितम् ॥ ११२ ॥

[रसालापानके ।]

शर्करामरिचोपेतं दधि हस्तविलोडितम् ।
एतद्रसाला विख्याता रम्भापनसचूतजैः ॥ ११३ ॥

फलैस्सशर्कराम्भोभिभिर्नवमृत्पात्रगं कृतम् ।
ईषदम्लमिति ख्यातं पानकं तद्धितङ्करम् ॥ ११४ ॥

[पञ्चसारः ।]

मृद्वीकाराजखर्जूरमधूककुसुमानि च ।
श्रीपर्णीक्षुद्रखर्जूरीपरिपक्वफलानि च ॥ ११५ ॥

सशर्कराम्बु निक्षिप्य दृढं हस्तेन पेषयेत्।
संस्थाप्य नवमृद्भाण्डे ह्यन्येद्युर्वस्त्रशोधितम् ॥ ११६ ॥
पञ्चसार इति ख्यातो हृद्यो वातकफापहः।

[रागषाडवौ।]

सिताक्षौद्रादिमधुरद्रव्ययुक्तं फलं च यत् ॥ ११७ ॥
स्वच्छं राग इति ज्ञेयस्सर्वसन्तापनाशनः।
अयमेव तु सान्द्रश्चेल्लेह्यं षाडव ईरितः ॥ ११८ ॥
स च वस्त्रेण संशुद्धः पेयषाडव उच्यते।
एतत्पञ्चविधं पानं पाटलीचम्पकादिभिः ॥ ११९ ॥
एलया वासितं शुद्धं मृद्भाण्डे स्थापिते नवे।
उशीरतालवृन्तस्य वायुना शीतलीकृतम् ॥ १२० ॥
मोचचोचदलोपेतमेषा सामान्यसंस्कृतिः।
अथ नूतनभाण्डान्तः पूरितं स्वादु निर्मलम् ॥ १२१ ॥
पाटलीकेतकीपुष्पकर्पूरसुरभीकृतम्।
सान्द्रांबरेण संवीतं तालवृन्तैस्सुशीतलम् ॥ १२२ ॥
पिबेज्जलं तालसालपूगखर्जूरपादपैः।
नालिकेराम्रपनसजम्बूपुन्नागचम्पकैः ॥ १२३ ॥
करप्रचेयव्यालम्बिफलपुष्पकगुच्छकैः।
द्राक्षास्तबकसञ्छन्नशाखान्तरितराजितैः ॥ १२४ ॥
माधवीस्तबकालीनभृङ्गगीताभिनन्दितैः।
नानासुगन्धितरुभिर्वार्यमाणार्कदीधितौ ॥ १२५ ॥
हंससारसकारण्डशोभमानसरोवरे।
परितः प्रवहत्कुल्यातरङ्गानिलशीतले ॥ १२६ ॥

नृत्यत्केकिकलाकीर्णकोकिलालापशोभिते ।
शारिकाशुकसंल्लापमुह्यन्मानवतीजने ॥ १२७ ॥

उद्याने वालकोशीरवृतौ सलिलसेचिते ।
मृणालपद्मकल्हारोत्पलपल्लवनिर्मिते ॥ १२८ ॥

सुगन्धिपुष्पमालाभिर्लम्बमाने सुशीतले ।
आर्द्राम्बरैश्च रचितच्छायानवपटालिके ॥ १२९ ॥

माधवीमण्डपे रम्ये सर्वसन्तापहारिणि ।
कदलीमृणालकुसुमपल्लवैः परिकल्पिताम् ॥ १३० ॥

चारूत्तमच्छदपटां हिमांबुपरिषेचिताम् ।
शय्यामत्यन्तमृदुलां सन्तापश्रमहारिणीम् ॥ १३१ ॥

तुषारशीतलतरैश्चर्मवस्त्राभिपूरितैः ।
सूक्ष्मैर्जललवैस्सिक्तस्सवयोभिस्समन्वितः ॥ १३२ ॥

मध्याह्नं गमयेदेवं तथा धारागृहेऽथवा ।
दीव्यन्पुस्तमयीकान्तास्तनहस्तमुखच्युतैः ॥ १३३ ॥

वालोशीराम्बुभिश्शीते स्वच्छस्फटिकपट्टके ।
कर्पूरचन्दनालिप्ते लुठंस्तापप्रशान्तये ॥ १३४ ॥

प्रत्यग्रस्नानशीताङ्ग्यो मुक्ताभरणभूषिताः ।
मृणालचन्दनालेपा मृणालवलयान्विताः ॥ १३५ ॥

स्वच्छाम्बराऽतिरुचिराः प्रमदास्तापहारिणीः ।
चुम्बनालिङ्गनस्पर्शैस्तोषयन्परिहासयन् ॥ १३६ ॥

पुष्पमालाविरचितवितानपरिशोभिते ।
शीतांशुकिरणस्पर्शद्रवच्चन्द्रोपलोज्ज्वले ॥ १३७ ॥

चन्द्रिकाकान्तिलसिते मन्दानिलविराजिते ।
सौधस्थले समासीनश्शशाङ्ककिरणाह्वयान् ॥ १३८ ॥

भक्षानश्नीत तारेन्दुकिरणैश्शीतलीकृतम् ।
सशर्करं पिबेत्क्षीरं माहिषं बलकृद्धितम् ॥ १३९ ॥

निदाघहं शरीरस्य मालाचन्दनधारिणः ।
स्वच्छांशुकावृताङ्गस्य समाप्तरतिकर्मणः ॥ १४० ॥

जलार्द्रांशुकवातेन तालवृन्तानिलेन च ।
विस्तारिताब्जपत्रस्य वीजनैश्चाम्बुवर्षिभिः ॥ १४१ ॥

मयूरतालवृन्तैश्च तथा च हरिचन्दनैः ।
कर्पूरमल्लिकामुक्तामालाभिर्मधुरैः प्रिये ! ॥ १४२ ॥

शारिकाशुकबालानामालापैर्बिसभूषणैः ।
फुल्लकल्हारकमलनीलोत्पलविराजितैः ॥ १४३ ॥

कर्पूरचन्दनालेपैः कान्तैश्च प्रमदाजनैः ।
तापस्संह्रियते चास्य चादानोष्णाभितापिनः ॥ १४४ ॥

सक्तुकट्वम्ललवणरूक्षायासातपांस्त्यजेत् ।

## वर्षर्तुचर्या ॥

अथातो वार्षिकीं चर्यां शृणु वक्ष्यामि भैरवि ! ॥१४५॥*

आदानक्षीणधातूनां नराणां जठरानलः ।
क्षीणोऽपि वर्षासमये दोषैस्सीदति सत्वरम् ॥ १४६ ॥

सवारिवारिदव्राततिरोहितदिवाकरे ।
व्योम्नि झंझासमीरेण शीतलेन तुषारिणा ॥ १४७ ॥

वातस्स्यात्कुपितोऽत्यन्तं प्रतप्ताया निदाघतः ।
भूमेर्मेघादिसिक्ताया बाष्पैः कालस्वभावतः ॥ १४८ ॥

अम्लपाकैश्च लूतादिमलिनैस्सलिलैस्तथा ।
पित्तं कुप्यति चात्यर्थं दुर्दिनत्वाच्च जाठरः ॥ १४९ ॥

वह्निस्सीदति तेनैव श्लेष्मा कुप्यति दुस्तरः ।
एवमन्योन्यदुष्टास्स्युर्दोषास्साधारणं ततः ॥ १५० ॥
मर्दनं च शिरोऽभ्यङ्गं तैलैर्नारायणैर्भजेत् ।
उष्णोदकैश्च बहुभिस्स्नात्वा सम्मार्जयेत्तनुम् ॥ १५१ ॥
रक्तं चाप्यथवा शुक्लं माञ्जिष्ठं वाऽथ धारयेत् ।
सान्द्रेणागरुधूपेन शरीरं धूपयेच्छिवे ! ॥ १५२ ॥
कस्तूरीं कुङ्कुमं चारु भजेत्कालागरुद्रवम् ।
कुटजं केतकीं जातिं मरुवं करवीरकम् ॥ १५३ ॥
स्निग्धजाङ्गलमांसानि संस्कृतांस्तद्रसानपि ।
मुद्गाढककुलुत्थानां पिबेद्यूषं च संस्कृतम् ॥ १५४ ॥
अरिष्टाख्यं च मैरेयं पुराणमथवा पिबेत् ।
सौवर्चलयुतं मस्तु पञ्चकोलरजोयुतम् ॥ १५५ ॥
भजेदुष्णकरं सर्वं शुद्धकोष्ठो भवेन्नरः ।
कुर्यात्कषायबस्तिं च जीर्णधान्याशनं भजेत् ॥ १५६ ॥
दिव्यं वा कौपमुदकं शृतं पेयं सुखावहम् ।
अत्यन्तवातवर्षेऽह्नि प्रायेण लवणाम्लकम् ॥ १५७ ॥
मधुरं लघु सक्षौद्रं शुष्कनिस्तालितानि च ।
व्यञ्जनानि च तैलं च वटकान्पर्पटान्भजेत् ॥ १५८ ॥
यथासुखं च ताम्बूलं कस्तूरीफलसंयुतम् ।
नेतेवनी(?)स्यादगरुधूपितांबरमावहेत् ॥ १५९ ॥
सुगन्धावयवस्तिष्ठेत्सौधे भूबाष्पवर्जिते ।
तुषारशीतरहिते सुरम्येऽगरुधूपिते ॥ १६० ॥
दिवासुप्तिं नदीतोयं सक्तुं जलघृताप्लुतम् ।
व्यायाममर्ककिरणान्संगमात्यन्तिकं त्यजेत् ॥ १६१ ॥

## शरदृतुचर्या ॥

अथातश्शारदीं चर्यां वक्ष्यामि शृणु वाङ्मयि! ।
वर्षर्तौ शीतवृष्टिभ्यां सहसैव रवेः करैः ॥ १६२ ॥

तप्ताङ्गानां नृणां पित्तं चितं वृष्टौ तु शारदे ।
सुतरां कुप्यति तदा तस्मात्पित्तापनुत्तये ॥ १६३ ॥

पित्तघ्नतैलेनाभ्यङ्गं मर्दनं मृदु कल्पयेत् ।
सुखोष्णवारिणा स्नानं शुक्लकाषायमम्बरम् ॥ १६४ ॥

धृत्वा चागरुकर्पूरधूमेनाङ्गानि लेपयेत् ।
भद्रश्रीहिमलिप्ताङ्गः केतकीमल्लकानि च ॥ १६५ ॥

चम्पकाम्बुजपत्राणि वहेन्मृगमदान्वितम् ।
विरेचनं शिरामोक्षं तिक्ताज्यास्वादनं भजेत् ॥ १६६ ॥

शालिगोधूममुद्गं च पटोलक्षौद्रशर्कराः ।
जाङ्गलं पिशितं तिक्तं कषायं मधुरान्भजेत् ॥ १६७ ॥

बुभुक्षितस्तु लघ्वन्नं धात्रीं शीधुं घृतं पयः ।
पानकं यावसं चेक्षुनालिकेरोदकं नवम् ॥ १६८ ॥

अगस्त्योदयसंशुद्धनिर्विषं लघु शीतलम् ।
अर्केन्दुकिरणोत्तप्तशीतं हंसोदकं पिबेत् ॥ १६९ ॥

मौद्गयूषं प्रदोषे तु हिमचन्दनचर्चितः ।
सुगन्धमालानिर्धौतवसनालङ्कृतस्सुखी ॥ १७० ॥

मुक्तामालापरिष्कारस्सुगन्धोशीरलेपितः ।
रम्यारामापरिवृते हर्म्ये ज्योत्स्नातिसुन्दरे ॥ १७१ ॥

समासीनश्चन्द्रपादान् सेवेत तरुणीयुतः ।
स्वादन्स्वादंश्चेक्षुदण्डान्पित्तघ्नमदिरामपि ॥ १७२ ॥

पार्यं पार्यं सुखं तिष्ठन्क्रीडयन्कामिनीजनम् ।
यवक्षारादिकान्क्षारान्हिममातृप्ति भोजनम् ॥ १७३ ॥

तिलतैलं रविकरान्दिवा निद्रां वसां दधि ।
तीक्ष्णं मद्यं त्यजेद्वस्तु प्राचीवायुं च पित्तकृत् ॥१७४॥

## सर्वर्तुसाधारणी चर्या ॥

अथ साधारणी चर्या संक्षेपाद्वक्ष्यते शिवे ! ।
स्वाद्वम्ललवणान्प्रायो हिमवर्षागमे भजेत् ॥ १७५ ॥

तिक्तोषणकषायांश्च वसन्ते नितरां भजेत् ।
निदाघे मधुरप्रायं भजेद्वर्षात्यये पुनः ॥ १७६ ॥

तिक्तस्वादुकषायांश्च वर्षर्तौ च भजेत्क्रमात् ।
मधौ रूक्षोष्णमश्नीयाद्ग्रीष्मे स्निग्धं च शीतलम् ॥

प्रावृट्शिशिरहेमन्ते स्निग्धं चोष्णतरं भजेत् ।
मेघात्यये रूक्षशीतं विधिनानेन सेवयेत् ॥ १७८ ॥

तत्तदृतूक्तानधिकान्रसान्सेवेत चान्वहम् ।
अन्यानपि रसान्सर्वानल्पमात्रं यथारुचि ॥ १७९ ॥

एकस्यान्त्यं च सप्ताहमन्यस्य दिनसप्तकम् ।
एवं चतुर्दशदिनमृतुसन्धिरिति स्मृतः ॥ १८० ॥

वर्तमानामृतोश्चर्यां मन्दं मन्दं समुत्सृजेत् ।
आगामिन ऋतोश्चर्यामृतुसन्धौ भजेत्क्रमात् ॥१८१॥

सात्म्यद्रव्यविसर्गाच्च ह्यसात्म्यद्रव्यसेवनात् ।
रोगा भवन्ति तस्मात्तच्छीलत्यागौ शनैर्व्रजेत् ॥ १८२ ॥

ऋतुचर्यामिति भजन्नायुरारोग्यमाप्नुयात् ।

**अन्नपाकक्रमो धातुमलाद्युत्पत्तिक्रमश्च ॥**

अन्नपाकक्रमं वक्ष्ये समासेन सुरार्चिते ! ॥ १८३ ॥

भुक्तमन्नं च सकलं कोष्ठकं प्राणवायुना ।
आहृतं तद्द्रवैर्भिन्नसंघातं मार्दवं पुनः ॥ १८४ ॥

स्नेहेन नीतं कोष्ठाग्निरामाशयगतं पचेत् ।
समानवायुनोद्दीप्तो जाठरस्तु यथा बहिः ॥ १८५ ॥

स्थालीस्थं तण्डुलं तोयं पचेदन्नं च पावकः ।
भुक्तमात्रेण तत्सर्वं षड्रसं मधुरायते ॥ १८६ ॥

पच्यमानं कफोत्पाद्यैः फेनस्स्यान्मधुरादिभिः ।
फेनस्तु कफतत्त्वं यात्यम्लतां च विदाहतः ॥ १८७ ॥

आमाशयाच्च्युतं तच्च पित्तं भवति निर्मलम् ।
पक्वाशयमनुप्राप्तमग्निना परिशोषितम् ॥ १८८ ॥

पिण्डितं परिपक्वं स्यान्महतः पाकतः कटुः ।
पार्थिवश्चाप्य आग्नेयो वायव्यश्चेति नाभसः ॥१८९॥

पञ्चोष्माणः पार्थिवादीनन्नाननु पचन्ति च ।
पञ्चाहारगुणान्पक्वांस्तथा भूतगुणानपि ॥ १९० ॥

पृथक् पृथक् यथास्वं च पुष्णन्त्येते यथासुखम् ।
भौमो भौमांस्तथैवान्यानन्ये देहगतान्क्रमात् ॥१९१॥

पक्वं तदन्नं द्विविधं किट्टसारप्रभेदतः ।
किट्टं तु द्विविधं चाच्छं मूत्रं सान्द्रं शकृद्भवेत् ॥

पुनस्सारं पचन्त्येव यथास्वं सप्त वह्नयः ।
धातुगास्तु ततो देवि ! रसाद्रक्तं भवेत्ततः ॥ १९३ ॥

मांसं मांसाद्भवेन्मेदस्तस्मादस्थि प्रजायते ।
अस्थ्नो मज्जा ततश्शुक्रं शुक्राद्गर्भो भवेत्प्रिये ॥१९४॥

प्रसादशेषजान्वक्ष्ये रसात्स्तन्यमसृक्ततः ।
सिराश्च कण्डरा मांसात्षट् त्वचश्च वसा भवेत् ॥१९५॥

मेदसस्स्नायुसन्धी च शेषं नश्यत्यतः परम् ।
रसस्य किट्टं श्लेष्मा स्यादसृजः पित्तमेव च ॥१९६॥

मांसस्य किट्टं खमला मेदसो घर्मवारि च ।
अस्थ्नो रोमाणि केशास्स्युर्मज्जायास्त्वक्षिविट्त्वचाम् ॥

स्नेहश्शुक्रस्य चौजस्स्यात्क्रमाद्धातुमलास्स्मृताः ।
किट्टं प्रसादो भवति धातूनां परिपाकतः ॥ १९८ ॥

इतरेतरसंस्तम्भा धातुस्नेहपरम्परा ।
आहारात्साधु जीर्णाद्यो जातस्सारो रसो हि सः ॥

तस्माद्रसस्तु धातूनां रक्तादीनां च वर्धनः ।
नराणां धातवस्सप्त सन्ति स्त्रीणां यथा तथा ॥२००॥

पुंसां शुक्लं च शिरसि नारीणां हृष्टमानसे ।
पतिसङ्गे तु तच्छुक्लं स्रवन्ति स्मरमन्दिरे ॥ २०१ ॥

तच्चाम्बुसदृशं स्वच्छं सौम्यं गर्भाय नो भवेत् ।
भुक्तमन्नं दिवारात्रं शुक्रवृद्धिं करोति तत् ॥ २०२ ॥

सप्ताहादच्छशुक्लं स्यान्मासाद्गर्भक्षमं हि तत् ।
एवं पाकक्रमेणैव भवेत्षाण्मातुरांबिके ! ॥ २०३ ॥

वृष्यौषधप्रभावेण सद्यश्शुक्रादि जायते ।
चङ्क्रमद्भोज्यधातूनां परिवृत्तिस्सदा भवेत् ॥२०४॥

## पाचकाग्निस्वरूपम् ॥

जाठरो भौतिकश्चैव धातवीयोऽग्नयस्स्मृताः ।
एतेषु जाठरश्श्रेष्ठो येनान्नं परिपच्यते ॥ २०५ ॥

स एव मूलं सर्वेषामग्नीनां तत्क्षये क्षयः।
तद्वृद्धौ च भवेद्वृद्धिस्तन्मूलं जीवितं बलम् ॥२०६॥

देवि! तस्माद्धितैस्सात्म्यैरन्नपानाख्यदारुभिः।
पालयेत्तं प्रयत्नेन तदायत्ता ह्यरोगता ॥ २०७ ॥

चतुर्विधस्स एवाग्निस्तीक्ष्णो मन्दस्समोऽसमः!
पित्ताभिमूर्च्छिते वायौ समाने तीक्ष्णपावकः ॥२०८॥

असम्यग्बहु वा भुक्तं पचेच्छीघ्रं तु पित्तजान्।
रोगान्कुर्यात्तु मन्दाग्निस्समाने कफपीडिते ॥ २०९ ॥

सम्यग्भुक्तं मितं वाऽपि हितं चान्नं चिरात्पचेत्।
वक्त्रशोषाध्मानताश्च गौरवं चान्त्रकूजनम् ॥ २१० ॥

आटोपमसकृत्कुर्याच्छ्लेष्मजानामयानपि।
स्वस्थानस्थे समाने तु समोऽग्निरभिधीयते ॥ २११ ॥

सम्यग्भुक्तं पचेत्काले त्वारोग्यफलदो भवेत्।
असमोऽग्निरमार्गस्थे समाने स्यात्सुभोजनम् ॥२१२॥

चिरात्पचेत्तु दुर्भुक्तमचिराद्वातजान्गदान्।
कुर्यात्तस्मादप्रमत्तस्समाग्निं रक्षयेत्प्रिये! ॥ २१३ ॥

यामद्वये पचेत्तीक्ष्णष्षड्यामान्मन्दपावकः।
कृच्छ्रादन्नं समाग्निस्तु चतुर्यामात्पचेत्सुखम् ॥२१४॥

असमाग्निः कदाचित्तु शीघ्रं वा मन्दमेव वा।
नाभिस्थाने स्थितो वह्निस्सर्वेषां प्राणिनामपि ॥२१५॥

गजोष्ट्रतुरगादीनां वह्निरङ्गुष्ठमात्रकः।
पशुमत्स्यमृगाणां च यवमात्रानलो भवेत् ॥ २१६ ॥

गृध्रोलूकबकादीनां जाठराग्निस्तिलोन्मितः।
कृमिकीटादिजन्तूनां केशमात्रो हुताशनः ॥ २१७ ॥

स्तोता स्तुत्यस्स्तुतिस्त्वं हि कर्ता कार्यं च कारकः ।
सर्वोऽपि हि त्वमेवासि प्रसीद परमेश्वर ! ॥ ८ ॥

त्वन्मायया जगत्सर्वं सृष्टं त्रातं हृतं तथा ।
त्वं भूस्त्वमापस्त्वं वह्निस्त्वं वायुस्त्वं नभश्शशी ॥ ९ ॥

रविस्त्वं परमात्मा त्वं गुणास्त्वं प्रकृतिस्तथा ।
पुरुषस्त्वं मनस्त्वं च बुद्धिश्चित्तमहंकृतिः ॥ १० ॥

रसायनं च सकलमाख्यातुं च सविस्तरम् ।
आज्ञापयाहं यदि ते हृद्या प्राणप्रिया विभो ! ॥ ११ ॥

जीवन्मुक्तिः कथं नाथ ! योगरूपं च कीदृशम् ।
अनुगृह्णीष्व देवेश ! सुखोपायं भवापहम् ॥ १२ ॥

श्रुत्वा स्तुतिं स्मितमुखो भैरवः परया मुदा ।
उवाच देवीं कल्याणीं पर्वताधिपनन्दिनीम् ॥ १३ ॥

श्रीभैरवः—

साधु साधु महामाये ! सर्वं वेत्सि सनातने ! ।
तथाऽपि पृच्छसीशानि ! लोकानां हितकाम्यया ॥१४॥

प्रवक्ष्यामि समासेन सावधानं शृणु प्रिये ! ।
त्वत्तोऽन्या वल्लभा का मे रहस्यार्थविभाषणे ॥ १५ ॥

### जीवन्मुक्तलक्षणम् ॥

शृणु वक्ष्यामि देवेशि ! जीवन्मुक्तस्य लक्षणम् ।
कामं क्रोधं भयं लोभं मदं मोहं च मत्सरम् ॥ १६ ॥

मानं लज्जां कुलं शीलं कुत्सां दम्भं च वञ्चनाम् ।
अविद्यां जडतां गर्वं शीतमुष्णं तथाऽऽतपम् ॥ १७ ॥

वातं सुखं च दुःखं च पापं पुण्यं हिताहितम् ।
तापत्रयं पुत्रमित्रकलत्रादीनि यस्त्यजेत् ॥ १८ ॥

न सक्तस्सर्वविषये तत्वचिन्तापरायणः ।
पद्मपत्रमिवाम्भोभिर्निर्लिप्तहृदयो भवेत् ॥ १९ ॥

मैत्रीकृता(पा)तटोपेक्षामदैतैर्मण्डिताशयः ।
ऐहिकामुष्मिकसुखप्राप्तिकार्याविरक्तधीः ॥ २० ॥

नित्यानित्यविवेकज्ञो ह्यन्तःकरणनिग्रहः ।
जरामरणहीनश्च शिवसामरसात्मवान् ॥ २१ ॥

जीवन्मुक्तस्स विज्ञेयस्तीर्णसंसारसागरः ।
देवदैत्यादिभिर्वन्द्यस्स सेव्यस्स गुरुश्शिवः ॥ २२ ॥

यथाऽहं सर्वलोकेषु पूजनीयो महेश्वरि ! ।
तथाऽसौ सर्वलोकेषु सर्वैस्संपूज्यते सदा ॥ २३ ॥

देहान्तेषु तु मुक्तिर्या प्राणिनां साऽप्रयोजना ।
देहान्ते देहिनस्सर्वे मुक्तिं यान्ति न संशयः ॥ २४ ॥

भगसन्द्रावणान्मुक्तिर्भवेच्चेद्गर्दभादयः ।
पक्षिगो वृषभा मेषाः किं मुक्तास्त्रिपुराम्बिके ! ॥२५॥

रेतोविण्मूत्रसेवायां यदि मुक्तिर्भवेत्प्रिये ! ।
कपिश्च सूकराद्याश्च कथं मुक्ता भवन्ति ते ॥ २६ ॥

न केवलामरत्वाच्च न शिवत्वाद्भवेत्तथा ।
तद्द्वयोर्मेलनाच्च स्याज्जीवन्मुक्तिरियं स्मृता ॥ २७ ॥

सर्वस्मिन्समये शास्त्रे मुक्तिरस्त्यन्तकालजा ।
न दृश्यते करान्तस्थमणिवत्सा च शाम्भवि ! ॥ २८ ॥

अतिगोप्यमवाच्यं यद्देवानामपि दुर्लभम् ।
कथयिष्यामि देवेशि ! देहस्थैर्यं सदातनम् ॥ २९ ॥

## जीवन्मुक्तिसाधकशरीरस्थैर्यसंपादनोपायः॥

### योगसिद्धिः॥

शिवत्वं खेचरत्वं च सर्वसिद्धिप्रदं शुभम्।
देहं विना न किञ्चित्स्याद्देहोऽयं सर्वसाधनम्॥ ३०॥

तस्माद्देहं प्रयत्नेन रक्षयेत्सर्वतस्सदा।
देहपाते धर्मनाशो धर्मनाशे क्रियाच्युतिः॥ ३१॥

क्रियाच्युतौ कुतो योगो योगभ्रंशे न चिद्भवेत्।
चिदभावे कुतो मोक्षो मोक्षे भ्रष्टे न किञ्चन॥ ३२॥

अन्योपायशतेनापि न देहो धार्यते सदा।
पारदः पवनश्च स्यात्सर्वसिद्धिद उत्तमः॥ ३३॥

सम्मूर्च्छितौ मृतौ बद्धावुभौ पवनपारदौ।
क्रमाद्रोगहरौ नित्यं मृत्युघ्नौ खेचरप्रदौ॥ ३४॥

रसः पूर्वं मया ख्यातोऽधुना वायुः प्रशस्यते।
वायोस्सन्धारणाज्ज्ञानं ज्ञानान्मोक्षः प्रजायते॥ ३५॥

सर्वेषां देहमूलं स्यात्तत्स्थैर्ये पवनः प्रभुः।
परस्मादक्षरात्तस्मादाकाशं समभूत्ततः॥ ३६॥

वायुस्तस्माच्च दहनस्तस्मादापस्ततो मही।
एतेषां पञ्चभूतानामक्षरं कारणं परम्॥ ३७॥

व्योम शब्दात्मकं वायुश्शब्दस्पर्शात्मको भवेत्।
वह्निश्शब्दस्पर्शरूपमयस्सलिलमुच्यते॥ ३८॥

शब्दरूपस्पर्शरसात्मकं भूमिर्विशेषतः।
शब्दरूपरसस्पर्शगन्धरूपा भवेत्प्रिये!॥ ३९॥

भूवार्य्वग्न्यनिलाकाशाधिष्ठात्र्यश्चैव देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च महेश्वरसदाशिवौ॥ ४०॥

भूमिर्नष्टाम्बुसंमग्ना ताश्च ग्रस्ता महाग्निना ।
स च चण्डसमीरेण शमितस्सोऽपि पार्वति ! ॥ ४१ ॥

व्योम्नि लीनः क्रमात्तस्मादाकाशादुद्भवन्ति ते ।
अन्तर्बहिस्स्थितं व्याप्तं निराधारं निराश्रयम् ॥ ४२ ॥

आकाशं चेतसा ध्यायन्प्रच्छिन्द्याद्भवबन्धनम् ।
जगत्प्राणमयं वायुं चिदानन्दप्रदं जलम् ॥ ४३ ॥

निश्चलीकुरुते युक्त्या वायुवत्स्यात्स खेचरः ।
अनन्तार्काग्निसन्दीप्तं दहन्तं जगतां त्रयम् ॥ ४४ ॥

तेजो ध्यात्वा स्वहृदये नाग्निना स तु बाध्यते ।
सुधातरङ्गनिकरप्लाव्यमानमहीतलम् ॥ ४५ ॥

अप्तत्वं भावयन्स्वान्ते वारि तं न हि बाधते ।
अभूतलचराक्रान्तं भूतलं भूतसंप्लवम् ॥ ४६ ॥

हृदये भावयन्नित्यं तस्य नो पार्थिवं भयम् ।
यद्यद्भावयते चित्ते तत्तद्रूपमवाप्नुयात् ॥ ४७ ॥

यथाग्नित्वं व्रजेत्काष्ठः कीटो भ्रमरतां यथा ।

**योगाङ्गानि ॥**

आसनं प्राणनियमः प्रत्याहारश्च धारणा ॥ ४८ ॥

ध्यानं समाधिष्षोढा स्युर्योगाङ्गानि क्रमेण च ।

**१. आसनविधिः ॥**

चतुरशीतिलक्षाणि ह्यासनानि भवन्ति हि ॥ ४९ ॥

तेषु मुख्यासने द्वे च सिद्धपद्मासने स्मृते ।

**[सिद्धासनम् ।]**

स्वयोनिं पादमूलेन चैकेन घटयेद्दृढम् ॥ ५० ॥

अन्यच्चरणमूलं च मेहनोपरि विन्यसेत् ।
अवक्राङ्गस्समासीनो वशीभूतेन्द्रियः प्रिये ! ॥ ५१ ॥

निश्चलाक्षो भ्रुवोर्मध्यं पश्यन्निश्चलमानसः ।
सिद्धासनमिदं ज्ञेयं मुक्तिमार्गप्रदायकम् ॥ ५२ ॥

[पद्मासनम् ।]

दक्षिणोरौ पदं वामं वामोरौ दक्षिणं पदम् ।
विन्यस्य करयुग्मेन पृष्ठभागगतेन च ॥ ५३ ॥

विपरीतेन चाङ्गुष्ठं वामं वामकरेण च ।
दक्षिणं दक्षिणेनैव दृढं धृत्वा निजोरसि ॥ ५४ ॥

विन्यस्य चुबुकं ध्यायेन्नासाग्रं संयतेन्द्रियः ।
एतत्पद्मासनं ख्यातं सर्वरोगनिबर्हणम् ॥ ५५ ॥

२. प्राणायामः ॥

[अजपामुद्रा ।]

आधारं तु गुदस्थाने चतुर्दलसरोरुहम् ।
वादिसान्ताक्षरोपेतं बालारुणसमप्रभम् ॥ ५६ ॥

स्वाधिष्ठानं षड्दलाब्जं बादिलान्ताक्षरान्वितम् ।
विद्युत्प्रभं ततो देवि ! रत्नाभं मणिपूरकम् ॥ ५७ ॥

डादिफान्तार्णसंयुक्तं नाभौ दलशतात्मकम् ।
अनाहतं सुवर्णाभं द्वादशच्छदपङ्कजम् ॥ ५८ ॥

हृदये कादिठान्तार्णं विशुद्धिस्तु प्रशस्यते ।
षोडशारं महापद्मं षोडशस्वरभूषितम् ॥ ५९ ॥

आज्ञाचक्रं द्वयदलं पद्महस्तविराजितम् ।
श्वेतमेवं क्रमाद्देवि ! षट्चक्रं समुदाहृतम् ॥ ६० ॥

नाभेरधस्तान्मेढ्रस्योपरिष्टात्कन्द उच्यते ।
विहङ्गमाण्डसङ्काशस्तत्र नाडीसमुद्भवः ॥ ६१ ॥

सप्ततिद्विसहस्रास्स्युस्तासु मुख्या दश स्मृताः ।
इडा च प्रथमा नाडी पिङ्गला च द्वितीयका ॥ ६२ ॥

सुषुम्ना च तृतीया स्याद्गान्धारी च चतुर्थिका ।
पञ्चमी हस्तिजिह्वा स्यात्षष्ठी पूषा तरस्विनी ॥ ६३ ॥

सप्तम्यलम्बुषा नाडी चाष्टमी च कुहूस्स्मृता ।
नवमी शंखिनी चैव दशमी च क्रमेण हि ॥ ६४ ॥

एतास्तु प्राणवाहिन्यो वायवस्तु जपास्स्मृताः ।
प्राणापानौ तथा व्यानोदानौ चैव समानकः ॥ ६५ ॥

नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।
सर्वेषु नाडीचक्रेषु वर्तन्ते दश वायवः ॥ ६६ ॥

वामदक्षिणमार्गाभ्यामध ऊर्ध्वं च चञ्चलाः ।
प्राणापानवशो जीवः प्रधावति न दृश्यते ॥ ६७ ॥

हस्ताभ्यामाहतो भूमौ कन्दुको न स्थिरो यथा ।
प्राणापानपरिक्षिप्तस्तथा जीवोऽपि न स्थिरः ॥ ६८ ॥

प्राणापानसमाकर्षे तथा प्राणमपानतः ।
बहिर्गच्छद्धकारेण सकारेणान्तराविशेत् ॥ ६९ ॥

हंसस्सोहं मनुममुं सदा जीवो जपेत्प्रिये ! ।
एकविंशत्सहस्रं च षट्शताधिकमीश्वरि ! ॥ ७० ॥

हंसमन्त्रस्य संख्या स्यादहोरात्रेण सर्वदा ।
हंसाख्योऽयं महामन्त्रो ह्यजपेति प्रकीर्तितः ॥ ७१ ॥

जपाख्येयं च गायत्री यमिकैवल्यदायिनी ।
एतत्समं तपो ज्ञानं जपः पुण्यं न किंचन ॥ ७२ ॥

अनुच्चार्या ह्यवर्णा च कुण्डलिन्यास्समुद्भवा।
प्राणसञ्चारिणी ह्येषा ज्ञातव्या योगिभिस्सदा ॥ ७३ ॥

माता कुण्डलिनी शक्तिः कन्दादूर्ध्वं प्रतिष्ठिता।
अष्टधा परिवृत्ता च प्रसुप्तभुजगाकृतिः ॥ ७४ ॥

ब्रह्मद्वारमुखं सा तु स्वमुखेन पिधाय च।
तां च प्रबोधयेदादौ वह्नियोगेन पार्वति! ॥ ७५ ॥

वायुना मनसा सार्धं मध्यनाड्या व्रजेच्छिवे!।
हठादाकुञ्चनाद्ब्रह्मद्वारमुद्घाटयेत्तु सा ॥ ७६ ॥

यथा नयेद्गुणं सूची तद्वद्ब्रह्मबिलं तु सा।
सुखं पद्मासनासीनः पाणी चोत्तानितौ प्रिये! ॥ ७७

अङ्कमध्ये निधायैव चुबुकं वक्षसि न्यसेत्।
दृढं गुदमुखं गाढमाकुञ्च्यापानरन्ध्रकम् ॥ ७८ ॥

मुहुर्मुहुर्वायुमूर्ध्वं चालयेत्त्वरितं प्रिये!।
प्राणं मुञ्चन्कुण्डलिन्याः प्रभावान्मोक्षवर्त्मजम् ॥ ७९ ॥

उपैति सत्प्रबोधं च देवानामपि दुर्लभम्।
तदोद्भूतैश्श्रमजलैस्स्वाङ्गानि परिमार्जयेत् ॥ ८० ॥

क्षीराहारी मितान्नाशी कट्वम्ललवणं त्यजेत्।
जितेन्द्रियो ब्रह्मचारी कुटीस्थः कर्मवर्जितः ॥ ८१ ॥

एवमभ्यासनिरतो वत्सरात्सिद्धिमेति सः।

## प्राणायामे मुद्राः ॥

जालन्धरं मूलबन्धमोड्डीयाणं च खेचरीम् ॥ ८२ ॥

महामुद्रां च यः कुर्यात्स भवेदिहसिद्धिभाक्।
एषां वक्ष्ये लक्षणानि गोप्यानि तव शाम्भवि! ॥

[जालन्धरबन्धः ।]

जालन्धरं कण्ठशिरासमूहानां च बन्धनम् ।
कृत्वाऽधो नमयित्वा कं तदा स्यन्दति मूर्धतः ॥ ८४ ॥

नभस्तस्स्यन्दमाना च सुधा दोग्धौ पतेन्न च ।
न धावति मरुत्तत्र कर्णसंकोचने कृते ॥ ८५ ॥

कर्णामयसमूहघ्नं मृत्युघ्नं तत्परं भवेत् ।

[मूलबन्धः ।]

मूलबन्धं पार्ष्णिभागाद्योनिस्थानं प्रपीडयेत् ॥ ८६ ॥

गुदमाकुञ्चयेद्योगी नयेदूर्ध्वमपानकम् ।
एवं कृते मूलबन्धे क्षीयते मलमूत्रकम् ॥ ८७ ॥

प्राणापानौ च संयुक्तौ स्यातां वृद्धोऽपि यौवनम् ।
प्राप्नुयान्मूलबन्धेन मृत्युथोपि विवस्वताम् (?) ॥८८॥

[ओड्याणबन्धः ।]

ओड्डियाणे नाभिविवरमूर्ध्वं जठरे दृढम् ।
आकृष्य पश्चिमं तानं बन्धयेत्पवनस्तदा ॥ ८९ ॥

विश्रान्तस्स्यान्महामाये ! चोड्याणोऽयं प्रकीर्तितः ।
मृत्युदावानलो दीप्तो जरारोगाब्धिबाडबः ॥ ९० ॥

[खेचरी मुद्रा ।]

आस्यान्तर्विवरे जिह्वां तालुरन्ध्रे प्रवेशयेत् ।
विपरीतां भ्रुवोर्मध्ये पश्येन्निश्चलया दृशा ॥ ९१ ॥

एषा हि खेचरी मुद्रा गोपनीयाऽतिदुर्लभा ।
जिह्वा तु खगता यस्मान्मनश्चरति खे ततः ॥ ९२ ॥

खेचरीति प्रसिद्धेयं मृत्युरोगजरापहा।
निद्रा क्षुधा तृषा नास्ति खेचर्या मुद्रितस्य च ॥९३॥

मूर्च्छा भवति साध्वी च कर्मबन्धभयं न हि।
रमण्या सङ्गतस्यापि रेतो न पतति ध्रुवम् ॥ ९४ ॥

यावच्छुक्रं स्थिरं देहे तावत्कालभयं न हि।
येन बद्धा नभोमुद्रा बीजस्तस्य न गच्छति ॥ ९५ ॥

यदि गच्छेत्तस्य बीजो हुताशनमुपैति हि।
स बीजश्चोर्ध्वमायाति शक्त्या प्रतिहतस्स्वयम् ॥९६॥

योनिमुद्रानिबद्धः सन्सा मुद्रा तेन दुर्लभा।
बीजस्तु द्विविधः प्रोक्तश्शुक्रं चैव महारजः ॥ ९७ ॥

शिरस्स्थानगतं शुक्रं योनिस्थानगतं रजः।
शुक्रं तु श्वेतवर्णं स्यात्प्रवालाभं रजस्स्मृतम् ॥ ९८ ॥

शुक्रं चन्द्रगतं नित्यं रजस्सूर्येण सङ्गतम्।
शुक्रं शिवो रजश्शक्तिस्तया योगस्सुदुर्लभः ॥ ९९ ॥

मरुता शक्तिचारेण रजश्चोर्ध्वं प्रणीयते।
ऐक्यं तद्बिन्दुना याति तदा दिव्यं वपुर्भवेत् ॥१००॥

### महामुद्रा ॥

वामाङ्घ्रिमूलभागेन योनिस्थानं प्रपीडयेत्।
दक्षिणाङ्घ्रिं च विततं हस्ताभ्यामभिधारयेत् ॥१०१॥

हनुं वक्षसि निक्षिप्य वायुना जठरं ततः।
आपूर्य रेचयेद्देवि! स्थित्वा बद्धासनो यमी ॥ १०२ ॥

एषा ख्याता महामुद्रा मलसंशोधनी वरा।
सूर्येन्दू घटयेज्जिह्वाशोषणी पापनाशिनी ॥ १०३ ॥

तथा दक्षिणपादेन योनिस्थानं प्रपीडयेत् ।
वितत्य वामपादं च कराभ्यां धारयेत्प्रिये ! ॥ १०४ ॥

शेषं पूर्वोक्तवत्कुर्यादेवं सव्यापसव्ययोः ।
भागयोस्समकालस्स्यादभ्यासस्तां विवर्जयेत् ॥ १०५ ॥

तस्य पथ्यमपथ्यं च षड्रसा नीरसा अपि ।
घोरं विषं वातिसुखं पीयूषमिव जीर्यते ॥ १०६ ॥

गुल्मोदावर्तकुष्ठाद्या रोगा नश्यन्त्यसंशयम् ।
सिद्धिदेयं महामुद्रा कालं हन्ति जराभयम् ॥ १०७ ॥

न प्रकाश्या न देया च यस्मैकस्मैचन प्रिये ! ।

३. प्रत्याहारः ॥

मुक्तासनस्थितो योगी ऋज्वङ्गग्रीवमस्तकः ॥ १०८ ॥

घोणाग्रलोचनस्स्वस्थः कुटीस्थः प्रणवं जपेत् ।
त्रिलोकश्च त्रिकालश्च त्रिदेवास्त्रीश्वरा अपि ॥ १०९ ॥

त्रिज्योतींषीन्दुमुख्यानि त्रिवेदाश्चाग्नयस्त्रयः ।
शक्तित्रयं त्रिपदवी ब्राह्मी चैन्द्री च वैष्णवी ॥११०॥

वर्णत्रयं च भासन्ते यत्र तज्ज्योतिरोमिति ।
तमोङ्कारं च मनसा वचसा कर्मणा तु यः ॥ १११ ॥

ध्यायेज्जपेदभ्यसेच्च स मुक्तो भवबन्धनात् ।
गच्छंस्तिष्ठञ्जपञ्जाग्रच्छुचिर्वाऽप्यशुचिर्यदि ॥११२॥

न कर्मणा च लिप्तस्स्याज्जलेनाब्जदलं यथा ।
वायौ चलति सर्वेऽपि चलन्तीन्द्रियधातवः ॥ ११३ ॥

स्थिते वायौ स्थिरे सर्वं वपुःप्रभृति शाम्भवि ! ।
तस्माद्वायुं निबध्नीयात्स्थिरे वाते स्थिरं मनः ॥११४॥

स्थिरे मनसि जीवश्च स्थिरो भवति भैरवि!।
यावत्संयमितो वायुर्यावच्चेतोऽपि सुस्थिरम् ॥ ११५ ॥

बीजं यावद्भ्रुवोर्मध्ये तावत्कालभयं न हि।
षट्त्रिंशद्‍व्यङ्गुलं नित्यं ततः प्राणः प्रकीर्तितः ॥११६॥

बद्धपद्मासने स्थित्वा ऋज्वंगस्स्थिरमानसः।
वामनासापुटेनैव पूरयेत्प्राणमारुतम् ॥ ११७ ॥

यावत्षोडशमात्रं च कुंभयेद्‍द्वादश प्रिये!।
रेचयेद्दशमात्रं च दक्षनासापुटेन च ॥ ११८ ॥

पुनश्च सूर्यमार्गेण पूरयेत्पूर्ववत्प्रिये!।
कुंभयित्वा रेचयेच्च वामनासापुटेन च ॥ ११९ ॥

प्राणायामविधिः प्रोक्तस्त्रिविधो योगिवन्दिते!।
अधमो मध्यमो देवि! ह्युत्तमोऽपि यथाक्रमम् ॥१२०॥

प्रोक्तोऽयमधमस्तस्माद्‍द्विगुणो मध्यमस्स्मृतः।
उत्तमस्त्रिगुणः प्रोक्तः प्राणायामोऽयमीश्वरि! ॥१२१॥

यदा तु वामनासायां पूरयेच्चन्द्रमक्षरम्।
ध्यायेदमृतवारीशमध्यस्थं क्षीरसन्निभम् ॥ १२२ ॥

यदा तु दक्षनासायां पूरयेत्सूर्यमक्षरम्।
ज्वलज्ज्वलनसङ्काशं नाभिस्थं चिन्तयेत्सदा ॥ १२३ ॥

एवं बीजद्वयं ध्यात्वा नासारन्ध्रद्वयेन च।
पूरयेद्यस्तु मतिमान्नाडीशुद्धिरतो भवेत् ॥ १२४ ॥

एवं मासत्रयाभ्यासाद्यथेष्टं वायुधारणम्।
प्रदीप्तो जाठरो वह्निर्नादव्यक्तिश्च जायते ॥ १२५ ॥

आरोग्यं प्राप्नुयाद्देवि! नित्यमभ्यासयोगतः।
प्रथमेयं न(यत्र ?) धर्मस्स्याद्‍द्वितीये कम्पते वपुः ॥

उत्तिष्ठति तृतीये तु बद्धपद्मासनस्थितेः ।
प्राणायामादिषट्केन प्रत्याहारो भवेच्छिवे ! ॥ १२७ ॥

तद्‌द्विषट्केन विधिना धारणा तु प्रशस्यते ।
धारणाद्वादशेन स्याद्ध्यानं तद्‌द्वादशात्मकः ॥ १२८ ॥

समाधिः कथ्यते देवि ! तेन दृश्यं परात्परम् ।
तस्मिन्परापरे धाम्नि क्षीयते कर्मसञ्चयः ॥ १२९ ॥

जन्ममृत्यू न भवतो जरारोगश्च नश्यति ।
युक्तियुक्तेन योगेन चिरायुश्च सुखी भवेत् ॥ १३० ॥

अयुक्तयाऽभ्यासनाद्धिक्काकर्णरोगशिरोव्यथाः ।
श्वासकासादयो रोगा दोषास्स्युर्बहवस्तथा ॥ १३१ ॥

[विपरीतकरणीमुद्रा ।]

सौम्यस्थानात्समायाता द्वाभ्यां चैका तु भुज्यते ।
ततस्तृतीयो यः कश्चित्स स्याज्जन्मजरोज्झितः ॥

प्रज्वलज्ज्वलनाकारो नाभिमध्ये स्थितो रविः ।
तालुमध्ये शशी भाति सुधां वर्षत्यधोमुखः ॥ १३३ ॥

तां ग्रसत्यूर्ध्ववदनो भास्करः किरणत्विषा ।
एतस्य विपरीतं यत्करणं विपरीतकम् ॥ १३४ ॥

काकचञ्चुवदास्यं च कृत्वा वायुं ससूत्कृतम् ।
आदाय नासारन्ध्रेण पुनस्तं श्वसनं त्यजेत् ॥ १३५ ॥

शीतलीकरणाख्योऽयं योगस्तु ज्वरपित्तहृत् ।
अमृतं शीतलं तस्य पिबतश्च जरा न हि ॥ १३६ ॥

जिह्वया तालुमूलेन प्राणं यः पिबति प्रिये ! ।
तस्य षण्मासतस्सर्वे रोगा नश्यन्ति योगिनः ॥१३७॥

रसनामूर्ध्वतः कृत्वा सोमं पिबति यः प्रिये! ।
सिद्धिर्मासार्धं आयाति रोगास्तस्य न सन्ति हि ॥

जिह्वाग्रेण च संपीड्य रसनान्तर्बिलं महत् ।
ध्यात्वाऽमृतझरीमम्बामर्धाब्देन भवेत्कविः ॥ १३९ ॥

अमृताप्लावितनोर्योगिनो वत्सरत्रयात् ।
रेतश्चोर्ध्वं प्रयात्येव सिध्यन्ति ह्यणिमादयः ॥ १४० ॥

त्रिविधं गरलं तस्य शरीरे च न सङ्क्रमेत् ।
जरा च मरणं नास्ति दुष्टसत्वभयं तथा ॥ १४१ ॥

## ४. धारणम् ॥

उक्तासनसमारूढः प्राणायामरतस्सदा ।
प्रत्याहारप्रसन्नस्सन्नभ्यसेद्धारणं ततः ॥ १४२ ॥

चेतसो निश्चलत्वं यद्धारणा सा स्मृता शिवे! ।
पृथ्व्यादिपञ्चभूतानां या पृथग्धारणा हृदि ॥ १४३ ॥

चतुरश्रा सुवर्णा सलकारा च हृदि स्थिता ।
ब्रह्मणा सहिता भूमिर्ध्यातव्या पञ्च नाडिकाः ॥१४४॥

प्राणं तत्रैव मनसा धारयेत्सह शांभवि! ।
एषा स्तम्भकरी विद्या पृथ्वीजयमवाप्नुयात् ॥ १४५ ॥

अर्धचन्द्रप्रतीकाशं कर्पूरहिमनिर्मलम् ।
कण्ठस्थानगतं नित्यं सुधाप्लुतवकारयुक् ॥ १४६ ॥

जलतत्वं च संयुक्तं विष्णुना तत्र धारयेत् ।
प्राणं चित्तेन सहितं ध्यातव्यं पञ्चनाडिकाः ॥ १४७ ॥

एषा हि वारुणी विद्या विषपित्तज्वरापहा ।
ग्रसने कालकूटस्य मयैव परिकल्पिता ॥ १४८ ॥

त्रिकोणं तप्तहेमाभं सरेफं रुद्रदैवतम् ।
तालुस्थानगतं ध्यायेद्वह्नितत्वं ज्वलत्प्रभम् ॥ १४९ ॥

तत्रैव पञ्चघटिकाः प्राणं च मनसा सह ।
धारयेन्निहितं योगी ह्येषा वैश्वानरी परा ॥ १५० ॥

विषाग्निभीतिसंहर्त्री वातश्लेष्मादिरोगहृत् ।
वर्तुलं नीलमेघाभं भ्रुवोर्मध्ये प्रतिष्ठितम् ॥ १५१ ॥

सयकारं वायुतत्वं नित्यमीश्वरदैवतम् ।
तत्रैव नाडिकाः पञ्च प्राणं च मनसा सह ॥ १५२ ॥

धारयेद्वायवीयैषा विद्या खगतिदायिनी ।
मृगतृष्णाम्बुसङ्काशं हकारेण समन्वितम् ॥ १५३ ॥

सदाशिवादिदैवं च ब्रह्मरन्ध्रगतं सदा ।
व्योमतत्वं निराकाशं शान्तं सर्वगतं प्रिये ! ॥ १५४ ॥

तत्र प्राणं च संयम्य मनसा सह धारयेत् ।
यावत्स्युः पञ्च घटिका नभोविद्येयमीश्वरि ! ॥ १५५ ॥

कथिता मोक्षदा देवि ! योगिनां दुःखहारिणी ।
स्तंभनी पार्थिवी विद्या प्लावनी वारुणी मता ॥१५६॥

ततो वैश्वानरी विद्या दाहिनीति प्रकीर्तिता ।
वायवी भ्रामणी प्रोक्ता शमनी व्योमरूपिणी ॥१५७॥

क्रमशः पञ्चविद्याश्च धारणीयाः पृथक्पृथक् ।
स्वनामकर्मसदृशं फलं ददति योगिनाम् ॥ १५८ ॥

एषा पञ्चविधा देवि ! धारणा भुवि दुर्लभा ।

## ५. ध्यानम् ॥

तत्वेषु निश्चला चिंता या तद्ध्यानं प्रकीर्त्यते ॥१५९॥

ध्यानं द्विधेति विख्यातं सगुणं निर्गुणं प्रिये!।
सगुणं वर्णसहितं निर्गुणं वर्णवर्जितम्॥ १६० ॥

लक्षं च वाजपेयानामश्वमेधसहस्रकम्।
सकृद्ध्यानस्य योगस्य कलां नार्हन्ति षोडशीम्॥

प्रत्यङ्मना बहिर्दृष्टिः ऋजुः पद्मासनस्थितः।
ध्यानयोगस्स विज्ञेयस्सद्यस्सिद्धिप्रदश्शुभः॥ १६२ ॥

मूलाधारे सुवर्णाभे चक्रेऽस्मिन्प्रथमे प्रिये!।
ध्यात्वाऽऽत्मानं च नासाग्रे लक्षयेद्धन्ति किल्बिषम्॥

स्वाधिष्ठाने च रत्नाभे ह्यात्मानं परिचिन्तयेत्।
नासाग्रलक्षो दुःखेभ्यो मुच्यते योगिसत्तमः॥ १६४ ॥

बालारुणाभे चात्मानं चक्रेऽस्मिन्मणिपूरके।
स्मृत्वा नासाग्रदृष्टिस्संस्त्रिजगत्क्षोभयेद्यमी॥ १६५ ॥

विद्युन्मालानिभे चक्रेऽनाहते हृदयस्थले।
प्राणायामेन बहुधा साधिते परमेश्वरि!॥ १६६ ॥

आत्मानं चिन्तयेद्यस्तु नासाग्रगतलोचनः।
भवेद्ब्रह्मसमो योगी वशीकृतमनाः प्रिये!॥ १६७ ॥

घण्टिकायां विशुद्धाख्ये स्वर्णचम्पकसन्निभे।
प्राणाग्रदृष्टिरात्मानं ध्यात्वाऽऽनन्दमयो भवेत्॥१६८॥

लम्बिकायां सुधापूर्णे चन्द्रमण्डलमण्डिते।
नासाग्रदृष्टिरात्मानं ध्यात्वाऽऽनन्दमयो भवेत्॥१६९॥

भ्रुवोर्मध्येऽञ्जनाकारे ध्यायेदात्मानमीश्वरि!।
जितप्राणो भवेद्योगी योगानन्दमयो भवेत्॥ १७० ॥

निर्गुणं निरपायं च शिवं शान्तं परात्परम्।
विश्वतैजसमात्मानं ध्यायेद्भ्रूमध्यलोचनः॥ १७१ ॥

ब्रह्मानन्दमयो योगी भवत्येव न संशयः ।
आज्ञाचक्रमिति ख्यातं परे व्योम्नि निरामये ॥१७२॥

शिवमात्मानमाचिन्त्य भवेज्ज्ञानमयो वशी ।
गगनाकारममलं मृगतृष्णाम्बुसन्निभम् ॥ १७३ ॥

ध्यात्वाऽऽत्मानं सर्वगतं मोक्षं व्रजति संयमी ।
अपानमेढ्रौ नाभिश्च हृदयं घण्टिका तथा ॥ १७४ ॥

लम्बिका च भ्रुवोर्मध्यं नभश्च ब्रह्मरन्ध्रकम् ।
नव चक्रमिति ख्यातं देयं स्थानं च योगिनाम् ॥

धारणा पञ्चघटिका षण्णाडी ध्यानमुच्यते ।
समाधिर्द्वादशाहं स्यात्प्राणसंयमनात्प्रिये ॥ १७६ ॥

## ६. समाधिः ॥

जलसैन्धवयोर्योगादेकत्वं च यथा भवेत् ।
चित्तात्मनोस्सामरस्यं समाधिस्स तु कथ्यते ॥ १७७ ॥

मनः प्रलीयते चान्ते यदा प्राणक्षयो भवेत् ।
सामरस्यं तदा स्याच्च समाधिस्स तु कथ्यते ॥१७८॥

प्रणष्टाखिलसङ्कल्पो जीवात्मा परमात्मना ।
यदेकत्वं भजेद्देवि ! समाधिस्स तु कथ्यते ॥१७९॥

परापेक्षोज्झितं चित्तमिन्द्रियेषु प्रवर्तते ।
यदा जीवो गतश्चैक्यं तदा नैवेन्द्रियं मनः ॥१८०॥

शब्दं स्पर्शं च रूपं च रसं गन्धं परं तथा ।
आत्मानं च सुखं दुःखं मानामानं प्रियाप्रिये ॥१८१॥

शीताशीतं तथा वातमातपं यो न वेत्ति च ।
न बाध्यते स्वकर्मौघैर्न कैश्चिदपि बाध्यते ॥ १८२ ॥

न शस्त्रैर्बाध्यते मन्त्रैर्यन्त्रैस्तन्त्रैर्न गृह्यते ।
नाग्निना न जलेनापि वायुना न च पीड्यते ॥१८३॥

अवध्यो देहिभिस्सर्वैर्माननीयस्सुरैरपि ।
आहारे च विहारे च निद्रायामवबोधने ॥ १८४ ॥

सर्वकर्मसु युक्तस्सन्स तत्वं वेत्ति योगिनि! ।
निरालम्बं निराकारमनाद्यन्तं निराश्रयम् ॥ १८५ ॥

अनालयं निष्प्रपञ्चं निष्क्रियं निर्मलं महत् ।
निश्चलं निर्मलं नित्यं निर्गुणं व्योम चिन्मयम् ॥

सदानन्दमनन्तं च सर्वगं विभु सन्ततम् ।
एतद्ब्रह्मपदं तत्वं विद्धि त्वं विन्ध्यवासिनि! ॥१८७॥

अनामये निरालम्बे निरातङ्के महाद्युतौ ।
निराभासे परे तत्वे योगयुक्तः प्रलीयते ॥ १८८ ॥

दुग्धे दुग्धं घृते चाज्यमग्नावग्निर्जले जलम् ।
क्षिप्तं व्रजेत्तन्मयत्वं तथा ब्रह्मणि लीयते ॥ १८९ ॥

## योगाभ्यासफलम् ॥

मयोदितमिदं सर्वं दिव्यवायुरसायनम् ।
यस्सेवेत स पुण्यात्मा कृतकृत्यो जगत्त्रये ॥ १९० ॥

सर्वयज्ञफलोपेतस्स स्नातस्सर्वतीर्थके ।
स यशस्वी स योगीन्द्रस्स एवामरवन्दितः ॥ १९१ ॥

स एव सिद्धश्शुद्धश्च मम तुल्यो वरानने! ।
तस्मिन्स्निह्यति मे चेतस्तच्चित्तं मे निवासभूः ॥

सफलं जीवितं तस्य पूतं तदुभयं कुलम् ।
तत्पदन्यासमात्रेण धरित्री पावनीकृता ॥ १९३ ॥

यत्रोषितं क्षणं तेन पुण्यक्षेत्रं हि सा मही ! ।
धन्या तज्जनयित्री च पुण्यस्तज्जनकः प्रिये ! ॥ १९४ ॥

तद्दर्शनात्सजीवास्स्युश्शूलप्रोतादयश्शवाः ।
तद्वाक्येनैव सर्वेऽपि लभन्तेऽपि शुभाशुभम् ॥ १९५ ॥

तन्मूत्रमलसंस्पर्शाल्लोहा यान्ति सुवर्णताम् ।
किं पुनः कथ्यते देवि ! मम तुल्यपराक्रमः ॥ १९६ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ विंशोल्लासः ॥

---

# ॥ एकविंश उल्लासः ॥

## योगसिद्धिदकुटीनिर्माणविधिः ॥

श्रीभैरवी—

कुटी प्रोक्ता त्वया पूर्वे कथं कार्या च कीदृशी ।
तत्र कालं कियच्छंभो ! वस्तव्यं ब्रूहि मे प्रभो ! ॥

श्रीभैरवः—

वक्ष्यामि तां कुटीं सम्यक् शृणु त्रिपुरसुन्दरि ! ।
मेदिनीमुन्नतीकृत्य पुनस्तां सुदृढं प्रिये ! ॥ २ ॥

स्तंभांश्च क्रमशष्षट् षट् पंक्तिशस्स्थापयेदृजून् ।
तुला उपरि चारोप्य दारूणि सुदृढानि च ॥ ३ ॥

स्थापयेदिष्टकाः पश्चात्सुधया सान्द्रमालिपेत् ।
परितो वलभिं कृत्वा भित्तिं त्रिवलयां शुभाम् ॥ ४ ॥

कुर्यात्कुटीं च तन्मध्ये तृतीयावरणैः पुनः ।
निखनेच्चतुरश्रं च दशप्रादेशमात्रकम् ॥ ५ ॥

पञ्चप्रादेशमात्रे च त्वधोनिम्नं तथोर्ध्वतः।
एवं दशवितस्त्याभिरचिन्त्यां तां मनोहराम्॥ ६॥

प्राग्द्वारं बाह्यवलये द्वितीये वलये शिवे!।
याम्यद्वारं तृतीये तु प्रत्यग्द्वारं विधीयते॥ ७॥

द्वाराणां च प्रमाणं हि वितस्तिद्वयमुच्यते।
सकवाटं प्रतिद्वारमच्छिद्रं चार्गलान्वितम्॥ ८॥

सुधाप्रलेपितं कुर्याद्भित्तिं श्लक्ष्णतरं स्थलम्।
दक्षिणे चोत्तरे चैव कुट्यन्तर्वेदिकाद्वयम्॥ ९॥

सार्धत्रयं वितस्तीनां विशालं चायतं दश।
प्रादेशमात्रमुत्सेधं मध्ये प्रादेशिकत्रयम्॥ १०॥

तत्र गोमयसम्भूतं भस्म वस्त्रेण गालितम्।
पूरयेच्च कुटीभित्तौ चित्रं बहु सुविस्तरम्॥ ११॥

भैरवं कालमेघाभं ज्वलदूर्ध्वशिरोरुहम्।
फालाक्षं वक्रदंष्ट्रं च नागकुण्डलमण्डितम्॥ १२॥

नागयज्ञोपवीतं च किंकिणीमुण्डमालिनम्।
दिगम्बरं तु काकोटीभूषितांघ्रिशिरोरुहम्॥ १३॥

हारकेयूरकटकमुद्रिकादिविभूषितम्।
दशहस्तं च डमरुमङ्कुशं खड्गशूलकम्॥ १४॥

वरदं सव्यहस्ताब्जैर्नागं पाशं च घण्टिकाम्।
मधुपात्रं भयहरं बिभ्राणं वामबाहुभिः॥ १५॥

कृष्णांगरागमालाढ्यं सर्वव्याधिविनाशनम्।
व्याधिभूताहिशत्रुघ्नं क्ष्वेलादिभयनाशनम्॥ १६॥

ततो मृत्युञ्जयं शान्तं वटुकं विलिखेत्प्रिये!।
पारदेन्दुहिमश्वेतं बालं द्विभुजशोभितम्॥ १७॥

किंकिणीमालया बद्धकर्णनूपुरशोभितम् ।
बालं कुण्डलसच्छोभं त्रिनेत्रं नग्नरूपिणम् ॥ १८ ॥

श्वेतमाल्यानुलेपं च पूर्णपात्रं च वामतः ।
दण्डं दक्षिणहस्तेन दधानं मृत्युनाशनम् ॥ १९ ॥

मायाबीजं च वटुकं ह्येनं प्रथममुच्चरेत् ।
आपदुद्धारणायेति लिखेत्पञ्चाक्षरद्वयम् ॥ २० ॥

वटुकायेति मायां च वटुकस्य मनुस्स्मृतः ।
मूर्तिद्वयोरयं मन्त्रः कथितस्सुरवन्दिते ! ॥ २१ ॥

मन्त्रस्यास्य च यद्यन्त्रं तद्यन्त्रं तत्र संलिखेत् ।
रमां च भुवनेशीं च कामं चिन्तामणिं क्रमात् ॥२२॥

कर्णिकायां लिखेत्पूर्वं वटुकायेति वीप्सितम् ।
अष्टपत्रे लिखेच्छेषाण्यक्षराण्यष्टपत्रके ॥ २३ ॥

बहिष्षोडशपत्रेषु विलिखेत्षोडश स्वरान् ।
द्वात्रिंशद्दलके कादिसान्तद्वात्रिंशदक्षरान् ॥ २४ ॥

अन्ये दले हलक्षांश्च विलिखेद्भूपुरं बहिः ।
आपदुद्धारणं यन्त्रमपमृत्युनिवारणम् ॥ २५ ॥

रक्षाकरं ग्रहार्तानां सर्वेषां प्राणिनामपि ।
स्त्रीवश्यं राजवश्यं च पुंवश्यं पशुवश्यकम् ॥ २६ ॥

नानासिद्धिप्रदं नित्यं सर्वरोगविषापहम् ।
हारकेयूररुचिरं कान्त्या विश्वविमोहनम् ॥ २७ ॥

महामृत्युञ्जयं देवं भावयेन्मृत्युजिद्भवेत् ।
एवं द्वितीयवर्गस्य तृतीयं पञ्चमेन च ॥ २८ ॥

स्वरेण बिन्दुना युक्तं सोन्तं साध्यपदं ततः ।
रक्षशब्दयुगं पश्चात्पूर्वं बीजत्रयं पुनः ॥ २९ ॥

प्रतिलोमं समुच्चार्य मन्त्रं मृत्युञ्जयं जपेत् ।
तारं मध्ये ससाध्याख्यं दिग्दले भं समालिखेत् ॥ ३० ॥

आग्नेयादिदलेष्वन्त्यमक्षरं क्रमशो लिखेत् ।
बाह्ये भूपुरमालिख्य दिक्षु सान्द्रं समालिखेत् ॥ ३१ ॥

चतुष्कोणे ठकारं च यन्त्रं मृत्युञ्जयात्मकम् ।
अपमृत्युज्वरव्याधिक्ष्वेलमोहविनाशनम् ॥ ३२ ॥

तत्र चिन्तामणिं देवं चिन्तितार्थप्रदं लिखेत् ।
नीलप्रवालरुचिरं त्रिणेत्रं रुचिराननम् ॥ ३३ ॥

पाशारुणोत्पलं वामे दक्षे शूलकपालकौ ।
दधानमिन्दुमकुटं ध्यायेदर्धाम्बिकेश्वरम् ॥ ३४ ॥

वह्निप्रथमवर्गादिषमरेफाः क्रमात्ततः ।
प्राणसद्यांतसहितषष्ठस्वरसबिन्दुकः ॥ ३५ ॥

इदं चिन्तामणेर्मन्त्रं चिन्तितार्थप्रदं शुभम् ।
षोडशस्वरसंवीतं चिन्तामणिमभीष्टदम् ॥ ३६ ॥

ठकारावेष्टितं कुर्याज्ज्वरापस्मृतिमृत्युहम् ।
ततश्च शारदादेवीमालिखेत्सिद्धिदायिनीम् ॥ ३७ ॥

शङ्खकुन्देन्दुधवलां मकुटेन्दुकलाधराम् ।
सुधाकुम्भं वराक्षस्रक्संविन्मुद्रां करांबुजैः ॥ ३८ ॥

बिभ्राणां श्वेतवसनां मौक्तिकाभरणोज्ज्वलाम् ।
वाग्बीजं भुवनेशीं च वदवाक्यद्वयं ततः ॥ ३९ ॥

वाग्वादिनीं ससंबुद्धिमग्निपत्नीं समुच्चरेत् ।
एष श्रीमातृकामन्त्रः प्रोक्तस्सारस्वतप्रदः ॥ ४० ॥

आदिबीजद्वयं हित्वा शेषं पूर्ववदुच्चरेत् ।
दशार्णशारदामन्त्रो वाग्विलासप्रदायकः ॥ ४१ ॥

वियद्वर्णसुकारञ्च सद्यान्तं सविसर्गकम् ।
कर्णिकायां लिखेत्पूर्वं किंजल्केषु स्वरानपि ॥ ४२ ॥

अष्टच्छदेष्वष्टवर्गान्यशहाद्यैः परैस्त्रिभिः ।
काद्यैश्च पञ्चभिर्वर्णैरष्टवर्गास्समीरिताः ॥ ४३ ॥

लिखेद्भूपुरकोणेषु ठकारान्दिक्षु विन्यसेत् ।
इदं हि मातृकायन्त्रं विषमृत्युगदापहम् ॥ ४४ ॥

अघोरं विलिखेद्देवि ! नीलजीमूतसन्निभम् ।
क्रूरदंष्ट्रं त्रिणेत्रं च नागेन्द्राष्टविभूषितम् ॥ ४५ ॥

रक्ताङ्गरागवसनं रक्तमालाविराजितम् ।
परश्वधुं च डमरुं खड्गं खेटमिषुं धनुः ॥ ४६ ॥

त्रिशूलं पूर्णपात्रं च बिभ्राणं चाष्टबाहुभिः ।
भुवनेशीं स्फुरद्वन्द्वं ततः प्रस्फुरवीप्सितम् ॥ ४७ ॥

घोरं ततोऽघोरतरं तनुरूपं चटद्वयम् ।
प्रक(च)टद्विगुणं चैव कहशब्दयुगं ततः ॥ ४८ ॥

वमशब्दद्वयं देवि ! बन्धशब्दं च वीप्सितम् ।
घात(खाद)यद्वितयं देवि ! कवचं च फडन्तकम् ॥४९॥

एकोत्तरोऽयं पञ्चाशदर्णोऽघोरस्स्मृतो मनुः ।
वश्यार्थं तप्तहेमाभं पूर्वोक्ताकृतिसंयुतम् ॥ ५० ॥

मुक्तौ मृत्युञ्जयार्थे तु श्वेतं पूर्वोक्तविग्रहम् ।
सर्वार्थसिद्धिदं शान्तमघोरास्त्रं लिखेत्प्रिये ! ॥ ५१ ॥

मायाबीजं ससाध्यं स्यान्मध्ये च स्वरसंयुतम् ।
तद्बहिःकेसरेष्वेवं विलिखेदष्टवर्गकम् ॥ ५२ ॥

ततस्त्वष्टदले मन्त्रवर्णान्गुणमितान् लिखेत् ।
अग्रशेषेषु तद्वत्तंषट्कोणे कवचास्त्रकौ ॥ ५३ ॥

तद्बहिर्भूपुरं लेख्यमेनदाघोरयन्त्रकम् ॥।
स्फुरद्वयावृतं मध्ये शक्तिबीजं लिखेत्ततः ॥ ५४ ॥

षट्कोणे प्रस्फुरयुगं ततश्चाष्टदले क्रमात् ।
षड्भिश्चतुर्भिर्वेदैश्च रसैर्वस्त्रैश्च गोपदैः ॥ ५५ ॥

ऋतुभिश्शिष्टमन्त्रार्णैरमीभिर्विलिखेत्ततः ।
षट्कोणे वह्निचा(श)स्त्राभ्यामुद्धृतं वीतकोणकम् ॥५६॥

भूपुरेणावृतं यन्त्रमघोरं विलिखेत्प्रिये!।
व्यालारिचोरक्षुद्रापस्मारभूतग्रहापहम् ॥ ५७ ॥

अथो महागणपतिं लिखेद्विद्रुमसन्निभम् ।
कोटीरचन्द्रशकलं गजास्यं लोचनत्रयम् ॥ ५८ ॥

तुन्दिलं रक्तवसनं रक्तमालानुलेपनम् ।
दशदोर्दण्डसुभगं वामोरुस्थितयोषितम् ॥ ५९ ॥

हारकेयूरकटकमुद्रिकाकुण्डलोज्ज्वलम् ।
फलपूरं गदामिक्षुकोदण्डं च त्रिशूलकम् ॥ ६० ॥

चक्रं सरसिजं पाशमुत्पलं शालिमञ्जरीम् ।
स्वदन्ततुण्डया रत्नकलशं दशभिः करैः ॥ ६१ ॥

बिभ्राणं पद्मकरया वामोरुस्थितया श्रिया ।
आलिङ्गितं भक्तलोकचिन्तितार्थसुरद्रुमम् ॥ ६२ ॥

प्रणवं कमलां मायां कामराजं वसुन्धराम् ।
क्रमाद्गणपतेर्बीजं महागणपतिं ततः ॥ ६३ ॥

चतुर्थ्यन्तं ससंबुद्धि वरं च वरदं तथा ।
ततस्सर्वजनं मे च वशमानय शब्दकम् ॥ ६४ ॥

अग्निपत्नीं समालिख्य चाष्टाविंशतिवर्णकम् ।
मन्त्रं महागणपतेर्मृत्युदारिद्र्यनाशनम् ॥ ६५ ॥

त्रिकोणे बीजमालिख्य सतारे च गणेशितुः ।
दिक्षु श्रीशक्तिमदनभूबीजानि बहिर्लिखेत् ॥ ६६ ॥

षट्कोणे बीजषट्कं च तत्संधिष्वङ्गमन्त्रकम् ।
ततोऽष्टदलमध्येषु मन्त्राणि गणशो लिखेत् ॥ ६७ ॥

अन्त्याक्षरे चान्त्यदले मातृकामनुलोमतः ।
लेखे च प्रतिलोमेनाङ्कुशपाशावृतं ततः ॥ ६८ ॥

भूमन्दिरेण सुभगं यन्त्रं गणपतेश्शुभम् ।
गजान्तं श्रीपदं दिव्यमायुष्यारोग्यवर्धनम् ॥ ६९ ॥

एतानि यन्त्रजालानि कुट्यन्तर्देवता लिखेत् ।
कुटीभित्तिबहिर्भागे भैरवं वर्णमालिखेत् ॥ ७० ॥

असिताङ्गं रुरुं चण्डं क्रोधमुन्मत्तभैरवम् ।
कपालिनं भीषणं च संहारं भैरवं क्रमात् ॥ ७१ ॥

द्वितीयावरणस्यान्तर्भित्तावेकादश क्रमात् ।
रुद्रांस्त्रिलोचनांश्चन्द्रकलाजूटजटान् लिखेत् ॥ ७२ ॥

तद्बाह्ये नव नाथांश्च नव सिद्धांश्च षोडश ।
सनत्कुमारसनकसनन्दादीन् लिखेत्ततः ॥ ७३ ॥

तृतीयावरणस्यान्तर्भित्तौ ब्राह्म्यादिमातरः ।
चतुष्षष्टिश्च योगिन्यो लेखनीया यथाविधि ॥ ७४ ॥

तद्भित्तिबाह्ये देवेन्द्रमुखा दिक्पतयः क्रमात् ।
ग्रहाश्च चन्द्रसूर्याद्या अश्विन्याद्याश्च तारकाः ॥ ७५ ॥

मेषाद्या राशयो लेख्यास्सालङ्कारश्च सायुधाः ।
कुटीद्वारविपार्श्वे च गणेशं भैरवं लिखेत् ॥ ७६ ॥

द्वितीयावरणद्वारपार्श्वे द्वौ शंखपद्मकौ ।
गरुत्मन्तं हनूमन्तं तृतीयावरणस्य च ॥ ७७ ॥

द्वारस्य पार्श्वयोर्देवि ! विलिखेद्द्वयभञ्जनौ ।
यस्मिन्देशे कुटी दिव्या कल्पिता योगिसत्तमैः ॥७८॥

देशो धन्यतरश्श्लाघ्यः पुण्यक्षेत्रं च पावनम् ।
तत्रत्याश्च प्रजा धन्यास्स्फीतार्थाः पुण्यकर्मिणः ॥ ७९ ॥

राष्ट्रं सुभिक्षमारोग्यमनामयसुखावहम् ।
ईतिहीनं कालवृष्टिसहितं धान्यसङ्कुलम् ॥ ८० ॥

तस्करोपद्रवव्याघ्रसर्पादिभयवर्जितम् ।
तत्र तीर्थानि सर्वाणि गङ्गादीनि वसन्ति च ॥ ८१ ॥

इन्द्रादयोऽपि विबुधास्सूर्यचन्द्रादयो ग्रहाः ।
योगिन्यो भैरवास्सिद्धा गणेशगुहमातरः ॥ ८२ ॥

तत्रस्थस्य महीपस्य जयार्थावाप्तिरायुषः ।
संभवेच्चक्रवर्तित्वं पुनर्नित्योत्सवोज्ज्वलम् ॥ ८३ ॥

वन्ध्यानां पुत्रसंपत्तिः कुटीसन्दर्शनाद्भवेत् ।
कुष्ठापस्मारभूतादिमहाव्याधिविनाशनम् ॥ ८४ ॥

कुटीगता भवेयुस्ते ये सेवन्ते रसायनम् ।
सिद्धिं यान्ति सुखेनैव देवानामपि दुर्लभाम् ॥ ८५ ॥

### अमरीकल्पः ॥

देवि ! चित्रं प्रवक्ष्यामि दिव्यं गुह्यतमं शिवम् ।
अमरीकल्पमनघं सुलभं निजदेहजम् ॥ ८६ ॥

अणिमाद्यष्टकैश्वर्यदेहलोहादिसिद्धिदम् ।
वमनादिविशुद्धाङ्गो लवणाम्लविवर्जितः ॥ ८७ ॥

कुटीगतस्तु देवेशि ! शिवतोयमुदारधीः ।
स्थूलस्य कतकस्यैव दारुणा पानपात्रकम् ॥ ८८ ॥

कुर्याच्च त्रिफलां पिष्ट्वा लेपयेच्चषकान्तरे ।
कर्षं शिवाम्बुना रात्रौ पात्रं चाधोमुखं प्रिये ! ॥ ८९ ॥

स्थापयित्वा पुनः प्रातराद्यन्तं प्रस्रवं त्यजेत् ।
मध्यधाराश्च तत्पात्रे क्षिपेत्तत्त्रिफलां ततः ॥ ९० ॥

लोडयेद्मरीयुक्तं पिबेत्प्राग'ननम्सदा ।
इष्टदेवान्गुरून्वृद्धान्नत्वार्चितगणेश्वरः ॥ ९१ ॥

मिताहारो युक्तचेष्टो वातातपविवर्जितः ।
एकमण्डलमात्रेण बाह्यान्तश्शुचिभाग्भवेत् ॥ ९२ ॥

मण्डलेन द्वितीयेन सर्वकुष्ठविनाशनम् ।
मण्डलेन तृतीयेन चतुर्विधविपापहम् ॥ ९३ ॥

मण्डलेन चतुर्थेन नालिकेरांबुवद्भवेत् ।
आत्मतोयं पञ्चमेन मलदौर्गन्ध्यनाशनम् ॥ ९४ ॥

षष्ठमण्डलयोगेन देहदौर्गन्ध्यनाशनम् ।
सप्तमण्डलयोगेन भवेदिन्द्रियपाटवम् ॥ ९५ ॥

ततोऽष्टमे मण्डले तु रजनीचूर्णकर्षयुक् ।
सेवेत शिवतोयं च यावद्द्विस्सप्तमण्डलम् ॥ ९६ ॥

वलीपलितहीनस्स्यान्महाविषभयोज्झितः ।
मण्डले पञ्चदशके कर्षांशौ भृङ्गगन्धकौ ॥ ९७ ॥

शिवतोयेन सम्मिश्रं प्रपिबेदेकविंशतिम् ।
मण्डलं च तदन्ते स्यात्सिद्धिभाग्देहलोहयोः ॥ ९८ ॥

द्वाविंशन्मण्डले देवि ! चाभ्रकं वरया युतम् ।
एवं भजेद्यमी यावदष्टाविंशतिमण्डलम् ॥ ९९ ॥

मत्तहस्तिबलोपेतो गृध्रदृष्टिरनामयः ।
एकोनत्रिंशति प्राप्ते मण्डले वरया युताम् ॥ १०० ॥

सकान्तचूर्णविमलां गोधामपि पिबेत्प्रिये ! ।
पञ्चत्रिंशन्मण्डलान्तं वज्रकायो भवेन्नरः ॥ १०१ ॥

षट्त्रिंशन्मण्डलादि स्वर्णधात्रीरजोऽन्वितम् ।
आत्मगोधान्वितं पेयं तत्तु यावद्द्वयाधिकम् ॥ १०२ ॥

चत्वारिंशन्मण्डलान्तं सशरीरः खगो भवेत् ।
त्रिचत्वारिंशन्मण्डले तु प्राप्ते पारदसंयुतम् ॥ १०३ ॥

वरायुतं पिबेदूनपञ्चाशन्मण्डलावधिः ।
अणिमादिगुणोपेतो वज्रकायश्च खेचरः ॥ १०४ ॥

सिद्धैर्युक्तो निरातंको निरपायो निरञ्जनः ।
यदृच्छया सर्वलोके विहरत्येव सर्वदा ॥ १०५ ॥

आरभ्य प्रथमं देवि ! मण्डलान्नित्यमाचरेत् ।
आत्मतोयेन धुत्तूररसेन परिलोडयेत् ॥ १०६ ॥

भस्म तेनैव सर्वाङ्गमसकृत्परिमर्दयेत् ।
अन्यकालसमायातमात्मतोयं विशेषतः ॥ १०७ ॥

मूर्ध्नि नासापुटे कर्णे दृशि पादकरद्वये ।
शीलयेत्सततं देवि ! शुद्धदेहो भवेन्नरः ॥ १०८ ॥

कदाचिदप्यात्मगोधां भूमौ न विसृजेत्प्रिये ।
अमरीसेविनः पुंसश्शिवतोयेन जायते ॥ १०९ ॥

सर्वलोहं च कनकं दिव्यं मनुजदुर्लभम् ।
विजयासहितां गोधां प्रतिवासरमापिबेत् ॥ ११० ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ एकविंशोल्लासः ॥



कुर्याच्च त्रिफलां पिष्ट्वा लेपयेच्चषकान्तरे ।
कर्षं शिवाम्बुना रात्रौ पात्रं चाधोमुखं प्रिये ! ॥ ८९ ॥

स्थापयित्वा पुनः प्रातराद्यन्तं प्रस्रवं त्यजेत् ।
मध्यधाराश्च तत्पात्रे क्षिपेत्तत्त्रिफलां ततः ॥ ९० ॥

लोडयेद्मरीयुक्तं पिबेत्यागाननस्सदा ।
इष्टदेवान्गुरून्वृद्धान्नत्वार्चितगणेश्वरः ॥ ९१ ॥

मिताहारो युक्तचेष्टो वातातपविवर्जितः ।
एकमण्डलमात्रेण बाह्यान्तश्शुचिभाग्भवेत् ॥ ९२ ॥

मण्डलेन द्वितीयेन सर्वकुष्ठविनाशनम् ।
मण्डलेन तृतीयेन चतुर्विधविपापहम् ॥ ९३ ॥

मण्डलेन चतुर्थेन नालिकेरांबुवद्भवेत् ।
आत्मतोयं पञ्चमेन मलदौर्गन्ध्यनाशनम् ॥ ९४ ॥

षष्ठमण्डलयोगेन देहदौर्गन्ध्यनाशनम् ।
सप्तमण्डलयोगेन भवेदिन्द्रियपाटवम् ॥ ९५ ॥

ततोऽष्टमे मण्डले तु रजनीचूर्णकर्षयुक् ।
सेवेत शिवतोयं च यावद्द्विस्सप्तमण्डलम् ॥ ९६ ॥

वलीपलितहीनस्स्यान्महाविषभयोज्झितः ।
मण्डले पञ्चदशके कर्षांशौ शृङ्गगन्धकौ ॥ ९७ ॥

शिवतोयेन सम्मिश्रं प्रपिबेदेकविंशतिम् ।
मण्डलं च तदन्ते स्यात्सिद्धिभाग्देहलोहयोः ॥ ९८ ॥

द्वाविंशन्मण्डले देवि ! चाभ्रकं वरया युतम् ।
एवं भजेद्यमी यावदष्टाविंशतिमण्डलम् ॥ ९९ ॥

मत्तहस्तिबलोपेतो गृध्रदृष्टिरनामयः ।
एकोनत्रिंशति प्राप्ते मण्डले वरया युताम् ॥ १०० ॥

## ॥ द्वाविंश उल्लासः ॥

### वन्दाककल्पः ॥

वन्दाको द्विविधः प्रोक्तः पुरुषस्त्रीविभेदतः ।
खर्जूरीपत्रवत्पत्रः पुरुषस्सर्वसिद्धिदः ॥ १ ॥

स्त्रीसंज्ञस्तु गुणैरल्पो वृत्तपत्रः प्रतापवान् ।
वन्दाकः पादपरुहश्शिखरी तरुरोहिणी ॥ २ ॥

वृक्षादनी कामिनी च वृक्षरुग्बध्नबध्नकम् ।
वन्दाकस्तिक्ततुवरः कफपित्तश्रमापहः ॥ ३ ॥

वश्यादिसिद्धिदो वृष्यो विषघ्नश्च रसायनम् ।

### [वन्दाकाहरणविधिः ।]

कृतोपवासस्सुस्नातो रक्तमाल्यानुलेपनः ॥ ४ ॥

मुक्तकेशाम्बरो भूत्वा रात्रौ संयतमानसः ।
वृक्षं प्रदक्षिणं कृत्वा गन्धपुष्पाक्षतादिभिः ॥ ५ ॥

पूजाद्रव्यैस्समभ्यर्च्य बलिं दध्योदनैः किरेत् ।
चिन्तामणिं नृसिंहं च मनुमष्टोत्तरं शतम् ॥ ६ ॥

जप्त्वा खड्गेन सञ्छिद्य वन्दाकं विधिनाऽऽहरेत् ।
वन्दाकानां तु सर्वेषां विधिरेष उदाहृतः ॥ ७ ॥

अश्विन्यां शुचिरश्वत्थवन्दाकं विधिनाऽऽहृतम् ।
क्षीरेण पिष्टमालोड्य पिबेदश्वबलो भवेत् ॥ ८ ॥

तथैवाश्वत्थवन्दाकमुपरागेऽर्कचन्द्रयोः ।
नृसिंहमन्त्रं प्रजपन् खड्गेनाच्छिद्य चाहरेत् ॥ ९ ॥

घृष्ट्वांभसा प्रकोष्ठेण लिप्त्वा गोरोचनान्वितम् ।
विधाय तिलकं पश्येत्सर्ववश्यो भवेद्ध्रुवम् ॥ १० ॥

न्यग्रोधस्य तु वन्दाकमश्विन्यां विधिनाऽऽहरेत् ।
सूत्रेण बन्धयेद्धस्ते ह्यदृश्यो जायते नरः ॥ ११ ॥

सर्ववश्यं भवेत्क्षीरैः पिष्ट्वा पाने गदाञ्जयेत् ।
अश्विन्यां तु शिरीषस्य वन्दाकं विधिनाऽऽहरेत् ॥१२॥

सूत्रेण बन्धयेद्धस्ते वीर्यस्तम्भो भवेद्ध्रुवम् ।
अश्विन्यामाहरेद्धीमान् पलाशस्य तु बध्नकम् ॥ १३ ॥

हस्ते बध्वा स्पृशेद्यस्तु सा नारी वशगा भवेत् ।
अंकोलबध्नमश्विन्यां करे बध्वा जगत्प्रियः ॥ १४ ॥

भरण्यां कुशवन्दाकं गृहीत्वा शुभयोगतः ।
बध्नीयाद्दक्षिणे हस्ते तेनादृश्यो भवेन्नरः ॥ १५ ॥

भरण्यां फल्गुवन्दाकं धान्यराशौ विनिक्षिपेत् ।
तेन वै धान्यवृद्धिस्स्यान्नात्र कार्या विचारणा ॥ १६ ॥

भरण्यां बदरीणां च वन्दाकं विधिनाऽऽहरेत् ।
बन्धयेद्दक्षिणे हस्ते संलभेदीप्सितं फलम् ॥ १७ ॥

कृत्तिकायां तु कतकवन्दाकं विधिनाऽऽहरेत् ।
वर्तिमध्ये क्षिपेत्तं च तेन सङ्गृह्य कज्जलम् ॥ १८ ॥

स्त्रीणामञ्जनमात्रेण पतिर्वश्यो भवेद्ध्रुवम् ।
कृत्तिकायां शुचिर्भूत्वा जम्बूवन्दाकमाहरेत् ॥ १९ ॥

क्षीरेण पिष्टं तत्कल्कं पीत्वा रोगैर्विमुच्यते ।
रोहिण्यां तिन्त्रिणीकस्य वन्दाकं विधिनाऽऽहरेत् ॥

बध्वा हस्ते स्पृशेद्यं यं सर्ववश्यो भवेन्नरः ।
तिमिरादिषु शस्तं तदसाध्यं घृतमञ्जनात् ॥ २१ ॥

क्षौद्रघृष्टेन तेनैव कृतं चक्षुष्यमञ्जनम् ।

बध्नकमुदुम्बरभवं रोहिण्यां गृह्य वलयकं कुर्यात् ।
तद्वलयोपरि विनिहितभाण्डस्थितमोदकं क्षयं नैति ॥२२॥

अश्वत्थस्य तु वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ॥२३॥

गृहे स्थिते च वन्दाके नित्यैश्वर्यं प्रजायते ।
कतकस्य तु वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ॥२४॥

अञ्जने नेत्रयुगले निधिं पश्यति निश्चितम् ।
तदेव बन्धयेद्धस्ते सर्ववश्यो भवेद्ध्रुवम् ॥ २५ ॥

उदुम्बरस्य वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ।
हस्ते बध्वा निहन्त्याशु ज्वरं चातुर्थिकं प्रिये ! ॥२६॥

रोहिण्यां मातुलुङ्गस्य बध्नकं तु समाहरेत् ।
धारयेद्दक्षिणे कर्णे जगद्वश्यकरं परम् ॥ २७ ॥

रोहिण्यां बिल्ववन्दाकं करे बध्वा जगत्प्रियः ।
मृगशीर्षे शिरीषस्य वन्दाकं सम्यगाहृतम् ॥ २८ ॥

हस्ते बध्वा स्पृशेन्नारीं नरं वा वशयेद्ध्रुवम् ।
मृगशीर्षे तु वन्दाकं तिन्त्रिणीवृक्षसम्भवम् ॥ २९ ॥

क्षीरेण पिष्ट्वा प्रपिबेदद्दश्यो जायते नरः ।
तद्दध्ना यः पिबेत्प्रातस्सर्वव्याधिहरो भवेत् ॥ ३० ॥

महिषीतक्रपिष्टेन तेन सर्वाङ्गलेपनम् ।
कृत्वा वह्निगतो यस्तु वह्निना च न दह्यते ॥ ३१ ॥

तिन्त्रिणीकस्य वन्दाकं गृहे यस्य प्रतिष्ठितम् ।
तस्य चोरभयं नास्ति करे द्यूतजयो भवेत् ॥ ३२ ॥

उदुम्बरस्य वन्दाकं मृगशीर्षे समाहरेत् ।
हस्ते बध्वा स्पृशेन्नारीं सा नारी वशगा भवेत् ॥३३॥

स्त्रीणां हस्ते तु बध्नीयादन्नमध्ये विनिक्षिपेत् ।
जायते चान्नवृद्धिस्तु नात्र कार्या विचारणा ॥ ३४ ॥

न्यग्रोधस्य तु वन्दाकं मृगशीर्षे समाहरेत् ।
बध्नीयाद्दक्षिणे हस्ते जनवश्यो भवेद्ध्रुवम् ॥ ३५ ॥

आदाय माटरूषस्य वन्दाकं समुदाहृतम् ।
बध्वा हस्ते जनैर्दीव्यन् स्याद्द्यूतेष्वपराजितः ॥ ३६ ॥

आर्द्रायां तौंबुरं ग्राह्यं वन्दाकं विधिना हरेत् ।
क्षीरेण प्रपिबेद्यस्तु तस्य स्याल्लोहमोटनम् ॥ ३७ ॥

आर्द्रार्के वा पुष्यरवौ वन्दाकं तुम्बुरोर्हरेत् ।
बध्नीयाद्दक्षिणे हस्ते बाणस्तम्भः प्रजायते ॥ ३८ ॥

पुनर्वसोर्हृतं वंशवन्दाकं क्षीरपेषितम् ।
पीत्वा स्त्रीपुरुषौ वन्ध्यौ प्रसुवाते सुतान्बहून् ॥ ३९ ॥

नक्तमालस्य वन्दाकमाहरेच्च पुनर्वसौ ।
क्षीरेण पिष्ट्वा प्रपिबेदखिलामयनाशनम् ॥ ४० ॥

तच्चूर्णनस्य मात्रेण नश्यन्ति ग्रहराक्षसाः ।
पुष्ये बन्धूकवन्दाकं गृहीत्वा तं निधापयेत् ॥ ४१ ॥

क्षेत्रमध्ये रिपोस्तत्र सस्यनाशश्च जायते ।
आश्लेषायां कर्णिकारवन्दाकं सम्यगाहृतम् ॥ ४२ ॥

बध्वा हस्ते दृढं तेन स्पृशन्वशति तेजसात् ।
मधूकस्य च बन्दाकमाश्लेषायां समाहरेत् ॥ ४३ ॥

बन्धयेद्दक्षिणे हस्ते व्याघ्रादिभयनाशनम् ।
मघासु मुचुकुन्दस्य वन्दाकं विधिनाऽऽहृतम् ॥ ४४ ॥

निधापयेद्धान्यमध्ये तद्धान्यं त्वक्षयं भवेत् ।
विभीतकस्य वन्दाकं फल्गुन्योः पूर्वयोर्हृतम् ॥ ४५ ॥

क्षौद्रघृष्टेन तेनैव कृतं चक्षुष्यमञ्जनम् ।

बध्नकमुदुम्बरभवं रोहिण्यां गृह्य वलयकं कुर्यात् ।
तद्वलयोपरि विनिहितभाण्डस्थितमोदकं क्षयं नैति ॥२२॥

अश्वत्थस्य तु वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ॥२३॥

गृहे स्थिते च वन्दाके नित्यैश्वर्यं प्रजायते ।
कतकस्य तु वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ॥२४॥

अञ्जने नेत्रयुगले निधिं पश्यति निश्चितम् ।
तदेव बन्धयेद्धस्ते सर्ववश्यो भवेद्ध्रुवम् ॥ २५ ॥

उदुम्बरस्य वन्दाकं रोहिण्यां विधिनाऽऽहरेत् ।
हस्ते बध्वा निहन्त्याशु ज्वरं चातुर्थिकं प्रिये! ॥२६॥

रोहिण्यां मातुलुङ्गस्य बध्नकं तु समाहरेत् ।
धारयेद्दक्षिणे कर्णे जगद्वश्यकरं परम् ॥ २७ ॥

रोहिण्यां बिल्ववन्दाकं करे बध्वा जगत्प्रियः ।
मृगशीर्षे शिरीषस्य वन्दाकं सम्यगाहृतम् ॥ २८ ॥

हस्ते बध्वा स्पृशेन्नारीं नरं वा वशयेद्ध्रुवम् ।
मृगशीर्षे तु वन्दाकं तिन्त्रिणीवृक्षसम्भवम् ॥ २९ ॥

क्षीरेण पिष्ट्वा प्रपिबेददृश्यो जायते नरः ।
तद्दध्ना यः पिबेत्प्रातस्सर्वव्याधिहरो भवेत् ॥ ३० ॥

महिषीतक्रपिष्टेन तेन सर्वाङ्गलेपनम् ।
कृत्वा वह्निगतो यस्तु वह्निना च न दह्यते ॥ ३१ ॥

तिन्त्रिणीकस्य वन्दाकं गृहे यस्य प्रतिष्ठितम् ।
तस्य चोरभयं नास्ति करे द्यूतजयो भवेत् ॥ ३२ ॥

उदुम्बरस्य वन्दाकं मृगशीर्षे समाहरेत् ।
हस्ते बध्वा स्पृशेन्नारीं सा नारी वशगा भवेत् ॥३३॥

स्त्रीणां हस्ते तु बध्नीयादन्नमध्ये विनिक्षिपेत् ।
जायते चान्नवृद्धिस्तु नात्र कार्या विचारणा ॥ ३४ ॥

न्यग्रोधस्य तु वन्दाकं मृगशीर्षे समाहरेत् ।
बध्नीयाद्दक्षिणे हस्ते जनवश्यो भवेद्ध्रुवम् ॥ ३५ ॥

आदाय माटरूषस्य वन्दाकं समुदाहृतम् ।
बध्वा हस्ते जनैर्दीव्यन् स्याद्द्यूतेष्वपराजितः ॥ ३६ ॥

आर्द्रायां तौंबुरं ग्राह्यं वन्दाकं विधिना हरेत् ।
क्षीरेण प्रपिबेद्यस्तु तस्य स्याल्लोहमोटनम् ॥ ३७ ॥

आर्द्रार्के वा पुष्यरवौ वन्दाकं तुम्बुरोर्हरेत् ।
बध्नीयाद्दक्षिणे हस्ते बाणस्तम्भः प्रजायते ॥ ३८ ॥

पुनर्वसोर्हृतं वंशवन्दाकं क्षीरपेषितम् ।
पीत्वा स्त्रीपुरुषौ वन्ध्यौ प्रसुवाते सुतान्बहून् ॥ ३९ ॥

नक्तमालस्य वन्दाकमाहरेच्च पुनर्वसौ ।
क्षीरेण पिष्ट्वा प्रपिबेदखिलामयनाशनम् ॥ ४० ॥

तच्चूर्णनस्य मात्रेण नश्यन्ति ग्रहराक्षसाः ।
पुष्ये बन्धूकवन्दाकं गृहीत्वा तं निधापयेत् ॥ ४१ ॥

क्षेत्रमध्ये रिपोस्तत्र सस्यनाशश्च जायते ।
आश्लेषायां कर्णिकारवन्दाकं सम्यगाहृतम् ॥ ४२ ॥

बध्वा हस्ते दृढं तेन स्पृशन्वशति तेजनात् ।
मधूकस्य च बन्दाकमाश्लेषायां समाहरेत् ॥ ४३ ॥

बन्धयेद्दक्षिणे हस्ते व्याघ्रादिभयनाशनम् ।
मघासु मुचुकुन्दस्य वन्दाकं विधिनाऽऽहृतम् ॥ ४४ ॥

निधापयेद्धान्यमध्ये तद्धान्यं त्वक्षयं भवेत् ।
विभीतकस्य वन्दाकं फल्गुन्योः पूर्वयोर्हृतम् ॥ ४५ ॥

स्थापयेद्धान्यमध्येन तदक्षय्यं क्षणाद्भवेत् ।
फल्गुन्योरन्ययोर्हस्तेऽप्ययमेव विधिस्स्मृतः ॥ ४६ ॥

शाकवृक्षस्य वन्दाकं मघायां विधिनाऽऽहरेत् ।
धान्यसंचयकृद्द्वारे धान्यवृद्धिश्च जायते ॥ ४७ ॥

मौञ्जीवृक्षस्य वन्दाकं मघार्के विधिनाऽऽहरेत् ।
शिरसा धारयेन्नित्यं तस्य श्रीर्वशमाप्नुयात् ॥ ४८ ॥

पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाऽऽहरेत् ।
करे शिरसि बध्नीयाद्व्याघ्रादिग्रहहृद्भवेत् ॥ ४९ ॥

तिन्दुकस्य च वन्दाकं चित्रायामाहृतं तथा ।
बध्वा हस्ते समस्तानां सध्वधो भवति द्विषाम् ॥५०॥

कुटजस्य तु वन्दाकं चित्रायां विधिनाऽऽहरेत् ।
बध्नीयाद्दक्षिणे हस्ते दुर्लभं चेप्सितं लभेत् ॥ ५१ ॥

स्वात्यां लिकुचवन्दाकं गृहीत्वा यत्र वस्तुनि ।
निधापयति तत्सर्वमक्षयं नात्र संशयः ॥ ५२ ॥

बब्बूलबध्नकं स्वात्यां बदर्यास्त्वनुराधके ।
बध्नन्यो धारयेद्धस्ते तत्स्पृष्टा स्त्री वशा भवेत् ॥५३॥

आहृत्य धात्रीवन्दाकं विशाखायां यथाविधि ।
शुक्तकारस्य भवने विरुद्धस्य निधापयेत् ॥ ५४ ॥

सर्वं मद्यमपेयं स्यान्मोक्षस्तस्मिन्समुद्धृते ।
अनुराधासु विधिना ऐन्द्रीवन्दाकमाहृतम् ॥ ५५ ॥

धान्यमध्ये विनिक्षिप्तं धान्यमक्षयतां नयेत् ।
ज्येष्ठायामाम्रवन्दाकं हृत्वा वेश्यागृहे खनेत् ॥ ५६ ॥

सा दुर्भगा भवेत्सत्यमुद्धृते मोक्ष उच्यते ।
मूले खदिरवन्दाकं गृहीत्वा विधिपूर्वकम् ॥ ५७ ॥

बध्वा हस्ते नरः क्षिप्रं दुर्भगस्सुभगो भवेत् ।
तदेव पिष्टं क्षीरेण पीतं कुष्ठादिनाशनम् ॥ ५८ ॥

मूलार्के गोदृक्कायाश्च वन्दाकं विधिनाऽऽहरेत् ।
दक्षिणे बन्धयेद्धस्ते स्त्रीवश्यं भवति ध्रुवम् ॥ ५९ ॥

तदेव शिरसा धार्यं सर्वसिद्धिर्भवेद्ध्रुवम् ।
करवीरस्य वन्दाकं पूर्वाषाढासु साधितम् ॥ ६० ॥

धारयेच्छिरसा युद्धे स भवेदपराजितः ।
पूर्वाषाढासु वन्दाकं बदरीवृक्षसम्भवम् ॥ ६१ ॥

पिबेत्क्षीरेण या वन्ध्या सा बहूंश्च सुतांल्लभेत् ।
कुरवस्य तु वन्दाकं पूर्वाषाढार्कवारके ॥ ६२ ॥

बन्धयेद्दक्षिणे हस्ते ह्यदृश्यो जायते नरः ।
उत्तराषाढनक्षत्रे ग्राह्यं मन्दारबन्नकम् ॥ ६३ ॥

पलाशबन्नकं वाऽथ करे बध्वा वशंकरम् ।
श्रवणे चिल्वकोद्भूतं वन्दाकं प्राप्यते न तु ॥ ६४ ॥

कंकुणीतैलघृष्टेन ताम्रपत्रं च लेपयेत् ।
पुटपाकविधानेन तत्स्वर्णं भवति ध्रुवम् ॥ ६५ ॥

एरण्डस्य तु वन्दाकं श्रवणार्के समाहरेत् ।
बन्धयेद्दक्षिणे हस्ते सदा द्यूतजयो भवेत् ॥ ६६ ॥

धनिष्ठायां तु बदरीवन्दाकं विधिनाऽऽहृतम् ।
बध्वा करे स्पृशेद्यं यं स स दासो भवेद्ध्रुवम् ॥ ६७ ॥

हृतं पुन्नागवन्दाकं वारुणेषु यथाविधि ।
क्षीरेण पिष्ट्वा प्रपिबन्महानागबलो भवेत् ॥ ६८ ॥

नक्तमालस्य वन्दाकं मघार्के विधिनाऽऽहरेत् ।
विधिना धारयेद्बाहौ पिशाचानां च दर्शनम् ॥ ६९ ॥

तिन्त्रिणीकस्य वन्दाकं पुन्न(पूर्व ?)र्क्षे विधिनाऽऽहरेत् ।
बन्धयेद्दक्षिणे हस्ते नित्यं द्यूतजयो भवेत् ॥ ७० ॥

पुन्न(पूर्व ?)र्क्षे वंशवन्दाकमदृश्यो जायते करे ।
शिरीषस्य तु वन्दाकमुत्तरे विधिनाऽऽहरेत् ॥ ७१ ॥

करे शिरसि बध्नीयाद्व्याघ्रादिग्रहहृद्भवेत् ।
मघायां स्थापयेत्क्षेत्रे वन्दाकं मधुकोद्भवम् ॥ ७२ ॥

पक्षिणां मूषिकानां च जायते तुण्डबन्धनम् ।
पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाऽऽहरेत् ॥ ७३ ॥

लिङ्गलेपं प्रकुर्वीत वीर्यस्तम्भो भवेद्ध्रुवम् ।
क्षीरेणालोड्य वल्लीकं क्षौद्रं पिष्ट्वा निषेचयेत् ॥७४ ॥

वङ्गं तु सप्तधा देवि ! तद्वङ्गं रजतं भवेत् ।
पलाशस्य तु वन्दाकं हस्तर्क्षे विधिनाऽऽहरेत् ॥ ७५ ॥

क्षीरेण प्रपिबेद्यस्तु ह्यदृश्यो जायते नरः ।
तिन्दुकस्य च वन्दाकं चित्रायामाहृतं तथा ॥ ७६ ॥

बध्वा हस्ते समस्तानामबध्यो भवति द्विषाम् ।
हरीतक्यास्तु वन्दाकं पूर्वभाद्रपदाहृतम् ॥ ७७ ॥

क्षीरेण कल्कितं पीत्वा चरेद्धररुचेस्समः ।
उत्तरास्वर्कवन्दाकं हृतं भाद्रपदासु तत् ॥ ७८ ॥

प्रलेपाद्यैः परं हन्याद्विषं स्थावरजङ्गमम् ।
रेवत्यां बोधिवन्दाकलतया कृतकौतुका ॥ ७९ ॥

वन्ध्याऽपि लभते गर्भं पीत्वा गोपयसा च तत् ।
रेवत्यां वटवन्दाकं वल्मीकमधुघर्षितम् ॥ ८० ॥

अक्षिदोषेष्वतिश्रेष्ठमक्षरावरणादिषु ।
रेवत्यां वटवन्दाकं गृहीत्वा धारयेद्भुजे ॥ ८१ ॥

महानागबलोपेतो महागणश्च जायते।
समुद्धृतं विशाखायां वन्दाकं राजवृक्षकम् ॥ ८२ ॥

निवारयति गेहस्थं वैश्वानरभयं गृहे।
रोहिण्यां वटवन्दाकं कटिस्थं वीर्यवर्धनम् ॥ ८३ ॥

अश्वत्थभववन्दाकं रेवत्यां गर्भदं स्मृतम्।
विषवृक्षोत्थवन्दाकं पूर्वाषाढोद्धृतं यदि ॥ ८४ ॥

प्रलिप्तं तनुते भूतपिशाचादिप्रभाषणम्।
चुल्लिकान्तर्गतं कुर्यात्सभक्तां पानसन्ततिम् ॥ ८५ ॥

चूते जांबववन्दाकं रेवत्यां जयकारकम्।
कुर्यात्कुरववन्दाकं हस्तस्थं बाणवारणम् ॥ ८६ ॥

मधूकवृक्षवन्दाकं धान्यस्थं धान्यवृद्धिदम्।
पलाशतरुवन्दाकं वाक्प्रदं क्षीरसेवितम् ॥ ८७ ॥

वेश्यायां निम्बवन्दाकं गृहान्तर्निहितं यदि।
वश्यं करोति साश्चर्यमाजन्ममरणान्तिकम् ॥ ८८ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ द्वाविंशोल्लासः ॥

---

# ॥ त्रयोविंश उल्लासः ॥

---

### विशिष्टा रससंस्काराः ॥

श्रीभैरवी—

श्रुतं सर्वं मया देव! दिव्यं सर्वरसायनम्।
शंभो! तव प्रसादेन कृपांभोधे सुरेश्वर! ॥ १ ॥

विज्ञापयिष्याम्यपरं सर्वलोकहितङ्करम् ।
वृद्धस्त्रीबालषण्डानामन्येषां रोगिणामपि ॥ २ ॥

रसायनेष्वशक्तानां कथं सौख्यं भवेत्प्रभो ! ।
सर्वानुग्राहक श्रीमन् ! तदाज्ञापय भैरव ! ॥ ३ ॥

श्रुत्वा देव्यास्स्तुतिपरं सर्वलोकहितप्रदम् ।
श्रुत्वा मन्दस्मितं देवो जगादेत्थं परं वचः ॥ ४ ॥

श्रीभैरवः—

साधु साधु महाभागे ! लोकानां जननी यतः ।
तस्माल्लोकहितं पृष्टं तद्वक्ष्याम्यहमीश्वरि ! ॥ ५ ॥

रसादिसंस्कारविधिं सर्वरोगनिबर्हणम् ।
यथाक्रमं प्रवक्ष्यामि श्रूयतामवधानतः ॥ ६ ॥

रसेन्द्रो रसराजश्च रसस्सूतश्च पारदः ।
शिवबीजं शिवो जैत्रो रसलोहो महारसः ॥ ७ ॥

रसोत्तमो महातेजास्सूतराट् चपलोऽमृतः ।
धुर्तुरो लोकनाथश्च प्रभुरिन्द्रो भवस्तथा ॥ ८ ॥

रुद्रतेजाः खेचरश्च रसधातुरचिन्त्यजः ।
अमरो देहदस्स्कन्दस्स्कन्देशो मृत्युनाशनः ॥ ९ ॥

देवो रसायनश्रेष्ठो यशोदः पावनस्स्मृतः ।
प्रोक्ता दिव्यरसाश्चैव त्रयस्त्रिंशच्च नाम च ॥ १० ॥

दोषयुक्तस्सूतराजो विषमेव वरानने ! ।
दोषहीनो रसस्साक्षादमृतं नात्र संशयः ॥ ११ ॥

तस्मात्पारदसंस्कारं दोषघ्नं शृणु पार्वति ! ।
रसाचार्यो भिषक्श्रेष्ठो यतात्माऽघोरमन्त्रवित् ॥ १२ ॥

### रसशोधनसंस्काराः॥

[प्रथमः प्रकारः।]

शुभर्क्षे शुभलग्नेषु सुमुहूर्ते सुवासरे।
पूर्वोक्तवत्सूतपूजां कुर्यादादौ शुचिस्थले॥ १३॥

शतं पलानां पञ्चाशत्पञ्चविंशति वा पुनः।
दश वा पञ्च वा देवि! नैतस्मादूनमिष्यते॥ १४॥

लोहजे वा शिलोत्थे वा खल्वे सूतं विनिक्षिपेत्।
कलांशं सूतराजस्य चूर्णेष्टकनिशारजः॥ १५॥

जम्बीराम्लेन संमर्द्य तप्तखल्वे दिनं प्रिये!।
क्षालयेदुष्णसौवीरैर्नागदोषो विनश्यति॥ १६॥

अंकोलेनेन्द्रवारुण्या वङ्गदोषो विनश्यति।
आरग्वधेन च मलं चित्रके नागदूषणम्॥ १७॥

कृष्णधूर्तेन चाञ्चल्यं त्रिफलाभिर्विषं हरेत्।
गिरिदोषं त्रिकटुकैरसह्याग्निस्तु गोक्षुरैः॥ १८॥

वङ्गादिसप्तदोषाणां नाशार्थं सप्तवासरम्।
तत्तच्चूर्णैः कलांशैश्च कुमार्या रससंयुतैः॥ १९॥

मर्दयित्वा रसं पश्चात्क्षालयेदुष्णकांजिकैः।
पारदस्सकलैर्दोषैर्मुच्यते सप्तकञ्चुकैः॥ २०॥

वैद्यकर्मणि योज्यश्चेद्रसस्स्यात्सर्वरोगहा।

[द्वितीयः प्रकारः।]

देवदारुमलयजजयावायसतुण्डिका-॥ २१॥

कुमारीमुसलीवन्ध्याकर्कोटीरससंयुतम्।
सूतं दिनं मर्दयेच्च पुनः पातनयन्त्रके॥ २२॥

पातयेद्योजयेत्सूतं शुद्धं वैद्यस्य कर्मणि ।

[तृतीयः प्रकारः ।]

दुग्धं पाषाणचूर्णं च निशाकन्यारसै रसम् ॥ २३ ॥

मर्दयेद्दिनमेकं च पूर्वयन्त्रे च पातयेत् ।
एवं संस्कारसंशुद्धं योजयेद्वैद्यकर्मणि ॥ २४ ॥

[चतुर्थः प्रकारः ।]

दरदं याममात्रं तु पारिभद्रद्रवैः प्रिये ! ।
अथवा जम्बीररसैर्मर्दयित्वा तु पाचयेत् ॥ २५ ॥
यन्त्रे पातनके देवि ! दोषकञ्चुकवर्जितः ।

[पञ्चमः प्रकारः ।]

पुनर्नवारसैः पेष्यं धान्याभ्रं पारदं समम् ॥ २६ ॥
तप्तखल्वे दिनं कृत्वा वज्रमूषागतं रसम् ।
पचेद्भूधरयन्त्रे च पुनस्संमर्दयेच्च तम् ॥ २७ ॥
पूर्वद्रवैर्यथापूर्वं मर्दनं पाचनं पुनः ।
कृत्वैतं दशवारं तं पात्यं पातनयन्त्रके ॥ २८ ॥
शुद्धस्स्यात्पारदो देवि ! योज्यो योगे रसायने ।

[षष्ठः प्रकारः ।]

दशमांशं रसाद्गन्धं तप्तखल्वे विनिक्षिपेत् ॥ २९ ॥
वराजम्बीरकन्याग्निद्रवैर्यामं विमर्दयेत् ।
पातयेत्पातनायन्त्रे कुर्यादेवं तु सप्तधा ॥ ३० ॥
सगन्धकं मर्दनं च पातनं भवति प्रिये ! ।
शुद्धस्स्यात्पारदो देवि ! योज्यः पारदकर्मणि ॥ ३१ ॥

[सप्तमः प्रकारः ।]

तिलतैलैर्माहिषिकैर्मूत्रैर्मद्याम्लकेन च ।
गोमांसैर्हिङ्गुलं पाच्यं लोहपात्रे क्रमाग्निना ॥ ३२ ॥

सप्ताहं लोहदण्डेन चालयेत्तद्द्रवं मुहुः ।
सार्द्रं मयूरपित्तेन भावयेदातपे दिनम् ॥ ३३ ॥

पातयेत्पातनायन्त्रे दरदं खरवह्निना ।
शुद्धो भवेच्चतुर्यामात्पारदो योगवाहकः ॥ ३४ ॥

**जारणार्हो बडबानलबिडः ॥**

शृणु देवि! प्रवक्ष्यामि जारणार्हं बिडं प्रिये! ।
चूर्णं कृत्वा दग्धशङ्खं घर्मेऽर्कक्षीरभावितम् ॥ ३५ ॥

कुर्याद्दिनं ततो देवि! धूमसारं च भावयेत् ।
दिनं जम्बीरकरसैरातपे चातितीव्रके ॥ ३६ ॥

चतुर्याममजामूत्रैष्षोडशांशं सुवर्चलम् ।
यथा सान्द्रत्वमाप्नोति तावत्काथ्यं वरानने! ॥ ३७ ॥

नरमूत्रे षोडशांशे कण्टकारीं समूलकाम् ।
यावद्घनीभवेत्तावत्क्काथनीया प्रयत्नतः ॥ ३८ ॥

तिन्त्रिणीक्षारकासीससर्जक्षाराश्शिलाजतु ।
जम्बीरस्य रसैस्सर्वं चतुर्यामं पृथक्पृथक् ॥ ३९ ॥

जेपालं तत्त्वचाहीनं मूलकक्षारसैन्धवम् ।
गुञ्जां च टङ्कणं शिग्रुद्रवैर्भाव्यं पृथक्पृथक् ॥ ४० ॥

जम्बीराणां द्रवैर्भाव्यं शङ्खाद्यं तत्त्रयोदश ।
सर्वं समांशं च दिनमेकीकृत्य तु गालितम् ॥ ४१ ॥

रक्षयेत्सर्वदा ज्ञेयो नाम्ना च बडबानलः ।
सुवर्णादिमलोहानां रत्नानां जारणे तथा ॥ ४२ ॥

अभ्राद्युपरसानां च योजनीयं प्रयत्नतः ।

### पारदभस्मविधिः ॥

[प्रथमः प्रकारः ।]

शुद्धसूतं शुद्धगन्धं मर्दयेद्गोघृतैस्समम् ॥ ४३ ॥

पिण्डीभूतं कुमार्याश्च दलगर्भे निवेशयेत् ।
सम्यक्सूत्रेण संवेष्ट्य तमयस्कान्तसंपुटे ॥ ४४ ॥

निरुध्य तं मृदुपुटे त्रिधा पाच्यं पुनः प्रिये ! ।
आदाय दृढमूषायामन्धयित्वा धमेत्सुधीः ॥ ४५ ॥

भस्मीभवेत्सूतराजो योज्यो योगे रसायने ।

[द्वितीयः प्रकारः ।]

छायाशुष्काणि कुर्वीत शाकपक्वफलानि च ॥ ४६ ॥

मर्दयेदर्कपयसा तेन मूषोदरं लिपेत् ।
अग्रप्रसूतगोजातजरायोश्शिषितं रजः ॥ ४७ ॥

मूषामध्ये क्षिपेत्पश्चात्सूतं गन्धश्च तद्रजः ।
क्षिप्त्वा निरुध्य च धमेद्भस्मीभवति पारदः ॥ ४८ ॥

[तृतीयः प्रकारः ।]

वन्ध्या कार्कोटकी काकतुण्डी च कटुतुंबिका ।
कंचुकी नलिका काकमाची वै कालमञ्जरी ॥ ४९ ॥

काकजंघास्त्विमास्सर्वाः पिष्ट्वा मूषान्तरे क्षिपेत् ।
पूर्वोक्तवन्ध्यामुख्याभिरष्टाभिर्मर्दयेद्रसम् ॥ ५० ॥

तद्रसं लिप्तमूषायां क्षिप्त्वा रुध्वा च भूधरे ।
पचेदेवं चाष्टवारमेवं मूषाप्रलेपनम् ॥ ५१ ॥

मर्दनं धमनं कुर्याद्भूयो भूयस्सुरेश्वरि!।
मृतो भवति सूतेन्द्रो योग्यो रोगे रसायने ॥ ५२ ॥

[चतुर्थः प्रकारः।]

नियामकौषधैर्मर्द्य चतुर्यामं रसं दृढम्।
द्विगुणे गन्धतैले च शनैर्मन्दाग्निना पचेत् ॥ ५३ ॥

यावद्खोटत्वमाप्नोति तावदेवं पचेद्रसम्।
तत्खोटं संपुटे लौहे क्षिप्त्वा रुन्ध्याद्दृढं सुधीः ॥५४॥

पथ्याजलैर्लोहकिट्टं पिष्ट्वा सम्पुटमालिखेत्।
तस्योर्ध्वं श्रावके काचं कृत्वा नागं विनिक्षिपेत् ॥५५॥

स नागो द्रवते यावत्तावदेवं धमेत्प्रिये!।
यावन्न याति काठिन्यं तावन्नैव धमेत्सुधीः ॥ ५६ ॥

पुनः कठिनतां प्राप्ते धमेत्पूर्वोक्तवन्मुहुः।
त्रियामधमनादेवं भस्मीभवति पारदः ॥ ५७ ॥

भस्मीकृते मूलिकाभिर्जारणारहितो रसः।
देहे लोहे न योज्यस्स्याद्योज्यो भेषजकर्मणि ॥ ५८ ॥

[पञ्चमः प्रकारः।]

द्विगुणे गन्धतैले च शुद्धं सूतं विमर्दयेत्।
एकाहं तं पुनर्मर्द्य सर्पाक्षीभृङ्गराडपि ॥ ५९ ॥

विष्णुक्रान्ता त्र्यहं चैषां रसैश्श्लक्ष्णं विमर्दयेत्।
पचेद्यन्त्रे त्रिसंघट्टे ह्यष्टवारमिति प्रिये! ॥ ६० ॥

कुर्याद्भस्मति सूतेन्द्रो रोगसंघातनाशनः।

[षष्ठः प्रकारः।]

श्वेतांकोलस्य मूलोत्थरसैर्मर्द्यस्त्र्यहं रसः ॥ ६१ ॥

मूषायां निक्षिपेद्रुध्वा पचेद्भूधरयन्त्रके ।
पारदो भस्मतां याति सर्वरोगहरः परः ॥ ६२ ॥

[सप्तमः प्रकारः ।]

विष्णुक्रान्तां वेदिकां च काञ्जिकेन विमर्दयेत् ।
तत्कल्केन रसो मर्द्यस्सप्तधा मूर्च्छितोत्थितः ॥ ६३ ॥

तं रसं श्रावके क्षिप्त्वा सिञ्चयेत्तद्रसैर्मुहुः ।
दीपाग्निना दिनं पच्याद्भस्म स्याल्लवणाकृतिः ॥ ६४ ॥

[अष्टमः प्रकारः ।]

काकोदुंबरिकाक्षीरैर्भावयेत्सोमरामठम् ।
पुनः पुनस्सप्तधैवं शोषयेन्मर्दयेत्सुधीः ॥ ६५ ॥

काकोदुम्बरपञ्चाङ्गं षोडशांशे जले क्षिपेत् ।
यथैकांशोऽवशिष्टस्स्यात्तेन तद्धिङ्गु मर्दयेत् ॥ ६६ ॥

तद्गोलके रसं क्षिप्त्वा मूषायां तं च रोधयेत् ।
भूधरे च पुटेदेवमष्टवारं पुनः पुनः ॥ ६७ ॥

पुटे पुटे च तद्धिङ्गु दद्यात्सूतो मृतो भवेत् ।

[नवमः प्रकारः ।]

उरुबूकस्य बीजानि तथाऽपामार्गजानि च ॥ ६८ ॥

पूर्णयेत्तच्च मूषायां क्षिप्त्वा सूतं ततः क्षिपेत् ।
तदूर्ध्वं पूर्वचूर्णं च सम्यङ्मूषां निरोधयेत् ॥ ६९ ॥

पचेल्लघुपुटैरेवं चतुर्भिर्भस्मतां व्रजेत् ।

[दशमः प्रकारः ।]

कुङ्कुहुञ्च्याः कन्दमध्ये कान्तास्तन्यपरिप्लुते ॥ ७० ॥

रसं क्षिप्त्वा मुखं रुध्वा तन्मज्जकल्कतस्सुधीः।
तं गोमयैस्समालिप्य स्वेदयेद्गोमयाग्निना ॥ ७१ ॥

एवं कृते सप्तवारं रसो भस्मत्वमाप्नुयात्।

[एकादशः प्रकारः।]

अंकोलस्य शिफानीरैस्सूतं गन्धं समं समम् ॥ ७२ ॥

दिनमेक मर्दयेच्च मूषागर्भं निरोधयेत्।
पुटेद्भूधरयन्त्रे च दिनान्ते भस्म जायते ॥ ७३ ॥

[द्वादशः प्रकारः।]

सूतं धान्याभ्रकं तुल्यं मारकौषधिजै रसैः।
मर्दयेद्दिनमेकं तु तत्कल्कैर्वस्त्रलेपनम् ॥ ७४ ॥

तद्वस्त्रं वर्तिकां कृत्वा धृत्वा दंशेन दीपयेत्।
तद्द्रुतिं पतितां कांस्ये कृष्णवर्णं च तद्भवेत् ॥ ७५ ॥

तत्पुनर्मारकैर्मर्द्यं पातनायन्त्रके पचेत्।
मृतो भवेद्दिनैकेन तद्भस्माखिलरोगहृत् ॥ ७६ ॥

[त्रयोदशः प्रकारः।]

कालधुत्तूरतैलेन मर्दनीयश्च पारदः।
ततो नियामकैर्मर्द्याद्दिनैकं कूर्मयन्त्रके ॥ ७७ ॥

पाचयेद्भस्मतां याति शुभ्रस्स्यात्सर्वरोगहा।

[चतुर्दशः प्रकारः।]

शुद्धसूतादर्धभागं शुद्धं गन्धं विमर्दयेत् ॥ ७८ ॥

मारकौषधजैर्द्रावैर्दिनं मूषागतं पचेत्।
यन्त्रे भूधरसंज्ञे च दिनेनैकेन भस्मति ॥ ७९ ॥

[पञ्चदशः प्रकारः ।]

सूतमभ्रं वटक्षीरैस्त्रियामं मर्दयेत्प्रिये ! ।
मूषागर्भे विनिक्षिप्य करीषाग्नौ दिनं पचेत् ॥ ८० ॥
भस्मीभवति सूतेन्द्रश्शुभ्रस्सर्वार्तिनाशनः ।

[षोडशः प्रकारः ।]

मुखीकृते वासिते च पारदे समकाञ्चनम् ॥ ८१ ॥
जारयेत्पूर्वयोगेन ततो गन्धं समं क्षिपेत् ।
दिव्यौषधिद्रवैर्मर्द्यं दिनं मूषाधृतं रसम् ॥ ८२ ॥
दिवानक्तं करीषाग्नौ पचेद्वा तुषवह्निना ।
स्वेदयेत्तं समुद्धृत्य भूयो दिव्यौषधोद्भवैः ॥ ८३ ॥
बीजैस्समांशैस्संमर्द्य चतुर्यामं सुरेश्वरि ! ।
वज्रमूषागतं धाम्यं भस्मीभवति पारदः ॥ ८४ ॥
तद्भस्म दिव्यं युञ्जीत सदा रोगे रसायने ।

[सप्तदशः प्रकारः ।]

खजीर्णे पारदे स्वर्णं सममम्लेन मर्दयेत् ॥ ८५ ॥
पिष्टीभूतं काञ्जिकेन प्रक्षाल्यादाय तां पुनः ।
पिष्ट्यर्धं शुद्धगन्धं च तदर्धं टङ्कणं क्षिपेत् ॥ ८६ ॥
सर्वतुल्यां निशां नारीपुष्परक्तद्रवैर्दिनम् ।
मर्दयेत्तां दिनान्ते च कुर्यात्तद्गोलकं ततः ॥ ८७ ॥
पचेद्वड्डुकयन्त्रे च दिनं मन्दाग्निना सुधीः ।
समादाय विचूर्ण्यैव दत्वा तत्समगन्धकम् ॥ ८८ ॥
गर्भयन्त्रे त्र्यहं पाच्यं लघुना तत्तुषाग्निना ।
रसो भस्म भवेद्देवि ! निरुत्थस्स्याद्रसायनम् ॥ ८९ ॥

[अष्टादशः प्रकारः।]

कर्षत्रयं शुद्धसूतं कर्षं ताम्ररजः प्रिये !।
अम्लैस्संमर्दयेद्गाढं दिनं खल्वे ततो भवेत् ॥ ९० ॥
पिष्टिस्तां क्षालयेत्तोयैस्तत आदाय निर्मलम् ।
माक्षीकसत्वं तत्सर्वं चक्रमर्दच्छदद्रवैः ॥ ९१ ॥
त्रिदिनं मर्दयेद्गाढं तां पिष्टिं गर्भयन्त्रके ।
तुषाग्निना पचेद्देवि ! त्रिदिनं वा दिवानिशम् ॥ ९२ ॥
करीषाग्नौ भवेत्सूतभस्म रोगजरापहम् ।

[एकोनविंशः प्रकारः।]

सूतं स्वर्णं व्योमसत्वं समं स्वर्णसमं बिडम् ॥ ९३ ॥
रम्भादण्डद्रवैस्सर्वं तत्खल्वे मर्दयेद्दिनम् ।
ततो दिव्यौषधोद्भूतैर्बीजैस्तुल्यं दिनद्वयम् ॥ ९४ ॥
सह संमर्दयेद्रम्भातोयैस्तद्गर्भयन्त्रके ।
पूर्वक्रमेण विपचेद्रसभस्म भवेच्छुभम् ॥ ९५ ॥
जरामरणरोगघ्नं सर्वसिद्धिप्रदायकम् ।

[विंशः प्रकारः।]

रसेन्द्रं विमलासत्वं तुल्यं मर्द्य दिनत्रयम् ॥ ९६ ॥
सिन्दुवारच्छदरसैः पिष्टिस्स्यात्तां विनिक्षिपेत् ।
काचकूप्यन्तरे कूपीं सप्तमृत्कर्पटैर्लिपेत् ॥ ९७ ॥
शोषयेद्वालुकायन्त्रे दिनं मन्दाग्निना पचेत् ।
रसभस्म भवेद्दिव्यं रुग्जरामरणापहम् ॥ ९८ ॥

[एकविंशः प्रकारः।]

कर्षद्वयं रसेन्द्रं च तदर्धं शुद्धगन्धकम् ।

माक्षीकसत्वं गन्धांशं तत्सर्वं मर्दयेद्दिनम् ॥ ९९ ॥

निर्गुण्डीपत्रसारैश्च तं गोलं निक्षिपेत्प्रिये ! ।
मूषामध्ये ततो मूषावक्त्रं रुध्वा विनिक्षिपेत् ॥१००॥

तां मूषां गड्डुकायन्त्रे पचेन्मन्दाग्निना दिनम् ।
रसभस्म भवेद्दिव्यं सिन्दूरारुणसन्निभम् ॥ १०१ ॥

जरामरणरोगघ्नं सर्वसिद्धिप्रदं शुभम् ।

[द्वाविंशः प्रकारः ।]

पक्वमूषोदरे तुल्यगन्धकान्तरितं रसम् ॥ १०२ ॥

तयोश्चतुर्गुणं दत्वा काकमाचीरसं पुनः ।
आच्छाद्य गड्डुकायन्त्रे तां निधाय पचेत्क्रमात् ॥

मृदुमध्यमचण्डाख्यवह्नौ यामचतुष्टयम् ।
ततश्च सर्वरोगघ्नं रसभस्म भवेच्छुभम् ॥ १०४ ॥

[त्रयोविंशः प्रकारः ।]

स्नुहीक्षीरैर्दिनं सूतं मर्दयेत्तदभावतः ।
अम्लवल्ल्या रसैरेव तं रसं गन्धकैस्समम् ॥ १०५ ॥

गर्भयन्त्रे विनिक्षिप्य पूर्ववद्विपचेद्बुधः ।
मृतो भवेद्रसस्सोऽयं सर्वरोगहरो भवेत् ॥ १०६ ॥

[चतुर्विंशः प्रकारः ।]

गुञ्जाफलं रससमं मधुटङ्कणयावकैः ।
भृङ्गपत्ररसैर्युक्तं दिनमेकं विमर्दयेत् ॥ १०७ ॥

छादितं वज्रमूषायां धमयेन्मृदुवह्निना ।
अयं रसायनो वृष्यो रसस्स्याच्छशिसन्निभः ॥१०८॥

[पञ्चविंशः प्रकारः।]

समं गन्धरसं शुद्धं कीटमारिणिकाद्रवैः।
अजमार्यहिमार्योर्वा श्वेतांकोलरसेन वा ॥ १०९ ॥

मर्दयेत्त्रिदिनं क्षिप्त्वा मृण्मये संपुटे ततः।
दिनमेकं करीषाग्नौ तुषाग्नौ वा दिनत्रयम् ॥ ११० ॥

पचेत्ततस्सूतभस्म जायते रुग्जरापहम्।

[षड्विंशः प्रकारः।]

ताम्राभ्रपातनायोगाच्छोधितं पारदं प्रिये! ॥ १११ ॥

वज्रभस्म समं हंसपादीद्रावैर्विमर्दयेत्।
दिव्यौषधिभवैर्बीजैर्वज्रमूषान्तरं लिपेत् ॥ ११२ ॥

तस्मिन्पूर्वरसं क्षिप्त्वा रुध्वाऽथ त्रिदिनं पचेत्।
तुषाग्निना ततोद्धृत्य तत्तुल्यं द्रुतपारदम् ॥ ११३ ॥

हंसपादीरसैस्सर्वं मर्दयेत्त्रिदिनं ततः।
पूर्ववत्तं पचेत्सोऽयं रसो भस्मति निश्चयः ॥ ११४ ॥

जरामरणरोगघ्नस्सर्वसिद्धिप्रदश्शुभः।

[सप्तविंशः प्रकारः।]

वासितं पारदं कर्षमष्टगुञ्जं सुवर्णकम् ॥ ११५ ॥

मृतवज्रं चतुर्गुञ्जं मर्द्यं हंसपदीरसैः।
तप्तखल्वे वज्रमूषागतं कृत्वा निरोधयेत् ॥ ११६ ॥

पचेद्भूधरयन्त्रे च पुनरादाय तं रसम्।
हंसपादीद्रवैर्मर्द्यं तप्तखल्वे दिनत्रयम् ॥ ११७ ॥

पूर्ववद्भूधरे यन्त्रे पचेत्तं च पुनः पुनः।
एवं शतपुटं कृत्वा भस्म स्याद्रक्तवर्णकम् ॥ ११८ ॥

जरामरणदारिद्र्यनाशनं भवनाशनम् ।

[अष्टाविंशः प्रकारः ।]

युगांशश्शुद्धसूतस्स्यादेकांशं ताम्रचूर्णकम् ॥ ११९ ॥

अम्ले दिनं मर्दयेत्तं प्रक्षाल्यादाय पिष्टिकाम् ।
ताप्यसत्वं पिष्टिसमं चक्रमर्ददलद्रवैः ॥ १२० ॥

मर्दयेत्त्रिदिनं सर्वं गोलकं गर्भयन्त्रके ।
निक्षिप्य त्रिदिनं पाच्यं तुषाग्नौ वा सुरेश्वरि ! ॥१२१॥

दिवारात्रं करीषाग्नौ पचेद्भस्म भवेद्रसः ।

[एकोनत्रिंशः प्रकारः ।]

मुखीकृतरसं चाभ्रसत्वं स्वर्णं त्रयं समम् ॥ १२२ ॥

रंभाद्रवेण सम्मर्द्य दिनं सर्वसमं बिडम् ।
ततो दिव्यौषधीनां च बीजैर्मर्द्य दिनत्रयम् ॥ १२३ ॥

गर्भयन्त्रे पचेत्पश्चात्करीषाग्नौ मृतो भवेत् ।

[त्रिंशः प्रकारः ।]

स्वजीर्णसूतं विमलां समं निर्गुण्डिकारसैः ॥ १२४ ॥

मर्दयित्वा त्र्यहं काचकूपिकायां विनिक्षिपेत् ।
सिकतायन्त्रके पाच्याच्चतुर्यामेन भस्मितः ॥ १२५ ॥

[एकत्रिंशः प्रकारः ।]

ताप्यसत्वं समं गन्धं द्वाभ्यां तुल्यं च जारितम् ।
सूतं निर्गुण्डिकां मर्द्य दिनं तद्गोलकं पुनः ॥ १२६ ॥

वज्रमूषान्धितं कृत्वा धमेद्वा गड्डुयन्त्रके ।
पचेत्तद्रक्तवर्णं स्यात्स रसस्सर्वरोगहा ॥ १२७ ॥

रसभस्मलक्षणम् ॥

अक्षयित्वं निरुत्थत्वं निर्लेपत्वं सुभस्मता।
मारकत्वं च लोहानां लक्षयेद्रसभस्मतः ॥ १२८ ॥

१. गन्धपिष्टी ॥

[प्रथमः प्रकारः।]

सञ्चूर्ण्य शोधितं गन्धं धूर्तपत्ररसेन च।
सप्तधा भावयेद्धर्मे स्त्रीणां च रजसा तथा ॥ १२९ ॥

तथा मानवपित्तेन लोलयेद्गन्धकं पुनः।
पलमेकं शुद्धरसं कर्परे चातपे न्यसेत् ॥ १३० ॥

तदूर्ध्वं लोलितं गन्धं विन्यस्याङ्गुष्ठमर्दितम्।
कुर्यात्सूतो भवेत्पिष्टिस्सर्वकर्मसु सिद्धिदः ॥ १३१ ॥

[द्वितीयः प्रकारः— स्वर्णगन्धपिष्टी।]

गन्धकं शोधितं देवि! तिलपर्णीरसेन च।
सप्तधा मर्दयेच्छोष्यं छायायां भावयेत्क्रमात् ॥१३२॥

मूषायां पारदं शुद्धं पलमात्रं विनिक्षिपेत्।
सुवर्णनिष्कगुलिकां मूषायां निक्षिपेत्ततः ॥ १३३ ॥

तत्र नारीरजोमूत्रमलमात्रं विनिक्षिपेत्।
वालुकायन्त्रमध्ये च तां मूषां स्थापयेच्छिवे! ॥१३४॥

अल्पमल्पं पूर्वगन्धं वारं वारं विनिक्षिपेत्।
मृद्वग्निना पचेद्यावत्कर्षगन्धं च जीर्यते ॥ १३५ ॥

अवतार्य स्वाङ्गशीतमाहरेत्स्वर्णगोलकम्।
स्वर्णपिष्टिर्भवेद्दिव्या सर्ववाञ्छितदायिनी ॥ १३६ ॥

[तृतीयः प्रकारः।]

भावयेन्मर्कटीतोयैश्शतधा शुद्धगन्धकम्।

[षष्ठः प्रकारः।]

ऽवे पलं सूतं कर्षार्धं गन्धकं क्षिपेत्।
ना पचेद्यामं कराङ्गुष्ठेन चालयेत्॥ १४८॥
ष्टिर्भवेद्दिव्या सर्वकर्मकरी शुभा।

**पिष्टीस्तम्भनम्॥ (२)**

ां स्तम्भनं वक्ष्ये तिक्तकोशातकीभवम्॥ १४९॥
ण्डालिनीकन्दं तुल्यं कान्तास्तनोद्भवैः।
पिष्ट्वा च तां पिष्टीं लेपयेदङ्गुलं दृढम्॥ १५०॥
कन्देऽथवा क्षीरकन्दे वा सूरणोद्भवे।
वा वज्रकन्दे वा कन्दे वा कुङ्कुंचिजे॥१५१॥
ष्टिं निक्षिपेत्तत्तन्मज्जया रोधयेन्मुखम्।
ऽ च मृदा लिप्त्वा पुटेद्भूधरयन्त्रके॥ १५२॥
क्तं करीषाग्नावूर्ध्वाधः परिवर्तनम्।
कन्दं तु न दहेत्तथा पाकक्रमस्स्मृतः॥१५३॥
पेष्टिं समानीयाद्भवेत्सा स्तम्भिता प्रिये!।

**पिष्टीजारणम्॥ (२)**

ां स्तम्भितानां च जारणा वक्ष्यते शिवे!॥
न्त्रे लोहकृते गन्धकं पिष्टितुल्यकम्।
र्ध्वं च देवेशि! स्तम्भितां गन्धपिष्टिकाम्॥
पिष्टितुल्यं च गन्धकं चूर्णितं क्षिपेत्।
ा भूधरे यन्त्रे पाचयेज्जारयेत्क्रमात्॥ १५६॥
पुनःपुनर्देयमेवं शतगुणं प्रिये!।
शतगुणे गन्धे यन्त्रात्पिष्टिं समाहरेत्॥ १५७॥

सर्वासां गन्धपिष्टीनां जारणं स्याच्च रञ्जनम् ।

पिष्टीमारणम् ॥ (२)

जारितानां च पिष्टीनां प्रवक्ष्ये मारणक्रमम् ॥ १५८ ॥

तप्तखल्वे विनिक्षिप्य जारितां गन्धपिष्टिकाम् ।
दिव्यौषधिरसैः पिष्ट्वा दिनं कुर्याच्च गोलकम् ॥१५९॥

दिव्यौषधीनां बीजानि पिष्ट्वा दिव्यौषधोद्भवैः ।
स्वरसैर्वज्रमूषान्तर्लेपयेत्पूर्वगोलकम् ॥ १६० ॥

क्षिप्त्वा निरुध्य मूषास्यं पचेद्भूधरयन्त्रके ।
प्रवर्तयंश्चोर्ध्वमधो दिनमेकं पुनः प्रिये ! ॥ १६१ ॥

समाहृत्य यथापूर्वं पूर्वतोयैश्च मर्दयेत् ।
पुटयेत्पूर्ववद्देवि ! दशवारमिति क्रमात् ॥ १६२ ॥

असंशयं गन्धपिष्टिर्म्रियते सर्वकार्यकृत् ।
गन्धपिष्टिक्रमाज्जातरसभस्मानि भैरवि ! ॥ १६३ ॥

सर्वकर्मसु मुख्यानि विशेषाद्वादकर्मणि ।

रसबन्धाः ॥

[प्रथमः प्रकारः– वैक्रान्तबन्धः ।]

वक्ष्यामि रसबन्धानि शृणु भैरवि ! सम्प्रति ॥१६४॥

शोधितं पारदं खल्वे दशनिष्कं विनिक्षिपेत् ।
निष्कैकं शुद्धगन्धं च स्वल्पं स्वल्पं विनिक्षिपेत् ॥१६५॥

कुट्टयेन्मर्दयेद्ग्राव्णा पिष्टिस्स्याद्यामघातके ।
क्षीरकन्देऽथवा वन्ध्याकन्दे वा कुङ्कुञ्चिजे ॥१६६॥

कन्दे वा निक्षिपेत्पक्वे शुभे गन्धकपिष्टिकाम् ।
निष्कार्धं भस्म वैक्रान्तमूर्ध्वाधो निक्षिपेत्सुधीः ॥१६७॥

तत्कन्दमज्जया वक्त्रं निरुध्य च मृदा बहिः ।
लिम्पेदङ्गुलिमात्रेण शोषयित्वाऽथ सर्वतः ॥ १६८ ॥

अष्टवारं पचेद्यन्त्रे भूधरे कौक्कुटे पुटे ।
करीषाग्नौ पुनः कुर्यादूर्ध्वभागमधः प्रिये ! ॥ १६९ ॥

अधोभागं तथोर्ध्वं च भूयो भूयः प्रवर्तनम् ।
एवमेकदिनं पश्चात्पचेद्युगकरीषकैः ॥ १७० ॥

पक्वदाडिमबीजाभो बद्धो भवति पारदः ।
वैक्रान्तबद्धनामा स्याच्चूर्णितो योगवाहकः ॥ १७१ ॥

[द्वितीयः प्रकारः– गन्धकबन्धः ।]

पूर्वोक्तां गन्धपिष्टीं तां वस्त्रे बध्वाऽथ संपुटे ।
लोहजे पोट्टलीं स्थाप्य चोर्ध्वाधस्समगन्धकम् ॥ १७२ ॥

निरुध्य संपुटं सम्यक् पचेत् भूधरयन्त्रके ।
यथा जीर्णो भवेद्गन्धो भूयो भूयस्तथाऽपि च ॥ १७३ ॥

एवं षड्गुणगन्धस्तु जारणीयो महेश्वरि ! ।
एवं गन्धकबद्धोऽयं रसस्सर्वामयापहः ॥ १७४ ॥

[तृतीयः प्रकारः– गन्धकबन्धः ।]

षोडशाङ्गुलदीर्घा च जम्बीरफलविस्तृता ।
पक्वमूषा दृढतरा वालुकायन्त्रमध्यतः ॥ १७५ ॥

त्रिभागमग्नां कुर्वीत बहिः पादांशसंस्थिताम् ।
तस्यां क्षिपेद्गन्धसूतं पलमेकं सुरेश्वरि ! ॥ १७६ ॥

सूतादथोर्ध्वभागे तु द्विपलं शुद्धगन्धकम् ।
निक्षिपेत्तन्मुखं सम्यग्रोधयेन्मन्दवह्निना ॥ १७७ ॥

पचेन्निर्धूमता यावत्तावद्धूमे गते पुनः ।
काकमाचीद्रवैः पूर्या तद्द्रवे जीर्णतां गते ॥ १७८ ॥

रसेन नागवल्ल्याश्च पूरणीया पुनः प्रिये ! ।
उन्मत्तकरसैः पूर्या शनैर्मन्दाग्निना पचेत् ॥ १७९ ॥

गन्धकं जीर्यते यावत्काकमाच्यादिकद्रवैः ।
धत्तूरान्तैः पचेदेवं बद्धो भवति पारदः ॥ १८० ॥

नाम्ना गन्धकबद्धोऽयं सर्वयोगेषु योजयेत् ।

[चतुर्थः प्रकारः– गन्धकस्वर्णबन्धः ।]

पूर्ववद्गन्धपिष्टिं च विधायाऽऽदौ विचक्षणः ॥१८१॥

सप्तार्धनिष्कसूतस्यादध्यर्धं शुद्धहाटकम् ।
याममम्लेन सम्मर्द्य ख्यातोऽयं हेमपिष्टिका ॥ १८२ ॥

गन्धपिष्टिं हेमपिष्ट्या समयाऽऽवेष्ट्य बाह्यतः ।
स्तनाकारे लोहमये संपुटे वस्त्रबन्धिताम् ॥ १८३ ॥

कृत्वा तां पिष्टिकां क्षिप्त्वा पिष्ट्यूर्ध्वाधश्च गन्धकम् ।
सर्वतुल्यं क्षिपेत्सन्धिं रुध्वाऽम्ललवणैस्सुधीः ॥ १८४ ॥

पचेद्भूधरयन्त्रे च जीर्णे जीर्णे पुनः पुनः ।
षड्गुणं गन्धकं दद्यात्ततो वस्त्रं शनैर्हरेत् ॥ १८५ ॥

समांशं गन्धकं भूयो भूयो जार्यं शनैश्शनैः ।
निश्शेषं गन्धकं नैव कुर्याच्चेत्पारदच्युतिः ॥ १८६ ॥

एवं शतगुणे जीर्णे गन्धपिष्टिं समाहरेत् ।
तत्समांशसुवर्णस्य संपुटे पिष्टिकां क्षिपेत् ॥ १८७ ॥

काचं कन्याद्रवैः पिष्ट्वा लेपयेद्बाह्यतोऽङ्गुलम् ।
ततष्टङ्कणकैर्लिप्त्वा पश्चान्मृल्लवणैः क्रमात् ॥ १८८ ॥

एकैकं लेपनं कार्यं वेष्टयमङ्गुलमानकम् ।
प्रतिलेपं शोषयेच्च कोष्ठीयन्त्रगतं धमेत् ॥ १८९ ॥

वङ्कनालेन तीव्रेण वह्निना प्रहरं भवेत्।
उदयादित्यसङ्काशं खोटं दिव्यरसायनम् ॥ १९० ॥
गन्धहाटकबन्धोऽयं जराव्याधिदरिद्रहा।

[पञ्चमः प्रकारः– गन्धकबन्धः।]

अथवा गन्धपिष्टिं तां वस्त्रे बध्वाऽथ गन्धकम् ॥
तुल्यं दत्वा निरुध्याथ संपुटे लोहजे दृढम्।
पुटेत्तद्भूधरे तावद्यावज्जीर्यति गन्धकम् ॥ १९२ ॥
एवं पुनः पुनर्देयं यावद्गन्धं तु षड्गुणम्।
इत्येवं गन्धके बद्धस्सूतस्स्यात्सर्वरोगजित् ॥ १९३ ॥

[षष्ठः प्रकारः– मूलिकाबन्धः।]

कार्कोटीमूलजैर्द्रावैः पारदं मर्दयेद्दिनम्।
मर्कटीमूलजे पिण्डे क्षिपेत्तं मर्दितं रसम् ॥ १९४ ॥
तं पिण्डं वज्रमूषायां रुध्वा तीव्राग्निना पचेत्।
जायते खोटबद्धोऽयं सर्वकार्यकरश्शुभः ॥ १९५ ॥

[सप्तमः प्रकारः– मूलिकाबन्धः।]

अर्कमूलं रविक्षीरैः पिष्ट्वा मूषां प्रलेपयेत्।
तन्मध्ये रञ्जितं सूतं क्षिप्त्वा बध्वाऽथ रोधयेत् ॥
मृण्मये संपुटे तं च निरुध्याल्लोहसंपुटे।
पचेद्गजपुटे पश्चात्पारदो बन्धमाप्नुयात् ॥ १९७ ॥

[अष्टमः प्रकारः– मूलिकाबन्धः।]

जलकुम्भीरसैस्सूतं मर्दयेद्दिवसत्रयम्।
जलकुम्भीदलैर्मूषां कृत्वा तत्र क्षिपेद्रसम् ॥ १९८ ॥
रुध्वा तां वज्रमूषायां छायाशुष्कं पुटेल्लघु।

छगणैरेकवृद्ध्या तु त्रिंशद्वारं पुटैः पचेत् ॥ १९९ ॥
ततो गजपुटे देयं सम्यग्बद्धो भवेद्रसः ।

[नवमः प्रकारः– मूलिकाबन्धः ।]

एकवीराद्रवैर्मर्द्यं दिनं शुद्धं तु सूतकम् ॥ २०० ॥
एकवीराकन्दकल्कैर्वज्रमूषां प्रलेपयेत् ।
तस्यां पूर्वरसं क्षिप्त्वा ध्माते बद्धो भवेद्रसः ॥२०१॥

[दशमः प्रकारः– मूलिकाबन्धः ।]

आरक्तक्षीरकन्दोत्थद्रवैस्स्त्रीस्तन्यसंयुतैः ।
त्रिदिनं पारदं मर्द्यं वज्रकन्दद्रवैस्त्र्यहम् ॥ २०२ ॥
क्षीरकन्दस्य कल्केन वज्रमूषां प्रलेपयेत् ।
तत्र पूर्वरसं बध्वा(दत्वा) ध्माते बद्धो भवेद्रसः ॥२०३॥

[एकादशः प्रकारः– मूलिकाबन्धः ।]

अर्कमूलफलं पिष्ट्वा मूषां तेन प्रलेपयेत् ।
तन्मध्ये निक्षिपेन्मूषां पुङ्खामूलविनिर्मिताम् ॥२०४॥
तन्मध्ये सूतकं क्षिप्त्वा पुङ्खामूलसमुद्भवैः ।
पूरयित्वा रसैर्मूषां निरुध्यात्तन्मुखं दृढम् ॥ २०५ ॥
एवमन्धीकृतां मूषां क्षिपेत्सम्पुटमध्यतः ।
ततस्तं लेपयेद्यत्नाल्लवणेन मृदा तथा ॥ २०६ ॥
ततोऽसौ पुटयोगेन सूतो बन्धमवाप्नुयात् ।
राजिकाद्वयमात्रेण चित्रकद्रवसैन्धवैः ॥ २०७ ॥
चूर्णितो भक्षितः प्रातस्सर्वरोगविनाशकः ।

[द्वादशः प्रकारः– मूलिकाबन्धः ।]

कपित्थस्य शिफानीरैर्याम सूतं विमर्दयेत् ॥ २०८ ॥

अन्यस्यामन्धमूषायां सूतमूषां निरोधयेत्।
तथा धमेत्ततो मूषां यथा सिन्धूरबद्भवेत्॥ २०९॥

एवं कृते रसेन्द्रोऽसौ बध्यते नात्र संशयः।
मूलिकाबन्धनं ह्येतद्रसेन्द्रस्य प्रकीर्तितम्॥ २१०॥

इत्येते मारितास्सूता मूर्च्छिता बन्धमागताः।
प्रत्येकं योजितास्तत्र प्रयोगैर्योगवाहिनः॥ २११॥

## रसमूर्च्छनाविधिः॥

### [प्रथमः प्रकारः।]

अथ शुद्धस्य सूतस्य मूर्च्छनाविधिरुच्यते।
मेघनादवचाहिङ्गुलशुनैर्मर्दयेद्रसम्॥ २१२॥

दिनं पिष्टं तु तद्गोलं हिङ्गुना वेष्टयेद्बहिः।
पचेल्लवणयन्त्रस्थं दिनैकं चण्डवह्निना॥ २१३॥

ऊर्ध्वलग्नं समादाय दृढं वस्त्रेण बन्धयेत्।
ऊर्ध्वाधो गन्धकं तुल्यं दत्वा सोमानले पचेत्॥२१४॥

जीर्णे गन्धं पुनर्देयं षड्भिर्वा रैस्समं समम्।
षड्गुणे गन्धके जीर्णे मूर्च्छितो रोगहा भवेत्॥२१५॥

### [द्वितीयः प्रकारः।]

गन्धकं धूमसारं च शुद्धं सूतं समं समम्।
यामैकं चूर्णयेत्खल्वे काचकुप्यां निवेशयेत्॥२१६॥

रुध्वा द्वादशयामान्तं वालुकायन्त्रके पचेत्।
स्फोटयेत्स्वांगशीतं तमूर्ध्वस्थं गन्धकं त्यजेत्॥२१७॥

अधस्स्थं रसमादाय सर्वयोगेषु योजयेत्।

[तृतीयः प्रकारः ।]

शुद्धसूतं तथा गन्धं सूतार्धं सैन्धवं क्षिपेत् ॥ २१८ ॥

द्रवैस्सितजयन्त्याश्च मर्दयेद्दिवसत्रयम् ।
कृत्वा गोलं तु संशोष्य मूषायां तं निरोधयेत् ॥२१९॥

शोषयित्वा धमेत्किञ्चित्सुतप्तेऽथ जले क्षिपेत् ।
तस्माद्रसं समुद्धृत्य त्रिकन्दरसभावितम् ॥ २२० ॥

योजयेत्सर्वरोगेषु धमेद्वा भूधरे पचेत् ।

[चतुर्थः प्रकारः ।]

रसार्धं गन्धकं मर्द्यं घृतैर्युक्तं तु गोलकम् ॥ २२१ ॥

कृत्वा तद्बन्धयेद्वस्त्रे डोलायन्त्रगतं पचेत् ।
गोमूत्रे तद्वतं यामं नरमूत्रैर्दिनत्रयम् ॥ २२२ ॥

शोषयेत्तत्पुनर्वस्त्रैर्बध्वा वेष्टयं मृदा दृढम् ।
शुष्कं निरुध्य मूषायां पचेदथ तुषाग्निना ॥ २२३ ॥

ऊर्ध्वभागमधः कृत्वा त्वधोभागमथोर्ध्वगम् ।
इत्यादिपरिवर्तेन स्वेदयेद्दिवसत्रयम् ॥ २२४ ॥

पश्चादुद्धृत्य तं सूतं योगवाहं रुजापहम् ।
सद्योजातस्य बालस्य विष्ठां पालाशबीजकम् ॥ २२५ ॥

चण्डालीरुधिरं सूतं सूतपादं च टङ्कणम् ।
जयन्त्या मर्दयेद्द्रावैर्दिनमेकं तु गोलकम् ॥ २२६ ॥

पिष्टया सहदेव्याऽथ लेपयेत्ताम्रसम्पुटम् ।
तन्मध्ये गोलकं क्षिप्त्वा द्वियामं स्वेदयेल्लघु ॥ २२७ ॥

वालुकायन्त्रमध्ये तु समुद्धृत्य ततः पुनः ।
चित्रकैस्सहदेव्या च गन्धकं लेपयेद्बहिः ॥ २२८ ॥

सम्पुटं बन्धयेद्वस्त्रे मृदा लेप्यं च शोषयेत् ।
तं रुध्वा चान्यमूषायां ध्माते सम्पुटमाहरेत् ॥२२९॥

सूक्ष्मचूर्णं हरेद्रोगान्योगवाहो महारसः ।
सम्पुटं सूततुल्यं स्याच्छास्त्रदृष्टेन कर्मणा ॥ २३० ॥

[पञ्चमः प्रकारः ।]

धुत्तूरकद्रवैर्मर्द्य दिनं गन्धांशसूतकम् ।
अन्धमूषागतं स्वेद्यं भूधरे मूर्च्छितो दिनात् ॥२३१॥

[षष्ठः प्रकारः ।]

कृत्वा षडङ्गुलां मूषां सुपक्कां मृण्मयीं दृढाम् ।
मूषागर्भे विलिप्याथ मूलैर्वर्तुलपत्रजैः ॥ २३२ ॥

तन्मध्ये सूतकं क्षिप्त्वा मूषां पूर्यात्तु तद्द्रवैः ।
रुध्वा तां वालुकायन्त्रे चुल्यां दीपाग्निना पचेत् ॥

सप्ताहान्ते समुद्धृत्य योजयेत्तं जरापहम् ।

[सप्तमः प्रकारः ।]

कुरण्डकरसैस्सान्द्रमातपे मर्दयेद्रसम् ॥ २३४ ॥

लताकरञ्जपत्रोत्थैः पादांगुष्ठेन मर्दयेत् ।
दिनैकं मूर्च्छितं सम्यक् सर्वयोगेषु योजयेत् ॥२३५॥

[अष्टमः प्रकारः ।]

कासीसं सैन्धवं सूतं तुल्यं तुल्यं विमर्दयेत् ।
कासीसस्याप्यभावे तु दातव्या फुल्लतूरिका ॥ २३६ ॥

स्तोकं स्तोकं क्षिपेत्खल्वे लयमेकत्र मूर्च्छयेत् ।
प्रत्येकं शतनिष्कं स्यादूनं नैवाधिकं क्वचित् ॥ २३७ ॥

स्थालीसम्पुटयन्त्रेण दिनं चण्डाग्निना पचेत् ।
ऊर्ध्वलग्नं ततश्शुभ्रं मूर्च्छितं चाहरेच्छुभम् ॥ २३८ ॥

[नवमः प्रकारः ।]

अथ शुद्धस्य सूतस्य मूर्च्छितस्यापरो विधिः ।
सूततुल्यं मृतं स्वर्णं द्वाभ्यां तुल्यं च गन्धकम् ॥

रविक्षीरैर्दिनं मर्द्यमन्धयेद्भूधरे पुटे ।
दिनैकेन भवेत्सिद्धो रसो हैरण्यगर्भकः ॥ २४० ॥

शुभ्रश्शोणोऽथवा कृष्णवर्णो गुरुतरो रसः ।
पुनरुत्थानवान्यस्तु मूर्च्छितस्स उदाहृतः ॥ १४१ ॥

मूलिकाबन्धाः ॥

श्रीभैरवी—

[1]कीदृशी ओषधी नाथ ! रसमूर्च्छाकरी शुभा ।
केन वा भस्म सूतश्च केन वा खोटबन्धनम् ॥२४२॥

श्रीभैरवः—

शृणु भैरवि ! तत्वेन रहस्यं रसबन्धनम् ।
ब्रह्मविष्णुसुरेन्द्राद्यैर्न ज्ञातं सुरवन्दिते ! ॥ २४३ ॥

[निशाचरमूलिकाकल्पः ।]

गङ्गायमुनयोर्मध्ये प्रयागो नाम राक्षसः ।
तस्यासने(न्ने) वरारोहे ! क्षणाद्बध्येत सूतकः ॥२४४॥

---

1. इत आरभ्य चतुर्विंशोल्लासावधिर्भागो रसार्णवे १२–१५ पट ष्वनेनैव पाठेनोपलभ्यते । परं अत्रानुपलब्धाः केचन श्लोका रसार्णवे उ लभ्यन्ते ; ये क्वचिद्भावपोषणाय अर्थविशदनाय क्वचित् संभावितत्रुट पोहनाय चावश्यमनुसन्धेया इति तत्तत्स्थलेऽङ्केन पृष्ठस्याधस्तत्र तत्रोद् यन्ते । मुख्याश्च पाठभेदास्तत्र तत्र ( ) मुद्रया दीयन्ते ॥

निशाचरस्य पत्राणि गृह्णीयात्साधकोत्तमः।
ततो निपीड्यते देवि! रसो भवति चोत्तमः ॥२४५॥

रसं सम्मर्द्य तेनैव दिनानि त्रीणि वार्तिकः।
आरोटं बन्धयेत्क्षिप्रं गगनं तत्र जारयेत् ॥ २४६ ॥

तेन पत्ररसेनैव साधयेद्गन्धकं पुनः।
सप्तधा भावितं तेन त्र्यूषणेन सहैकतः ॥ २४७ ॥

यन्त्रे विद्याधरे देवि! गगनं तत्र जारयेत्।
मासमात्रेण देवेशि! जीर्यते तु समं समम् ॥२४८॥

समजीर्णे तु गगने शतवेधी भवेद्रसः।
निशाचररसे देवि! गन्धकं भावयेत्ततः ॥ २४९ ॥

भावयेत्सप्तवारं तु द्विपद्याश्च रसेन तु।
तारस्य पत्रलेपेन अर्धार्धे काञ्चनोत्तमम् ॥ २५० ॥

गन्धके समजीर्णेऽस्मिन्शतवेधी भवेद्रसः[1]।
निशाचररसैर्भाव्यं सप्तवारं तु तालकम् ॥ २५१ ॥

तेनैव घातयेद्वङ्गं ना(वं)गं तारे तु निर्वहेत्।
तत्तारं जारयेत्सूते तत्सूतं बन्धितं भवेत्[2] ॥ २५२ ॥

---

1. पुनस्तं गन्धकं दत्वा पत्रलेपे रविं हरेत्।
तं रविं तारमध्ये तु त्रिगुणं वाहयेत्ततः॥

हेमार्धे मिलितं हेम मातृकासमतां व्रजेत्।
पुनस्तं गन्धकं साक्षाद्द्रावयित्वा द्रुतं कुरु॥

रसेन्द्रं मर्दयेत्तेन गवदेहं तु कारयेत्।
लेपमात्रेण तेनैव कुष्ठानष्टादश प्रिये!॥

अर्शो भगन्दरं लूतां शिरोरोगांश्च नाशयेत्।

2. लेपमात्रेण तेनैव चतुष्षष्टितमो भवेत्।

चतुष्षष्टितमे भागे शुल्बवेधं तु दापयेत् ।
तदंशं(तारं) जायते श्रेष्ठं धर्मकामार्थमोक्षदम् ॥ २५३ ॥

निशाचरस्य पुष्पाणि सूक्ष्मचूर्णानि कारयेत् ।
पलानि दशचूर्णस्य रसैर्धात्र्यास्तु भावयेत् ॥ २५४ ॥

घृतेन मधुनाऽऽलोड्यं नवभाण्डे विनिक्षिपेत् ।
धान्यराशौ निधातव्यं त्रिस्सप्ताहं सुरेश्वरि ! ॥ २५५ ॥

तेन भक्षितमात्रेण वलीपलितवर्जितः ।
वल्कलं सूक्ष्मचूर्ण तु मधुना सहितं लिहेत् ॥ २५६ ॥

अर्धमासप्रयोगेण प्रत्ययोगं(क्षोऽयं) भवेत्प्रिये ! ।
तस्य मूत्रपुरीषेण शुल्बं भवति काञ्चनम् ॥ २५७ ॥

मासमात्रप्रयोगेण पन्नगः काञ्चनं भवेत् ।
ग्राह्यं तत्फलतैलं तु यन्त्रे पातालसंज्ञके ॥ २५८ ॥

तेन तैलेन देवेशि ! रसं संकोचयेद्बुधः ।
तत्क्षणाज्जायते देवि ! पाटबन्धो महारसः ॥ २५९ ॥

कटकं कङ्कणं कार्यं रसलिङ्गं वरानने ! ।
संकोचमरणं तेन कर्तव्यं परमाद्भुतम्[1] ॥ २६० ॥

[अङ्गनायिकाकल्पः ।]

पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ।

---

1. निशाचररसे क्षिप्तं सप्तवारं तु भास्करम् ।
कालिकारहितं तेन जायते कनकप्रभम् ॥
तत्तारेण समं वाह्यं तेन सिक्तं तु वापितम् ।
दशांशं वेधयेत्सूतं दश पीतं शतेन च ॥
शतं वेधयते लक्षं सहस्रं कोटिवेधकम् ॥
दशांशं कोटिवेधि स्यात्कोटिवेधि समेन च ।

त्रैलोक्यजननी या सा ओषधी अङ्गनायिका ॥२६१॥

तया संपर्कमात्रेण बद्धस्तिष्ठति पारदः।
सप्ताहं मर्दितस्यास्य महौषध्या रसै रसः ॥ २६२ ॥

शतांशेनैव वेधेन कुरुते दिव्यकाञ्चनम्।
त्रिस्सप्ताहं रसे तस्या मर्दनाद्वरवर्णिनि! ॥ २६३ ॥

लक्षवेधी रसस्साक्षादष्टौ लोहानि विध्यति।
त्रिसप्ताहेन देवेशि! दशलक्षाणि विध्यति ॥ २६४ ॥

चतुर्थे चैव सप्ताहे कोटिवेधी भवेद्रसः।
स्वेदतापनिवर्षेण महौषध्या रसेन तु ॥ २६५ ॥

ददाति खेचरीं सिद्धिमनिवारितगोचरः।
कामयेत्कामिनीनां तु सहस्रं दिवसान्तरे ॥ २६६ ॥

नष्टच्छायो ह्यदृश्यश्च त्रैलोक्यं च भ्रमेदसौ।
महौषध्या रसेनैव मृतसंजीवनं भवेत् ॥ २६७ ॥

अनेन घातयेत्सूतं पञ्चावस्थं कुरु प्रिये!।
मृतस्य दापयेन्नस्यं हस्तौ पादौ तु मर्दयेत् ॥ २६८ ॥

तस्य तु प्रविशेज्जीवो मृतस्यापि वरानने!।

[नरसारकल्पः।]

पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ २६९ ॥

नर(क)सारस्पर्शनेन क्षणाद्बध्येत सूतकः।
नर(क)साररसं दत्वा द्विपदीरजसा रसे ॥ २७० ॥

दिनान्ते बन्धमायाति सर्वलोहानि रञ्जति।
नर(क)साररसेनैव भावयेत्तु मनश्शिलाम् ॥ २७१ ॥

निर्गन्धा जायते सा तु घातयेत्तेन पन्नगम्।
द्विपदीरजसा सार्धं निरुद्धः पन्नगो भवेत् ॥ २७२ ॥

नर(क)साररसेनैव जीर्णे षड्गुणपन्नगे ।
तारे ताम्रेऽपि वा देवि ! कोटिवेधी भवेद्रसः ॥२७३॥

नरसाररसे स्तन्ये भावितं सप्तधा पृथक् ।
रसस्य दापयेद्ग्रासं यन्त्रे विद्याधराह्वये ॥ २७४ ॥

जीर्यते गगनं देवि ! निर्मुखे च वरानने ! ।
नर(क)साररसेनेशि ! कीटमारीरसेन च ॥ २७५ ॥

द्रावयेद्गगनं देवि ! तीक्ष्णलोहं च पन्नगम् ।
नर(क)साररसेनेशि ! हनुमत्या रसेन च ॥ २७६ ॥

जायते काञ्चनं दिव्यं निषेकाद्भास्करः प्रिये ! ।
नर(क)साररसे दत्वा मञ्जिष्ठां रक्तचन्दनम् ॥ २७७ ॥

स्वरसैर्मर्दयन्त्याश्च पन्नगं देवि ! सेचयेत् ।
तत्क्षणात्काञ्चनं दिव्यं सप्तवारा निषेचितम्[1] ॥२७८॥

अष्टमांशयुतं हेम हेमकर्मणि चौषधम् ।
नर(क)साररसे भाव्यं सप्तवारं तु हिङ्गुलम् ॥२७९॥

तेनैव घातयेत्तीक्ष्णं भस्मीभूतत्वमाप्नुयात् ।
तद्भस्म ताम्रपिष्टे तु त्रिगुणं तेन निर्वहेत् ॥ २८० ॥

तच्छुल्बं हेमसङ्काशं तारे वाऽष्टांशयोजितम् ।
तारं हेमसमांशं तु द्विवर्णं पतितं भवेत् ॥ २८१ ॥

नर(क)साररसे भाव्यं रसकं सप्तवारतः ।
नर(क)साररसेनैव रसेन्द्रं सप्तवारतः ॥ २८२ ॥

तं रसं रसकं चैव तीक्ष्णलोहं च पन्नगम् ।
नर(क)साररसेनैव तेनैकत्र विमर्दयेत् ॥ २८३ ॥

---

1. रविघृष्टं तु तं देवि ! पन्नगं त्रिगुणं प्रिये ! ।
तच्छुल्बं तारसङ्काशं तारपञ्चांशयोजितम् ॥

तत्क्षणाज्जायते बद्धो रसस्य रसकस्य च ।
तीक्ष्णनागं तथा शुल्बं रसकेन तु रञ्जयेत् ॥ २८५ ॥
हठात्तज्जायते हेम कूश्माण्डकुसुमप्रभम् ।

[कङ्कालखेचरीकल्पः ।]

पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ २८६ ॥
कङ्कालखेचरी नाम्ना ओषधी परमेश्वरि ! ।
तस्य तैलं तु संग्राह्यमाद्य(माघ)खेचरिसंयुतम् ॥२८७॥
स्थापयेद्दिनमेकं तु पात्रे भास्करनिर्मिते ।
द्वितीये वासरे प्राप्ते वज्ररत्नं तु घातयेत् ॥ २८८ ॥
अनले धामयेत्तं तु सुतप्तं प्रज्वलत्प्रभम्[1] ।

[मन्त्रसिह्यासनीकल्पः ।]

सबीजा चौषधी ग्राह्या काचिद्गुल्मलता प्रिये ! ॥
मन्त्रसिह्यासनी नाम तृतीया देवि ! खेचरी ।
पातालयन्त्रे तत्तैलं गृह्णीयात्ताम्रभाजने ॥ २९० ॥
तस्य तैलस्य मध्ये तु प्रक्षिपेत्खेचरीरसम् ।
मेदिनीयन्त्रमध्ये तु स्थापयेच्च वरानने ! ॥ २९१ ॥

---

1. कङ्कालखेचरीतैले वज्ररत्नं निषेचयेत् ।
दशवारं निषिक्तं तु भस्माकारं हि जायते ॥
तद्धेमपक्वबीजं तु तेन भस्मसमं कुरु ।
त्रिभागं टङ्कणं दत्वा अन्धमूषागतं धमेत् ॥
तत्क्षणान्मिलति द्वन्द्वं वज्ररत्नं च काञ्चनम् ।
चन्द्रहेम वरारोहे समं जारयते यदि ॥
कोटिवेधी रसो देवि ! लोहान्यष्टौ च विध्यति ।
पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥

पूर्वौषध्यां तु तद्देवि ! गगनं मेदिनीजले ।
रसे मा(मा)सं ततो दत्वा मर्दनाद्गोलकं कुरु ॥२९२॥

बध्वा पोट्टलिकां तेन गगनं जारयेत्प्रिये ! ।
समे तु गगने जीर्णे बद्धस्तिष्ठति पारदः ॥ २९३ ॥

भस्त्राफूत्कारयुक्तेन धाम्यमानो न नश्यति ।
काकविष्ठासमं रूपं समजीर्णस्य जायते ॥ २९४ ॥

द्विगुणे गगने जीर्णे ह्यष्टलोहानि संहरेत् ।

[इरिन्दिरीकल्पः ।]

पुनरन्यं प्रवक्ष्यामि रसबन्धं सुदुर्लभम् ॥ २९५ ॥

शिवदेहात्समुत्पन्ना ओषधी तु इरिन्दिरी ।
जारयेद्गन्धकं सा तु जारयेत्साऽपि तालकम् ॥२९६॥

काञ्चनं जारयेत्सा तु रसेन्द्रं सा च बन्धयेत् ।
प्रवालं द्रावयेत्सा तु द्रावयेद्गगनं तथा ॥ २९७ ॥

वज्रं च घातयेत्सा तु सर्वसत्वं च घातयेत् ।
जारयेत्सर्वलोहानि सत्वान्यपि च जारयेत् ॥ २९८ ॥

इरिन्दिरीरसे न्यस्य गोशृङ्गे तु वरानने ! ।
धान्यराशौ निधातव्यं द्रुतस्तिष्ठति पारदः ॥ २९९ ॥

दिव्यौषध्या रसेनैव रसेन्द्रस्सुरवन्दिते ! ।
समे तु कनके जीर्णे दशकोटिं तु वेधयेत् ॥ ३०० ॥

पञ्चमे लक्षकोटिं तु षड्गुणे स्पर्शवेधकः ।
सप्तमे धूम्रवेधी स्यादष्टमे त्ववलोकतः ॥ ३०१ ॥

नवमे शब्दवेधी स्यादत ऊर्ध्वं न विद्यते ।
भ्रमन्ति पशवो मूढाः कुलौषधिविवर्जिताः ॥ ३०२ ॥

तृणौषधिरसानां च नैव सिद्धिः प्रजायते ।
तस्मात्सर्वप्रयत्नेन ज्ञातव्या तु कुलौषधिः॥ ३०३ ॥

दिव्यौषध्यश्चतुष्षष्टिः कुलमध्ये व्यवस्थिताः ।
नैव जानाति मूढास्ताश्शिवमोहेन मोहिताः ॥ ३०४ ॥

अदिव्यास्तु तृणौषध्यो जायन्ते गिरिगह्वरे ।
तृणौषध्या रसे सूतो नैव बद्धः कदाचन ॥ ३०५ ॥

अक्षयो नैव तिष्ठेत कुलौषधिविवर्जितः ।
कुलौषध्या विहीनास्तु गगनं चारयन्ति ये ॥ ३०६ ॥

स रसस्तु वरारोहे! वह्निमध्ये न तिष्ठति ।
न खोटं न च वा भस्म नैव द्रव्यं करोति सः ॥

किंचिद्द्रव्यं प्रकुर्वन्ति धाम्यमानं न तिष्ठति ।
पत्रे पाके कषे च्छेदे नैव तिष्ठति काञ्चनम् ॥३०८॥

न वेधं च शतादूर्ध्वं करोति स रसः प्रिये! ।
यावन्न चाब्द(बद्ध)मेकं तु विक्रान्तं(क्रीतं)त्रपु (तत्तु) काञ्चनम् ॥

धर्मार्थकाममोक्षेषु नैव दद्यात्ततः प्रिये! ।

श्रीभैरवी—

निर्जीवत्वं गतस्सूतः कथं जीवं ददाति सः ॥ ३१० ॥

निर्जीवेन तु निर्जीवं कथं जीवति शंकरः ।

श्रीभैरवः—

दिव्यौषध्या यदा देवि! रसेन्द्रो मर्दितो भवेत् ॥

कालिकारहितस्सूतस्तदा भवति पार्वति! ।
परस्य हरते कालं कालिकारहितो रसः ॥ ३१२ ॥

अष्टानां चैव लोहानां मलं शमयति क्षणात् ।
महामूर्च्छागतं सूतं को वा विकथयेन्मृतम् ॥ ३१३ ॥

दिव्यौषध्या रसेनैव जायते नष्टचेतनः ।
पञ्चभूतात्मकस्सूतस्तिष्ठत्येव सदाशिवः ॥ ३१४ ॥

[क्ष्मापालकल्पः ।]

पुनरन्यं प्रवक्ष्यामि रसबन्धनमीश्वरि ! ।
क्ष्मापालेन हरेद्वज्रं अनेनैव तु काञ्चनम् ॥ ३१५ ॥

वज्रभस्म हेमभस्म तद्वा एकत्र बन्धयेत् ।

[ अन्ये कुलमूलिकाकल्पाः ।]

निशाचररसे जार्यं नरजीवेन जारयेत् ॥ ३१६ ॥

तं सूतं मारयेद्भद्रे ! जागरिर्दिव्य ओषधिः ।
भक्षितस्स रसो येन सोऽपि साक्षात्सदाशिवः ॥३१७॥

भक्षिते तोलकैकेन स्पर्शवेधी भवेन्नरः ।
प्रस्वेदात्तस्य गात्रस्य अष्टौ लोहानि काञ्चनम् ॥३१८॥

लक्षवर्षसहस्राणि स जीवेत्साधकोत्तमः ।
प्रस्वेदात्तस्य गात्रस्य रसराजश्च बध्यते ॥ ३१९ ॥

अजापतिः कृष्णतेजाः क्षणाद्बध्नाति सूतकम् ।
जागरीस्पर्शनाद्देवि ! क्ष्मापालेन च बध्यते ॥ ३२० ॥

तुरु(वज्र)वल्ल्या रसेनैव भावितं गगनं प्रिये ! ।
जारयेद्वालुकायन्त्रे खोटो भवति तत्क्षणात् ॥ ३२१ ॥

द्रु(मृ)तगोलकमाषैकं माषैकं हेमगोलकम् ।
एकीकृत्य तु सम्मर्द्य लुङ्गाम्लेन दिनत्रयम् ॥ ३२२ ॥

कर्षैकं नागपलाणि रसकल्केन लेपयेत् ।
वेष्टयेद्वृश्चिकालीं च तत्पिण्डं लेपयेत्ततः ॥ ३२३ ॥

मारयेत्पन्नगं देवि! शक्रगोपनिभं भवेत्।
कर्षैकं तारपर्णानि मृतनागेन लेपयेत्॥ ३२४॥

लेपयेद्वृश्चिकाल्यैं च तत्पत्रं लेपयेत्ततः।
तत्तारं म्रियते देवि! सिन्दूरारुणसन्निभम्॥ ३२५॥

सहस्रांशेन तेनैव शुल्ववेधं प्रदापयेत्।
जायते कनकं दिव्यं देवाभरभूषणम्॥ ३२६॥

क्षीरयुक्ता बहुफला ग्रन्थियुक्ता च पार्वति!।
नाम्ना वर्तुलपत्राणि शस्यते रसबन्धने॥ ३२७॥

एकवारं कन्दकल्के मूकमूषागतं रसम्।
धमेन्मुखानिलैर्बद्धो भक्षणाय प्रशस्यते॥ ३२८॥

रक्तकञ्चुकिकन्दं तु स्त्रीस्तन्येन तु पेषितम्।
मूषायां पूर्वयोगेन कुरुते सूतबन्धनम्॥ ३२९॥

वृश्चिकापत्रिकाबीजं नारीक्षीरसमन्वितम्।
धमयेत्पूर्ववत्सूतं भक्षणार्थाय वार्तिकः॥ ३३०॥

वज्रकन्दं समादाय रसं मध्ये विनिक्षिपेत्।
गजेन्द्राख्यं पुटं दद्यात्सप्तधा बन्धतां नयेत्॥ ३३१॥

भक्षयेत्तं रसं प्राज्ञष्षण्मासादमरो भवेत्।
लाङ्गलीकन्दमादाय कर्कोटीकन्दमेव च॥ ३३२॥

रसं तन्मध्यगं कृत्वा स्वेदयेन्मर्दयेत्पुनः।
म्रियते नात्र सन्देहो ध्मातस्तीव्रानलेन तु॥ ३३३॥

शुकचञ्चुगतं सूतं पुटयेद्धामयेत्ततः।
शतांशवेधकर्ताऽयं देहसिद्धिकरो भवेत्॥ ३३४॥

हंसपादीरसं सूतं शुष्ककन्दोदरे क्षिपेत्।
गजेन्द्रपुटनं दद्यान्म्रियते नात्र संशयः॥ ३३५॥

सहस्रवेधकर्त्ता च जायते नात्र संशयः ।
हंसांघ्रिं शुकचञ्चुं च गृहीत्वा मर्दयेद्रसम् ॥ ३३६ ॥

क्रौञ्चपादोदरे क्षिप्त्वा ततो दद्यात्पुटत्रयम् ।
म्रियते नात्र सन्देहो लक्षवेधी महारसः ॥ ३३७ ॥

[तृणज्योतिःकल्पः ।]

तृणज्योतिरिति ख्यातां शृणु दिव्यौषधिं प्रिये ! ।
निशा तु प्रज्वलेन्नित्यं नाह्वा ज्वलति पार्वति ! ॥

तस्य मूले तु संक्षिप्ते क्षीरं रक्तं भवेत्क्षणात् ।
तन्मूलरसगन्धाभ्रैर्मातुलुङ्गाम्लपेषितैः ॥ ३३९ ॥

शुल्बपत्रं विलिप्तं तु भवेद्धेम पुटत्रयात् ।
तन्मूलचूर्णसंयुक्तो रसराजस्सुरेश्वरि ! ॥ ३४० ॥

मातुलुङ्गरसे घृष्टमभ्रकं चरति क्षणात् ।

[उच्चाटाकल्पः ।]

अथोच्चाटां प्रवक्ष्यामि रसबन्धकरीं प्रिये ! ॥ ३४१ ॥

एकमेव भवेन्नालं तस्या रोमप्रवेष्टनम् ।
तस्याग्रे च भवेत्पुष्पं शुकतुण्डस्य सन्निभम् ॥ ३४२ ॥

तत्पत्राणि च देवेशि ! शुकपिञ्छनिभानि च ।
तत्कन्दं कूर्मसंस्थानं क्षीरं सिन्दूरसन्निभम् ॥ ३४३ ॥

जलं स्रवेन्मधूच्छिष्टे तत्समादाय पार्वति ! ।
वेधयेत्सर्वलोहानि काञ्चनानि भवन्ति च ॥ ३४४ ॥

रसतालकतुत्थानि मर्दयेदुच्चटारसैः ।
आतपे म्रियते तप्तो रसो दिव्यौषधीबलात् ॥ ३४५ ॥

वेधयेत्सर्वलोहानि लक्षांशेन वरानने ! ।

आवर्तितं भवेद्यावज्जायतेऽर्कसमप्रभम्[1] ॥ ३४६ ॥

[रक्तस्नुहीकल्पः ।]

रसं रक्तस्नुहीक्षीरं कुनटीं गन्धकाभ्रकम् ।
दरदं चैव लोहानि सहस्रांशेन वेधयेत् ॥ ३४७ ॥

स्नुहीक्षीरं समादाय निशाचूर्णेन वेष्टयेत्[2] ।
घुटिकीकृत्य तेनैव नागं विध्यति तत्क्षणात् ॥ ३४८ ॥

[स्थलपद्मिनीकल्पः ।]

अथातस्स्थलपद्मिन्या दिव्यौषध्या विधिं शृणु ।
पद्मिनीसदृशा पत्रैः पुष्पैरपि च तादृशी ॥ ३४९ ॥

भङ्गे चैव स्रवेत्क्षीरं रक्तवर्णा सुशोभना ।
आक्रम्य वामपादेन पश्येद्गगनमण्डलम् ॥ ३५० ॥

पश्येच्च तारकायुक्तं ग्रहनक्षत्रमण्डलम् ।
लक्षयोजनतो देवि ! सा ज्ञेया स्थलपद्मिनी ॥३५१॥

तस्याः पञ्चाङ्गमादाय हरगौरीसमन्वितम् ।
मनश्शिलातालयुक्तं माक्षिकेण समन्वितम् ॥ ३५२ ॥

मर्दयेत्सप्तरात्रं तु तेन शुल्बञ्च वेधयेत् ।
सहस्रांशेन देवेशि ! विद्धं भवति काञ्चनम् ॥३५३॥

तस्याः पञ्चाङ्गनादाय पूर्वोक्तविधिना प्रिये ! ।
चारयेत्सूतराजं तु मूकमूषागतं धमेत् ॥ ३५४ ॥

---

1. अथातस्तिलतैलेन पाचयेच्च दिनत्रयम् ।
   तथा शुल्बस्य पत्राणि वेध्यं जांबूनदं भवेत् ॥

2. स्नुहीक्षीरं समादाय निशार्धं हेम चोभयम् ।
   कुनटीं गन्धचूर्णं च सर्वमेकत्र मर्दयेत् ॥
   अनेनैव प्रकारेण निशार्धं हेम शोधयेत् ।

म्रियते मूषिकामध्ये संकोचेन न संशयः ।
तेनैव सर्वलोहानि सहस्रांशेन वेधयेत्[1] ॥ ३५५ ॥

[चित्रककल्पः ।]

चित्रकस्य यथा गुह्यं कथयामि समासतः ।
त्रिविधश्चित्रको ज्ञेयः कृष्णो रक्तो रसायनम् ॥३५६॥

शुक्लो व्याधिप्रशमनश्श्रेष्ठमध्यकनीयसाः ।
कृष्णं रक्तं सितं वाऽपि हेमन्ते नोद्धरेद्बुधः ॥३५७॥

कृष्णचित्रकमुत्पाट्य गोभिर्नाघ्रातमीश्वरि ! ।
क्षीरमध्ये क्षिपेत्क्षीरं कृष्णवर्णं भवेत्क्षणात् ॥ ३५८ ॥

तस्य पञ्चाङ्गचूर्णेन पारदं सह मर्दयेत् ।
धमेच्च मूकमूषायां खोटो भवति तत्क्षणात् ॥ ३५९ ॥

रक्तांबरधरो भूत्वा रक्तमाल्यानुलेपनः ।
कृष्णपक्षे तु पञ्चम्यां रक्तमाल्यौदनेन तु ॥ ३६० ॥

बलिं दत्वा महादेवि ! रक्तचित्रकमुद्धरेत् ।
रक्तचित्रकचूर्णेन वङ्गं पाये(त्तापे)स्त्रिभिस्त्रिभिः ॥

सर्वदोषविनिर्मुक्तस्स्तम्भमायाति तत्क्षणात् ।
तन्मूलं सूतकं ताम्रं कुंकुणीतैलसेचनात् ॥ ३६२ ॥

---

1. [कुमुदिनीकल्पः ।]

अथातस्संप्रवक्ष्यामि कुमुदिन्या निधिं प्रिये ! ।
भित्वा काश्मीरिपाषाणे पूर्णिमायां तु कारयेत् ॥
तस्याः पञ्चाङ्गमादाय भावयेत्तु मनश्शिलाम् ।
खर्परे धारयित्वा तु भावयेत्तु पुनः पुनः ॥
खर्परे द्रावितं नागं तत्कल्केन युतं कुरु ।
काश्मीरद्रवतुल्यं हि जायते कनकं ध्रुवम् ॥

एकविंशतिवारेण शुद्धं शुल्बं भविष्यति।
रक्तचित्रकभल्लाततैललिप्तं पुटेन तु ॥ ३६३ ॥

चन्द्रार्कपत्रं देवेशि! जायते दिव्यकाञ्चनम्।
नागिनीकन्दसूतेन्द्ररक्तचित्रकसंयुतम् ॥ ३६४ ॥

पत्रलेपप्रतीवापैश्चन्द्रार्कं काञ्चनं भवेत्[1]।

[ज्योतिष्मतीतैलकल्पः।]

ज्योतिष्मतीतैलविधिं वक्ष्यामि शृणु पार्वति! ॥३६५॥

ज्योतिष्मती नाम लता या च काञ्चनसन्निभा।
वल्लीवितानबहुला हेमवर्णफला शुभा ॥ ३६६ ॥

आषाढपूर्वपक्षेऽस्या गृहीत्वा बीजमुत्तमम्।
तिलवत्क्वाथयित्वा वा हस्तपादैरथापि वा ॥ ३६७ ॥

तस्यास्तैलं समादाय कुम्भे ताम्रमये क्षिपेत्।
स्थापयेद्भूगतं कुम्भं क्रमादूर्ध्वतुषाग्निना ॥ ३६८ ॥

षण्मासे तु व्यतिक्रान्ते स घटः काञ्चनं भवेत्।
ताम्रं हेमसमं कृत्वा तैलमाक्षीकमिश्रितम् ॥ ३६९ ॥

प्रतिवापेन सि(निषि)ञ्चेत्तद्धेम ताम्रसमं भवेत्।
तथा च शतवेधी स्याद्विद्यारत्नमनुत्तमम् ॥ ३७० ॥

[दग्धरुहाकल्पः।]

दग्धरुहां प्रवक्ष्यामि रसबन्धकरीं प्रिये!।
स्पर्शौषधीति सा ज्ञेया सर्वकामार्थसाधनी ॥ ३७१ ॥

शश्वच्छिन्ना महादेवि! दग्धा सा पावकेन तु।
प्ररोहति क्षणाद्दिव्या दग्धा सा तु महौषधी ॥३७२॥

---

1. रक्तचित्रकसंयुक्तो रसोऽपि सर्वदो भवेत्।

रक्तं पीतं सितं कृष्णं तस्याः पुष्पं प्रजायते ।
चणकस्येव पत्राणि सुप्रसूतानि लक्षयेत् ॥ ३७३ ॥

सा स्थिता गोमतीतीरे गङ्गायामर्बुदे गिरौ ।
उज्जयिन्या दक्षिणतो वनान्तेषु च दृश्यते ॥ ३७४ ॥

तस्याः कन्दरसं दिव्यं कृष्णराजीसमन्वितम् ।
ताम्बूलेन समं कृत्वा घुटिकां कारयेद्बुधः ॥ ३७५ ॥

सर्वेषामेव लोहानां द्रुतानां वह्निमध्यतः ।
सहस्रं वेधयित्वा तु काञ्चनं कुरुते क्षणात् ॥ ३७६ ॥

तथैव म्रियते सूतः कान्तहेमाभ्रसंयुतः ।

[कटुतुम्बीकल्पः ।]

कटुतुंबी तु विख्याता देवि ! दिव्यौषधिं शृणु ॥

तस्या बीजानि सङ्गृह्य सूक्ष्मचूर्णं तु कारयेत् ।
एकविंशतिवाराणि भाव्यं धात्रीरसेन च ॥ ३७८ ॥

पयसा सह तेनैव विश्वभेषजसंयुतम् ।
बीजं यन्त्रे विनिक्षिप्य तैलं संगृह्य पिण्डितः ॥३७९॥

रसं मूर्च्छापयेत्तेन चक्रमर्देन मर्दयेत् ।

[लोहदण्डकल्पः ।]

गोपित्तं शिखिपित्तं च कांक्षीकासीससंयुतम् ॥३८०॥

तारतुल्यानि चैतानि सर्वेषां सूतकं समम् ।
मेषशृङ्गे निधातव्यं मासमेकं निरन्तरम् ॥ ३८१ ॥

लोहदण्डेन संसिक्तं सर्वलोहानि वेधयेत् ।
गन्धकं लोहदण्डेन एकविंशतिभावितम् ॥ ३८२ ॥

युक्तं लोहकुले(मने)नैव जम्बीररससंयुतम् ।
सबीजं सूतकोपेतमन्धमूषानिवेशितम् ॥ ३८३ ॥

भूगतं मासमेकं तु तारं काञ्चनतां नयेत् ।
दलस्य भागमेकं तु तारपञ्चांशमेव च ॥ ३८४ ॥

शुल्बं च पञ्चभागं च बीजस्यैकं च योजयेत् ।
एते द्वादशभागास्स्युस्सर्वं तद्धारयेत्क्षितौ ॥ ३८५ ॥

स्थानस्यास्य निषेकं तु सुदण्डेन तु कारयेत् ।
पञ्चविंशद्दिनान्ते तु जायते कनकोत्तमम् ॥ ३८६ ॥

[क्षीरकन्दकल्पः ।]

क्षीरकन्दविधिं वक्ष्ये सर्वसिद्धिकरं तथा ।
चतुर्वर्णं विषं तत्र रक्तकन्दं प्रशस्यते ॥ ३८७ ॥

भग्नमेतत्स्रवेत्क्षीरं रक्तवर्णं सुशोभनम् ।
मेघानां तु निनादेन सञ्जातैरुपशोभितम् ॥ ३८८ ॥

पत्रैस्स्नुहीसमैस्स्निग्धैस्सप्तभिर्हेमसत्प्रभैः ।
बन्धनं रसराजस्य सर्वसत्ववशंकरम् ॥ ३८९ ॥

तस्य क्षीरं तु सङ्गृह्य तारं निर्वाहयेद्बुधः ।
धमेद्धठाग्निना चैव जायते हेम शोभनम् ॥ ३९० ॥

तिन्त्रिणीपत्रनिर्यासमीषत्ताम्ररजोयुतम् ।
मर्दयेत्पारदं प्राज्ञो रसबन्धो भविष्यति ॥ ३९१ ॥

तोयमध्ये विनिक्षिप्य गुलिका वज्रवद्भवेत् ।

[शाकवृक्षकल्पः ।]

शाकवृक्षस्य देवेशि ! निष्पीड्य रसमुत्तमम् ॥३९२॥

रक्तचन्दनसंयुक्तं सर्वलोहानि जारयेत् ।
[1]मिलन्ति सर्वलोहानि द्रवन्ति सलिलं यथा ॥३९३॥

गन्धकं रसकं तार्ष्यं पारदं रक्तचन्दनम् ।
रुदन्त्या रससंयुक्तं तारमायाति काञ्चनम् ॥ ३९४ ॥

शाकवृक्षस्य निर्यासं यत्नतः परिगालयेत् ।
शिग्रुमूलस्य चूर्णं तु तद्रसेन तु मर्दयेत् ॥ ३९५ ॥

प्रलिप्तशुल्बपत्राणि पुटेत्क्षिप्त्वा विपाचयेत् ।
तद्द्रुतं काञ्चनं दिव्यं भवेल्लक्षणसंयुतम् ॥ ३९६ ॥

फलानि शाकवृक्षस्य परिपक्वानि संगृहेत् ।
तद्रसेन तु संप्राज्ञः सप्तरात्रं तु भावयेत् ॥ ३९७ ॥

तद्रसेन समायुक्तं मञ्जिष्ठामिश्रितं तथा ।
लेपयेत्तारपत्राणि ध्मातं भवति काञ्चनम् ॥ ३९८ ॥

## [देवदालीकल्पः ।]

देवदाल्या महौषध्या विधिं वक्ष्याम्यतः परम् ।
सा श्वेता व्याधिशमने कृष्णा पीता रसायने ॥३९९॥

पौर्णमास्यां त्रयोदश्यां राहुग्रस्ते दिवाकरे ।
अथवा कृष्णपञ्चम्यामिमां विधिवदुद्धरेत् ॥ ४०० ॥

देवदालीफलं देवि ! विष्णुक्रान्तां च सूतकम् ।
मूर्च्छयेद्बन्धयेत्क्षिप्रं शुल्बं हेम करोति च ॥ ४०१ ॥

देवदालीफलं मूलमीश्वरीरसमेव च ।
तोयेन मर्दितं कृत्वा वङ्गं स्तम्भयति क्षणात् ॥४०२॥

---

1. गन्धपाषाणगन्धेन आयसे विनियोजयेत् ।

[श्वेतगुञ्जाकल्पः।]

अथातस्संप्रवक्ष्यामि श्वेतगुञ्जाविधिं प्रिये!।
कृष्णपक्षे चतुर्दश्यामष्टम्यां च सुरार्चिते!॥ ४०३॥

कपाले मृत्तिकां न्यस्य सेचयेत्सलिलेन तु।
बीजानि सितगुञ्जायाः पुण्ययोगे तु वापयेत्॥ ४०४॥

वक्ष्यमाणेन योगेन कुर्यात्सङ्ग्रहणं तथा।
ओं नमो भगवति श्वेतवल्लि श्वेतपर्वतवासिनि!॥
सर्वकार्याणि कुरु कुरु अप्रतिहतं नमो नमस्स्वाहा[1]।

शुद्धशुल्बं तु सङ्गृह्य मूषामध्ये तु संस्थितम्॥४०६॥

त्रिपञ्चपलसंख्या तु कर्षार्धसितगुञ्जया।
सहैकल भवं तारं तस्य गन्धविवर्जितम्॥ ४०७॥

ब्रह्मरीतिसमायुक्तं गुञ्जाचूर्णं सहैकतः।
देवीनां भूषणं देवि! जायते हेम शोभनम्॥ ४०८॥

[कर्तरीरसबन्धः।]

अथातस्संप्रवक्ष्यामि कर्तरीरसबन्धनम्।
असुराणां समायोगे क्रोधाविष्टेन चेतसा॥ ४०९॥

सुदर्शनं महाचक्रं प्रेषितं मुरवैरिणा।
भालपट्टात्ततस्तस्य निपेतुस्स्वेदबिन्दवः॥ ४१०॥

ते भूमौ पतिता दिव्यास्सञ्जाताः कर्तरीरसः।
रक्षार्थं स्थापितं तत्र विष्णुना च सुदर्शनम्॥ ४११॥

चक्रतुल्यं भ्रमत्येतदायुधानि निकृन्तति।
कुरुते गर्जनं नादं धूमज्वालां विमुञ्चति॥ ४१२॥

---

1. अनेन मनुना प्रोक्ता सिद्धिर्भवति नान्यथा।
षण्मासेन तथा वल्लीं मन्त्रपूतेन रक्षयेत्॥

कर्तरीदृष्टिमात्रेण तथाऽन्या शब्दकर्तरी[1] ।
लोकानां तु हितार्थाय घोरशक्तिर्व्यवस्थिता ॥ ४२३ ॥

रसरूपा महाघोरा सा सिद्धानां तु वेदिनी
तस्य क्षेत्रं यदा गच्छेदघोरास्त्रं जपेत्तदा ॥ ४१४ ॥

पुनर्घोरं न्यसेत्तत्र अथान्यं(स्त्रं) विन्यसेद्बुधः ।
अनुलोमविलोमेन देहेऽधिष्ठाप्य कर्तरीम् ॥ ४१५ ॥

मुद्रया मुद्रयेत्तां तु अघोरास्त्रेण योजिताम् ।
दीप्ते(पे)न रोधयेत्तां तु स्तम्भयेद्दी(धू)पनेन तु ॥

निष्ठया मुद्रया तां तु स्थानयोगेन योजयेत् ।

उदकबन्धाः ॥

[चन्द्रोदकबन्धः ।]

अथ चन्द्रोदकेनेशि ! वक्ष्यामि रसबन्धनम्[2] ॥४१७॥

दृष्ट्वा चन्द्रोदकं मन्त्री पौर्णमास्यां विशेषतः ।
ग्रहणं तत्र कर्तव्यं पौर्णमास्यां प्रयत्नतः ॥ ४१८ ॥

निर्गच्छति महीं भित्वा चन्द्रवृद्ध्या तु वर्धते।
क्षेत्रबन्धं पुरा कृत्वा देवमभ्यर्च्य शङ्करम् ॥ ४१९ ॥

चतुर्दश्यां तु तत्क्षेत्रं पूजयित्वा विचक्षणः ।

---

1. सा स्पर्शकर्तरी छायाकर्तरी धूमकर्तरी ।
सा ज्वालाकर्तरी चैव शक्तिर्घोरस्य कर्तरी ॥

2. शुक्लपक्षे पौर्णमास्यां दृष्ट्वा पूर्णेन्दुमण्डलम् ।
निर्गच्छन्ति महीं भित्वा चन्द्रतोयान्यनेकधा ॥

कानिचिन्मृत्तिवर्णानि रसेन लवणानि तु ।
कानिचिच्चन्द्रतुल्यानि व्योमाभासानि कानिचित् ।
चन्द्रवृद्ध्याऽभिवर्धेरन् क्षीयेरंस्तत्क्षयेण तु ॥

अहोरात्रोषितो भूत्वा बलिं तत्र निवेदयेत् ॥ ४२० ॥

पौर्णमास्यां च रात्रौ च गत्वा तस्य समीपतः।
चन्द्रोदकं तु सङ्गृह्य मन्त्रयुक्तस्सुमन्त्रितम् ॥ ४२१ ॥

आलोड्य मधुसर्पिर्भ्यां पिबेत्तत्तु समाहितः।
पीतमात्रेण तेनैव मूर्च्छितो भवति क्षणात् ॥ ४२२ ॥

चन्द्रोदये तथोत्तिष्ठेत्क्षीरं तस्य तु दापयेत्।
सप्तरात्रप्रयोगेण चन्द्रवन्निर्मलो भवेत् ॥ ४२३ ॥

एकविंशतिरात्रेण जीवेद्ब्रह्मदिनत्रयम्।
एकमासप्रयोगेण ब्रह्मायुस्स भवेन्नरः ॥ ४२४ ॥

चन्द्रोदकेन गगनं रसं हेम च मर्दयेत्।
मूषामध्यगतं ध्मातं तत्क्षणाद्गुटिका भवेत् ॥ ४२५ ॥

अयं तु स्पर्शमात्रेण लोहान्यष्टौ च वेधयेत्।
तद्रसं तु रसं चान्यं वज्रेण समजारितम् ॥ ४२६ ॥

चतुष्षष्ट्यंशतो विध्येद्द्विगुणेन सहस्रकम्।
दशसङ्कलिकाबद्धं गुञ्जामात्रं रसं ततः ॥ ४२७ ॥

त्रिलोहवेष्टितं वक्त्रे धृत्वा चादृश्यतां व्रजेत्।

"ओं नमो रुद्राय दंष्ट्रोत्कटाय विघ्नं नाशय नाशय दिशो रक्ष रक्ष रुद्रो ज्ञापयति हुं फट् स्वाहा"

इति दिग्बन्धमन्त्रः।

"ओं नमो भगवते रुद्राय त्रिशूलहस्ताय अमृतोद्भव रक्ष रक्ष हुं फट् स्वाहा।"

इति पान मन्त्रः ॥

[विषोदकबन्धः ।]

अथातस्संप्रवक्ष्यामि विषोदरसबन्धनम् ॥ ४२८ ॥

सितपीतादिवर्णाढ्यं तत्र देवि ! रसोत्तमम् ।
तत्र गत्वाऽचलोद्देशे स्मरेद्घोरं सहस्रकम् ॥४२९॥

केशाः क्षिप्तास्स्फुटन्त्यस्मिन्नात्मच्छायां न दृश्यते ।
तैलं च गोलकाकारं घृतं तेन विसर्पति ॥ ४३० ॥

गन्धकस्य हरेद्गन्धं पललं लवणायते ।
ज्ञात्वा पलाशपत्रेण कटुकालाबुके क्षिपेत् ॥ ४३१ ॥

विषोदकं गन्धकं च हरबीजं च तत्समम् ।
अजाक्षीरेण पिष्ट्वा तु शुल्बपात्रे तु लेपयेत् ॥ ४३२॥

तत्पुटेन भवेद्देवि ! सिन्दूरारुणसन्निभम् ।
शतांशेनैव तद्देवि ! सर्वलोहानि वेधयेत् ॥ ४३३ ॥

अनेन विधिना देवि ! नागस्सिन्दूरतां व्रजेत् ।
सहस्रांशेन तस्यैव तारं भवति काञ्चनम् ॥ ४३४ ॥

रक्तं पीतं तथा कृष्णमुत्तरोत्तरकार्यकृत् ।
त्रिफलाकान्तपात्रे वा पात्रेऽलाबुमयेऽपि वा ॥ ४३५ ॥

गृहीत्वा पूर्ववत्तत्रैः पालाशैर्वेष्टयेद्बहिः ।
स्थापयेद्धान्यमध्ये तु दिवसानेकविंशतिम् ॥ ४३६ ॥

महिषीक्षीरमध्ये तु बिन्दुमेकं तु साधयेत् ।
पायसं भक्षयेद्यस्तु पयोमध्वाज्यसंयुतम् ॥ ४३७ ॥

यावत्पूर्णं बलं देवि ! जीवेत्तद्बिन्दुसंख्यया ।
लाङ्गली गृहधूमश्च सिन्दूरं रजनीद्वयम् ॥ ४३८ ॥

मेषस्य शृङ्गं शृङ्गी च कृष्णोन्मत्ताश्वमारकम् ।
सबीजसूतकं चैव विषतोयेन मर्दयेत् ॥ ४३९ ॥

विषतोयेन मेधावी सप्तवाराणि भावयेत्।
अथवा भावयेत्तं तु यावच्चूर्णं तु मर्दयेत् (तद्भवेत्) ॥
तेन नागं प्रतीवाप्य षोडशांशेन खं(सं)भवेत्।
मूषास्थं वेणुयन्त्रे च त्रीणि वाराणि भावयेत् ॥४४१॥
धूमं परिहरेत्तस्य अङ्गव्याधिकरं परम्।
स्थापयेन्नागसिन्दूरं पात्रेऽलाबुमये च तत् ॥ ४४२ ॥
तच्चूर्णं तु शतांशेन तारताम्रादि वेधयेत्।
विषपानीयमादाय वङ्गमावर्तितं शुभम् ॥ ४४३ ॥
निषिक्तं चैव तत्तोयैस्तारं भवति काञ्चनम्।
विषपानीयमादाय प्रक्षिपेच्च रसोत्तमे ॥ ४४४ ॥
कुनटीगन्धपाषाणविषटङ्कणलाङ्गली:।
नष्टपिष्टं कृतं खल्वे तारपत्राणि लेपयेत् ॥ ४४५ ॥
अन्धमूषागतं ध्मातं निर्बीजं कनकं भवेत्।

ओं ह्रीं नीलकण्ठाय ठः ठः। अस्य अयुतं जपेत्।
इति विषोदकग्रहणपानमन्त्रः ॥

[सञ्जीवनीजलकल्पः।]

सञ्जीवनीजलस्याथ विधिं वक्ष्यामि पार्वति! ॥ ४४६ ॥
शुक्रेणाराधितो देवि! प्रागहं सुरवन्दिते!।
दानवानां हितार्थाय मृतानां देवसङ्गरे ॥ ४४७ ॥
मया सञ्जीवनी विद्या दत्ता चोदकरूपिणी।
तया सञ्जीविता दैत्या ये मृता देवसङ्गरे ॥ ४४८ ॥
निक्षिप्ता मर्त्यलोके सा सम्यक् ते कथयाम्यहम्।
अस्ति मर्त्या महापुण्या पवित्रा दक्षिणापथे[1] ॥४४९॥

1. नदी गोदावरी नाम प्रसिद्धा जाह्नवी यथा।

दक्षिणे तु तटे तस्या उत्पली(कदली)नगरं परम् ।
तस्य दक्षिणतश्शैलस्सर्वलोकेषु विश्रुतः ॥ ४५० ॥

नाम्ना कृष्णगिरिश्चेति दृश्यते सर्वमङ्गले ! ।
सुप्रसिद्धाम्बिका नाम ग्रामस्तस्यास्ति सन्निधौ ॥

तत्राप्युदकमालोक्य परीक्षेत सुरार्चिते ! ।
गृहीत्वा शुष्कवंशं तु क्षिपेत्तोयस्य मध्यतः ॥ ४५२ ॥

जायते हरितं स्निग्धमहोरात्रेण निश्चितम् ।
मुञ्चत्यङ्कुरपत्राणि दृश्यतेऽतिमनोहरम् ॥ ४५३ ॥

बलिपुष्पोपहारेण ततो देवि ! समर्चयेत् ।
क्षेत्राधिपं गणेशं च चन्द्रं योगिगणं तथा ॥ ४५४ ॥

ओं चन्द्राय पिनाकिने शूलपाणये ओं दिशो बन्ध बन्धय दिशो बन्ध बन्धय ठः ठः ।

तिलांश्च सर्षपांश्चैव मन्त्रेणानेन सर्षपान् ।
सप्ताभिमन्त्रितान्कृत्वा साधको दिक्षु निक्षिपेत् ॥४५५॥

कटुकालाबुके तोयं कृतरक्षस्समाहितः ।
गृहीत्वा तत्प्रयत्नेन निजं स्थानं समाश्रयेत् ॥ ४५६ ॥

ओं नमो अमृते अमृतरूपिणि अमृतं कुरु कुरु एवं रुद्र आज्ञापयति स्वाहा ।

सप्ताभिमन्त्रितं कृत्वा मन्त्रेणानेन तज्जलम् ।
दिनमेकं तथा सूतं स्वर्णमाषद्वयान्वितम् ॥ ४५७ ॥

मर्दयेत्तेन तोयेन पिबेत्तत्तु विचक्षणः ।
एकविंशतिरात्रं तु क्षीराहारोऽथ यत्नतः ॥ ४५८ ॥

जीवेत्कल्पायुतं साग्रं कामरूपो महाबलः ।
योजनानां शतं गत्वा पुनरेव निवर्तते ॥ ४५९ ॥

अवध्यस्सर्वभूतानां स्वेच्छाहारस्स खेचरः ।
कनकं पारदं व्योम सममेकत्र योजयेत् ॥ ४६० ॥

मर्दयेत्तेन तोयेन सप्ताहं स्वेदयेत्ततः ।
स रसस्सर्वलोहानि षष्ट्यंशेन तु वेधयेत् ॥ ४६१ ॥

अथ वा तं रसं दिव्यं मधुना सह भक्षयेत् ।
मासमात्रप्रयोगेण जीवेद्ब्रह्मदिनायुतम् ॥ ४६२ ॥

तस्य मूत्रमलस्वेदैश्शुल्बं भवति काञ्चनम् ।
[1]निर्वाते तोयमादाय पारदं च मनश्शिलाम् ॥४६३ ॥

मर्दयेत्खल्वपाषाणे नष्टपिष्टं भवेत्ततः ।
स्वेदयेत्सप्तरात्रं तु त्रिलोहेन च वेष्टयेत् ॥ ४६४ ॥

अन्तर्धानं क्षणाद्गच्छेद्विद्याधरपतिर्भवेत् ।
सिद्धकन्याशतवृतो यावत्कल्पांश्चतुर्दश ॥ ४६५ ॥

दिनेषु तेषु सर्वेषु दद्याच्छाल्योदनं घृतम् ।
पयसा च समायुक्तं नित्यमेवं च कारयेत् ॥ ४६६ ॥

[उष्णोदककल्पः।]

उष्णोदकविधिं वक्ष्ये समाहितमनाश्शृणु ।

---

1. निर्वाते तोयमादाय अञ्जलित्रितयं पिबेत् ।
पीतमात्रे भवेन्मूर्च्छा स्वास्थ्यं स्यात्प्रहरत्रयात् ॥

एकविंशद्दिनान्येवं क्षीराहारो भवेत्ततः ।
अष्टवर्षाकृतिः प्राज्ञः कामरूपो महाबलः ॥

पश्येच्छिद्रां महीं सर्वां सप्तपातालसंयुताम् ।
अवध्यो देवदैत्यानां कल्पायुश्च प्रजायते ॥
अथवोदकमादाय पारदं च मनश्शिलाम् ।

पश्यत्युष्णोदकं यत्र वासं तत्रैव कारयेत्[1] ॥ ४६७ ॥

शर्वरीमुषितां तत्र चणकास्तु दिने दिने ।
भक्षयेन्मासमात्रं तु जीवेद्वर्षशताष्टकम् ॥ ४६८ ॥

[2]तस्य मूत्रपुरीषेण शुल्बं भवति काञ्चनम् ।
उष्णोदकं च कासीसं गन्धपाषाणसंयुतम् ॥ ४६९ ॥

चतुर्थांशेन रसकं दशभागं विनिक्षिपेत् ।
शुल्बं च मर्दयेत्सर्वं नष्टपिष्टं क्षणेन तु ॥ ४७० ॥

तेन लेपितमात्रेण शुल्बं भवति काञ्चनम् ।
निषिक्तं तेन तोयेन प्रतिवापं ददेद्बुधः ॥ ४७१ ॥

शुल्बं च जायते हेम तरुणादित्यवर्चसम् ।
तारं च तेन मार्गेण निषिक्तं हेमतां व्रजेत् ॥ ४७२ ॥

उष्णोदकेन भल्लातं तिलमुष्टिं च भक्षयेत् ।
मासद्वयप्रयोगेण जीवेद्वर्षशतत्रयम् ॥ ४७३ ॥

रसगन्धाश्मरसकतुत्थं दरदमाक्षिकम् ।
याममुष्णाम्बुना घृष्ट्वा तारपत्राणि लेपयेत् ॥ ४७४ ॥

---

1. अस्ति गोदावरी नाम महाराष्ट्रेऽतिविश्रुता ।
तस्या उत्तरभागे तु सह्याद्रिः पुण्यपर्वतः ॥
तत्र मातापुरं नाम प्रसिद्धं देवतागृहम् ।
तस्मादुत्तरतो देवि ! कम्पाख्यं नगरं परम् ।
तत्र कम्पेश्वरो देवस्तत्रास्त्युष्णोदकं ध्रुवम् ॥
प्रणीताख्या नदी तत्र स्नात्वा वै साधकोत्तमः ।
पश्चादुष्णोदके कुण्डे विधिं कुर्याद्यथोदितः ॥

2. वर्षमेकं प्रयुञ्जीत जीवेद्वर्षायुतं सुखी ।
वलीपलितनिर्मुक्तो भोगी चैव पुरन्दरः ॥
वर्षमेकं पिबेत्तोयं जीवेच्चन्द्रार्कतारकम् ।

विश्राम्य तु धमेद्देवि! स्याच्चतुर्दशवर्णकम्।
क्रमेणानेन देवेशि! शुल्वं षोडशवर्णकम् ॥४७५॥

एकैकं हेमतारांशं द्वयं कांताभ्रयोः पृथक्।
उष्णोदकेन सम्मर्द्य धमनात्खोटतां नयेत् ॥ ४७६ ॥

तं मुखे धारयेन्मासं वज्रकायो भवेत्ततः।
तच्चूर्णं यवमात्रं तु भक्षयेन्मधुसर्पिषा ॥ ४७७ ॥

यावत्पलं तस्य मलैश्शुल्वं भवति काञ्चनम्।
उष्णोदपाचितान्खादेत्कुलुत्थान्क्षीरपो भवेत् ॥ ४७८ ॥

स्नानमुष्णांभसा कुर्याद्वर्षाद्वर्षाच्छतायुषः।
क्षीरमुष्णोदकं क्वाथं त्रिफलायाश्च पाचयेत् ॥ ४७९ ॥

पाचयेत्पायसं कान्तपात्रे भुक्त्वा महायुषः।

[शैलोदककल्पः।]

अतः परं प्रवक्ष्यामि शैलोदकविधिं प्रिये! ॥ ४८० ॥

कर्दमापो महीशैलशिला चेति चतुर्विधम्।
कानिचित्क्षणवेधीनि दिनवेधीनि कानि च ॥ ४८१ ॥

पक्षमासादिषण्मासवेधनानि महीतले।
क्षिप्तं जले यदा काष्ठं शैलीभूतं च दृश्यते ॥४८२॥

बहिरन्तश्च देवेशि! वेधकं तत्प्रकीर्तितम्।
हिङ्गुलं हरितालं च गन्धकं च मनश्शिलाम् ॥४८३॥

एषां गन्धापहारं तु कुरुते तच्च वेधकम्[1]।
अन्यथा चे(वे)ष्टकं देवि तदग्राह्यं निरर्थकम् ॥

---

1. गन्धकं तालकञ्चैव तोयपूर्णे घटे क्षिपेत्।
यदा तद्बुद्बुदाकारं तदा शैलोदकं भवेत् ॥

श्रीशैले श्रीवनप्रान्ते पर्यङ्काख्ये शिलातले ।
तत्रस्थं क्षणवेधि स्यान्नद्यां भगवतीतटे ॥ ४८५ ॥

एकाहे वेधकं तत्र गोकर्णे तु दिनत्रयम् ।
भद्रांगे दिनवेधि स्यात्तिलस्थलान्ते त्रिवत्सरम् ॥४८६॥

धारेश्वरे पाक्षिकं स्यात्कर्षापुर्यां दिनैकतः ।
ब्रह्मेश्वरे मासिकं स्याद्व्याघ्रपुर्यां तु वासरम् ॥ ४८७ ॥

अघोरेशे मासिकं स्यात्सिद्धद्वीपे तथा पुनः ।
दिनमेकं ब्रह्मगिरौ विन्ध्ये तु क्षणवेधकम् ॥ ४८८ ॥

वासरं माल्यवन्ते तु क्षणवेधी तु तत्र च ।
किष्किन्धे पर्वते रम्ये पंपातीरे क्षणोदकम् ॥ ४८९ ॥

तस्य पश्चिमतो देवि ! योजनद्वितये पुनः ।
भूशैलमस्ति तत्रैव त्रिदिनं वेदपर्वते ॥ ४९० ॥

[1]अन्यत्र यत्र यत्रापि ब्रह्मविष्णुशिवोद्भवम् ।
अमृतं तत्र तत्रापि वज्रीकरणमुत्तमम् ॥ ४९१ ॥

तस्योत्पत्तिं प्रवक्ष्यामि यथा जानाति साधकः ।
महीं समुद्धृतवतो वराहस्य कलेबरात् ॥ ४९२ ॥

यस्स्वेदः पतितस्तस्माज्जातं शैलोदकं परम् ।
तं मुखे क्षणिकं जातं कर्णदेशे तु वासरम् ॥४९३॥

बाहुभ्यां त्र्यहवेधी स्यान्मासवेधी तु पार्श्वयोः ।
षण्मासमपराङ्गे च सर्वं समफलं च तत् ॥ ४९४ ॥

अघोरास्त्रेण तत्क्षेत्रे रक्षां कृत्वा दिशां बलिम् ।

---

1. सह्याचले पुरे देव्याः क्षीरक्षेत्रस्य सन्निधौ ।
शैलोदकं कोटिवेधि दुर्जदेशेऽपि वासरम् ॥
लक्षवेधि नृसिंहस्य नगरे गोकुलाभिधे ।

दत्वा लक्षं जपित्वा तु गृह्णीयादमृतं परम् ॥ ४९५ ॥

शरद्ग्रीष्मवसन्तेषु हेमन्ते वा सुरार्चिते ।
आयसे ताम्रपात्रे वा कान्तलोहमयेऽथवा ॥ ४९६ ॥

शिलाम्बुपलमष्टौ तु पलं क्षीरस्य निक्षिपेत् ।
क्षीरावशेषं संक्वाथ्यं त्रिसप्ताहं पिबेन्नरः ॥ ४९७ ॥

जीवेद्वर्षसहस्रं तु वलीपलितवर्जितः ।
अथवाऽष्टपलं क्षीरं पलैकेनाम्बुमिश्रितम् ॥ ४९८ ॥

क्षीरावशेषं सेवेत पूर्वोक्तं लभते फलम् ।
कुलुत्थाष्टगुणं वारि पचेदष्टावशेषितम् ॥ ४९९ ॥

चतुर्गुणेन तेनाऽऽज्यं पाचयेद्घृतशेषितम् ।
लिह्यान्मधुसितोपेतं त्रिसप्ताहाद्बृहस्पतिः ॥ ५०० ॥

द्विरष्टवार्षिकाकारस्सहस्रायुर्नसंशयः ।
अवशिष्टकुलुत्थं तु पादांशमधुसर्पिषा ॥ ५०१ ॥

भक्षयेत्कर्षमेकं तु मासेनायुतजीवितः ।
तत्सिद्धतैलेनाभ्यङ्गं म्रक्षणं चैव कारयेत् ॥ ५०२ ॥

पामाविचर्चिकादद्रुकुष्ठानि सहसा जयेत् ।
वलीपलितनिर्मुक्तस्सहस्रायुश्च जायते ॥ ५०३ ॥

यः पिबेत्प्रातरुत्थाय शैलाम्बु चुलुकं पयः ।
षण्मासात्स्यात्सहस्रायुर्निर्वलीपलितश्च सः ॥ ५०४ ॥

अथवा सूतकं देवि ! वारिणा सह मर्दयेत् ।
मासेनैकेन देवेशि ! नष्टपिष्टिर्भविष्यति ॥ ५०५ ॥

मासमात्रं समश्नीयात्स भवेदजरामरः ।
अथवा तं रसं हेम्ना धामयेत्खदिराग्निना ॥ ५०६ ॥

गुलिका सुन्दरी नाम सर्वायुधनिवारिणी ।
कर्ता हर्ता स्वयं सिद्धो जीवेच्चन्द्रार्कतारकम् ॥५०७॥

अथ तेनोदकेनैव क्षीरार्धं पायसं पचेत् ।
मासमात्रप्रयोगेण वलीपलितवर्जितः ॥ ५०८ ॥

पक्त्वा तेनाम्भसा पथ्याष्पष्टिस्त्रीणि शतानि च ।
मधु संयोज्य भाण्डस्थं भूमौ सर्वं निधापयेत् ॥५०९॥

दिने दिने तदेकैकं भक्षयेत्प्रातरुत्थितः ।
वलीपलितनिर्मुक्तो जीवेद्वर्षसहस्रकम् ॥ ५१० ॥

शैलीभूतं कुलुत्थं वा भक्षयेन्मधुसर्पिषा ।
षण्मासात्तु प्रयोगेण जीवेद्वर्षसहस्रकम् ॥ ५११ ॥

कूश्माण्डमादितः कृत्वा यानि कानि फलानि च ।
जले क्षिप्तानि लोहानि शैलभूतानि भक्षयेत् ॥ ५१२ ॥

क्षीराहारश्च जीर्णान्ते वज्रकायो भवेन्नरः ।
तेनोदकेन सम्मर्द्यमभ्रकं क्राथयेत्प्रिये ! ॥ ५१३ ॥

कटुत्रययुतं खादेज्जीवेद्वर्षसहस्रकम् ।
अथवा रसकर्षैकं तज्जलेन तु मर्दितम् ॥ ५१४ ॥

इङ्गुदीफलमध्यस्थं तच्छैलोदकमध्यगः ।
कालेन त्रिगुणेनैव काठिन्यं तस्य जायते ॥ ५१५ ॥

षण्मासं तन्मुखे धार्यं वज्रकायं करोति तत् ।
दशनागसमप्राणो देवैस्सह स मोदते ॥ ५१६ ॥

गृहीत्वा त्रिफलां तत्र शैलवारिणि निक्षिपेत् ।
यदा भवति तच्छैलं गृहीत्वा चूर्णयेत्ततः ॥ ५१७ ॥

कान्तजीर्णरसं तेन सार्धं घृतमधुप्लुतम् ।
भक्षयेद्वर्षमेकं तु ततः क्षीराशनो भवेत् ॥ ५१८ ॥

उदयादित्यसङ्काशो मेधावी प्रियदर्शनः ।
नीलकुञ्चितकेशश्च जीवेच्चन्द्रार्कतारकम् ॥ ५१९ ॥

पारदं हरितालं च शिलां माक्षिकमेव च ।
दरदं च विषं चैव सर्वमेकत्र कारयेत् ॥ ५२० ॥

मर्दयेत्खल्वपाषाणे मातुलुङ्गरसेन तु ।
गोलकं कारयित्वा तु वारिमध्ये विनिक्षिपेत् ॥५२१॥

तेन तारं च शुल्बं च कांचनं भवति ध्रुवम् ।
उपयुञ्जीत मासैकं वलीपलितवर्जितः ॥ ५२२ ॥

सहस्रं जीवितं तस्य महाबलपराक्रमः ।
शैलीभूतहरिद्रां तु तच्चूर्णावापमात्रतः ॥ ५२३ ॥

हेमत्वं लभते नागो बालार्कसदृशप्रभः ।
शैलोदके विनिक्षिप्य भूशैले कर्दमेऽपि वा ॥५२४॥

ज्ञात्वा कालप्रमाणेन बन्धयेत्पारदं ततः ।
रक्तक्षारयुतं ध्मातं सुवर्णसमसारितम् ॥ ५२५ ॥

शतांशेन तु लोहानां सर्वेषां हेमकारकम्[1] ।
द्वितीयसारणां प्राप्य सहस्रांशेन विध्यति ॥ ५२६ ॥

तं खोटं धारयेद्वक्त्रे दिव्यत्वं लभते ध्रुवम् ।

[केचन घुटिकायोगाः ।]

निचुले ककुभे चैव किंशुके मधुकेऽपि वा ॥५२७॥

इङ्गुदीफलमध्ये वा रजनीद्वयमार्द्रके ।
अमृते कन्दके वाऽथ उक्तकन्दौषधीषु च ॥ ५२८ ॥

---

1. द्वितीयसारणां प्राप्य भक्षयेन्मधुसर्पिषा ।
तत्कालं चित्तजातानां ऊर्ध्वं भवति चानिलः ॥
कालज्ञानं भवेत्तस्य जीवेदयुतपञ्चकम् ।

विधाय कोटरं तत्र क्षिप्त्वा तेनैव डोलयेत् ।
त्रिफलाव्योषकल्केन वेष्टयित्वा प्रयत्नतः ॥ ५२९ ॥

पादेन कनकं दत्वा पारदं तत्र योजयेत् ।
शैलोदके क्षिपेत्तत्र गुलिका वज्रवद्भवेत् ॥ ५३० ॥

पूर्ववत्सारणा कार्या पूर्ववत्सिद्धिदा भवेत् ।
धार्यमाणा मुखे सा तु सहस्रायुष्करी भवेत् ॥५३१॥

द्वितीयसारणायोगादयुतं वेधयेत्तु सा ।
धार्यमाणा मुखे सैवमयुतायुष्यदा भवेत् ॥ ५३२ ॥

तृतीयसारणायोगाज्जायते लक्षवेधिनी ।
तं खोटं धारयेद्वक्त्रे लक्षायुर्जायते नरः ॥ ५३३ ॥

चतुर्थी सारणा देवि ! कोटिवेधी न संशयः ।
कोट्यायुर्जीवितं तस्य खेचरत्वं च लभ्यते ॥ ५३४ ॥

पञ्चभिर्दशकोटिस्स्यात्षड्भिः कोटिशतं भवेत् ।
यावच्चन्द्रार्कजीवित्वमनन्तबलवीर्यवान् ॥ ५३५ ॥

ददाति सप्तमी चापि सारणा गुलिका परा ।
खेचरी नाम विख्याता भैरवेण प्रचोदिता ॥ ५३६ ॥

यस्तु तद्राजिकामात्रं मासमेकं तु भक्षयेत् ।
वज्रदेहस्स सिद्धस्स्याद्दिव्यस्त्रीजनवल्लभः ॥ ५३७ ॥

क्रीडते खेचरैर्भोगैस्स्वेच्छया शिवतां व्रजेत् ।
नानाविधफलाश्चास्या घुटिकां शृणु सुन्दरि ! ॥५३८॥

शुद्धबद्धं रसेन्द्रं तु गन्धकं तत्र जारयेत् ।
त्रिगुणे गन्धके जीर्णे तेन हेम तु कारयेत् ॥ ५३९ ॥

कारयेद्भस्म सूतं तु काञ्चनं तेन सूतकम् ।
तद्भस्म सूतके जार्यं रसेन्द्रस्य समे समम् ॥ ५४० ॥

तेन सूतकजीर्णेन वज्ररत्नं तु घातयेत् ।
तद्वज्रं जायते भस्म सिन्दूरारुणसन्निभम् ॥ ५४१ ॥

तद्भस्म जारयेत्सूते त्रिगुणे तु सुरार्चिते ! ।
हाटकं सारयेत्तं तु घुटिकां तेन कारयेत् ॥ ५४२ ॥

त्रिलोहावेष्टितं तं तु मुखे प्रक्षिप्य साधकः ।
नष्टच्छायो भवेत्सोऽयमदृश्यो देवदानवैः[1] ॥ ५४३ ॥

लक्षवर्षसहस्राणि निर्वलीपलितो भवेत् ।
शूलिनं शक्तिसंयुक्तं रत्नादिगुणभूषितम् ॥ ५४४ ॥

वक्त्रे करे च बिभृयात्सर्वायुधनिवारणम् ।
व्योम माक्षिकसत्वं च तारं ताम्रं सुरायुधम् ॥ ५४५॥

सारलोहं सूतकं च रत्नादिगुणभूषितम् ।
घुटिका सा वरारोहे ! मधुरत्रयसंयुता ॥ ५४६ ॥

वक्त्रस्था नाशयेत्साक्षात्पलितं नात्र संशयः ।
शिवश्शक्तिश्च देवेशि ! रत्नानि सितगोनसा ॥५४७॥

हेम तारं तथा भानुस्समभागानि कारयेत् ।
स्त्रीरजो व्याघ्रमध्यस्थं पद्मसूत्रेण वेष्टयेत् ॥ ५४८ ॥

सि(त्रि)तयेन तथा वेष्ट्यं गुह्यस्थाने निवेशयेत् ।
रणे राजकुले द्यूते दिव्ये कामे जयो भवेत् ॥५४९॥

वैक्रान्ताभ्रककान्तं तु सस्यकं तु सुरायुधम् ।
विभीतकादिसंभूतकांजिकस्य समं भवेत् ॥ ५५० ॥

समावर्त्य ततस्सूते योजयेत्पादयोगतः ।
कुमारीरसङ्घृष्टा कृतैषा घुटिका शुभा ॥ ५५१ ॥

---

1. तत्क्षणाद्वेधयेद्देवि ! सर्वलोहानि काञ्चनम् ।

रोगमृत्युजरा हन्ति वक्त्रस्था नात्र संशयः ।
पञ्चतारं वरारोहे! सूतकद्वयमेव च ॥ ५५२ ॥

त्रयो गगनभागास्स्युरेकैकं हेमकान्तयोः ।
अर्धं शुल्बं विभागेन गुलिकाऽमरसुन्दरी ॥ ५५३ ॥

अक्षयो ह्यजरश्चैव भवेत्तेन महाबलः[1] ।
भस्म सूतपलैकं च मृतकान्तपलं तथा ॥ ५५४ ॥

माक्षिकस्य पलं चैव शिलाजतु पलं तथा ।
पलमेकं विडङ्गस्य पथ्याचूर्णपलं तथा ॥ ५५५ ॥

एकीकृत्य तु तत्सर्वं मध्वाज्येन तु पेषयेत् ।
गुलिकाः कारयेत्तेन षष्ट्याऽधिकशतत्रयम् ॥ ५५६ ॥

एकैकां भक्षयेन्नित्यं वर्षमेकं निरन्तरम् ।
जीवेद्वर्षशतायुस्स यथा रुद्रो महाबलः ॥ ५५७ ॥

[केचन रसायनकल्पाः ।]

अतः परं प्रवक्ष्यामि रसभस्मरसायनम् ।
विज्ञेयं निष्परिहारं साक्षाद्दिव्यौषधं परम् ॥ ५५८ ॥

आमलक्यादि कान्तं च पारदं च मनश्शिलाम् ।
बाकुचीसमभागानि क्षीरिणीरसपेषितम् ॥ ५५९ ॥

मेघनादरसोपेतं मूकमूषागतं पचेत् ।
माषं द्विमाषं त्रिगुणं भक्षयेत्तत्क्रमेण तु ॥ ५६० ॥

वर्षत्रयं परं देवि! पादनिष्कार्धकं क्रमात् ।
षट् सप्ताष्टौ च वर्षाणि क्रमान्निष्कप्रमाणतः ॥५६१॥

---

1. सर्वरोगविनिर्मुक्तो जीवेद्वक्त्रे विधारणात् ।

भुञ्जीत स च दिव्यान्नं जरावैरूप्यवर्जितः।
किञ्चित्काञ्चनसंयुक्तं निष्कं निष्कार्धमेव वा ॥५६२॥

यो भक्षयेत्त्रिभिर्वर्षैस्सर्वव्याधीञ्जयत्ययम्।
अष्टवर्षसहस्रायुर्द्वादशे लक्षवेधकः॥ ५६३॥

षोडशे वत्सरे देवि! दिव्यरूपस्स जायते।
उत्तमो मूलबन्धस्तु मध्यमं सारबन्धनम्॥ ५६४॥

अधमः पाकबन्धस्तु एवं त्रिविधबन्धनम्।

शतपलमभयानामक्षधात्र्योस्तथैव
क्वथितजलसमाष्टौ भागमष्टावशिष्टम्।
घृतमधुसितयाढ्यं व्योषचित्रं दशैव
रसपलदशसिद्धं लोहजीर्णं मृतं च॥ ५६५॥

गिरियुत(जतु)सममभ्रं कान्तभृङ्गं विडङ्गं
रससहितविभाव्यं तण्डुलैर्बिल्वमज्जैः।
हिमकरकृतकल्कं लोहपात्रस्थमासं
त्रिदिनतनुविशुद्धं कल्कमेनं वरिष्ठम्॥ ५६६॥

लिहति शयनकाले चामनेत्रार्धसेवी
घननिबिडसमाधिर्मत्तमातङ्गदर्पः।
विगतसकलदोषस्सर्वदृक् दिव्यचक्षुः
मदन इव सुकान्तिः कामिनीनां प्रवीरः॥ ५६७॥

जलद इव वपुष्मान्कुञ्चिताग्राग्रकेशः
तुरग इव विशुद्धस्सत्कविश्चित्रकारी।
वृषभगतिविचेष्टो मन्दगम्भीरघोषः
सुरगज इव लोके चन्द्रतारार्कजीवी॥ ५६८॥

कान्तहेमरविचन्द्रमभ्रकै-
गोलकं निहितमिङ्गुदीफले ।
शैलवारिविरिसिद्धगोलकं
सुन्दरी भ्रमरसंज्ञिका शुभा ॥ ५६९ ॥

कान्तहेमरविचन्द्रमभ्रकं
वज्ररत्नरस(महि)राजगोलकम् ।
क्षिप्तमामलककाष्ठकोदरे
भूमिशैलनिहितं समुद्धृतम् ॥ ५७० ॥

शैलतां गतमथाहितं मुखे
वज्रकायकरक(म)ल्पवासरैः ।
तारहेमवरशुल्बसूतकै-
गोलकं वरणकाष्ठयन्त्रितम् ॥ ५७१ ॥

शैलवारिकृतसुन्दरीरसैः
खेचरीति गुलिका निगद्यते ॥ ५७२ ॥

शैलाम्बुनिक्षिप्तपलाशबीजं
शैलीकृतं क्षौद्रघृतेन खादेत् ।
त्रिसप्तरात्रं दिनमेकमेकं
सहस्रजीवी विदितो नरस्स्यात् ॥ ५७३ ॥

सूतकं चाभ्रकं चैव वज्रतीक्ष्णसमन्वितम् ।
हाटकेन समायुक्तं गुलिका खेचरी भवेत् ॥ ५७४ ॥

करञ्जफलमध्यस्थं सूतं तत्रैव निक्षिपेत् ।
धृतश्शैलाम्बुमध्यस्थस्सहस्रायुः प्रयच्छति ॥ ५७५ ॥

तिन्दुके द्विसहस्रायुर्जम्बीरे त्रिसहस्रकम् ।
मातुलुंगे च नारङ्गे चतुःपञ्चसहस्रकम् ॥ ५७६ ॥

रम्भाफले षट्सहस्रं पनसे सप्तसंख्यकम् ।
विभीतकफले चैव दशसाहस्रसंख्यकम् ॥ ५७७ ॥

नालिकेरे महाभागे ! सहस्राणि चतुर्दश ।
त्रिंशत्सहस्रं पथ्यायां लक्षमामलके पुनः ॥ ५७८ ॥

अभ्रपत्रभवात्क्राथादहोरात्रं शिलोदके ।
बध्नाति चोद्धृतं सूतं मृत्युदारिद्र्यनाशनम् ॥ ५७९ ॥

सारणाक्रमयोगेन वज्रवज्जायते वपुः ।
रसे रसायने चैव लक्षवेधी न संशयः ॥ ५८० ॥

कर्दमं तु कुमार्याश्च रसेन कृतपिण्डिकम् ।
धमनात्पतते सत्वं मुखस्थं धारयेन्नरः ॥ ५८१ ॥

षण्मासोपप्रयोगेण ह्यजरामरतां व्रजेत् ।
स्रोतोऽञ्जनयुतं ध्मातं सत्वं पारदमिश्रितम् ॥ ५८२ ॥

तत्खोटं धारयेद्वक्त्रे ह्यदृश्यो भवति ध्रुवम् ।
यस्य यो विधिराम्नात उदकस्य शिवागमे ॥ ५८३ ॥

शतेन बत कालेन कुर्याद्देहे रसायनम् ।

**बद्धजारणविधिः ॥**

या पूर्वा निर्मिता सेयमधमा बालजारणा ॥ ५८४ ॥

उत्तमा दुर्लभा चैव श्रूयतां बद्धजारणा ।
अबद्धं जारयेद्यस्तु क्षीय(जीर्य)माणः क्षयं व्रजेत् ॥

बद्धस्य जीर्यते ग्रासो जीर्णस्य च मुखं भवेत् ।
समुखो दुर्मुखं दत्ते सामान्योत्तमलक्षणम् ॥ ५८६ ॥

[बन्धप्रकाराः ।]

सामान्योऽग्निसहत्वेन महारत्नादिजारकः ।
सामान्यः प्रथमः कार्यस्सग्रासस्तु समन्ततः ॥ ५८७ ॥

वसुदेहकरो देवि! सामान्यो हि भवेदयम् ।
ग्रासहीनस्तु यो बद्धो दिव्यसिद्धिकरो भवेत् ॥५८८॥

उत्तमो मूलबन्धस्तु मध्यमं सारबन्धनम् ।
अधमः पाकबन्धस्तु एवं त्रिविधबन्धनम् ॥ ५८९ ॥

मूलबन्धस्तु यो बन्धो मूलसंकुचितं महत् ।
सारबन्धस्तु यो बन्धो वासनाबन्ध उच्यते ॥ ५९० ॥

स्याच्चतुष्षष्टिमूलेभ्यः किंचिन्मूलेन बन्धनम् ।
प्राण्यङ्गं दैत्यादीनां मूलाङ्गं देवतामयम् ॥ ५९१ ॥

पाषाणं चैव सिद्धानां मानुषाणां च पूजितम् ।
पीठि(पिण्डि)काद्रुतिसकोचैस्त्रिविधं बन्धनं भवेत् ॥

दिव्याभिरौषधीभिः प्रागुक्तं संकोचबन्धनम् ।

[द्रुतिबन्धः ।]

द्रुतिभिर्बध्यते सूतः क्षणबन्ध उदाहृतः ॥ ५९३ ॥

अभ्रकं हरबीजं च षोडशांशेन काञ्चनम् ।
ध्मातं प्रकाशमूषायां शोधयेत्काचटङ्कणैः ॥ ५९४ ॥

दक्षिणावर्तितं ध्मातं हरबीजेन मेलकम् ।
मूषां त्यक्त्वा वरारोहे! तिष्ठते खग(बद्ध)वद्रसः ॥

रक्तिकार्धार्धमात्रेण पर्वतानपि वेधयेत् ।
भक्षणात्तस्य देवेशि! रुद्रतुल्यो भवेन्नरः ॥ ५९६ ॥

क्रीडते सप्तलोकेषु शिवतुल्यपराक्रमः[1] ।

### द्रुतिमेलनविधिः ॥

वज्रकन्दं गुडूची च उच्चटादिसमन्वितम् ॥ ५९७ ॥

अभ्रकं क्रमते शीघ्रमन्यथा नास्ति सङ्क्रमः ।
कृष्णागरुनाभिसितैः (शङ्खनाभि)रसोनपितरामठैः ॥

नारीकुसमपालाशबीजतैलसमन्वितैः ।
सोष्णैर्मिलन्ति मृदिता द्रुतयस्सकला रसे ॥ ५९९ ॥

### वज्रबन्धः ॥

[दशसङ्कलिकाविधिसिद्धः ।]

पुनरन्यं प्रवक्ष्यामि वज्रबन्धं सुरार्चिते ! ।
गन्धकं भक्षयेन्नारी दिनानामेकविंशतिम् ॥ ६०० ॥

तद्रजो रसराजस्य बन्धने जारणे हितम् ।
वज्रभस्म तु भागैकं भागाश्शुद्धरसात्त्रयः ॥ ६०१ ॥

द्विपदीरजसा मर्द्यं यावत्तत्कल्कतां गतम् ।
पादांशेन सुवर्णेन(र्णस्य) पत्रलेपं तु कारयेत् ॥६०२॥

सो(व्यो)मवल्लीरसं कान्तं टङ्कणालं सुचूर्णितम् ।
दद्यात्तमष्टमांशेन मर्दयेच्च प्रयत्नतः ॥ ६०३ ॥

नष्टपिष्टं च शुष्कं तदन्धयित्वा पुटे ततः ।
अन्धमूषागतं ध्मातं क्रामणेन समन्वितम् ॥ ६०४ ॥

खोटस्तु जायते देवि ! शतवेधी महारसः ।
सौवीरं टङ्कणं काचं दत्वा दत्वा विशोधयेत् ॥६०५॥

---

1. द्रुतीनां मेलनं देवि ! दिव्यौषधिपरं शृणु ।

[बन्धप्रकाराः।]

सामान्योऽग्निसहत्वेन महारत्नादिजारकः।
सामान्यः प्रथमः कार्यस्सग्रासस्तु समन्ततः॥ ५८७॥

वसुदेहकरो देवि! सामान्यो हि भवेदयम्।
ग्रासहीनस्तु यो बद्धो दिव्यसिद्धिकरो भवेत्॥५८८॥

उत्तमो मूलबन्धस्तु मध्यमं सारबन्धनम्।
अधमः पाकबन्धस्तु एवं त्रिविधबन्धनम्॥ ५८९॥

मूलबन्धस्तु यो बन्धो मूलसंकुचितं महत्।
सारबन्धस्तु यो बन्धो वासनाबन्ध उच्यते॥ ५९०॥

स्याच्चतुष्षष्टिमूलेभ्यः किंचिन्मूलेन बन्धनम्।
प्राण्यङ्गं दैत्यादीनां मूलाङ्गं देवतामयम्॥ ५९१॥

पाषाणं चैव सिद्धानां मानुषाणां च पूजितम्।
पीठि(पिण्डि)काद्रुतिसकोचैस्त्रिविधं बन्धनं भवेत्॥

दिव्याभिरौषधीभिः प्रागुक्तं संकोचबन्धनम्।

[द्रुतिबन्धः।]

द्रुतिभिर्बध्यते सूतः क्षणबन्ध उदाहृतः॥ ५९३॥

अभ्रकं हरबीजं च षोडशांशेन काञ्चनम्।
ध्मातं प्रकाशमूषायां शोधयेत्काचटङ्कणैः॥ ५९४॥

दक्षिणावर्तिनं ध्मातं हरबीजेन मेलकम्।
मूषां त्यक्त्वा वरारोहे! तिष्ठते खग(बद्ध)वद्रसः॥

रक्तिकार्धार्धमात्रेण पर्वतानपि वेधयेत्।
भक्षणात्तस्य देवेशि! रुद्रतुल्यो भवेन्नरः॥ ५९६॥

क्रीडते सततलोकेषु शिवतुल्यपराक्रमः[1] ।

### द्रुतिमेलनविधिः ॥

वज्रकन्दं गुडूची च उच्चटादिसमन्वितम् ॥ ५९७ ॥
अभ्रकं क्रमते शीघ्रमन्यथा नास्ति सङ्क्रमः ।
कृष्णागरुनाभिसितैः (शङ्खनाभि)रसोनपितरामठैः ॥
नारीकुसमपालाशबीजतैलसमन्वितैः ।
सोष्णैर्मिलन्ति मृदिता द्रुतयस्सकला रसे ॥ ५९९ ॥

### वज्रबन्धः ॥

[दशसङ्कलिकाविधिसिद्धः ।]

पुनरन्यं प्रवक्ष्यामि वज्रबन्धं सुरार्चिते ! ।
गन्धकं भक्षयेन्नारी दिनानामेकविंशतिम् ॥ ६०० ॥
तद्रजो रसराजस्य बन्धने जारणे हितम् ।
वज्रभस्म तु भागैकं भागाश्शुद्धरसास्त्रयः ॥ ६०१ ॥
द्विपदीरजसा मर्द्यं यावत्तत्कल्कतां गतम् ।
पादांशेन सुवर्णेन(र्णस्य) पत्रलेपं तु कारयेत् ॥६०२॥
सो(व्यो)मवल्लीरसं कान्तं टङ्कणालं सुचूर्णितम् ।
दद्यात्तमष्टमांशेन मर्दयेच्च प्रयत्नतः ॥ ६०३ ॥
नष्टपिष्टं च शुष्कं तदन्धयित्वा पुटे ततः ।
अन्धमूषागतं ध्मातं क्रामणेन समन्वितम् ॥ ६०४ ॥
खोटस्तु जायते देवि ! शतवेधी महारसः ।
सौवीरं टङ्कणं काचं दत्वा दत्वा विशोधयेत् ॥६०५॥

---

1. द्रुतीनां मेलनं देवि ! दिव्यौषधिपरं शृणु ।

अक्षीणो मिलते हेम्ना समावर्तश्च जायते ।
एकोत्तरक्रमे वृद्ध्या सङ्कलैः क्रामयेत्ततः ॥ ६०६ ॥

एकगुणेन सूतेन एका सङ्कलिकोच्यते ।
त्रिगुणेन तु सूतेन द्वितीया सङ्कलोच्यते ॥ ६०७ ॥

षड्गुणेन तु सूतेन तृतीया सङ्कली भवेत् ।
दशगुणेन सूतेन चतुर्थी सङ्कली भवेत् ॥ ६०८ ॥

पञ्चादशगुणेनेशि ! पञ्चमी सङ्कली भवेत् ।
एकविंशद्गुणेनेशि ! षष्ठी सङ्कलिका भवेत् ॥ ६०९॥

अष्टाविंशद्गुणेनेशि ! सप्तमी सङ्कली स्मृता ।
षट्त्रिंशद्गुणिते बद्धा भवेत्सङ्कलिकाऽष्टमी ॥ ६१० ॥

पञ्चचत्वारिंशगुणे सङ्कली नवमी मता ।
पञ्चाध्यधिकपञ्चाशद्दशसङ्कलिका स्मृता ॥ ६११ ॥

एवं च क्रमवृद्ध्या तु सङ्कली दशबन्धिता ।
प्रथमे दशवेधी च शतवेधी द्वितीयके ॥ ६१२ ॥

तृतीये सहस्रवेधी स्याच्चतुर्थेऽयुतवेधिकः ।
पञ्चमे लक्षवेधी स्याद्दशलक्षन्तु षष्ठके ॥ ६१३ ॥

सप्तमे कोटिवेधी स्याद्दशकोटिं तथाऽष्टमे ।
धूमवेधी तु नवमे दशमे शब्दवेधकः ॥ ६१४ ॥

सङ्कलैस्सकलैर्बद्धे वेधो दशगुणो भवेत् ।
दशसंकलिकाबद्धश्शब्दवेधी महारसः ॥ ६१५ ॥

यथा लोहे तथा देहे क्रामते नात्र संशयः ।
वेधयेत्तत्प्रमाणेन धातूंश्चैव शरीरकम् ॥ ६१६ ॥

कारयेद्गुटिकां दिव्यां बदरास्थिप्रमाणतः ।
महाकालीं पूजयित्वा धारयेत्सततं बुधः ॥ ६१७ ॥

"ओं ऐं ह्रीं श्रीं
कालि कालि महाकालि मांसशोणितभोजनि ! ।
ह्रां ह्रीं ह्रूं
रक्ष कृष्णमुखि ! देवि ! रससिद्धिं ददस्व मे ॥
श्रीं ह्रीं ऐं ॥"

पूजयित्वा ततो देवीं सिद्धचक्रं विशेषतः ।
तां क्षिपेच्चक्रमध्ये तु घुटिकां दिव्यरूपिणीम् ॥६१९॥

शतवेधेन या बद्धा रसेन घुटिका प्रिये ! ।
मासमेकं तु वक्त्रस्था जीवेच्चैव यथा विधिः ॥६२०॥

तथा सहस्रवेधेन बद्धा या घुटिका शुभा ।
मासद्वयं तु वक्त्रस्था जीवेच्चन्द्रार्कतारकम् ॥ ६२१ ॥

दशसहस्रवेधेन बद्धा या घुटिका यदि ।
शक्रतुल्यं तदायुष्यं त्रिभिर्मासैस्तु जायते ॥ ६२२ ॥

लक्षवेधेन या बद्धा घुटिका दिव्यरूपिणी ।
चतुर्मासं तु वक्त्रस्था ब्रह्मायुष्यं प्रयच्छति ॥ ६२३ ॥

दशलक्षेण या बद्धा घुटिका दिव्यरूपिणी ।
सप्तमासं तु वक्त्रस्था वैष्णवं लभते फलम् ॥ ६२४ ॥

कोटिवेधेन या बद्धा घुटिका दिव्यरूपिणी ।
षण्मासंसंस्थिता वक्त्रे साक्षाद्वै रुद्रतां नयेत् ॥ ६२५ ॥

दशकोटिप्रभेदेन घुटिका दिव्यरूपिणी ।
सप्तमासं तु वक्त्रस्था स भवेद्व्यापको नरः ॥ ६२६ ॥

कर्ता हर्ता स्वयं भोक्ता शापानुग्रहकारकः ।
सर्वज्ञस्सर्वकर्ता च सूक्ष्मरूपो निरञ्जनः ॥ ६२७ ॥

इच्छया कुरुते सृष्टिमिच्छया संहरेज्जगत् ।

स्वच्छन्दगमनो भूत्वा शिवरूपो भवेन्नरः ॥ ६२८ ॥
पूज्यते सर्वदेवैश्च ब्रह्मविष्णुमहेश्वरैः ।

[अन्यो वज्रबन्धः ।]

पुनरन्यं प्रवक्ष्यामि वज्रबन्धं सुदुर्लभम् ॥ ६२९ ॥
समांशभक्षणं हेम शुद्धसूतेन कारयेत् ।
मृतवज्रं कलांशेन मर्दयेद्द्विपदीरसैः ॥ ६३० ॥
प्राग्वच्छेषं क्रियाजातं पूर्ववच्च फलं भवेत् ।
वज्रबन्धो भवेत्सिद्धो देवदानवदुर्जयः ॥ ६३१ ॥
चतुर्विंशतिसिद्धानां नायकस्सर्वसिद्धिमान् ।

[अन्यो वज्रबन्धः ।]

वज्रचूर्णसमं सूतं हंसपाद्या विमर्दितम् ॥ ६३२ ॥
पुटित्वा मारयेत्तत्र पुनस्तुल्यं रसं क्षिपेत् ।
ध्मातः खोटो भवत्याशु शोधितः काचटङ्कणैः ॥६३३॥
यावच्छुक्रोदयप्रख्यो जायते च रसः प्रिये ! ।

[अन्यो वज्रबन्धः ।]

वज्रसत्वं च गगनं रसं हेम च मेलयेत् ॥ ६३४ ॥
अमरत्वमवाप्नोति वक्त्रस्थेन सुराधिपे ! ।
जारयित्वा रसं तद्धि पुनस्तेनैव जारयेत् ॥ ६३५ ॥
कोटिवेधी न सन्देहो वक्त्रस्थं खेचरं परम ।
वेधयेत्तत्प्रमाणेन धातूंश्चैव शरीरकम ॥ ६३६ ॥
कारयेद्गुटिकां दिव्यां वज्रसिद्धेन काञ्चने ।
अनेन क्रमयोगेन यावच्छक्यं तु मारयेत् ॥ ६३७ ॥

तद्भस्म सूतकं देवि ! सर्वरोगनिबर्हणम् ।
हेम्ना च सारयित्वा तु चन्द्रार्कं लेपयेत्ततः ॥ ६३८ ॥

द्वात्रिंशांशेन हेमार्धं मातृकार्ये(भ्य)धिकं भवेत् ।
बदरास्थिप्रमाणेन कारयेद्गुलिकां बुधः ॥ ६३९ ॥

यथा लोहे तथा देहे क्रमते नान्यथा क्वचित् ।

[अन्यो वज्रबन्धः ।]

वज्रेण द्वन्द्वितं हेम कान्तशुल्बकपालिना(योजितम्) ॥

रञ्जयेत्सप्तवाराणि तं खोटं सूक्ष्मचूर्णितम् ।
भावितं स्त्रीरजेनैव भूर्जपत्रे निवेशितम् ॥ ६४१ ॥

द्रुतसूतेन संयुक्तं बध्वा वस्त्रेण पोट्टलीम् ।
स्वेदयेद्देवदेवेशि ! यावद्द्रवति गोलकः ॥ ६४२ ॥

लाङ्गली जीवनी चैव गन्धार्युत्तरवारुणी ।
एतेषां निक्षिपेत्पिण्डे वज्रगोलं तु वेष्टयेत् ॥ ६४३ ॥

मूषामध्ये विनिक्षिप्य सन्धयित्वा प्रयत्नतः ।
भूमौ मूषां विनिक्षिप्य पुटं मूर्ध्नि प्रदापयेत् ॥६४४॥

अनेनैव प्रतापेन बन्धमेति महारसः ।
गोलकं धारयेद्वक्त्रे वर्षमेकं यदा प्रिये ! ॥ ६४५ ॥

जीवेत्कल्पसहस्राणि यथा नागो महाबलः ।
वर्षैर्द्वादशभिस्साक्षाज्जायते रसपूरुषः ॥ ६४६ ॥

गात्रस्य तस्य प्रस्वेदादष्टौ लोहास्तु काञ्चनम् ।
वज्रभस्म तथा सूतं काञ्चनेन समन्वितम् ॥ ६४७ ॥

वक्त्रस्थं कुरुते यस्तु अब्दात्पलितवर्जितः ।

अन्ये वेधोपयोगिनो बन्धाः ॥

कृष्णाभ्रकस्य सत्वं च तारं ताम्रं च हाटकम् ॥६४८॥

माक्षिकं कान्ततीक्ष्णं च समभागानि कारयेत् ।
अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ॥ ६४९ ॥

तं खोटं सूक्ष्मचूर्णं तु द्रुतसूतेन गोलयेत् ।
मृतसत्व(वज्र)स्य भागैकं भागाश्चत्वारि गोलकम् ॥

मर्दयेत्तप्तखल्वेन भस्मीभवति सूतकः ।
मारयेद्भूधरे यन्त्रे सप्तसङ्कलिकाक्रमात् ॥ ६५१ ॥

गुञ्जामात्रं तु तद्भस्म मध्वाज्येन तु लेहयेत् ।
संवत्सरप्रयोगेण ह्ययुतायुर्भवेन्नरः ॥ ६५२ ॥

वलीपलितनिर्मुक्तो महाबलपराक्रमः ।
तद्भस्म पलमेकं तु पलैकं गन्धकस्य च ॥ ६५३ ॥

अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ।
जीवेत्कल्पसहस्राणि यथा नागो महाबलः ॥ ६५४ ॥

तस्य मूत्रपुरीषेण लोहान्यष्टौ च काञ्चनम् ।
तत्खोटं रञ्जयेत्पश्चाद्वङ्गाभ्रककपालिना ॥ ६५५ ॥

रञ्जयेत्सप्तवाराणि भवेत्कुङ्कुमसन्निभः ।
हेम्ना सह समावर्त्य सारणात्रयसारितम्[1] ॥ ६५६ ॥

शतांशेन तु तेनैव शुल्बमध्ये(वेधं) प्रदापयेत् ।

---

सहस्रांशेन तेनैव सर्वलोहानि वेधयेत् ।
कृष्णाभ्रकस्य सत्वं च तारं ताम्रं च हाटकम् ॥
तीक्ष्णं च बद्धसूतं च माक्षिकं च समन्वितम् ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥
हेम्ना सह समावर्त्य सारणात्रयसारितम् ।

जायते कनकं दिव्यं देवाभरणभूषणम्[1] ॥ ६५७ ॥

बद्धसूतस्य भागैकं भागैकं कुटिलस्य च[2] ।
अन्धमूषागतं ध्मातं यावद्वङ्गावशेषितम् ॥ ६५८ ॥

अनेन क्रमयोगेन वङ्गं निर्वाह्य षड्गुणम् ।
अनेन क्रमयोगेन वह्लागं च षड्गुणम् ॥ ३५९ ॥

ततस्तं रञ्जयेत्पश्चात्तीक्ष्णशुल्वकपालिना[3] ।
पक्वसूत(बीज)स्य भागेकं भागैकं द्रुतसूतकम् ॥६६०॥

मर्दयेन्मध्यमाम्लेन गोलकं भवति क्षणात् ।
मृतवज्रस्य भागैक भागाश्चत्वारि गोलकम् ॥ ६६१ ॥

मर्दयेत्तप्तखल्वेन भस्मीभवति सूतकः ।
मारयेद्भूधरे यन्त्रे सप्तसंकलिकाक्रमात् ॥ ६६२ ॥

तद्भस्म तु पुनः पश्चान्मध्यमाम्लेन मर्दयेत् ।
पुटं दद्यात्प्रयत्नेन षष्ट्याऽधिकशतत्रयम् ॥ ६६३ ॥

---

1. बद्धसूतस्य भागैकं भागैकं पन्नगस्य च ।
   हाटकस्य तु भागैकं भागैकं चाभ्रकान्तयोः ॥
   एकीकृत्य च तद्ग्रास्यं रसे जीर्णे तु जारयेत् ।
   शतांशेनैव तेनैव शुल्ववेधं प्रदापयेत् ॥

2. अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ।
   तत्खोटं भागमेकं च भागैकं गन्धकस्य च ॥

3. रञ्जयेत्तत्प्रयत्नेन यावत्कुङ्कुमसन्निभम् ।
   हेम्ना सह समावर्त्य सारणात्रयसारितम् ॥
   शतांशे वेधयेच्छुल्वं दिव्यं हेम प्रजायते ।
   पुनरन्यं प्रवक्ष्यामि द्रवसंस्कारमुत्तमम् ॥
   रञ्जयेच्छुद्धकनकं तीक्ष्णशुल्वकपालिना ।

तद्भस्म जायते दिव्यं सिन्दूरारुणसन्निभम् ।
तेनैव वेधयेत्तारं सहस्रांशेन काञ्चनम् ॥ ६६४ ॥

मृतवज्रस्य भागैकं भागाष्पोडश सूतकम् ।
देवदालीशङ्खपुष्पीरसेन मृदितं क्रमात् ॥ ६६५ ॥

मारयेद्भूधरे यन्त्रे भस्मीभवति तत्क्षणात् ।
पूत्काराणां सहस्रेण धाम्यमानं न गच्छति ॥ ६६६ ॥

ईदृशं भस्म सूतं च देहे लोहे च योजयेत् ।
तद्भस्म पलमेकं तु पलमेकं च गन्धकम् ॥ ६६७ ॥

अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ।
तं खोटं रञ्जयेत्पश्चात्कपालिक्रमयोगतः ॥ ६६८ ॥

सारणात्रययोगेन शुल्बवेधं प्रदापयेत् ।
भस्मसूतपलैकं च पलैकं पन्नगस्य च ॥ ६६९ ॥

कान्तपात्रेण तं कृत्वा मर्दयेल्लोहमुष्टिना ।
मृद्वग्निना ततः पाच्यं यावन्नागेन मेलकम् ॥ ६७० ॥

पुटेन जायते भस्म सिन्दूरारुणसप्रभम् ।
तद्भस्म तु पुनः पश्चाद्गोपित्तेन तु मर्दयेत् ॥ ६७१ ॥

तच्चतुर्दशवारांस्तु पुटयेद्भस्मयेत्ततः ।
तद्भस्म भागमेकं तु भागैकं हेमगोलकम् ॥ ६७२ ॥

एकीकृत्याऽथ सम्मर्द्य क्रामणेन सहैकतः ।
तारपि(रि)ष्टं तु तेनैव सहस्रांशेन काञ्चनम् ॥६७३॥

अनेन क्रमयोगेन वज्रभस्म प्रजायते ।
सहस्रांशेन तेनैव शुल्बवेधं प्रदापयेत् ॥ ६७४ ॥

तच्छुल्बं जायते तारं शङ्खकुन्देन्दुसन्निभम् ।
श्वेताभ्रकं च सत्वं च कांक्षी कान्तं तथाऽऽयसम् ॥

वङ्गं कान्तं (तारं) तथा श्वेतं वैक्रान्तं च कर्दवकम्।
अन्धमूषागतं ध्मातं खोटं कुन्देन्दुसन्निभम् ॥६७६॥

तं खोटं सूक्ष्मचूर्णं तु द्रुतसूतेन गोलकम्।
मृतवज्रस्य भागैकं भागाश्चत्वारि गोलकः ॥ ६७७ ॥

मर्दयेत्तप्तखल्वेन भस्मीभवति सूतकः।
मारयेद्भूधरे यन्त्रे सप्तसङ्कलिकाक्रमात् ॥ ६७८ ॥

ततश्च जायते भस्म शङ्खकुन्देन्दुसन्निभम्।
तद्भस्म पलमेकं तु पलमेकं तु गन्धकम् ॥ ६७९ ॥

अन्धमूषागतं ध्मातं खोटं भवति तद्रसः।
तारेण च समावर्त्य सारणात्रयसारितम् ॥ ६८० ॥

सहस्रांशेन तेनैव शुल्बवेधं प्रदापयेत्।
तीक्ष्णचूर्णपलान्यष्टौ पलाष्टौ द्रुतसूतकम् ॥ ६८१ ॥

मर्दयेत्तप्तखल्वेन टेटंचिल्वी(कुष्ठच्छल्ली)रसेन च।
तत्क्षणाज्जायते पिण्डं तीक्ष्णेन सह गोलकम् ॥६८२॥

मृतवज्रस्य भागैकं भागाश्चत्वारि गोलकम्।
मर्दयेत्तप्तखल्वेन भस्मीभवति तत्क्षणात् ॥ ६८३ ॥

मारयेद्भूधरे यन्त्रे सप्तसङ्कलिकाक्रमात्।
षोडशांशेन तेनैव वङ्गवेधं प्रदापयेत् ॥ ६८४ ॥

तद्भस्म पलमेकं तु पलैकं गन्धकस्य च।
अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ॥ ६८५ ॥

तस्य खोटस्य भागं च तीक्ष्णचूर्णं च तत्समम्।
द्वौ भागौ द्रुतसूतस्य सर्वमेकत्र मर्दयेत् ॥ ६८६ ॥

तप्तखल्वे तु सम्मर्द्य गोलकं भवति क्षणात्।
मारयेद्भूधरे यन्त्रे सप्तसङ्कलिकाक्रमात् ॥ ६८७ ॥

तत्सर्वं जारयेद्भस्म शङ्खकुन्देन्दुसन्निभम् ।
तद्भस्म कारयेत्खोटं तीक्ष्णेन द्रुन्द्रितं सह ॥ ६८८ ॥

अनेन क्रमयोगेन सप्तसङ्कलिकाक्रमात् ।
तं खोटं जारयेत्पश्चात्सारणात्रयसारितम् ॥ ६८९ ॥

लक्षांशेन तु तेनैव वङ्गवेधं प्रदापयेत् ।
भस्मसूतपलैकं तु शुद्धवङ्गं प्रदापयेत् ॥ ६९० ॥

मर्दयेदायसे पात्रे वङ्गं तु म्रियते क्षणात् ।
द्विपलं मृतवङ्गस्य तारचूर्णपलद्वयम् ॥ ६९१ ॥

द्विपलं गन्धकं दद्यात्पलैकं टङ्कणस्य च ।
अन्धमूषागतं ध्मातं खोटं भवति तत्क्षणात् ॥ ६९२ ॥

पलैकं खोटचूर्णस्य पलैकं द्रु(मृ)तसूतकम् ।
मर्दयेन्मातुलुङ्गाम्लैर्गोलको भवति क्षणात्[1] ॥ ६९३ ॥

षोडशांशेन तेनैव तारारिष्टं तु वेधयेत् ।
मृतवङ्गपलैकं तु पलैकं सूतकस्य च ॥ ६९४ ॥

सर्व(त्व)चूर्णं पलैकं तु त्रयमेकत्र कारयेत् ।
मर्दयेन्मातुलुङ्गाम्लैर्गोलको भवति क्षणात् ॥ ६९५ ॥

मृतवज्रस्य भागैकं भागश्चत्वारि गोलकम् ।
एकत्र मर्दयेद्भद्रे ! ओषधीद्रवसंयुतम् ॥ ६९६ ॥

मारयेद्भूधरे यन्त्रे पुटानां सप्तकेन तु ।
तत्सर्वं जायते भस्म वज्रस्यैव प्रभावतः ॥ ६९७ ॥

---

1. षोडशांशेन तेनैव शुल्बवेधं प्रदापयेत् ।
वङ्गस्थाने ददेन्नागं तारस्थाने च काञ्चनम् ॥
पूर्ववत्क्रमयोगेन रसं खोटं तु कारयेत् ।
तं खोटं सूक्ष्मचूर्णं तु द्रुतसूतेन गोलकम् ॥

सामुद्रं त्रिपलं देवि! भस्ममध्ये प्रदापयेत्।
एकीकृत्याऽथ सम्मर्द्य वज्रीक्षीरे दिनत्रयम् ॥ ६९८ ॥

विश्वामित्रकपालस्थं पुटं दद्यात्तु भूधरे।
तत्सर्वं जायते भस्म शङ्खकुन्देन्दुसन्निभम् ॥ ६९९ ॥

तेनैव यवमात्रेण वङ्गं स्तम्भयति क्षणात्।
वङ्गं तारं तथा सत्वं समसूतेन गोलकम् ॥ ७०० ॥

अनेन क्रमयोगेन मारयेच्च पृथक् पृथक्।
तत्सर्वं जायते भस्म वज्रस्यैव प्रभावतः ॥ ७०१ ॥

भस्मसूतपलैकं च वङ्गभस्म पलद्वयम्।
द्वे पले मृततारस्य सत्वभस्म पलद्वयम् ॥ ७०२ ॥

शङ्खचूर्णं पलं पञ्च सामुद्रस्य पलाष्टकम्।
टङ्कणस्य पलान्यष्टौ सर्वमेकत्र जारयेत् ॥ ७०३ ॥

वज्रीक्षीरेण संवेष्ट्य पुटं दद्याच्चतुर्दश।
एष सिद्धरसस्साक्षाद्दुर्लभस्त्रिदशैरपि ॥ ७०४ ॥

वङ्गं तु दाप(द्राव)येत्पश्चाद्भाण्डे चैव तु मृण्मये।
सिद्धं भस्म भवेल्लोहशलाकेन च चालयेत् ॥७०५॥

वापयेच्च प्रयत्नेन यावत्कठिनतां व्रजेत्।
अन्धमूषागतं ध्मातं तारं भवति शोभनम् ॥ ७०६ ॥

कदाचित्स्फा(पु)टिते तारे पुनर्वङ्गं प्रदापयेत्।
पत्रे दाहे कषे छेदे तत्तारं शाश्वतं भवेत् ॥ ७०७ ॥

सन्ति(स्तंभि)तं दनु(तत्तु)गोलं च षोडशांशसमन्वितम्।
मृतवज्रस्य भागैकमेकत्रैव तु कारयेत् ॥ ७०८ ॥

देवदाली शङ्खपुष्पं तद्रसेन तु मर्दयेत्।
मारयेद्भूधरे यन्त्रे पुटानां सप्तकेन तु ॥ ७०९ ॥

तद्भस्म तु पुनः पश्चाद्दीपयन्त्रेण पाचयेत् ।
भस्मसूतपलैकं च श्वेताभ्रकद(प)लद्वयम् ॥ ७१० ॥

शङ्खचूर्णपलैकं तु पलैकं टङ्कणस्य तु ।
एकीकृत्याथ तत्सर्वं वज्रीक्षीरेण पेषयेत् ॥ ७११ ॥

अरण्योत्पलकैः पश्चात्पुटं दद्याच्चतुर्दश ।
रसोऽयं यवमात्रेण वङ्गं स्तम्भयति क्षणात् ॥ ७१२ ॥

कृष्णाभ्रकपलैकं तु द्विपलेनैव सूतकम् ।
गन्धकस्य पलैकं च एकीकृत्याथ मर्दयेत् ॥ ७१३ ॥

मर्द्यमानं प्रयत्नेन गोलकं भवति क्षणात् ।
मृतवज्रस्य भागैकं भागाश्चत्वारि गोलकम् ॥ ७१४ ॥

मर्दयेत्प्रहरैकं तु भस्मीभवति सूतकः ।
आरण्यगोमयेनैव पुटं दद्यात्तु भूधरे ॥ ७१५ ॥

अनेन क्रमयोगेन सप्तसङ्कलिकां कुरु ।
शतांशेन तु तेनैव नागवेधं प्रदापयेत् ॥ ७१६ ॥

तं खोटं रञ्जयेत्पश्चाच्छुल्बाभ्रककपालिना ।
पुनस्तं रञ्जयेत्पश्चात्तीक्ष्णशुल्बकपालिना ॥ ७१७ ॥

पुनस्तं रञ्जयेत्पश्चान्नागाभ्रककपालिना ।
हेम्ना सह समावर्त्य सारणात्रयसारितम् ॥ ७१८ ॥

सहस्रांशेन तेनैव शुल्बवेधं प्रदापयेत् ।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥ ७१९ ॥

वज्रवल्ली(भस्म)स्नुहीक्षीरे पुटितं दशभिः पुटैः ।
तत्तुल्यं मर्दयेत्सूतं देवदाल्या रसैः पुटेत् ॥ ७२० ॥

तत्तुल्यं पुटयेत्तीक्ष्णं त्रिफलाया रसेन तु ।
तत्तुल्यं पुटयेन्नागमहिमाराटरूषकैः ॥ ७२१ ॥

हेमवर्णप्रदं तद्धि विंशत्यंशेन योजितम् ।
चतुष्षष्ट्यंशकेनेदं शुद्धतारं च रञ्जयेत् ॥ ७२२ ॥

अष्टमांशेन तेनैव नागपत्राणि लेपयेत् ।
पुटयेन्मारयेन्नागं सिन्दूरारुणसन्निभम् ॥ ७२३ ॥

तत्तुल्यं मारयेद्धेम काञ्चनाररसे पुटेत् ।
तत्तुल्यं मारयेच्छुल्वं गृहकन्यारसेन च ॥ ७२४ ॥

पश्चादम्लेन पुटयेद्यावत्सिन्दूरसन्निभम् ।
चन्द्रार्कौ रञ्जयेत्तेन शतांशेन तु पाचितम् ॥ ७२५ ॥

सबीजं बीजवर्ज्जं वा वज्रेण सह सूतकः ।
तद्रस मर्दयेत्पश्चात्स्वर्णपत्ररसेन च ॥ ७२६ ॥

तेनैव वेधयेच्छुल्वं शुल्वं तारेण योजयेत् ।

## वज्रहेमद्वन्द्वमेलापनम् ॥

वज्रेण द्वन्द्वयेद्धेम हेम्ना च द्वन्द्वयेद्रसम् ॥ ७२७ ॥

रसेन द्वन्द्वयेद्देहं स देहो ह्यजरामरः ।
कदलीटङ्कसौवीरं कण्टकारीरसप्लुतम् ॥ ७२८ ॥

क्रामणं सर्वधातूनां सर्वद्वन्द्वेषु मेलनम् ।
तिमिरस्य तु पञ्चाङ्गं पेटा(मार्जा)रीबीजसंयुतम् ॥७२९॥

एकीकृत्याऽथ सम्मर्द्य वज्रं तेनैव वेष्टयेत् ।
वज्रमूषागतं ध्मातं हेमद्वन्द्वं तु कारयेत् ॥ ७३० ॥

कान्तपाषाणचूर्णं तु भूलता रामठं मधु ।
गुञ्जाटङ्कणकाचं च कर्कटास्थि स्नुहीपयः ॥ ७३१ ॥

तत्सर्वं तु समं योज्यं स्त्रीस्तन्येन तु मर्दयेत् ।
मूषालेपः कृतः प्राज्ञो वज्रमेलापकस्सुखम् ॥ ७३२ ॥

हठाग्नौ वज्रमूषाभिर्द्वंद्वं वज्रा मिलन्ति च ।
सुसूक्ष्मा रवका भूत्वा ह्येकीभावं व्रजन्ति च ॥७३३॥

काचटङ्कणयोगेन ध्मातश्शुद्धिमवाप्नुयात् ।
बहुभिश्चैव मूषाभिस्तेजःपुञ्जोऽपि जायते ॥ ७३४ ॥

मृतवज्रस्य भागैकं भागाष्षोडश हाटकम् ।
श्वेतकाचस्य सूतं तु भागं षोडश दापयेत् ॥ ७३५ ॥

अन्धमूषागतं ध्मातं वज्रद्वन्द्वन्तु कारयेत् ।
अनेन क्रमयोगेन सप्तवारांश्च दापयेत् ॥ ७३६ ॥

मिलने तत्क्षणाद्वज्रं हेम्ना तु सलिलं यथा ।
चूर्णं नरकपालस्य मृतवज्रं च दापयेत् ॥ ७३७ ॥

अन्धमूषागतं ध्मातं हेम्ना मिलति तत्क्षणात् ।
भृङ्गपत्रं नृकेशं च मुखं कान्तस्य टङ्कणम् ॥ ७३८ ॥

बालवत्सपुरीषं च स्त्रीस्तन्येन तु पेषयेत् ।
अन्धमूषागतं ध्मातं वज्रं मिलति तत्क्षणात् ॥ ७३९ ॥

क्षीरेणोत्पलसारिण्या मृतवज्रं तु भावयेत् ।
हेमपिष्टिकया मध्ये वज्रं तत्रैव निक्षिपेत् ॥ ७४० ॥

वेष्टयेद्भूर्जपत्रेण बाह्ये वस्त्रेण वेष्टयेत् ।
धान्यमध्ये तु संस्थाप्य पक्षमेकं निरन्तरम् ॥ ७४१ ॥

उद्धरेत्तत्प्रयत्नेन वज्रबन्धं तु कारयेत् ।

### रत्नद्रुतिबन्धः ॥

द्रुता वज्रास्तु सूतेन मेलनीयास्तु पार्वति ! ॥ ७४२ ॥

द्रुतिबन्धस्स विज्ञेयश्शतसाहस्रवेधकः ।
रत्नानां द्रुतयस्सर्वा मेलयित्वा यथाविधि ॥ ७४३ ॥

शतसहस्रवेधी च देहसिद्धिप्रदायकः।
मुसली चित्रकं वन्ध्या कुक्कुटीकन्दपद्मिनी ॥७४४॥

कञ्चुकी नीलिसिन्दूरी पाठा नागबला यथा।
कंसपात्रे रसश्चैव रत्नानां द्रुतयस्तथा ॥ ७४५ ॥

आतपे धारयित्वा वै अधः कर्षानलं यथा।
ओषधीनां रसं दत्वा स्वच्छं कृत्वा पुनः पुनः ॥७४६॥

याममात्रं तु घर्मे च द्रुतिर्मिलति वै रसम्।
न तेषां कामणे शक्तिर्वक्तुं वक्त्रशतैरपि ॥ ७४७ ॥

सैन्धवं निंबपत्राणि बाकुची द्वेषिणीजके।
द्रुताभ्रस्य रसेनैव मेलनं परमं मतम् ॥ ७४८ ॥

वज्रद्वन्द्वानमीशानि! वज्रेण रसमारणम्।
सबीजं सारणं प्रोक्तं खोटबन्धनमेव च ॥ ७४९ ॥

तन्ममाचक्ष्व देवेशि! किमन्यच्छ्रोतुमर्हसि ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ त्रयोविंशोल्लासः ॥

---

# ॥ चतुर्विंश उल्लासः ॥

**महारसैरुपरसैर्लोहैश्च रसस्य वेधोपयोगिनो बन्धाः ॥**

**श्री भैरवः—**

महारसैरुपरसैर्लोहैश्च परमेश्वरि!।
आज्ञापय समस्तं तं रसराजस्य बन्धनम् ॥ १ ॥

तां यातं देहलोहकरं भवेत् ।

ः प्रकारः— श्वेतवैक्रान्तसिद्धः ।]

र्णं तु हयमूत्रेण मर्दयेत् ॥ ११ ॥

मादाय पले पलशतं क्षिपेत् ।
भस्म विशुद्धस्फटिकाकृति ॥ १२ ॥

सूते समभागं विचक्षणः ।
ते हयमूत्रेण मर्दयेत् ॥ १३ ॥

गां क्रमेण मृदुवह्निना[1] ।
त्रं वा भवेदग्निसहो रसः ॥ १४ ॥

ानि रजतं च करिष्यति ।

ः प्रकारः— रक्तवैक्रान्तसिद्धः ।]

कर्म जरादारिद्र्यनाशनम् ॥ १५ ॥

स्य व्याघ्रीकन्दांभसा रजः ।
हेम्नः पलं शुद्धरसस्य च ॥ १६ ॥

त्सर्वं पुनर्हेम्नश्शतं क्षिपेत् ।
सर्वं शुद्धहेमसमप्रभम् ॥ १७ ॥

तु पुनर्हेम्ना तु मेलयेत् ।
देवि ! ततो रसवरो भवेत् ॥ १८ ॥

ूतः कोटिवेधी महारसः ।

[षष्ठः प्रकारः ।]

तु हेम्ना तु सह मेलयेत् ॥ १९ ॥

सूते सारयित्वा समेन तु ।

---

समायुक्तं मूषामध्ये विचक्षणः ।

सहस्रांशेन लोहानि वेधयेन्नात्र संशयः ॥ २० ॥

[सप्तमः प्रकारः– कृष्णवैक्रान्तसिद्धः ।]

कृष्णवैक्रान्तभागैकं शुद्धसूतं शतांशकम् ।
एकत्र मर्दयेत्खल्वे चूर्णं भवति तद्द्वयम् ॥ २१ ॥

अस्य चूर्णस्य भागैकं हेमभागसहस्रकम् ।
एकत्र मर्दयेत्तावद्यावद्भस्म तु जायते ॥ २२ ॥

धमेत्तदन्धमूषायां यावत्खोटो भविष्यति[1] ।
समांशभक्षणं तस्य पीठि(पिष्टि)कां तस्य कारयेत् ॥

वेधयेत्सर्वलोहानि स्पर्शमात्रेण हेमताम् ।
तच्चूर्णमभ्रकं चैव रसेन सह मर्दयेत् ॥ २४ ॥

स्वेदयेज्जारयेच्चैव ततो वह्निसहो भवेत् ।
स रसश्चा(स्सा)रितश्चैव सर्वलोहानि विध्यति ॥२५॥

[अष्टमः प्रकारः– पीतवर्णवैक्रान्तसिद्धः ।]

पीतवर्णेऽपि वैक्रान्ते रक्तकृष्णविधिस्स्मृतः ।
पीतवैक्रान्तचूर्णं तु हेमचूर्णसमन्वितम् ॥ २६ ॥

पीताभ्रकस्य चूर्णं तु मेलयित्वा महारसः ।
स्वेदितो मर्दितश्चैव मासादग्निसहो भवेत् ॥ २७ ॥

[नीलवैक्रान्तभस्मरसायनम् ।]

नीलवर्णं तु वैक्रान्तं म्रियते रससंयुतम् ।

---

1. समांशभक्षणं तस्य शुद्धसूतं तु कारयेत् ।
   वेधयेत्सर्वलोहानि स्पर्शमात्रेण पार्वति ! ॥

   तच्चूर्णमभ्रकं चैव रसेन सह मर्दयेत् ।
   एकत्र मर्दयेत्तावद्यावद्भस्म प्रजायते ।
   धमेत्तदन्धमूषायां यावत्खोटो भविष्यति ॥

कृष्णाभ्रकेण सहितं मधुसर्पिर्युतं च तत् ॥ २८ ॥
भक्षयेन्मण्डलं देवि ! जीवेच्चन्द्रार्कतारकम् ।
यस्य यस्य हि यो योगस्तस्य तस्य प्रयोगतः ॥ २९ ॥
मेलयित्वा रसं गुञ्जामानं त्रिमधुसंयुतम् ।
खादेत्क्षीराज्यशाल्यन्नं भोज्यमन्यच्च वर्जयेत् ॥ ३० ॥

[नवमः प्रकारः ।]

वैक्रान्तसत्वसंयुक्तं लुङ्गाम्ले मर्दयेद्रसम् ।
तापयेदुष्णतोयेन जलेन परिपूरयेत् ॥ ३१ ॥
सत्वं सूतं च संमिश्रं धमेत्स्याद्रसबन्धनम् ।
बद्धं रसं मुखे क्षिप्त्वा भूमिच्छिद्राणि पश्यति ॥३२॥

[दशमः प्रकारः ।]

निष्कमेकं रसं कान्तमश्वमूत्रेण मर्दयेत् ।
दिनमेकमिदं देवि ! मर्दयित्वा मृतो भवेत् ॥ ३३ ॥
चतुर्दिनमिदं कृत्वा समसूतं समं नयेत् ।
मर्दनं स्वेदनं चैव पूर्ववच्छुद्धमानसः ॥ ३४ ॥
सप्तद्वन्द्वजमेकैकं सप्तमेऽष्टपलं भवेत्[1] ।
शल्याविशल्यामूलस्य वारिणा मर्दयेद्दिनम् ॥ ३५ ॥

---

1. मर्दयेन्मातुलुङ्गाम्लैश्चतुष्षष्टिपुटं ददेत् ।
उदयारुणसङ्काशस्सर्वलोहानि वेधयेत् ॥
कृष्णाभ्रकस्य सत्वं च रसं हेमसमं भवेत् ।
निक्षिप्य वज्रमूषायां धमित्वा खोटतां नयेत् ॥
बद्धं रसं मुखे क्षिप्त्वा ह्यजरामरतां व्रजेत् ।
तेनैव भस्म संमिश्रं कृष्णाभ्रकसमं भवेत् ॥

मूषरीयन्त्रमध्यस्थं पुटं सप्तदिनं ददेत् ।
तद्भस्म शुद्धं सेव्यं स्याद्गुञ्जामात्रं तु मण्डलम् ॥३६॥

एकाद्यं पञ्चमं मध्यं पुनरेकं प्रशस्यते ।
पूर्ववद्बन्धनं देवि ! कोटिवेधी भवेद्रसः ॥ ३७ ॥

कान्तबन्धः ॥

रक्तवर्णमयस्कान्तं लाक्षारससमप्रभम् ।
भिन्नस्त्रीरक्तसंकाशं तच्चूर्णं सूतसंयुतम् ॥ ३८ ॥

मर्दयेच्छागरक्तेन ध्मातं खोटो भवेत्प्रिये ! ।
स सूतश्शतवेधी तु स तु व्याधिहरो भवेत् ॥ ३९ ॥

गुलिकां धारयेद्वक्त्रे जीवेद्वर्षसहस्रकम् ।
पीतवर्णमयस्कान्तं भिन्नहेमसमप्रभम् ॥ ४० ॥

वेधयेत्स्पर्शमात्रेण स तु लोहानि सुन्दरि ! ।

चपलबन्धः ॥

[प्रथमः प्रकारः ।]

लाङ्गलीं करवीरं च चित्रकं गिरिकर्णिकाम् ॥ ४१ ॥

स्त्रीस्तन्यटङ्कसौवीरं मूषालेपं तु कारयेत् ।
चपलाद्द्विगुणं सूतं सूताद्द्विगुणकाञ्चनम् ॥ ४२ ॥

नष्टपिष्टं च तत्कुर्यादन्धमूषागतं धमेत् ।
तत्र स्थितो रसेन्द्रोऽयं खोटो भवति शोभनः ॥ ४३ ॥

शतांशं वेधयेन्नागं गुञ्जावर्णस्तु जायते ।
तेन नागशतांशेन शुल्बं रक्तनिभं भवेत् ॥ ४४ ॥

तेन शुल्बशतांशेन तारं विध्यति काञ्चनम् ।

[द्वितीयः प्रकारः ।]

चपलस्य तु षड्भागास्तारभागास्तु सप्त च ॥ ४५ ॥

अष्टौ कनकभागास्तु नव भागा रसस्य च ।
त्रिंशद्भागा मिलित्वा तु भवन्ति सुरवन्दिते ! ॥ ४६ ॥

चित्रकं कण(र)वीरं च लाङ्गली गृध्रविट् तथा ।
मर्दितं मातुलुङ्गाम्लैर्मूषालेपं तु कारयेत् ॥ ४७ ॥

अन्धयित्वा धमेद्देवि ! खोटो भवति शोभनः ।
तेन खोटदशांशेन विद्धो नागोऽरुणो भवेत् ॥ ४८ ॥

तेन नागेन विद्धं तु शुल्बं गुञ्जारुणं भवेत् ।
तेन शुल्बेन तारं तु विद्धं भवति काञ्चनम् ॥ ४९ ॥

[तृतीयः प्रकारः ।]

हेमाभ्रं(भं) चपलं देवि ! पारदार्धेन संयुतम् ।
पारदे(देन)कनकं दत्वा कुनट्या मर्दयेत्क्षणम् ॥५०॥

लाङ्गली चित्रकं चैव स्त्रीस्तन्यं कण(र)वीरकम् ।
गृध्रविष्ठा तथा सर्वं मूषालेपं तु कारयेत् ॥ ५१ ॥

तन्मध्ये तु स्थितं ध्मातं खोटो भवति शोभनः ।
पूर्वोक्तं वेधयेदेतन्निर्बीजं कनकं भवेत् ॥ ५२ ॥

सुतप्तलोहपात्रे च क्षिपेच्चपलचूर्णकम् ।
सबीजं पारदं कृत्वा चपलस्य तु वापयेत् ॥ ५३ ॥

लाक्षाभो बध्यते सूतोऽङ्कुशेनेव महागजः ।

गन्धकबन्धः ॥

[प्रथमः प्रकारः ।]

शुद्धसूतपलैकं च पलैकं गन्धकस्य च ॥ ५४ ॥

एकीकृत्याऽथ संमर्द्य धुत्तूरकरसेन च ।
मारयेच्चक्रयोगेन भस्मीभवति सूतकः ॥ ५५ ॥

अन्धमूषागतो ध्मातः खोटो भवति शोभनः ।
सितं हेम च नागं च चन्द्रार्कं चापि वेधयेत् ॥५६॥

[द्वितीयः प्रकारः ।]

पलैकं शुद्धसूतस्य कर्षैकं गन्धकस्य च ।
मर्दयेत्स्निग्धखल्वेन देवदालीरसप्लुतम् ॥ ५७ ॥

मर्दयेत्तु कराङ्गुल्या गन्धपिष्टिस्तु जायते ।
जम्बीरस्य रसेनैव दिनमेकं तु मर्दयेत् ॥ ५८ ॥

पञ्चद्रावकसंयुक्तां वटिकां कारयेच्छुभाम् ।
पलाशमूलकल्केन वटिकां तां प्रलेपयेत् ॥ ५९ ॥

धमेत्खोटो भवेच्छ्वेतकाचटङ्कणयोगतः ।
शोधयेत्तं प्रयत्नेन यावन्निर्मलतां व्रजेत् ॥ ६० ॥

स खोटो जायते देवि ! त्रिगुणं पन्नगं ततः ।
शतशो रञ्जयेत्पश्चाच्छुल्बाभ्रककपालिना ॥ ६१ ॥

शुल्बे तारे च खोटोऽयं सहस्रांशेन वेधकः ।

[तृतीयः प्रकारः ।]

गन्धकेन हते सूते मृतलोहानि वाहयेत् ॥ ६२ ॥

पुनर्हेम समावर्त्य समांशं भक्षणं कुरु ।
सारितश्शुल्बताररैर्घोषं विध्यति सूतकः ॥ ६३ ॥

[चतुर्थः प्रकारः ।]

रसं हेमसमं कृत्वा पिष्टिकार्धेन गन्धकम् ।
द्रिपदीरजसा युक्तं मर्दयेट्टङ्कणान्वितम् ॥ ६४ ॥

नष्टपिष्टं च शुष्कं च ध्मातः खोटो भवेत्ततः[1] ।
चन्द्रार्कषोडशांशेन विद्धं भवति काञ्चनम् ॥ ६५ ॥

हेमार्धमिलितं तं तु मातृकासमतां व्रजेत् ।
कुर्यात्सङ्कलिकायोगाद्वेधो दशगुणोत्तरः ॥ ६६ ॥

यथा हेम्नि तथा तारे व्याटि(पि)बीजेन योजितम् ।
तृतीयसङ्कलाबद्धं षट्शते नागवेधकम् ॥ ६७ ॥

चतुर्गुणेन तेनैव सहस्रांशेन काञ्चनम् ।
अनेन क्रमयोगेन सप्त सङ्कलिका यदि ॥ ६८ ॥

कुरुते काञ्चनं दिव्यमष्टलोहानि पार्वति ! ।
तं पुनश्चूर्णयित्वा तु पुटयेद्भस्म जायते ॥ ६९ ॥

सर्वव्याधिजयो देवि ! पलैकेन सुभक्षिते ।
द्विपले ब्राह्ममायुष्यं त्रिपले वैष्णवं भवेत् ॥ ७० ॥

चतुष्पले च पञ्चत्वमीशः पञ्चपले भवेत् ।
षट्पले भक्षिते देवि ! सदाशिवतनुर्भवेत् ॥ ७१ ॥

[पञ्चमः प्रकारः ।]

सूतकं गन्धकं तारं मेषवल्लीवसा समा ।
त्रिदिनं मर्दयेल्लक्षं(तीक्ष्णं) वङ्गं पादेन लेपयेत् ॥७२॥

अन्धमूषागतं ध्मातं वङ्गं स्तम्भयति क्षणात् ।

---

1. सौवीरं टङ्कणं काचं दत्वा दत्वा च शोधयेत् ।
अक्षीणो मिलते हेम्नि समावर्तस्तु जायते ॥
समांशं भक्षणं हेम्नि शुद्धसूतेन कारयेत् ।
नष्टपिष्टं च तच्छुल्वं ध्मातं खोटो भवेत्ततः ॥
द्विपदीरजसा युक्तं मर्दयेट्टङ्कणान्वितम् ।

[षष्ठः प्रकारः ।]

[गन्धपिष्टिविधिः ।]

चूर्णितं गन्धकं देवि! मर्कटीरसभावितम् ॥ ७३ ॥
भावयेच्छतवाराणि जीवभस्म तु गच्छति ।
दापयेन्मृण्मये पात्रे रसेन सह संयुतम् ॥ ७४ ॥
तापयेद्रवितापेन मर्कटीरससंयुतम् ।
गन्धकं ग्रसते सूतः पिष्टिका भवति क्षणात् ॥ ७५ ॥
तिलपर्णीरसेनैव गन्धकं भावयेत्ततः ।
सप्तवारांस्तु देवेशि! छायाशुष्कं पुनःपुनः ॥ ७६ ॥
शोधितं पातितं सूतं पलैकप्रमितं प्रिये! ।
मूषामध्ये विनिक्षिप्य नरेन्द्रीरससंयुतम् ॥ ७७ ॥
जारयेद्वालुकायन्त्रे भावितं गन्धकं तुनः ।
त्रुटिं त्रुटिं प्रदातव्यं गन्धकं च पुनः पुनः ॥ ७८ ॥
अनेन क्रमयोगेन जायते गन्धपिष्टिका ।
गन्धपाषाणचूर्णं तु कनकस्य रसेन तु ॥ ७९ ॥
भावयेत्सप्तवारांस्तु स्त्रीरजेन(पुष्पेण) तु सप्तधा ।
शुद्धसूतपलैकं च खर्परे दापयेत्ततः ॥ ८० ॥
भावितं गन्धकं दद्यान्नरपित्तेन संयुतम् ।
डोलयेद्रवितापेन पिष्टिका भवति क्षणात् ॥ ८१ ॥
गन्धकं सूक्ष्मचूर्णं तु चणकाम्लेन पार्वति! ।
भावयेत्सप्तवाराणि स्त्रीपुष्पेण च सप्तधा ॥ ८२ ॥
द्रुतसूतकमध्ये तु कर्पूरं गन्धकं रसम् ।
दापयेन्निक्षिपेद्गोष्ठे सप्ताहाद्गन्धपिष्टिका ॥ ८३ ॥

[गन्धकपिष्टीस्तंभनं वेधश्च]

कटुकोशातकीवीजं चाण्डालीकन्दमेव च।
स्तन्यक्षीरेण संपेष्य पिष्टिकां तेन लेपयेत् ॥ ८४ ॥

पुटयेद्भूधरे यन्त्रे स्तम्भते नात्र संशयः।
हेमसम्पुटमध्ये तु समावर्तं तु कारयेत् ॥ ८५ ॥

अष्टमांशेन तेनैव नागवेधं प्रदापयेत्।
षोडशांशेन तेनैव तारवेधं प्रदापयेत् ॥ ८६ ॥

[सप्तमः प्रकारः।]

गन्धपिष्टिपलैकं तु नागपिष्टिपलाष्टकम्।
लेपयेन्नागपत्राणि छायायां शोषयेत्ततः ॥ ८७ ॥

आटरूषकपिण्डेन नागपत्राणि लेपयेत्।
आरण्योत्पलकैर्देवि! दापयेच्च पुटत्रयम् ॥ ८८ ॥

तन्नागं म्रियते दिव्यं सिन्दूरारुणसप्रभम्।
तन्नागं पलमेकं तु शुल्वचूर्णपलाष्टकम् ॥ ८९ ॥

वासकस्य रसेनैव प्रहरैकं तु मर्दयेत्।
मारयेत्पातनायन्त्रे शुल्वं तन्म्रियते क्षणात् ॥ ९० ॥

षोडशांशेन तेनैव तारवेधं प्रदापयेत्।
जायते कनकं दिव्यं देवाभरणभूषणम् ॥ ९१ ॥

या काचिद्गन्धपिष्टी तु आदौ नागं तु मारयेत्।
नागेन वेधयेच्छुल्वं शुल्वे तारं तु वेधयेत् ॥ ९२ ॥

कनकं जायते दिव्यं सिद्धयोग उदाहृतः।

[अष्टमः प्रकारः।]

गन्धकं मधुसंयुक्तं हरबीजेन मर्दितम् ॥ ९३ ॥

भूमिस्थं मासमेकं तु तारमायाति काञ्चनम् ।
उद्धर्तनेन तेनैव सर्वकुष्ठविनाशनम् ॥ ९४ ॥

घनेन सह संयुक्तं व्रणरोगविनाशनम् ।
संवत्सरप्रयोगेण सहस्रायुर्भवेन्नरः ॥ ९५ ॥

### तालकबन्धः ॥

शुद्धसूतपलैकं तु पलैकं तालकस्य च ।
एकीकृत्याऽथ संमर्द्य उन्मत्तकरसेन च ॥ ९६ ॥

मारयेच्चक्रयन्त्रेण भस्मीभवति सूतकः ।
अन्धमूषागतं ध्मातं खोटो भवति शोभनः ॥ ९७ ॥

वङ्गं तारं च शुल्बं च क्रमशो वेधयेद्रसः ।
शुद्धवङ्गपलैकं च पलैकं सूतकस्य च ॥ ९८ ॥

द्वे पले तालकं चैतदुन्मत्तरसमर्दितम् ।
मारयेत्पातनायन्त्रे धमनात्खोटतां नयेत् ॥ ९९ ॥

श्वेताभ्रकस्य सत्वं च तारं तीक्ष्णं च माक्षिकम् ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥ १०० ॥

तत्खोटपलमेकं च पलैकं सूतकस्य च ।
तालकस्य पलं सर्वमेकीकृत्याऽथ मर्दयेत् ॥ १०१ ॥

मारयेत्पातनायन्त्रे धमनात्खोटतां नयेत् ।

### अन्ये लघुबन्धाः ॥

शुद्धसूतपलैकं च पलैकं पन्नगस्य च ॥ १०२ ॥

पलद्वयं कुनट्याश्च सर्वमेकत्र मर्दयेत् ।
मारयेत्पातनायन्त्रे धमनात्खोटतां नयेत् ॥ १०३ ॥

हेमपिष्टिपलैकं च पलैकं गन्धकस्य तु ।
एकीकृत्याऽथ समर्द्य धुत्तूरकरसेन च ॥ १०४ ॥

मारयेत्पातनायन्त्रे धमनात्खोटतां नयेत् ।
कृष्णाभ्रकस्य सत्वं च कान्तं तीक्ष्णं च हाटकम् ॥

शुद्धं तारं च माक्षीकं समभागानि कारयेत् ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥१०६॥

तत्खोटपलमेकं तु पलैकं सूतकस्य च ।
पलद्वयं कुनट्याश्च सर्वमेकत्र मर्दयेत् ॥ १०७ ॥

मारयेत्पातनायन्त्रे धमनाखोटतां नयेत् ।
कृष्णाभ्रकपलैकं तु रसकस्य पलं तथा ॥ १०८ ॥

सूतकस्य पलैकं तु सर्वमेकीकृतं प्रिये! ।
उन्मत्तकरसेनैव मर्दयेत्प्रहरद्वयम् ॥ १०९ ॥

मर्दयेद्दिनमेकं वा टङ्कणेन समन्वितम् ।
घुटिकां कारयेत्पश्चाच्छायाशुष्कं तु कारयेत् ॥११०॥

महावर्ति(ह्नि)गतं ध्मातं खोटं भवति सूतकः ।
तं खोटं शोधयेत्काचटङ्कणद्रवयोगतः ॥ १११ ॥

हेम्ना सह समावर्त्य सारणात्रयसारितम् ।
सहस्रांशेन तेनैव शुल्बवेधं प्रदापयेत् ॥ ११२ ॥

अनेन क्रमयोगेन कोटिवेधी भवेद्रसः ।
बीजद्वयं पलाशस्य पलमेकं तु सूतकम् ॥ ११३ ॥

जम्बीराम्लेन संमर्द्य छायाशुष्कं तु कारयेत् ।
तुं(बिं)बीका मेघनादी च काकजङ्घा च भू(चू)लिका ॥

स्तन्यं च तैः प्रलिप्तायां मूषायां चैव निक्षिपेत् ।
धमयेत्खदिराङ्गारैः खोटो भवति चाक्षयः ॥ ११५ ॥

पलाशतैले संमर्द्य यावत्स्याद्द्रव(द्रस)पिष्टिका ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥११६॥

पूर्वशुद्धेन सूतेन समहेम्ना च पार्वति ! ।
गोलकं कारयेत्तेन मर्दयित्वा दृढं कृतम् ॥ ११७ ॥

ब्रह्मवृक्षस्य बीजानि कार्पासास्थि विभीतकम् ।
यवचिञ्चा च वन्ध्या च राजिका च समन्वितम् ॥

सूक्ष्मपिण्डीकृतं सर्वं तेन लिप्त्वा तु गोलकम् ।
पुटैस्सप्तभिर्देवि ! पिष्टिकास्तम्भनं भवेत् ॥ ११९ ॥

बृहत्पुटं ततो दत्वा मूषायां तु धमेत्ततः ।
समावर्त्य तु तं सूतं समहेम्ना नियोजितम् ॥१२०॥

शतांशेन तु चन्द्रार्के वेधयेत्सुरवन्दिते ! ।
पुनस्तेनैव योगेन पिष्टीस्तंभं तु कारयेत् ॥ १२१ ॥

सारयित्वा ततो हेम्ना वेधश्चैव सहस्रकः ।
एवं लक्षाणि कोटिं च वेधयेत्क्रमयोगतः ॥ १२२ ॥

सप्तसंकलिकादूर्ध्वं कृत्वा वक्त्रे तु गोलकम् ।
वर्षेणैकेन स भवेद्वलीपलितवर्जितः[1] ॥ १२३ ॥

चाण्डालीराक्षसीपुष्पैरथ मध्वाज्यटङ्कणैः ।
महारसाष्टमध्ये तमभ्रकं वाऽपि योजयेत् ॥ १२४ ॥

नागवङ्गसमं सूतं हेमतारमथाऽपि वा ।
अभ्रकं द्रुतिसत्वं वा मर्दयेत्प्रहरद्वयम् ॥ १२५ ॥

---

1. चाण्डाली राक्षसी चाथ गुण्डगोलो भवेद्रसः ।
बीजं सूतं च वैक्रान्तं मर्दयेत्प्रहरद्वयम् ॥
विशुष्कगोलकं कृत्वा मूकमूषागतं पुटेत् ।
खोटस्तु जायते देवि ! सुध्मातः खदिराग्निना ॥

छायाशुष्कं ततो गोलं मूकमूषागतं प्रिये ! ।
दत्वा लघुपुटं ध्मातः खोटो भवति शोभनः ॥ १२६ ॥

रंभा वीरा स्नुहीक्षीरं कञ्चुकी मदचिञ्चिका ।
दीनारी चैव गोरम्भा मीनाक्षी काकमाचिका ॥१२७॥

एभिर्मर्दितसूतस्य पुनर्जन्म न विद्यते ।
पूर्ववत्क्रमयोगेन खोटो भवति शोभनः ॥ १२८ ॥

विष्णुक्रान्ता च व(च)क्रांका(गी)बला च तुलसी तथा ।
महासोमाऽहिवल्ली च सूर्यावर्तं च सुन्दरि ! ॥१२९॥

एभिस्तु मर्दितस्सूतः पूर्ववत्खोटतां नयेत्[1] ।
स्नुहीक्षीरं च काञ्जीरं(कं) बीजानि कनकस्य च ॥

कञ्चुकी लाङ्गली चेन्द्रवारुणी विषमुष्टिका ।
पालाशमूलतोयञ्च मर्दयेत्तेन सूतकम् ॥ १३१ ॥

समहेम्नि समं सूतं पिष्टिकां कारयेद्बुधः ।
महारसान्पिष्टिकार्धं मर्दयेदोषधीरसैः ॥ १३२ ॥

यामत्रयं मर्दयित्वा गोलकं कारयेद्बुधः ।
पिष्टिकां बन्धयित्वा तु गन्धतैले विपाचयेत् ॥१३३॥

अन्धमूषागतं गोलं छायाशुष्कं तु कारयेत् ।
ततो लघुपुटं दत्वा खदिराग्नौ तु धामयेत् ॥ १३४ ॥

---

1. मुखेन ग्रसते ग्रासं जारणा तेन सुन्दरि ! ।
रसोनराजिकामूलैर्मर्दितं वरवर्णिनि ! ॥

दिव्यौषधिपुटं पाच्यं रसखोटस्य लक्षणम् ।
एतत्ते कथितं गुह्यं विज्ञेयं रसवादिभिः ॥
मत्प्रसादेन देवेशि ! तस्य सिद्धिर्न संशयः ।

खोटवज्जायते देवि! सह हेम्ना तु धामयेत् ।
अक्षीणो मिलने हेम्नि समावर्तश्च जायते ॥ १३५ ॥
तत्क्षणादेव सूतस्य दिव्यदेहो भवेन्नरः ।
वेधयेत्सर्वलोहानि रञ्जितः क्रामितो रसः ॥ १३६ ॥
समांशभक्षणे सूते मर्दयेदोषधीरसैः ।
नष्टपिष्टं तु तं कृत्वा पूर्वयोगेन धामयेत् ॥ १३७ ॥
खोटस्तु जायते दिव्यष्षोडशांशेन वेधकः ।
बद्धस्सङ्कलिकायोगाद्विध्येद्दशगुणोत्तरम् ॥ १३८ ॥
अथवा चूर्णबद्धस्तु विध्येद्दशगुणोत्तरम् ।
मृगदूर्वा चन्द्रवल्ली पक्कबिंवा तथैव च ॥ १३९ ॥
कांक्षीला करवीरं च वीजं चोन्मत्तकस्य च ।
काकाण्डीपलसंयुक्तं मर्दयेत्सुरसुन्दरि! ॥ १४० ॥
समहेम्नि समं सूतं पिष्टिकां कारयेद्बुधः ।
अथवा सारयित्वा तु समेन समसूतकम् ॥ १४१ ॥
महारसं पिष्टिकां च मर्दयेदोषधीरसैः ।
यामत्रयं मर्दयित्वा गोलकं कारयेद्बुधः ॥ १४२ ॥
अन्धमूषागतं गोलं छायाशुष्कं तु कारयेत् ।
ततो लघुपुटं दत्वा ध्मातः खोटो भवेत्प्रिये! ॥१४३॥
मृगदूर्वोत्तमासोमारसैस्सूतकसारणम् ।
मूलैस्त्रयाणां लाङ्गल्या रामठेन च हन्यते ॥ १४४ ॥
समेन हेम्ना संयुक्तं पिष्टिकां कारयेद्बुधः ।
अथवा तारपिष्टिं च समसूतेन कारयेत् ॥ १४५ ॥
पूर्ववत्क्रमयोगेन खोटो भवति शोभनः ।
अन्धमूषागतं भूमौ स्वेदयेत्कर्षकाग्निना ॥ १४६ ॥

अहोरात्रं त्रिरात्रं वा चूर्णबन्धं भवेत्ततः।
तच्चूर्णबन्धं कुरुते वेधं दशगुणोत्तरम् ॥ १४७ ॥

शूलिनीरससूतं च स्रोतोऽञ्जनसमन्वितम्।
पूर्ववत्पिष्टिकायोगात्खोटो भवति शोभनः ॥ १४८ ॥

स्रोतोऽञ्जनं सतगरं सृष्टित्रययुतं रसम्।
भवेद्वह्निसहः क्षिप्रं सूतकस्सर्वकर्मकृत् ॥ १४९ ॥

हेमाभ्रं चैव ताराभ्रं शुल्वाभ्रं चाभ्रतीक्ष्णकम्।
वङ्गाभ्रं चैव नागाभ्रं सह सूतेन बन्धयेत् ॥ १५० ॥

यथालाभौषधीघृष्टं महारससमन्वितम्।
हेम्ना तारेण शुल्वेन तीक्ष्णवङ्गोरगैस्तथा ॥ १५१ ॥

एभिर्व्यस्तैस्समस्तैर्वा पिष्टिं कृत्वा समे समाम्।
मारयेत्पूर्वविधिना गर्भयन्त्रे तुषाग्निना ॥ १५२ ॥

समांशं सूतकं दत्वा वारं वारं पुनः पुनः।
जायते विविधः खोटः कान्तबद्धो महारसः ॥१५३॥

भवेत्सङ्कलिकायोगाद्वेधो दशगुणोत्तरः।

**निगलबन्धः ॥**

खोटः पोटस्तथा भस्म धूलीकल्पश्च पञ्चमः ॥ १५४ ॥

एते निगलयोगाभ्यां सर्वबन्धफलोदयः।
स्नुह्यर्कसंभवं क्षीरं बन्ध(ब्रह्म)बीजानि गुग्गुलुः ॥१५५॥

सैन्धवं द्विगुणं दत्वा मर्दयेत विचक्षणः।
पिष्टिकाबन्धनं कृत्वा कल्केनानेन सुन्दरि ! ॥१५६॥

बिल्वप्रमाणं कृत्वा तु मूषामतिदृढां शुभाम्।
ऊर्ध्वाधो लवणं दत्वा मूषामध्ये रसं क्षिपेत् ॥१५७॥

मूषामध्ये प्रदातव्यं दग्धशङ्खादिचूर्णकम् ।
मुखं तस्य दृढं बध्वा लोणमृत्तिकया बुधः ॥ १५८ ॥

कारयेत्सन्धिलोणं च छायाशुष्कं तु कारयेत् ।
उक्तो निगलबन्धोऽयं पुत्रस्याऽपि न कथ्यते ॥१५९॥

तुषकर्षाग्निना भूमौ मृदुस्वेदं तु कारयेत् ।
अहोरात्रं त्रिरात्रं वा पुटं दत्वा प्रयत्नतः ॥ १६० ॥

सुध्मातं खदिराङ्गारै रसेन्द्रं खोटतां नयेत् ।
सौवीरं टङ्कणं काचं दत्वा दत्वा तु शोधयेत् ॥१६१॥

अक्षीणो मिलते हेम्नि समावर्तश्च जायते ।
समांशभक्षणं तत्तु शुद्धसूतेन कारयेत् ॥ १६२ ॥

धमयेत्पूर्वयोगेन रसेन्द्रं खोटतां नयेत् ।
भवेत्सङ्कलिकायोगाद्वेधो दशगुणोत्तरः ॥ १६३ ॥

पलाशबीजनिर्यासं कोकिलोन्मत्तवारुणी ।
शूलिनीरससंयुक्तं पेषयेत्सैन्धवान्वितम् ॥ १६४ ॥

पिष्टिकावेष्टनं कृत्वा निगलेन तु बन्धयेत्[1] ।
अभ्रकस्य तु पत्रेण वज्रार्कक्षीरसिन्धुना ॥ १६५ ॥

ताप्येन लोहकिट्टेन सिकतामृण्मयेन च ।
एभिस्तु निगले बद्धः पारदीयो महारसः ॥ १६६ ॥

नातिक्रामति मर्यादा वेलामिव महोदधिः ।
तैलार्कक्षीरकतकलाङ्गल्या निगलोत्तमः ॥ १६७ ॥

काकविट् ब्रह्मबीजानि लाङ्गली निगलोऽपरः ।
वाकुची ब्रह्मबीजानि कर्कटास्थीनि सुन्दरि ! ॥१६८॥

---

1. मूषायां निगलो देवि ! लेपितश्शिवशासनात् ।
रसस्य परिणामाय महदग्निस्थितो भवेत् ॥

सामुद्रं शाम्बरं चैव लवणं निगमोत्तमः ।
स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजानि कारयेत् ॥ १६९ ॥

कन(त)कस्य च बीजानि लोणाष्टेन च मर्दयेत् ।
निगलोऽन्यस्तु गोजिह्वामूलानि स्त्रीरजोऽपरः ॥१७०॥

बाकुची ब्रह्मबीजानि स्नुह्यर्कक्षीरसैन्धवम् ।
ज्वालिनी काकविष्ठा च प्रशस्तो निगलोत्तमः ॥१७१॥

लवणं टङ्कणं क्षारं शिलातालकगन्धकम् ।
तथाऽम्लवेतसं ताप्यं हिङ्गुलं समभागिकम् ॥ १७२ ॥

स्नुह्यर्कपयसा युक्तं पेषयेन्निगलोत्तमम् ।
पिष्टिकां वेष्टयेदेषामेकेन निगलेन तु ॥ १७३ ॥

लोणमूषागतं प्राग्वत्खोटं कृत्वा तु वेधयेत् ।
द्वितीयं गोरुकं वक्ष्ये पिष्टिकास्तम्भमुत्तमम् ॥ १७४ ॥

द्विपदीरजमूत्रेण सैन्धवाभ्रं सगुग्गुलम् ।
पिष्टीं संवेष्ट्य कल्केन मृदा तु पुनरष्टधा ॥ १७५ ॥

तुषकर्षाग्निना भूमौ मृदुस्वेदं तु कारयेत् ।
अहोरात्रं त्रिरात्रं वा पूर्ववत्खोटतां नयेत्[1] ॥ १७६ ॥

बाकुची ब्रह्मबीजानि गगनं विमलं मणिम् ।
सौवर्चलं सैन्धवं च टङ्कणं गुग्गुलुं तथा ॥ १७७ ॥

द्विपदीरजसा मूत्रं सुश्लक्ष्णं तं च मर्दयेत् ।
पिष्टीमावेष्ट्य कल्केन पूर्ववत्खोटतां नयेत् ॥ १७८ ॥

---

1. त्रयोविंशोल्लासगतमूलिकाबन्धात् (पृ. ४०८) एत त्पर्यन्तं पाठो रसार्णवेऽमुनैव सन्दर्भेणोपलभ्यते ।

रसमूर्च्छाविधिः ॥

[प्रथमः प्रकारः ।]

अथ मूर्च्छां प्रवक्ष्यामि रसस्य परमेश्वरि ! ।
बाह्लीकं सैन्धवं कन्या धूशरो लशुनं वचा ॥ १७९ ॥

मेघनादा काकमाची सर्वांशं मर्दयेद्रसम् ।
श्लक्ष्णं तं गोलकं कृत्वा हिंगुना वेष्टयेद्बहिः ॥१८०॥

समेन लोणयन्त्रस्थं कृत्वा तद्विपचेद्दिनम् ।
चण्डाग्निना स्वाङ्गशीतमधःपात्रे स्थितं रसम् ॥ १८१ ॥

चूर्णीभूतं समादाय सान्द्रद्विगुणवाससा ।
बध्वा सोमानले यन्त्रे ह्यथोर्ध्वं गन्धकं समम् ॥१८२॥

दत्वा पचेत्पुनर्गन्धमेवं गन्धं तु षड्गुणम् ।
जारयेत्स रसो देवि ! मूर्च्छितस्सर्वरोगहा ॥ १८३ ॥

[द्वितीयः प्रकारः ।]

गन्धकं नवसारं च शुद्धसूतसमं समम् ।
यामं सम्मर्दयेच्छ्लक्ष्णं काचकूप्यां विनिक्षिपेत् ॥१८४॥

सप्तमृत्कर्पटैर्लिप्त्वा कूपीं घर्मे विशोषयेत् ।
कूपिकां वालुकायन्त्रे द्वादशप्रहरं पचेत् ॥ १८५ ॥

स रसो जायते देवि ! मूर्च्छितो रञ्जितो भवेत् ।

[तृतीयः प्रकारः ।]

रसार्धं गन्धकं मर्द्यं यामयुग्मं खरातपे ॥ १८६ ॥

ततस्सितजयन्त्याश्च रसैस्संमर्दयेत्त्र्यहम् ।
ततस्तु गोलकं कृत्वा मूषायां सन्निरोधयेत् ॥१८७॥

शोषयित्वा धमेत्किञ्चित्सन्तप्तां तां जले क्षिपेत् ।
तं रसेन्द्रं समादाय भावयेद्गोक्षुरद्रवैः ॥ १८८ ॥
मूर्च्छितो जायते सूतस्सर्वरोगहरश्शुभः ।

बद्धरसलक्षणम् ॥

अक्षयश्च लघुद्रावी तेजस्वी निर्मलो गुरुः ॥ १८९ ॥
स्फुटनः पुनरावर्तो बद्धस्सूतस्स उच्यते ।

जलूकाबन्धाः ॥

[मर्दनजलूका ।]

रसस्याष्टमभागं तु स्वर्णं वा नागमेव वा ॥ १९० ॥
श्लेष्मातकफलं पक्वं कोकिलाक्षकबीजकम् ।
तिलपिण्याकचूर्णं च तप्तखल्वे विमर्दयेत् ॥ १९१ ॥
शाल्मल्याश्चैव पञ्चाङ्गं रसं तत्र विनिक्षिपेत् ।
जलूका जायते यावत्तावन्मर्द्यात्ततः क्षिपेत् ॥ १९२ ॥
कर्पूरं बाकुचीतैलं सैन्धवं टङ्कणं कणाम् ।
कपिकच्छुकरोमाणि तत्सर्वं पेषयेज्जलैः ॥ १९३ ॥
एतत्पूर्वजलूकां त्रिसप्ताहं तप्तखल्वके ।
जलूका जायते दिव्या मर्दनाख्या सुरार्चिते ! ॥१९४॥
नारीणामृतुकाले तु सा योज्या योनिगह्वरे ।
मदर्पहरा तासां मदविह्वलकारका ॥ १९५ ॥
बाल्ये चाष्टाङ्गुला योज्या यौवने सा दशाङ्गुला ।
द्वादशाङ्गुलिका योज्या प्रगल्भानां जलूकका ॥ १९६ ॥
यस्तु तां धारयेन्मूर्ध्नि वीर्यं तस्य स्थिरं भवेत् ।

[मन्मथजलूका ।]

रसेन्द्रस्याष्टमं भागं स्वर्णं वा नागमेव वा ॥ १९७ ॥

# ॥ पञ्चविंश उल्लासः ॥

## परिभाषा ॥

परिभाषां प्रवक्ष्यामि शृणु त्वं सावधानतः ।

## वैद्यभागः ॥

अर्धं सिद्धरसं देवि ! त्रिप्वेकं हेमभस्म च ॥ १ ॥

पादांशकं रूप्यभस्म षष्ठांशं ताम्रभस्म च ।
अष्टमांशं हि कान्ताभ्रं कलांशं नवरत्नकम् ॥ २ ॥

रसेश्वरं समुद्दिश्य रसवैद्याय धीमते ।
रसाचार्याय सिद्धाय दद्यादिष्टार्थसिद्धये ॥ ३ ॥

## कज्जली पङ्करसश्च ॥

धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः ।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जली साऽभिधीयते ॥ ४ ॥

सद्रवे मर्दितस्सोऽपि इति पा(पं)करसस्स्मृतः ।

## पिष्टी ॥

अर्कांशतुल्याद्रसतोऽथ गन्धा-
न्निष्कार्धतुल्यात्त्रुटिशोऽपि खल्वे ।
अर्कातपे तीव्रतरे विमर्द्या-
त्पिष्टिर्भवेत्सा नवनीतरूपा ॥ ५ ॥

खल्वे विमर्द्य गन्धेन दुग्धेन सह पारदम् ॥ ६ ॥

पेषणात्पिष्टितां याति सा पिष्टीति मता परैः ।

**पातनपिष्टी ॥**

चतुर्थांशसुवर्णेन रसेन कृतपिष्टिका ॥ ७ ॥

भवेत्पातनपिष्टी सा तथा रूप्यादिभिः कृता ।

**हेमपिष्टी तारपिष्टी च ॥**

रूप्यं वा जातरूप वा रसगन्धादिभिर्हतम् ॥ ८ ॥

समुत्थितं च बहुशस्सा कृष्टी हेमतारयोः ।
कृष्टीं क्षिप्त्वा सुवर्णान्ते न वर्णो हीयते तया ॥ ९ ॥

स्वर्णकृष्ट्या कृतं बीजं रसस्य परिरञ्जनम् ।

**वरलोहकम् ॥**

ताम्रं तीक्ष्णसमायुक्तं द्रुतं निक्षिप्य भूरिशः ॥ १० ॥

सगन्धे लिकुचद्रावे निर्गतं वरलोहकम् ।

**हेमरक्तीताररक्ती च ॥**

तेन रक्तीकृतं स्वर्णं हेमरक्तीत्युदाहृता ॥ ११ ॥

निक्षिप्ता सा द्रुते स्वर्णे वर्णोत्कर्षविधायिनी ।
तारस्य रञ्जनी चापि बीजरागविधायिनी ॥ १२ ॥

एवमेव प्रकर्तव्या ताररक्ती मनोहरा ।
रञ्जनी खलु रूप्यस्य बीजानामपि रञ्जनी ॥ १३ ॥

**चन्द्रानलदलम् ॥**

मृतेन वा बद्धरसेन वान्य-
लोहेन वा साधितमन्यलोहम् ।
सितं हि पीतत्वमुपागतं त-
द्दलं हि चन्द्रानलयोः प्रसिद्धम् ॥ १४ ॥

आभास(।)मृतबन्धेन रसेन सह योजितम् ।
साधितं वाऽन्यलोहेन सितं पीतं हि तद्दलम् ॥ १५ ॥

### अयोनागम् ॥

ताप्येन निहतं कान्तं सप्तवारं समुत्थितम् ।
तद्द्वयं द्विपलं वाऽथ ताम्रभस्म पलद्वयम् ॥ १६ ॥

सर्वं निक्षिप्य मूषायां सप्तवारं धमेद्दृढम् ।
तदयोनागमित्युक्तं साधकं देहलोहयोः ॥ १७ ॥

रसेन सारणायन्त्रे तदीया गुलिका कृता ।
सा धृता वदने हन्ति मेहरोगानशेषतः ॥ १८ ॥

कुरुते दन्तदार्ढ्यं च दृशौ गृध्रदृशाविव ।
तथाऽन्यान्क्षेत्रजान्रोगान्रोगाञ्जत्रूर्ध्वसंभवान् ॥ १९ ॥

### शुल्बनागम् ॥

माक्षिकेण हतं ताम्रं दशवारं समुत्थितम् ।
तद्वद्विशुद्धनागं हि द्वितयं तच्चतुष्पलम् ॥ २० ॥

नीलाञ्जनहतं भूयस्सप्तवारं समुत्थितम् ।
इति संसिद्धमेतद्धि शुल्बनागं प्रकीर्तितम् ॥ २१ ॥

साधितस्तेन सूतेन्द्रो वदने विधृतो नृणाम् ।
निहन्ति मासमात्रेण मेहव्यूहमशेषतः ॥ २२ ॥

पथ्याशनस्य वर्षेण पलितं वलिभिस्सह ।
गृध्रदृष्टिर्लसद्दृष्टिस्सर्वारोग्यसमन्वितः ॥ २३ ॥

### पिञ्जरी ॥

लोहं लोहान्तरे क्षिप्तं ध्मातं निर्वापितं द्रवे ।
पाण्डुपीतप्रभं जातं पिञ्जरीत्यभिधीयते ॥ २४ ॥

चन्द्रार्कम् ॥

भागाष्षोडश तारस्य तथा द्वादश भास्वतः ।
एकत्रावर्तितास्ते तु चन्द्रार्कमिति कथ्यते ॥ २५ ॥

निर्वाप(ह)णम् ॥

धार्य(म्य)(साध्य)लोहेऽन्यलोहस्त्वेत्प्रक्षिप्तो वङ्कनालतः ।
निर्वापणं तु तत्प्रोक्तं वैद्यैर्निर्वाहणं खलु ॥ २६ ॥
क्षिपेन्निर्वाहणं द्रव्ये निर्वाह्ये समभागिकम् ।
आवाप्यं वापनीयञ्च भागे दृष्टे च दृष्टवत् ॥ २७ ॥

लोहभस्मसिद्धिलक्षणम् ॥

मृतं तरति यत्तोये लोहं वारितरं हि तत् ।
अङ्गुष्ठतर्जनीघृष्टं यत्तद्रेखान्तरे विशेत् ॥ २८ ॥
मृतं लोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ।

निरुत्थभस्मलक्षणम् ॥

गुडगुञ्जासुखस्पर्शमध्वाज्यैस्सह योजितम् ॥ २९ ॥
न याति प्रकृतिं ध्मानादपुनर्भवमुच्यते ।
लोहेन सह संयुक्तं ध्मातं रूप्येण चेल्लिहे(ल्लगे)त् ॥
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ।
एवं रूप्यं सताम्रं चेद्ध्मातं ताम्रे लगेन्न हि ॥ ३१ ॥
तदानिरुत्थं मन्तव्यं रजतं च भिषग्वरैः ।

बीजम् ॥

निर्वाहणविशेषेण तद्वद्वर्णं भवेद्यदा ॥ ३२ ॥
मृदुलं चित्रसङ्काशं तद्बीजमिति कथ्यते ।

## उत्तारणम् ॥

इदमेव हि निर्दिष्टं वैद्यैरुत्तारणं खलु ॥ ३३ ॥

संसृष्टलोहयोरेकलोहस्य परिनाशनम् ।

## ताडनम् ॥

प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ॥ ३४ ॥

## धान्याभ्रम् ॥

चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ ३५ ॥

## सत्वम् ॥

क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतस्सारस्सत्वमित्यभिधीयते ॥ ३६ ॥

## एककोलीसकः ॥

कोष्ठिकाशिखरापूर्णैः कोकिलाध्मानयोगतः ।
मूषाकर्ण(ण्ठ)मनुप्राप्तैरेककोलीशको मतः ॥ ३७ ॥

## स्वेदनाद्यर्हाः कोकिलाः ॥

शिखित्राः पावकोच्छिष्टा मृताङ्गाराश्च कोकिलाः ।
कृष्णाङ्गाः कोकिलाश्चेति पर्यायास्ते परस्परम् ॥३८॥

द्रावणे सत्वपाते च माधूकाः खादिराश्शुभाः ।
दुर्द्रावे वंशजापे(ता)स्तु स्वेदने बादराश्शुभाः ॥३९॥

## हिङ्गुलाकृष्टरसः ॥

विद्याधराख्ययन्त्रस्थादार्द्रकद्रवमर्दितात् ।
समाकृष्टो रसो योऽसौ हिंगुलाकृष्ट उच्यते ॥ ४० ॥

घोषाकृष्टं वङ्गम् ॥

स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तवङ्गं हि तत्ताम्रं घोषाकृष्टमुदाहृतम् ॥ ४१ ॥

गुह्यनागम् ॥

पलविंशति नागस्य शुद्धस्य कृतचक्रिकम् ।
रूषिकादुग्धसंपिष्टशिलायां(लया) परिलेपितम् ॥४२॥

शरावसंपुटे रुध्वा पचेत्क्रोडपुटेन ताम् ।
तावद्वारं पचेद्यत्नाद्यावद्भस्म प्रजायते ॥ ४३ ॥

गुडगुग्गुलुगुञ्जाऽऽज्यटङ्कणैः परिमर्द्य तम् ।
मूषामध्ये निरुध्याऽथ ध्मानादुत्थापितं पुनः ॥ ४४ ॥

चक्रीं तेन पुनः कृत्वा पलप्रमितपारदैः ।
लिप्त्वा लिम्पेत्सितार्कस्य पयसा शिलयाऽपि च ॥४५॥

पचेद्गजपुटैरेवं वाराणां खलु विंशतिः ।
पुटे पुटे च नागस्य कुर्यादुत्थापनं खलु ॥ ४६ ॥

नीलज्योतिर्द्रवैस्सम्यग्दशवाराणि ढालयेत् ।
इति सिद्धं हि तत्सीसं कर्षमात्रावशेषितम् ॥ ४७ ॥

गुह्यनागाख्यया प्रोक्तं श्रेष्ठं रसरसायने ।
निष्कमात्रं तु नागेऽस्मिन् लोहाख्ये या द्रुते सति ॥

स्वतो लक्षगुणां हैमीं शलाकां ग्रसते ध्रुवम् ।
लगेत्तैलप्रतप्तं तत्स्वर्णमुद्गिरति ध्रुवम् ॥ ४९ ॥

गुह्यनागोऽयमुद्दिष्टश्शक्तिस्वच्छन्दभैरवः ।

वरनागम् ॥

तीक्ष्णं नीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम् ॥ ५० ॥

मृदु कृष्णं द्रुतद्रावं वरनागं तदुच्यते ।

### उत्थापनम् ॥

मृतस्य पुनरुद्भूतिस्सा प्रोक्तोत्थापनाख्यया ॥ ५१ ॥

### ढालनम् ॥

द्रुतद्रव्यस्य निक्षेपो द्रवे तत् ढालनं मतम् ।

### चपलः ॥

त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ॥ ५२ ॥

विमृद्य पुटयेत्तावद्यावत्कर्षावशेषकम् ।
न तत्पुटसहस्रेण क्षयमायाति सर्वदा ॥ ५३ ॥

चपलोऽयं समादिष्टो वार्तिकैर्नागसम्भवः ।
इत्थं हि चपलः कार्यो वङ्गस्यापि न संशयः ॥ ५४ ॥

तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः ।
स रसो धातुवादेषु शस्यते न रसायने ॥ ५५ ॥

अयं हि कर्पणाख्येन लोकनाथेन कीर्तितः ।
आमकाश्मरजस्सूक्ष्मं पञ्चमांशसमन्वितम् ॥ ५६ ॥

कुमारीमूलतोयेन मर्दयेदेकवासरम् ।
शार्ङ्गेरीस्वरसे चाऽपि दिनमेकमनारतम् ॥ ५७ ॥

एवं भूनागधौतं च मर्दयेद्दिवसद्वयम् ।
अथैकपलनागेन तावता त्रपुणाऽपि च ॥ ५८ ॥

दशनिष्करसेन्द्रेण श्लक्ष्णपिष्टं समाचरेत् ।
योजयित्वाऽऽद्यकल्केन यथापूर्वं विमर्दयेत् ॥ ५९ ॥

ततश्शाणरसेन्द्रेण सत्वेन रसकस्य च ।
पिष्टीं कृत्वा तु पूर्वेण पूर्वकल्कैश्च योजयेत् ॥ ६० ॥

अथ प्रक्षाल्य सोष्णेन काञ्जिकेन प्रशोषयेत् ।
पलार्धं शुद्धसस्येन अष्टगुञ्जारसेन च ॥ ६१ ॥

विमर्द्य काञ्जिकैः कुर्यान्मरिचप्रमिता वटीः ।
निरुध्य वज्रमूषायां सन्धिबन्धं विधाय च ॥ ६२ ॥

शिखित्रैर्नवभिस्सम्यग्भस्त्राभ्यां प्रधमेत्खलु ।
ततो मूषागतं सत्वं समादाय समन्ततः ॥ ६३ ॥

धमेत्प्रकटमूषायां वङ्कनालेन शोधयेत् ।
दशशाणं हि तत्सत्वं भस्मना लवणेन च ॥ ६४ ॥

सकाञ्जिकेन संपेष्य पुटयोगेन शोधयेत् ।
त्रिनिष्कप्रमिते तस्मिन्पूर्वप्रोक्तेन भस्मना ॥ ६५ ॥

अशीतिगुणितं नागं ध्मात्वा निर्वाहयेत्खलु ।
इयता पूर्वसूतोऽसौ क्षीयते न कथञ्चन ॥ ६६ ॥

चपलोऽयं समुद्दिष्टो लोकनाथेन शम्भुना ।
अनेनापि रसश्शीघ्रं पूर्ववद्बध्यते सुखम् ॥ ६७ ॥

कारवल्लीजटाचूर्णैर्दशधा पुटितो हि सः ।
भवेन्नागविनिर्मुक्तो ग्रासं गृह्णात्यशेषतः ॥ ६८ ॥

सुखं प्रकटमूषायां भवेच्चातिगुणोत्तरः ।
जीर्णग्रासो रसो ह्येषां देहलोहकरो भवेत् ॥ ६९ ॥

## भूनागधौतम् ॥

भूभुजङ्गशकृत्तोयैः प्रक्षाल्यापहृतं मलम् ।
कृष्णवर्णं हि तत्प्रोक्तं धौताख्यं रसवादिभिः ॥ ७० ॥

## द्वन्द्वानम् ॥

द्रव्ययोर्मेलनं ध्मानाद्द्वन्द्वानं परिकीर्तितम् ।

भञ्जनी ॥

भागाद्रूप्याधिके क्षेपमनुवर्णसवर्णकम् ॥ ७१ ॥

दलैर्वा वर्णिकाग्रासो भञ्जनी वादिनिर्मिता।

फुल्लिका ॥

पतङ्गीकल्कतो जाता लोहे तारत्वहेमता ॥ ७२ ॥

दिनानि कतिचित्स्थित्वा यात्यसौ फुल्लिका मता।

पतङ्गीरागः ॥

रञ्जितार्धरसाल्लोहादन्यद्वा चिरकालतः ॥ ७३ ॥

विनिर्याति स निर्दिष्टः पतङ्गीरागसंज्ञकः।

आवापः ॥

द्रुते द्रव्यान्तरक्षेपाल्लोहाद्यैः क्रियते हि यः ॥ ७४ ॥

स आवापः प्रतीवापस्तदेवाच्छादनं मतम्।

अभिषेकः ॥

द्रुते वह्निस्थिते लोहे विरम्याऽष्टनिमेषकम् ॥ ७५ ॥

सलिलस्य परिक्षेपस्सोऽभिषेक इति स्मृतः।

नागं वा वङ्गं वा प्रद्राव्य निषेचयेच्छतं वारान् ॥७६॥

उक्तद्रव्ये तद्द्रवताडनमेतद्धि सोऽभिषेकस्तु।

निर्वापः ॥

तप्तस्याप्सु परिक्षेपो निर्वापस्तपनं च तत् ॥ ७७ ॥

प्रतिवाप्यादिकं कार्यं द्रुतलोहे सुनिर्मले।

शुद्धावर्तः ॥

यदा हुताशो दीप्तार्चिश्शुक्लोत्थानसमन्वितः ॥ ७८ ॥

शुद्धावर्तस्तदा ज्ञेयस्स कालस्सत्वनिर्गमे ।

**रेखावर्तः ॥**

द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा ॥ ७९ ॥
द्रवस्योन्मुखता सेयं रेखावर्तस्स कथ्यते ।

**स्वाङ्गशीतं वह्नि(बहिश्)शीतञ्च ॥**

वह्निस्थमेव शीतं यत्तदुक्तं स्वाङ्गशीतलम् ॥ ८० ॥
अग्नेराकृष्टशीतं यद्वह्नि(बहिश्)शीतं तदीरितम् ।

**स्वेदनम् ॥**

क्षाराम्लैरौषधैर्वाऽपि डोलायन्त्रे स्थितस्य हि ॥ ८१ ॥
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ।

**मर्दनम् ॥**

उद्दिष्टैरौषधैस्सार्धं सर्वाम्लैः काञ्जिकैरपि ॥ ८२ ॥
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ।

**मूर्च्छनम् ॥**

मर्दनादिष्टभैषज्यैर्नष्टपिष्टित्वकारकम् ॥ ८३ ॥
तन्मूर्च्छनं हि वार्यद्रिभूजकञ्चुकनाशनम् ।

**नष्टपिष्टिः ॥**

स्वरूपस्य विनाशेन पिष्टित्वापादनं हि यत् ॥ ८४ ॥
विवृद्धि(द्धि)र्जितसूतेन(सूतोऽसौ) नष्टपिष्टिस्स उच्यते ।

**उत्थापनम् ॥**

स्वेदतापादियोगेन स्वरूपापादनं पुनः ॥ ८५ ॥
तदुत्थापनमित्युक्तं मूर्च्छाव्यापत्तिनाशनम् ।

पातनम् ॥

उक्तौषधैर्मर्दितपारदस्य
यन्त्रस्थितस्योर्ध्वमधश्च तिर्यक् ।
निर्यापनं पातनसञ्ज्ञयोक्तं
वङ्गाहिसंपर्कजकञ्चुकघ्नम् ॥ ८६ ॥

रोधनम् ॥

जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् ॥ ८७ ॥
स्थितिराप्यायिनी कुम्भे योऽसौ रोधनमुच्यते ।

नियमनम् ॥

रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ॥ ८८ ॥
क्रियते यो घटे स्वेदः प्रोक्तं नियमनं हि तत् ।

दीपनम् ॥

धातुपाषाणमूलाद्यैस्संयुक्तो घटमध्यतः ॥ ८९ ॥
ग्रासार्थं त्रिदिनं स्वेदो दीपनं तन्मतं बुधैः ।

ग्रासमानम् ॥

इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः ॥ ९० ॥
इयतीत्युच्यते योऽसौ ग्रासमानमितीरितम् ।

जारणा ॥

ग्रासस्य चारणं गर्भद्रावणं जारणं तथा ॥ ९१ ॥
इति त्रिरूपा निर्दिष्टा जारणा वरवार्तिकैः ।
ग्रासः पिण्डः परीणामस्तिस्रश्चाख्याः पराः पुनः ॥९२॥
समुखा निर्मुखा चेति जारणा द्विविधा मता ।
निर्मुखा जारणा प्रोक्ता बीजादानेन भागतः ॥ ९३ ॥

समुखजारणा ॥

शुद्धं स्वर्णं च रूप्यं च बीजमित्यभिधीयते ।
चतुष्षष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ॥ ९४ ॥

एवं कृते रसो ग्रासलोलुपो मुखवान् भवेत् ।
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ॥ ९५ ॥

इयं हि समुखी प्रोक्ता जारणाऽमृतजार(चारि)णा ।

निर्मुखचारणा ॥

दिव्यौषधिसमायोगात्स्थितः प्रकटकोष्ठिषु ॥ ९६ ॥

भुंक्ते निखिललोहाद्यान्योऽसौ राक्षसवक्त्रवान् ।

चारणा ॥

रसस्य जठरे ग्रासक्षेपणं चारणा मता ॥ ९७ ॥

गर्भद्रुतिः ॥

ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ।

बाह्यद्रुतिः ॥

बहिरेव द्रुतीकृत्य घनसत्वादिकं खलु ॥ ९८ ॥

जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते ।

द्रुतिलक्षणम् ॥

निर्लेपित्वं द्रवत्वं च तेजस्त्वं लघुता तथा ॥ ९९ ॥

असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ।
औषधाज्यादियोगेन लोहधात्वादिकं सदा ॥ १०० ॥

उत्तिष्ठते द्रवाकारा सा द्रुतिः परिकीर्तिता ।

जारणा ॥

द्रुतग्रासपरीणामो बिडयन्त्रादियोगतः ॥ १०१ ॥

जारणेत्युच्यते तस्याः प्रकारास्सन्ति कोटिशः ।

**बिडम् ॥**

क्षारैरम्लैश्च गन्धाद्यैर्मूत्रैस्सपटुभिस्तथा ॥ १०२ ॥
रसग्रासस्य जीर्णार्थं तद्बिडं परिकीर्तितम् ।

**रञ्जनम् ॥**

संसिद्धबीजसत्वादिजारणेन रसस्य हि ॥ १०३ ॥
पीतादिरागजननं रञ्जनं समुदीरितम् ।

**सारणा ॥**

सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् ॥ १०४ ॥
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता ।

**वेधः ॥**

व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ॥ १०५ ॥
वेध इत्युच्यते तज्ज्ञैः स चानेकविधस्स्मृतः ।
लेपः क्षेपश्च कुन्तश्च शब्दाख्यो धूमसंज्ञकः ॥१०६॥

**लेपवेधः ॥**

लेपेन कुरुते लोहं स्वर्णं वा रजतं तथा ।
लेपवेधस्स विज्ञेयः पुटमत्र च सौकरम् ॥ १०७ ॥

**क्षेपवेधः ॥**

प्रक्षेपणं द्रुते लोहे वेधस्स्यात्क्षेपसंज्ञकः ।

**कुन्तवेधः ॥**

सन्दंशधृतसूतेन द्रुतद्रव्याहतिश्च यः ॥ १०८ ॥
सुवर्णत्वादिकरणः कुन्तवेधस्स उच्यते ।

### धूमवेधः ॥

वह्नौ धूमायमानेऽन्तःप्रक्षिप्तरसधूमतः ॥ १०९ ॥
स्वर्णाद्यापादनं लोहे धूमवेधस्स ईरितः ।

### शब्दवेधः ॥

मुखस्थिते रसे नाल्या लोहस्य धमनात्खलु ॥ ११० ॥
स्वर्णरूप्यत्वजननं शब्दवेधस्स कीर्तितः ।

### उत्पाटनम् ॥

पिण्डद्रव्यस्य सूतेन कालुष्यादिनिवारणम् ॥ १११ ॥
प्रकाशनं च वर्णस्य तदुत्पाटनमीरितम् ।

### स्वेदनम् ॥

क्षाराम्लैरौषधैस्सार्धं भाण्डे रुध्वाऽतियत्नतः ॥ ११२ ॥
भूमौ निखन्यते यत्तत्स्वेदनं समुदीरितम् ।

### सन्यासः ॥

रसस्यौषधयुक्तस्य भाण्डे रुद्धस्य यत्नतः ॥ ११३ ॥
सदाऽग्नियुतचुल्यन्तःक्षेपस्सन्यास उच्यते ।
द्वावेतौ स्वेदसन्यासौ रसराजस्य निश्चितम् ॥ ११४ ॥
गुणप्रभावजननौ शीघ्रव्याप्तिकरौ तथा ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ पञ्चविंशोल्लासः ॥

## ॥ षड्विंश उल्लासः ॥

### यन्त्राणि ॥

रसो नियन्त्र्यते येन यन्त्रं तदिति कथ्यते ।

### १. खल्वयन्त्रम् ॥

खल्वयन्त्रं द्विधा प्रोक्तं मर्दनादिककर्मणि ॥ १ ॥

खल्वं लोहमयं देवि! पाषाणोत्थमथाऽपि वा ।
खल्वयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः ॥

खल्वयन्त्रं द्विधा प्रोक्तं रसादिसुखमर्दने ।
षोडशाङ्गुलिकोत्सेधा नवाङ्गुलिसुविस्तरा ॥ ३ ॥

चतुर्विंशाङ्गुलीदीर्घघर्षणी द्वादशाङ्गुला ।
विंशत्यङ्गुलदीर्घा वा स्यादुत्सेधे दशाङ्गुला ॥ ४ ॥

खल्वप्रमाणं तज्ज्ञेयं श्रेष्ठं स्याद्रसमर्दने ।
षोडशाङ्गुलविस्तारः खल्वो भवति वर्तुलः ॥ ५ ॥

चतुरङ्गुलनिम्नं च मध्येऽतिमसृणीकृतम् ।
मर्दनी चिपिटाऽधस्तात्सुग्रहा च शिखोपरि ॥ ६ ॥

अयं हि वर्तुलः खल्वो मर्दनेऽतिसुखप्रदः ।
अयसा कान्तलोहेन लोहखल्वमपीदृशम् ॥ ७ ॥

अधस्ताद्द्रोणिका कार्या वह्निप्रज्वालनोचिता ।

पातनात्रितयस्योक्तं यन्त्राणां त्रितयं खलु ।
पातनैश्च विना सूतो नितरां दोषमृच्छति ॥ २७ ॥

त्रिभिरेवोर्ध्वपातैस्स कस्माद्दोषैर्न मुच्यते ।
द्वि(वि)भागेन विपाकेन द्रव्यान(ऽयेणा)न्योन्ययोगतः ॥

पात्रान्तरपरिक्षेपाद्गुणास्स्युर्विविधाःखलु ।
खण्डान्युलूखलांभोभिस्तण्डुलास्युर्ज(र्म)लोज्झिताः ॥

पातनैव महाशुद्धिस्तण्डुली परिकीर्तिता ।

### ६. कच्छपयन्त्रम् ॥

विशालवदने भाण्डे तोयपूर्णे निवेशयेत् ॥ ३० ॥

अपरं पृथुलं सम्यक् प्रत(स्त)रस्तस्य मध्यमे ।
आलवालं बिडैः कृत्वा तन्मध्ये पारदं क्षिपेत् ॥ ३१ ॥

ऊर्ध्वाधश्च बिडं दत्वा मल्लेनारुध्य यत्नतः ।
पुटमौचित्ययोगेन दीयते तन्निगद्यते ॥ ३२ ॥

यन्त्रं कच्छपसंज्ञं हि तदुक्तं रसजारणे ।

### ७. आन्तरालिकयन्त्रम् ॥

कृत्वा लोहमयीं मूषां वर्तुलाधारका(धा)रिणीम् ॥३३॥

वितस्त्या संमितां कान्तलोहेन परिनिर्मिताम् ।
मुण्डलोहोद्भवां वाऽपि कण्ठाधो ब्यङ्गुलादधः ॥ ३४ ॥

ब्यङ्गुलं वलयं दद्यान्मध्यदेशे च कण्ठतः ।
पिधानधारकं चिञ्चापत्रविस्तीर्णकङ्कणम् ॥ ३५ ॥

पिधानमन्तराविष्टं सशिखं श्लिष्टसन्धिकम् ।
तले प्रविहतच्छिद्रं भाण्डं कृत्वा ह्यधोमुखम् ॥ ३६ ॥

यन्त्रेणालम्बयेन्मूर्ध्नि निरुध्य च विशोष्य च।
स्थालीकण्ठं ततो दद्यात्पुटानलविधारणम् ॥ ३७ ॥

एवंरूपं भवेद्यन्त्रमान्तरालिकसंज्ञकम्।
अनेन जारयेद्गन्धं द्रुतिं गर्भक्र(धृ)तामपि ॥ ३८ ॥

## ८. तापिकायन्त्रम् ॥

तापीमूषां मृदा कृत्वा दृढां चारत्निमात्रिकाम्।
सुदृढां मध्यदेशे च द्व्यङ्गुलच्छिद्रसंयुताम् ॥ ३९ ॥

कान्तलोहमयीं खारीं दद्याद्द्रव्यस्य चोपरि।
तापिकां पूरयेच्छुद्धसिकताभिस्समन्ततः ॥ ४० ॥

तां च चुल्यां समारोप्य क्षेपं क्षेपं बिडद्रवम्।
पादाङ्गुष्ठमितां ज्वालां ज्वालयेदनलं ततः ॥ ४१ ॥

लोहाभ्रकादिकं सर्वं रसस्योपरि जारयेत्।
तापिकायन्त्रमित्युक्तं सुकरं रसजारणे ॥ ४२ ॥

## ९. गर्भयन्त्रम् ॥

स्थाल्यां विनिक्षिप्य रसादिवस्तु
स्वर्णादि खोर्यां प्रविधाय भूयः।
अम्लेन चोर्ध्वं लवणानि दत्वा
चुल्यां पचेत्तत्प्रतिगर्भयन्त्रम् ॥ ४३ ॥

खोरीमल्लं ततस्स्थालीं निरुध्यादतियत्नतः।
स्थाल्यां मल्लेन वा खोर्यां क्षिप्त्वा वस्तु निरुध्य च ॥
क्षिप्त्वा पट्टादिकं रुध्वा पाकस्स्याद्गर्भयन्त्रकम्।

## १०. पालिकायन्त्रम् ॥

चषकं वर्तुलं लोहं विनताग्रोर्ध्वदण्डकम् ॥ ४५ ॥

एतद्धि पालिकायन्त्रं बलिजारणहेतवे ।

## ११. घटीयन्त्रम् ॥

चतुःप्रस्थजलाधारं चतुरङ्गुलकाननम् ॥ ४६ ॥

घटीयन्त्रमिदं प्रोक्तं तदाप्यायनके स्मृतम् ।

## १२. इष्टिकायन्त्रम् ॥

विधाय वर्तुलं गर्तं मल्लमत्र निधाय च ॥ ४७ ॥

विनिधायेष्टकां तत्र मध्यगर्तवतीं शुभाम् ।
गर्तस्य परितः कुर्यात्पालिकामङ्गुलोच्छ्रयाम् ॥ ४८ ॥

तत्र सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ।
निक्षिपेद्गन्धकं तत्र मल्लेनास्यं निरुध्य च ॥ ४९ ॥

मल्लपालिकयोर्मध्ये मृदा सम्यङ्निरुध्य च ।
वनोत्पलैः पुटं देयं कपोताख्यं न चाऽधिकम् ॥ ५० ॥

इष्टिकायन्त्रमेतत्स्याद्गन्धकं तेन जारयेत् ।

## १३. विद्याधरयन्त्रम् ॥

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरुध्य च ॥५१॥

ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ।
एतद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे ॥ ५२ ॥

## १४. डमरुकयन्त्रम् ॥

यन्त्रं स्थाल्युपरि स्थालीं न्युब्जां दत्वा निरुध्यते ।
यन्त्रं डमरुकाख्यं तद्रसबन्धकृते हितम् ॥ ५३ ॥

## १५. नाभियन्त्रम् ॥

मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् ।

गर्तस्य परितः कुड्यं प्रकुर्यात्त्र्यङ्गुलोच्छ्रितम् ॥ ५४ ॥

ततश्चाच्छादयेत्सम्यग्गोस्तनाकारमूषया ।
सम्यक्तोयमृदा रुध्वा सम्यगत्रोच्यमानया ॥ ५५ ॥

[जलमृत्स्ना ।]

लेहवत्कृतबर्बूरक्वाथेन परिमिश्रितम् ।
जीर्णकिट्टरजस्सूक्ष्मं गुडचूर्णैस्समन्वितम् ॥ ५६ ॥
इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु ।

[वह्निमृत्स्ना ।]

स्फटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः ॥ ५७ ॥
वह्निमृत्सा भवेद्घोरवह्नितापसहा खलु ।
एतयोर्मृत्स्नयो रुद्धो न गन्तुं क्षमते रसः ॥ ५८ ॥
ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं प्रोक्तं नन्दिना तत्त्ववेदिना ॥ ५९ ॥
अनेन जीर्यते सूते निर्धूमश्शुद्धगन्धकः ।

## १६. ग्रस्तयन्त्रम् ॥

मूषा मूषोदराविष्टा आद्यन्तसमवर्तुला ॥ ६० ॥
चिपिटा च तले प्रोक्तं ग्रस्तयन्त्रं मनीषिभिः ।
सूतेन्द्रबन्धनार्थं हि रसविद्भिरुदीरितम् ॥ ६१ ॥

## १७. तुलायन्त्रम् ॥

वृन्ताकाकारमूषे द्वे तयोः कण्ठादधः खलु ।
प्रादेशमात्रां नलिकामृज्वीं लग्नां सगन्धकाम् ॥ ६२ ॥

एतद्धि पालिकायन्त्रं बलिजारणहेतवे ।

११. घटीयन्त्रम् ॥

चतुःप्रस्थजलाधारं चतुरङ्गुलकाननम् ॥ ४६ ॥

घटीयन्त्रमिदं प्रोक्तं तदाप्यायनके स्मृतम् ।

१२. इष्टिकायन्त्रम् ॥

विधाय वर्तुलं गर्तं मल्लमत्र निधाय च ॥ ४७ ॥

विनिधायेष्टकां तत्र मध्यगर्तवर्तीं शुभाम् ।
गर्तस्य परितः कुर्यात्पालिकामङ्गुलोच्छ्रयाम ॥ ४८ ॥

तत्र सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ।
निक्षिपेद्गन्धकं तत्र मल्लेनास्यं निरुध्य च ॥ ४९ ॥

मल्लपालिकयोर्मध्ये मृदा सम्यङ्निरुध्य च ।
वनोत्पलैः पुटं देयं कपोताख्यं न चाऽधिकम् ॥ ५० ॥

इष्टिकायन्त्रमेतत्स्याद्गन्धकं तेन जारयेत् ।

१३. विद्याधरयन्त्रम् ॥

स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरुध्य च ॥५१॥

ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ।
एतद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे ॥ ५२ ॥

१४. डमरुकयन्त्रम् ॥

यन्त्रं स्थाल्युपरि स्थालीं न्युब्जां दत्वा निरुध्यते ।
यन्त्रं डमरुकाख्यं तद्रसबन्धकृते हितम् ॥ ५३ ॥

१५. नाभियन्त्रम् ॥

मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् ।

गर्तस्य परितः कुड्यं प्रकुर्यात्त्र्यङ्गुलोच्छ्रितम् ॥ ५४ ॥
ततश्चाच्छादयेत्सम्यग्गोस्तनाकारमूषया ।
सम्यक्तोयमृदा रुध्वा सम्यगत्रोच्यमानया ॥ ५५ ॥

[जलमृत्स्ना ।]

लेहवत्कृतबर्बूरक्वाथेन परिमिश्रितम् ।
जीर्णकिट्टरजस्सूक्ष्मं गुडचूर्णैस्समन्वितम् ॥ ५६ ॥
इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु ।

[वह्निमृत्स्ना ।]

खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः ॥ ५७ ॥
वह्निमृत्सा भवेद्घोरवह्नितापसहा खलु ।
एतयोर्मृत्स्नयो रुद्धो न गन्तुं क्षमते रसः ॥ ५८ ॥
ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं प्रोक्तं नन्दिना तत्त्ववेदिना ॥ ५९ ॥
अनेन जीर्यते सूते निर्धूमश्शुद्धगन्धकः ।

## १६. ग्रस्तयन्त्रम् ॥

मूषा मूषोदराविष्टा आद्यन्तसमवर्तुला ॥ ६० ॥
चिपिटा च तले प्रोक्तं ग्रस्तयन्त्रं मनीषिभिः ।
सूतेन्द्रबन्धनार्थं हि रसविद्भिरुदीरितम् ॥ ६१ ॥

## १७. तुलायन्त्रम् ॥

वृन्ताकाकारमूषे द्वे तयोः कण्ठादधः खलु ।
प्रादेशमात्रां नलिकामृज्वीं लग्नां सगन्धकाम् ॥ ६२ ॥

तत्रैकस्यां क्षिपेत्सूतमन्यस्यां गन्धचूर्णकम् ।
निरुध्य मूषयोर्वक्त्रं वालुकायन्त्रके क्षिपेत् ॥ ६३ ॥

अधोऽग्निं ज्वालयेदेतत्तुलायन्त्रमुदाहृतम् ।
शिलातालकगन्धाश्मजारणाय प्रकीर्तितम् ॥ ६४ ॥

## १८. स्थालीयन्त्रम् ॥

स्थाल्यां ताम्रादि निक्षिप्य मल्लेनास्यं निरुध्य च ।
पच्यते स्थालिसंस्थं यत्स्थालीयन्त्रमिति स्मृतम् ॥

## १९. कोष्ठिकायन्त्रम् ॥

स्थूलभाण्डोदरस्यान्तर्वालुकां निक्षिपेच्छुभाम् ।
वितस्तिप्रमितोत्सेधां ततस्तत्र निवेशयेत् ॥ ६६ ॥

सुपक्वां मृण्मयीं कोष्ठीं द्वादशाङ्गुलकोच्छ्रयाम् ।
षडङ्गुलकविस्तीर्णां मध्येऽतिमसृणीकृताम् ॥ ६७ ॥

पञ्चाङ्गुलपिधानं च तीक्ष्णाग्रं मुकुलीकृतम् ।
न न्यूनं नाधिकं कोष्ठे कण्ठतो मसृणा बहिः ॥ ६८ ॥

कोष्ठ्यां च निक्षिपेद्गन्धं षड्पलं श्लक्ष्णचूर्णितम् ।
ततस्त्रैपादिकीं लौहीं निवेश्य च स्थिरीकृताम् ॥६९॥

तस्यां च विन्यसेत्खोरीं लौहीं वा कान्तलोहजाम् ।
तस्यां सूतं क्षिपेच्छुद्धं पलविंशतिमानतः ॥ ७० ॥

टङ्कगन्धकसूतं च भावयेल्लशुनद्रवैः ।
अधश्शिखेन पूर्वोक्तपिधानेन पिधाय च ॥ ७१ ॥

संधिबन्धं प्रकुर्वीत सुधामृल्लागुडादिभिः ।
सन्धिबन्धे विशुष्के च क्षिपेदुपरि वालुकाम् ॥ ७२ ॥

भाण्डवक्त्रं निरुध्याऽथ ज्वालयेत्तदधोऽनलम्।
एवं यामत्रयं यावत्ततो गन्धकसम्भवः॥ ७३॥

पिधानलग्नधूमोऽसौ गलित्वा निपतेद्रसे।
एवं च षड्गुणं गन्धं भुक्त्वा सूतोऽरुणो भवेत्॥७४॥

करोति कल्पनिर्दिष्टान्विशिष्टानखिलान्गुणान्।
कोष्ठिकायन्त्रमेतद्धि नन्दिना परिकीर्तितम्॥ ७५॥

२०. वालुकायन्त्रम्॥

पश्चाढवालुकाचूर्णं भाण्डे निक्षिप्य यत्नतः।
पच्यते रसगोलाद्यं वालुकायन्त्रकं हि तत्॥ ७६॥

२१. लवणयन्त्रम्॥

एवं लवणनिक्षेपात्प्रोक्तं लवणयन्त्रकम्।

२२. धूपयन्त्रम्॥

याष्टाङ्गुलं पात्रं लोहमष्टांगुलोच्छ्रयम्॥ ७७॥

धो द्व्यङ्गुले देशे जाताधारं च तत्र च।
लोहशलाका च तस्मिंस्तिर्यग्विनिक्षिपेत्॥७८॥

ने स्वर्णपत्राणि तस्यामुपरि विन्यसेत्।
धो निक्षिपेद्धूपं वक्ष्यमाणमिहैव हि॥ ७९॥

त्रं न्युब्जपात्रेण छादयेदपरेण हि।
विलिप्य सन्धिं च वह्निं प्रज्वालयेदधः॥८०॥

कृष्णानि पत्राणि हतान्युक्तविधानतः।
रति वेगेन द्रुतिं गर्भे द्रवन्ति च॥ ८१॥

लकशिलानां हि कज्जल्या वा मृताहिना।
स्वर्णपत्राणां परमं परिकीर्तितम्॥ ८२॥

तारार्थं तारपत्राणि मृतवङ्गेन धूपयेत् ।
धूपयेच्च यथायोगै रसैरुपरसैरपि ॥ ८३ ॥
धूपयन्त्रमिदं प्रोक्तं जारणाद्रव्यशोधने ।

## २३. कन्दुकयन्त्रम् ॥

स्थूलस्थाल्यां द्रवं क्षिप्त्वा वासो बध्वा मुखे दृढम् ॥
तत्र स्वेद्यं विनिक्षिप्य मृदाऽऽस्यं प्रपिधाय च ।
अधस्ताज्ज्वालयेदग्निं यन्त्रं तत्कन्दुकाह्वयम् ॥ ८५ ॥

## २४. ढेकीयन्त्रम् ॥

भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् ।
कान्त(कांस्य)पात्रद्वयं कृत्वा सम्पुटं जलगर्भितम् ॥
नालास्यं तत्र संयोज्यं दृढं तच्चापि कारयेत् ।
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र पुटे रसः ॥ ८७ ॥
अग्निना तापितो नालात्तोये तस्मिन्पतत्यधः ।
यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि ॥ ८८ ॥
जायते रससन्धानं ढेकीयन्त्रमिदं भवेत् ।

## २५. सोमानलयन्त्रम्॥

ऊर्ध्वं वह्निरधश्चापो मध्ये तु रससङ्ग्रहः ॥ ८९ ॥
सोमानलमिदं प्रोक्तं जारयेद्गगनादिकम् ।

## २६. नालिकायन्त्रम् ॥

लोहनालगतं सूतं भाण्डे लवणपूरितम् ॥ ९० ॥
निरुद्धं विपचेदेतन्नालिकायन्त्रमीरितम् ।

## २७ पातालयन्त्रम् ॥

सुसन्धि सन्धितं कृत्वा दिव्यभाण्डे तु सम्मुखम् ॥

अष्टाङ्गुलमुखं तं तु दीर्घं स्यात्षोडशाङ्गुलम् ।
सुसन्धि सन्धितं कृत्वा वस्त्रमृत्तिकलेपनम् ॥ ९२ ॥

तत्र पातालयन्त्रे तु सूतकादि निपातयेत् ।

## २८. दीपिकायन्त्रम् ॥

कच्छपयन्त्रान्तर्गतमृण्मयपीठस्थदीपिकासंस्थः ॥ ९३ ॥

यस्मिन्निपतति सूतः प्रोक्तं तद्दीपिकायन्त्रम् ।

## २९. गङ्गासागर(भट्टी)यन्त्रम् ॥

द्वादशाङ्गुलमुत्सेधं षोडशाङ्गुलमायतम् ॥ ९४ ॥

ताम्रीयं मृण्मयं वाऽथ सुश्लक्ष्णं चिपिटं शुभम् ।
पात्रं कर्णा(ण्ठा)दधो द्रोणीं व्यङ्गुलोत्सेधमात्रकाम् ॥

द्रोण्यां पात्रं न्यसेदन्यत्तावन्मात्रं सुसन्धितम् ।
न्युब्जं सन्धौ तयोर्नालं कुर्याद्गोमुखसन्निभम् ॥९६॥

पाच्यद्रव्यमधः पात्रे द्रवद्रव्येण योजितम् ।
क्षिप्त्वा निधाय मृत्सन्धिं यन्त्रोर्ध्वे जलसेचनम् ॥९७॥

चुल्यामारोप्य तद्यन्त्रं चण्डाग्निं ज्वालयेदधः ।
तस्मात्तान्यद्विनिर्याति तत्तद्द्रव्याश्रितो रसः ॥ ९८ ॥

गङ्गासागरयन्त्रं हि भट्टियन्त्रमिदं स्मृतम् ।
गुडपुष्पफलादीनामाहरेद्द्रुतिमुत्तमाम् ॥ ९९ ॥

## ३०. डो(दो)लायन्त्रम् ॥

द्रवद्रव्येण भाण्डस्य पूरितार्धोदरस्य च ।
मुखे तिर्यक्कृते दण्डे रसं सूत्रेण लम्बितम् ॥१००॥

स्वेदयेत्तत्तलगतं डोलायन्त्रमिति स्मृतम् ।

## ३१. कोष्ठीयन्त्रम् ॥

चुल्लीं चतुर्मुखीं कृत्वा तत्र भाण्डं निवेशयेत् ॥१०१॥

तत्रौषधं विनिक्षिप्य रुद्ध्वा तद्भाण्डकाननम् ।
कोष्ठीयन्त्रमिदं नाम्ना तन्त्रज्ञैः परिकीर्तितम् ॥१०२॥

## ३२. गर्भयन्त्रम् ॥

त्र्यङ्गुलां परिणाहेन दैर्घ्येण चतुरङ्गुलाम् ।
मृण्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम् ॥ १०३ ॥

लोणस्य विंशतिं भागान्भागमेकं तु गुग्गुलोः ।
सुश्लक्ष्णं पेषयित्वा तु वारं वारं पुनः पुनः ॥१०४॥

मूषालेपं दृढं कृत्वा लवणार्धमृदा बुधः ।
कारीषे वा तुषाग्नौ वा भूमौ तु स्वेदयेन्मृदु ॥१०५॥

अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत् ।
गर्भयन्त्रमिदं प्रोक्तं पिष्टिकाभस्मकारकम् ॥ १०६ ॥

## ३३. हंसपाकयन्त्रम् ॥

खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत् ।
अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत् ॥ १०७ ॥

पञ्चक्षारैस्तथा मूत्रैर्लवणैश्च बिडं ततः ।
हंसपाकस्समाख्यातो यन्त्रं तद्वार्तिकोत्तमैः ॥ १०८ ॥

## ३४. मूषायन्त्रम् ॥

लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ।
मूषयोर्मुखयोर्नालं दत्वा सम्यङ्निरोधयेत् ॥ १०९ ॥

एकस्यां सूतकं शुद्धमन्यस्यां शुद्धगन्धकम्।
देयं जलं सूतकाधो वह्निं गन्धोपरि क्षिपेत्॥ ११०॥

जारयेत्षड्गुणं गन्धमनेनैव क्रमेण हि।
मूषायन्त्रमिदं ज्ञेयं सिद्धनागार्जुनेरितम्॥ १११॥

### ३५. स्तनयन्त्रम्॥

कान्तलोहमयं पात्रमायतं द्वादशाङ्गुलम्।
दीर्घमष्टाङ्गुलं देवि! पात्राधस्त्र्यङ्गुलं शुभम्॥ ११२॥

निम्नं पात्रं पिधानीं च लोहोत्थां चिपिटां शुभाम्।
स्तनयन्त्रमिदं सूतपिष्टीनां जारणे वरम्॥ ११३॥

### ३६. नागमायूरयन्त्रम्॥

वृन्ताकमूषायुगलं पद्म(वर्त)लोहेन कारयेत्।
एकस्यां निक्षिपेत्सूतमन्यस्यां गरलं क्षिपेत्॥ ११४॥

नागाकारं वक्त्रनालं विषमूषामुखे न्यसेत्।
मयूराकारनालं हि रसमूषामुखे न्यसेत्॥ ११५॥

मयूरवदने नागमुखं संयोजयेत्सुधीः।
सन्धित्रयं वज्रमृदा लेपं कुर्याद्यथा दृढम्॥ ११६॥

सलिलं रसमूषाधो विषाधोऽङ्गारपावकः।
नागमायूरयन्त्रं हि विषधूपे वरं प्रिये!॥ ११७॥

### ३७. चक्रयन्त्रम्॥

हस्तमात्रायतं गर्तं वितस्तिद्वयनिम्नकम्।
कोष्ठीं गर्तस्य मध्ये तु द्वादशांगुलमायताम्॥ ११८॥

वितस्तिद्वयमुत्सेधां कोष्ठ्यामापूरयेच्छुभाम्।
वालुकां तद्बहिश्छाणवह्निं कोष्ठ्यां रसं प्रिये!॥११९॥

चक्रयन्त्रमिदं सूतभस्मकर्मणि शस्यते ।

### ३८. खेचरयन्त्रम् ॥

स्थाल्यां कदलीपुष्पनिभां सच्छिद्रमूषिकाम् ॥१२०॥
अधोमुखीं प्रकुर्वीत लिपेद्वस्रमृदा दृढम् ।
उपरिष्टादधोवक्त्रां स्थालीमन्यां सुसञ्चिताम् ॥ १२१ ॥
मूषायां वत्सनाभं तु निक्षिपेदूर्ध्वभाजने ।
रसं विलेपयेद्युक्त्या यन्त्रोर्ध्वे कैतव्यो रसः ॥ १२२ ॥
अधो मृद्वग्निना पाकस्त्वेतत्खेचरयन्त्रकम् ।
प्रायस्सिद्धरसेन्द्रस्य विषधूपे वरं प्रिये ! ॥ १२३ ॥

### ३९. कापालियन्त्रम् ॥

स्थाल्यां सूतादिकान्क्षिप्त्वा हेमरूप्यादि खोरिकाम् ।
न्युब्जां सन्धि मृदा लिप्त्वा वालुकां खोरिकान्तगाम् ॥
कृत्वा मृद्वग्निना पाकस्त्वेतत्कापालियन्त्रकम् ।

### ४०. वालुकायन्त्रम् ॥

सरसां गूढवक्त्रां च मृद्वस्त्राङ्गुलसंयुताम् ॥ १२५ ॥
शोषितां काचकलशीं पूरयेत्त्रिषु भागयोः ।
भाण्डे वितस्तिगंभीरे वालुकासु प्रतिष्ठिता ॥ १२६ ॥
भागस्य पूरयित्रीभिरन्याभिरवकुण्ठयेत् ।
भाण्डवक्त्रं मणिकया सन्धिं लिम्पेन्मृदा पचेत् ॥१२७॥
चुल्ल्यां तृणस्य चादाहान्मणिकापृष्ठवर्तिनः ।
एतद्धि वालुकायन्त्रं रसगोलादिकान्पचेत् ॥ १२८ ॥

### ४१. लवणयन्त्रम् ॥

एवं लवणनिक्षेपात्प्रोक्तं लवणयन्त्रकम्।
अन्तःकृतरसालेपताम्रपात्रमुखस्य च ॥ १२९ ॥

लिप्त्वा मृल्लवणेनैव सन्धिं भाण्डतलस्य च।
तद्भाण्डं पटुनाऽऽपूर्य क्षारैर्वा पूर्ववत्पचेत् ॥ १३० ॥

### ४२. भूधरयन्त्रम् ॥

वालुकागूढसर्वाङ्गां यन्त्रे मूषां रसान्विताम्।
दीप्तोत्पलैस्संवृणुयाद्यन्त्रं तद्भूधराह्वयम् ॥ १३१ ॥

### ४३. नालिकायन्त्रम् ॥

कुम्भस्य पार्श्वे सुषिरं कुर्यादङ्गुष्ठमात्रकम्।
तावत्स्थूलमयोनालं वेणुनालमथापि वा ॥ १३२ ॥

छिद्रे संयोजयेन्नालं नालाग्रे घटिकां न्यसेत्।
कुम्भे सर्जादिनिर्यासं क्षिप्त्वा वक्त्रं निरोधयेत् ॥१३३॥

अधोऽग्निं ज्वालयेदेतन्नालिकायन्त्रमुच्यते।

### ४४. पुटयन्त्रम् ॥

शरावसम्पुटान्तस्थं करीषेष्वग्निमानवित् ॥ १३४ ॥

पचेत चुल्यां यामं वा रसं तत्पुटयन्त्रकम्।

### ४५. पातालयन्त्रम् ॥

विशालवदनां स्थालीं गर्ते सजलगोमये ॥ १३५ ॥

विन्यस्य वदनान्तश्च पूरयेदपरं घटम।
पञ्चसच्छिद्रसहितां स्थालीं वक्त्रे निवेशयेत् ॥ १३६ ॥

तद्धटं पूरयेत्तैलपात्यंद्रव्यैर्निरोधयेत्।
भाण्डवक्त्रं शरावेण पुटं दद्यात्समन्ततः ॥ १३७ ॥

छिद्रेभ्यः पतितं तैलं तत्तद्योगेषु योजयेत् ।
इदं पातालयन्त्रं हि सर्वतैलं निपातयेत् ॥ १३८ ॥
काष्ठत्वग्बीजमांसास्थिवंशतैलं समाहरेत् ।

### ४६. धूपयन्त्रम् ॥

स्थाल्यां लद्दिं खरादीनां क्षिप्त्वाऽऽस्ये कांस्यपात्रकम् ॥
सजलं विन्यसेद्देवि ! वह्निं प्रज्वालयेदधः ।
कान्तपात्रस्थितं तैलं सर्वव्रणविरोपणम् ॥ १४० ॥
धूपयन्त्रमिदं देवि ! नन्दिना परिकीर्तितम् ।

### ४७. अधःपातनयन्त्रम् ॥

वृत्तालाबुसमस्थूलं दीर्घनालं सरन्ध्रकम् ॥ १४१ ॥
तस्मिन्क्षिपेत्तैलपात्यद्रव्यं बीजादिकं प्रिये ! ।
तन्मुखे निक्षिपेत्केशान्विन्यसेत्तदधोमुखम् ॥ १४२ ॥
सच्छिद्रे च घटे नालं भाण्डच्छिद्रे निवेशयेत् ।
घटमध्ये पुटं दद्यान्नालाधो घटिकां न्यसेत् ॥ १४३ ॥
अधःपातनयन्त्रं हि श्रेष्ठं स्यात्तैलपातने ।

### ४८. अन्यत्- अधःपातनयन्त्रम् ॥

विशालकांस्यपात्रान्तर्न्यसेदुत्तम्भनं समम् ॥ १४४ ॥
तदूर्ध्वे मृण्मयं पात्रं सुदृढं चतुरङ्गुलम् ।
विन्यसेदपरं पात्रं सन्तप्तं पूर्वपात्रके ॥ १४५ ॥
विन्यस्य तस्मिन्श्रीखण्डकृष्णागरुमधुप्लुतम् ।
एवं द्वितीयं पात्रं तु तृतीयमपि तद्विधम् ॥ १४६ ॥

उपर्युपरि विन्यस्य तदूर्ध्वं मृत्कटाहकम्।
न्युब्जं न्यसेत्कांस्यपात्रे कटाहं मार्जयेज्जलैः॥ १४७॥
अधःपातनयन्त्रं हि गन्धतैलं निपातयेत्।

### मूषा॥

मूषा हि क्रौञ्चिका प्रोक्ता कुमुदी करहाटिका॥
पाचनी वह्निमित्रा च रसवादिभिरिष्यते।
मुष्णाति दोषान्मूषेयं सा मूषेति निगद्यते॥ १४९॥
उपादानं भवेत्तस्या मृत्तिका लोहमेव च।
मूषामुखविनिष्क्रान्ता वरमेकाऽपि काकिनी॥ १५०॥
दुर्जनप्रणिपातेन धिग्लक्षमपि मानिनाम्।
मूषापिधानयोर्बन्धे रन्ध्राणं सुविलेपयेत्॥ १५१॥
अन्ध्रणं रन्धनं चैव संश्लिष्टं सन्धिबन्धनम्।

### [मूषार्थे श्रेष्ठा मृत्।]

मृत्तिका पाण्डुरस्थूलशोणपाण्डुरमूषरा॥ १५२॥
चिराध्मानसहा सा हि मूषार्थमतिशस्यते।
तदभावे च वाल्मीकी कौलाली वा समीर्यते॥१५३॥
या मृत्तिका दग्धतुषैश्शणेन
शिखित्रकैर्वा हयलद्दिना च।
लोहेन दण्डेन च कुट्टिता सा-
साधारणा स्यात्खलु मूषिकार्थम्॥ १५४॥
श्वेताश्मानस्तुषा दग्धाश्शिखित्राश्शणकर्पटम्।
लद्दिकिट्टं यथायोग्यं संयोज्या मूषिकामृदि॥

छिद्रेभ्यः पतितं तैलं तत्तद्योगेषु योजयेत् ।
इदं पातालयन्त्रं हि सर्वतैलं निपातयेत् ॥ १३८ ॥
काष्ठत्वग्बीजमांसास्थिवंशतैलं समाहरेत् ।

### ४६. धूपयन्त्रम् ॥

स्थाल्यां लद्दिं खरादीनां क्षिप्त्वाऽऽस्ये कांस्यपात्रकम् ॥
सजलं विन्यसेद्देवि ! वह्निं प्रज्वालयेदधः ।
कान्तपात्रस्थितं तैलं सर्वव्रणविरोपणम् ॥ १४० ॥
धूपयन्त्रमिदं देवि ! नन्दिना परिकीर्तितम् ।

### ४७. अधःपातनयन्त्रम् ॥

वृत्तालाबुसमस्थूलं दीर्घनालं सरन्ध्रकम् ॥ १४१ ॥
तस्मिन्क्षिपेत्तैलपात्यद्रव्यं बीजादिकं प्रिये ! ।
तन्मुखे निक्षिपेत्केशान्विन्यसेत्तदधोमुखम् ॥ १४२ ॥
सच्छिद्रे च घटे नालं भाण्डच्छिद्रे निवेशयेत् ।
घटमध्ये पुटं दद्यान्नालाधो घटिकां न्यसेत् ॥ १४३ ॥
अधःपातनयन्त्रं हि श्रेष्ठं स्यात्तैलपातने ।

### ४८. अन्यत्– अधःपातनयन्त्रम् ॥

विशालकांस्यपात्रान्तर्न्यसेदुत्तम्भनं समम् ॥ १४४ ॥
तदूर्ध्वे मृण्मयं पात्रं सुदृढं चतुरङ्गुलम् ।
विन्यसेदपरं पात्रं सन्तप्तं पूर्वपात्रके ॥ १४५ ॥
विन्यस्य तस्मिन्श्रीखण्डकृष्णागरुमधुप्लुतम् ।
एवं द्वितीयं पात्रं तु तृतीयमपि तद्विधम् ॥ १४६ ॥

उपर्युपरि विन्यस्य तदूर्ध्वं मृत्कटाहकम् ।
न्युब्जं न्यसेत्कांस्यपात्रे कटाहं मार्जयेज्जलैः ॥ १४७ ॥

अधःपातनयन्त्रे हि गन्धतैलं निपातयेत् ।

## मूषा ॥

मूषा हि क्रौञ्चिका प्रोक्ता कुमुदी करहाटिका ॥

पाचनी वह्निमित्रा च रसवादिभिरिष्यते ।
मुष्णाति दोषान्मूषेयं सा मूषेति निगद्यते ॥ १४९ ॥

उपादानं भवेत्तस्या मृत्तिका लोहमेव च ।
मूषामुखविनिष्क्रान्ता वरमेकाऽपि काकिनी ॥ १५० ॥

दुर्जनप्रणिपातेन धिग्लक्षमपि मानिनाम् ।
मूषापिधानयोर्बन्धे रन्ध्राणं सुविलेपयेत् ॥ १५१ ॥

अन्ध्रणं रन्धनं चैव संश्लिष्टं सन्धिबन्धनम् ।

## [मूषार्थे श्रेष्ठा मृत् ।]

मृत्तिका पाण्डुरस्थूलशोणपाण्डुरमूषरा ॥ १५२ ॥

चिराध्मानसहा सा हि मूषार्थमतिशस्यते ।
तदभावे च वाल्मीकी कौलाली वा समीर्यते ॥१५३॥

या मृत्तिका दग्धतुषैश्शणेन
    शिखित्वकैर्वा हयलद्दिना च ।
लोहेन दण्डेन च कुट्टिता सा-
    साधारणा स्यात्खलु मूषिकार्थम् ॥ १५४ ॥

श्वेताश्मानस्तुषा दग्धाश्शिखित्राश्शणकर्पटम् ।
लद्दिकिट्टं यथायोग्यं संयोज्या मूषिकामृदि ॥

वज्रमूषा ॥

मृदस्त्रिभागं शणलद्द्विभागौ
ना(भा)गश्च निर्दग्धतुषोपलादेः ।
किट्टार्धभागं परिखण्ड्य वज्र-
मूषां विदध्यात्खलु सत्वपाते ॥ १५६ ॥

योगमूषा ॥

दग्धाङ्गारतुषोपेतमृत्स्ना वल्मीकसम्भवा ।
तत्तद्बिडसमायुक्ता तत्तद्बिडविलेपिता ॥ १५७ ॥

तया या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितस्सूतो जायते गुणवत्तरः ॥ १५८ ॥

वज्रद्रावणमूषा ॥

गारभूनागधौताभ्यां शणैर्दग्धतुषैरपि ।
समैस्समा च मूषामृन्महिषीदुग्धसंयुता ॥ १५९ ॥

क्रौञ्चिका वक्ष्यमाणा हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा वज्रद्रावणके हिता ॥ १६० ॥

यामयुग्मपरिध्मानान्नासौ द्रवति वह्निना ।

गारमूषा ॥

दग्धषड्गुणगाराढ्या किट्टाङ्गारशणान्विता ॥ १६१ ॥

कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता ।

वज्रमूषा ॥

वस्त्राङ्गारतुषास्तुल्यास्तच्चतुर्गुणमृत्तिका ॥ १६२ ॥

गाराश्च मृत्तिका तुल्या सर्वैरेतैर्विनिर्मिता ।
वज्रमूषेति निर्दिष्टा याममग्निं सहेत सा ॥ १६३ ॥

स्वर्ण(वर)मूषा ॥

रक्तवर्गरजोयुक्ता रक्तवर्गांबुसाधिता।
वरमूषेति निर्दिष्टा स्वर्णमूषेत्युदाहृता ॥ १६४ ॥

मृण्मया साधिता मूषा क्षितिखेचरलेपिता ।
वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे नियुज्यते ॥ १६५ ॥

रूप्यमूषा ॥

एवं हि श्वेतवर्गेण रूप्यमूषा समीरिता ।

बिडमूषा ॥

तत्तद्बिडमृदोद्भूता तत्तद्बिडविलेपिता ॥

देहलोहार्थयोगार्थं बिडमूषेत्युदाहृता ।
सहतेऽग्निं चतुर्यामं द्रवेण व्यथिता सती ॥ १६७ ॥

मूषाऽऽप्यायनम् ॥

द्रवीभावमुपेयोश्च मूषायां ध्मानयोगतः ।
क्षणमुद्धरणं यत्तन्मूषाऽऽप्यायनमुच्यते ॥ १६८ ॥

वृन्ताकमूषा ॥

वृन्ताकाकारमूषायां नालं द्वादशकाङ्गुलम् ।
धुत्तूरपुष्पवच्चोर्ध्वं सुदृढं श्लिष्टसन्धिकम् ॥ १६९ ॥

अष्टाङ्गुलं च सच्छिद्रं सा स्याद्वृन्ताकमूषिका ।
अनया खर्परादीनां मृदूनां सत्वमाहरेत् ॥ १७० ॥

गोस्तनी मूषा ॥

मूषा या गोस्तनाकारा शिखायुक्तपिधानका ।
सत्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत् ॥

मल्लमूषा ॥

निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात् ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ॥ १७२ ॥

पक्वमूषा ॥

कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोट्टल्यादिविपाचने ॥ १७३ ॥

गोलमूषा ॥

निर्वक्त्रा गोलकाकारा पुटनद्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता गत्वरद्रव्यरोधिनी ॥ १७४ ॥

मञ्जुमूषा ॥

तले या कूर्पराकारा क्रमादुपरि विस्तृता ।
स्थूलवृन्ताकवत्स्थूला मञ्जुमूषेति संस्मृता ॥ १७५ ॥
सा चायोऽभ्रकसत्त्वादेः पुटाय द्रावणाय च ।

मञ्जूषामूषा ॥

मञ्जूषाकारमूषा या निम्नतायामविस्तरा ॥ १७६ ॥
षडङ्गुलप्रमाणेन मूषा मञ्जूषासंज्ञका ।
भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि ॥ १७७ ॥

मुसलमूषा ॥

मूषा या चिपिटा मूले वर्तुलाऽष्टाङ्गुलोच्छ्रया ।
मूषा सा मुसलाख्या च चक्रिबद्धरसे तथा ॥ १७८ ॥

अन्या वज्रमूषा ॥

दग्धाङ्गारस्य षड्भागा गैरिकं कृष्णमृत्तिका ।
गारमङ्गारकिट्टं च वज्रमूषा प्रकीर्तिता ॥ १७९ ॥

गारा दग्धास्तुषा दग्धा वल्मीकमृत्तिका ।
शणत्वक् च समायुक्ता मूषा वज्रोपमा मता ॥ १८० ॥

**अन्धमूषा प्रकाशमूषा च ॥**

प्रकाशा चान्धमषा च मूषा च द्विविधा स्मृता ।
प्रकाशमूषा विज्ञेया शरावाकारसंयुता ॥ १८१ ॥

द्रव्यनिर्वहणे सा च वार्तिकैस्तु प्रशस्यते ।
अन्धमूषा च कर्तव्या गोस्तनाकारसन्निभा ॥ १८२ ॥

पिधानेन समायुक्ता किञ्चिदुन्नतमस्तका ।
पत्रलेपे तथा रङ्गे द्वन्द्वमेलापके हितम् ॥ १८३ ॥

सैव छिद्रान्विता नन्दगम्भीरा सारणोचिता ।

**भस्ममूषा ॥**

तिलभस्म द्विरंशं तु इष्टकांशसमन्वितम् ॥ १८४ ॥

भस्ममूषेति विज्ञेया तारसशोधने हिता ।

**अन्या वज्रमूषा ॥**

तुषं वस्त्रं समं दग्धं मृत्तिका चतुरंशिका ॥ १८५ ॥

कूपीपाषाणसंयुक्ता वज्रमूषा प्रकीर्तिता ।

**मूषावङ्कनालकोष्ठिकोपयुक्तमृल्लक्षणम् ॥**

कृष्णा रक्ता च पीता च शुक्लवर्णा च मृत्तिका ॥

आद्या श्रेष्ठा कनिष्ठाऽन्त्या मध्यमे मध्यमे मते ।
गजाश्वानां मलं दग्ध्वा यावत्कृष्णत्वतां गतम् ॥१८७॥

बाशा वज्रलता पत्रं वल्मीकस्य मृदा सह ।
पेषयेद्वज्रतोयेन यावच्छुक्लत्वतां गतम् ॥ १८८ ॥

मर्दयेत्तेन बध्नीयाद्वङ्कनालं च कोष्ठिकाम् ।
वल्मीकमृत्तिकालोहकिट्टश्वेताश्मनां पृथक् ॥ १८९ ॥

एकांशौ द्वौ तु दग्धस्य तुषस्य स्त्रीशिरोरुहाम् ।
समांशस्तत्समस्तं तु छागीदुग्धेन मर्दयेत् ॥ १९० ॥

यामद्वयं दृढं तेन कुर्यान्मूषां च सम्पुटम् ।
शोषयित्वा रसं क्षिप्त्वा तत्र कंसं निरोधयेत् ॥१९१॥

वज्रमूषादिकं प्रोक्तं सम्यक्सूतस्य मारणे ।
मोक्षक्षारस्य भागौ द्वाविष्टिकैकांशसंयुतौ ॥ १९२ ॥

यत्कृतौ सा तु मूषा स्यादुत्तमा तारशोधने ।
रक्तवर्गेण संमिश्रा रक्तवर्गपरिप्लुता ॥ १९३ ॥

रक्तवर्गकृतालेपा समुक्ता स्वर्णकर्मसु ।
शुक्लवर्गेण संमिश्रा शुक्लवर्गपरिप्लुता ॥ १९४ ॥

शुक्लवर्गकृतालेपा शुक्लशुद्धिषु शस्यते ।
विड्वर्गेण तु संमिश्रा विड्वर्गेण परिप्लुता ॥ १९५॥

विड्वर्गेण कृतालेपा मूषा स्याद्द्रुतिजारणे ।
क्षारवर्गेण संमिश्रा क्षारवर्गपरिप्लुता ॥ १९६ ॥

क्षारवर्गकृतालेपा मूषा निर्वहणे हिता ।

**मूषायामावर्तनविधिः ॥**

विषटङ्कणगुञ्जाभिर्मूषालेपं तु कारयेत् ॥ १९७ ॥

प्रकाशायां प्रकुर्वीत यदि वाऽङ्गारलेपनम् ।
तस्यां विन्यस्य मूषायां द्रव्यमावर्तयेद्बुधः ॥ १९८ ॥

लेपवर्णे पुटे योज्या रक्तमृत्पटुभूखगाः ।

आवर्तितद्रव्यस्वरूपम् ॥

आवर्तमाने कनके पीता तारे सितप्रभा ॥ १९९ ॥

शुल्वे ज(नी)लनिभा तीक्ष्णे शुक्लवर्णा प्रशस्यते ।
यन्त्रमेवौषधीभ्यस्स्याच्छ्रेष्ठं सूतस्य यन्त्रणे ॥ २०० ॥

ओषधीसहितेऽप्येषां रसो यन्त्रेण बध्यते ।

कोष्ठी ॥

सत्वानां पातनार्थाय पतितानां विशुद्धये ॥ २०१ ॥

कोष्ठिका विविधाकारास्तासां लक्षणमुच्यते ।

आकरकोष्ठी अङ्गारकोष्ठी वा ॥

राजहस्तसमुत्सेधा तदर्धायामविस्तरा ॥ २०२ ॥

चतुरश्रा च कुड्येन वेष्टिता मृण्मयेन सा ।

एकभित्तौ चरेद्द्वारं वितस्त्याभोगसंयुतम् ॥ २०३ ॥

द्वारं सार्धवितस्त्या च सम्मितं सुदृढं शुभम् ।
दोहल्यधो विधातव्यं धमनाय यथोचितम् ॥ २०४ ॥

प्रादेशप्रमिता भित्तिरुत्तराङ्गस्य चोर्ध्वतः ।
द्वारं चोपरि कर्तव्यं प्रादेशप्रमितं खलु ॥ २०५ ॥

ततश्चेष्टिकया रुध्वा द्वारसन्धिं विलिप्य च ।
शिखित्रैस्तां समापूर्य धमेद्भस्राद्वयेन च ॥ २०६ ॥

शिखित्राधमनद्रव्यमूर्ध्वद्वारेण निक्षिपेत् ।
सत्वपातनगोलांश्च पञ्च पञ्च पुनः पुनः ॥ २०७ ॥

भवेदाकर(दङ्गार)कोष्ठीयं खराणां सत्वपातने ।

### पातालकोष्ठी ॥

दृढभूमौ चरेद्गर्तं वितस्त्या सम्मितं शुभम् ॥ २०८ ॥
वर्तुलं चाऽथ तन्मध्ये गर्तमन्यं प्रकल्पयेत् ।
चतुरङ्गुलविस्तारनिम्नत्वेन समन्वितम् ॥ २०९ ॥
गर्ताद्धरणिपर्यन्तं तिर्यग्दल(द्वार)समन्वितम् ।
किञ्चित्समुन्नतं बाह्यगर्ताभिमुखनिम्नकम् ॥ २१० ॥
मृच्चक्रीं पञ्चरन्ध्राढ्यां गर्भगर्तोपरि क्षिपेत् ।
आपूर्य कोकिलैः कोष्ठीं प्रधमेदेकभस्त्रया ॥ २११ ॥
पातालकोष्ठिका ह्येषा मृदूनां सत्त्वपातने ।
ध्मानसाध्यपदार्थानां नन्दिना परिकीर्तिता ॥ २१२ ॥

### गारकोष्ठी ॥

द्वादशाङ्गुलनिम्ना या प्रादेशप्रमिता तथा ।
चतुरङ्गुलतश्चोर्ध्वं वलयेन समन्विता ॥ २१३ ॥
भूरिच्छिद्रवतीं चक्रीं वलयोपरि निक्षिपेत् ।
शिखित्रांस्तत्र निक्षिप्य प्रधमेद्वङ्कनालतः ॥ २१४ ॥

### [वङ्कनालम् ।]

मूषामृद्भिः प्रकर्तव्यमरत्निप्रमितं दृढम् ।
अधोमुखं च तद्वक्त्रे नालं पञ्चाङ्गुलं खलु ॥ २१५ ॥
वङ्कनालमिति प्रोक्तं दृढाध्मानाय कीर्तितम् ।
गारगोष्ठीयमादिष्टा सृष्टलोहविनाशिनी ॥ २१६ ॥
कोष्ठी बन्धरसादीनां विधानाय विधीयते ।
द्वादशाङ्गुलकोत्सेधा सा बुध्ना(ध्ने) चतुरङ्गुला ॥ २१७ ॥
तिर्यक्प्रधमना या सा मृदुद्रव्यविशोधनी ।

**पुटम् ॥**

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ॥ २१८ ॥

नेष्टो न्यूनाधिकः पाकस्सुपाकं हितमौषधम् ।
लोहादेरपुनर्भावो गुणाधिक्यं तथोग्रता ॥ २१९ ॥

अनप्सु मज्जनं रेखापूर्णता पुटतो भवेत् ।
पुटाद्रागो लघुत्वं च शीघ्रं व्याप्तिश्च दीपनम् ॥२२०॥

जारितादपि सूतेन्द्राल्लोहानामधिको गुणः ।
यथाऽश्मनि विशेद्वह्निर्बहिस्स्थः पुटयोगतः ॥ २२१ ॥

चूर्णत्वाद्धि गुणावाप्तिस्तथा लोहेषु निश्चितम् ।
पाच्यमानौषधं क्षिप्त्वा शरावद्वयसम्पुटे ॥ २२२ ॥

रुध्वा गरुण्डपचनं पुटं तदिति कथ्यते ।

**महापुटम् ॥**

निम्नविस्तरतः कुण्डे द्विहस्ते चतुरश्रके ॥ २२३ ॥

वनोत्पलसहस्रेण पूरिते पुटनौषधम् ।
कोष्ठ्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ॥२२४॥

वनोत्पलसहस्रार्धं कोविकोपरि निक्षिपेत ।
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ॥ २२५ ॥

**गजपुटम् ॥**

राजहस्तप्रमाणेन चतुरश्रं च निम्नकम् ।
पूर्णं चोपलशाठीभिः कण्ठावध्यथ विन्यसेत् ॥२२६॥

विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ।
पूर्वच्छगणतोऽर्द्धानि गरुण्डानि विनिक्षिपेत् ॥ २२७ ॥

एतद्गजपुटं प्रोक्तं महागुणविधायकम् ।

### वाराहपुटम्

इत्थं चारत्निके कुण्डे पुटं वाराहमुच्यते ॥ २२८ ॥

### कुक्कुटपुटम् ॥

पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ॥ २२९ ॥

### कपोतपुटम् ॥

यत्पुटं दीयते भूमावष्टसंख्यैर्वनोत्पलैः ।
तद्बालसूतभस्मार्थं कपोतपुटमुच्यते ॥ २३० ॥

### गोर्वरपुटम् ॥

गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
गोर्वरं तत्समादिष्टं वरिष्ठं रससाधने ॥ २३१ ॥
गोर्वरैर्वा तुषैर्वाऽपि पुटं यत्र प्रदीयते ।
तद्गोर्वरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥ २३२ ॥

### भाण्डपुटम् ॥

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ २३३ ॥

### वालुकापुटम् ॥

अधस्तादुपरिष्टाच्च कोविका छाद्यते खलु ।
वालुकाभिः प्रतप्ताभिर्यन्त्रं तद्वालुकापुटम् ॥ २३४ ॥

### भूधरपुटम् ॥

वह्निमत्यां क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादधः ।
उपरिष्टात्पुटं यन्त्रं पुटं तद्भूधराह्वयम् ॥ २३५ ॥

लावकपुटम् ॥

ऊर्ध्वं षोडशिकामात्रैस्तुषैर्वा गोवरैः पुटम् ।
यन्त्रं तल्लावकाख्यं स्यान्मृदुद्रव्यसुसाधने ॥ २३६ ॥

अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ।
पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ॥ २३७ ॥

कूपिकादिस्वरूपम् ॥

काचायोमृद्घटीनां च कूपिका चषकाणि च ।
रूपिका कूपिका सिद्धा गोलं चैव करण्डकम् ॥२३८॥

चषकं च कठोरी च वाटिका खोरिका तथा ।
कञ्चोली ग्राहिका चेति नामान्येकार्थकानि हि ॥२३९॥

रसोपरसलोहानां त्रिधा संस्कारवह्नयः ।
गरुण्डकाष्ठकोलीशसाधनास्ते पृथक्त्रिधा ॥ २४० ॥

गरुण्डसाधनास्तेषु पुटं कुक्कुटसंज्ञकम् ।
वराहपुटसंज्ञं हि गजसंज्ञं पुटं भवेत् ॥ २४१ ॥

श्रेष्ठा वनोद्भवच्छाणा मध्यमा गोष्ठसम्भवाः ।
अधमाः कृत्रिमं काष्ठं खदिरासनसम्भवम् ॥ २४२ ॥

अथवा सारवृक्षोत्थं वितस्तिद्वयदीर्घकम् ।
स्थूलप्रकोष्ठमात्रं तु श्रेष्ठं सूतेन्द्रपाचने ॥ २४३ ॥

मृदुमध्यमचण्डाग्निसंज्ञं स्याद्दारुसाधनम् ।
अङ्गाराः खदिरोद्भूतास्त्रिफला वृक्षसम्भवाः ॥ २४४ ॥

कर्षास्सारतरूद्भूताश्श्रेष्ठा धमनकर्मणि ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे अमृतीकरणविश्रान्तौ षड्विंशोल्लासः ॥

॥ इति अमृतीकरणविश्रान्तिः समाप्ता ॥

---

## ॥ क्रियाकरणं नाम द्वितीया विश्रान्तिः ।



## ॥ प्रथम उल्लासः ॥



### उपरसशोधनमारणविधिः ॥

श्रीभैरवी—

देवदेव चिदानन्द सच्चिदानन्ददायक ! ।
त्वयैव प्रतिबुद्धाऽस्मि पूर्वं रसविधानकम् ॥ १ ॥

इदानीं त्वत्प्रसादेन श्रोतुमिच्छाम्यहं प्रभो ! ।
गन्धाद्युपरसानां च लोहानां हेमपूर्विणाम् ॥ २ ॥

पद्मरागादिरत्नानां लक्षणं जातिमाह्वयम् ।
संस्कारं च गुणान्ब्रूहि यथा जानाम्यहं प्रभो ! ॥ ३ ॥

### उपरसाः ॥

श्रीभैरवः—

गन्धतालशिलाताप्यघनहिङ्गुलगैरिकाः ।
चपलाश्मजभूनागहरिद्राश्माग्निजारकाः ॥ ४ ॥

खर्परीतुत्थकङ्कुष्ठगिरिसिन्दूरटङ्कणाः ।
कम्पिल्लविषकासीसगौरीपाषाणभूखगाः ॥ ५ ॥

पोद्दारशृङ्गी सिन्दूरस्तुवरिश्च रसाञ्जनम् ।
नीलाञ्जनं च सौवीरं स्रोतोञ्जनमफेनकम् ॥ ६ ॥

पुष्पाञ्जनं शङ्खशुक्तिशम्बूकाश्च वराटकाः ।
साबुणी च नवक्षारचीनक्षाराखुमारकाः ॥ ७ ॥

सर्जगुग्गुलुलाक्षाश्च क्षाराश्च लवणानि च ।
गोरोचनोऽम्लवेतश्च काचच्छगणवालुकाः ॥ ८ ॥

एते उपरसाः ख्याता रसराजस्य कर्मणि ।

### द्वादश लोहाः ॥

स्वर्णरूप्यार्ककान्ताभ्रसत्वं तीक्ष्णं च मुण्डकम् ॥ ९ ॥

भुजङ्गं त्रपुसं चैव रीतिः कांस्यं च वर्तकम् ।
द्वादशैतानि लोहानि मण्डूरो लोहकिट्टकम् ॥ १० ॥

### नवरत्नानि ॥

माणिक्यमुक्ताफलविद्रुमाणि
ताक्ष्यं च पुष्यं भिदुरं च नीलम् ।
गोमेधकं चाऽथ विडूरकं च
क्रमेण रत्नानि नवग्रहाणाम् ॥ ११ ॥

### नव उपरत्नानि ॥

सूर्यकान्तश्चन्द्रकान्तस्तारकान्तस्तु कान्तकः ।
वैक्रान्तश्च नृपावर्तस्सस्यको विमला तथा ॥ १२ ॥
पेरोजश्च नवैतानि ह्युपरत्नानि निर्दिशेत् ।

### गन्धकः— गन्धकशुद्धिः ॥

[प्रथमः प्रकारः ।]

उत्पत्तिलक्षणं जातिं गन्धकं शोधयेदतः ॥ १३ ॥

साज्यं भाण्डे पयः क्षिप्त्वा मुखं वस्त्रेण बन्धयेत् ।
तत्पृष्ठे चूर्णितं गन्धं क्षिप्त्वा श्रावेण रोधयेत् ॥ १४ ॥

भाण्डं निक्षिप्य भूम्यन्तरूर्ध्वं देयं पुटं लघु ।
ततः क्षीरे द्रुतं गन्धं शुद्धं योगेषु योजयेत् ॥ १५ ॥

[द्वितीयः प्रकारः ।]

कङ्गुणीसर्षपैरण्डतैलं वाऽथ कुसुम्भजम् ।
मेषीक्षीरं घृतं वाऽथ गोक्षीरं चारनालकम् ॥ १६ ॥

एतेष्वेकं तु भाण्डान्तः किञ्चिदूनं प्रपूरयेत् ।
रुध्वा वस्त्रेण तद्वक्त्रं गन्धचूर्णं ततोपरि ॥ १७ ॥

लोहपात्रेण रुध्वाऽथ पृष्ठे स्थाप्य च खर्परम् ।
साग्निमुत्पलकैः पूर्णमेवं द्राव्य समुद्धरेत् ॥ १८ ॥

तद्धुत्तूरद्रवैः पिष्ट्वा शुष्कं द्राव्यं च पूर्ववत् ।
पुनरेवं प्रकर्तव्यं सुशुद्धो गन्धको भवेत् ॥ १९ ॥

[तृतीयः प्रकारः]

यामैकं गन्धकं मर्द्यं बृहत्या चाज(श्व)गन्धया ।
भृङ्गीधुत्तूरयोर्वाऽथ तिलपर्ण्याश्च तद्द्रवैः ॥ २० ॥

तमादाय घृतैस्तुल्यैर्लोहपात्रे क्षणं पचेत् ।
बध्वाऽग्निना द्रुतं तं वै ह्यजाक्षीरे विनिक्षिपेत् ॥ २१ ॥

इत्येवं सप्तधा कुर्याच्छुद्धिमायाति गन्धकः ।

[चतुर्थः प्रकारः ।]

करञ्जैरण्डतैलं च छागींदुग्धं च भाण्डके ॥ २२ ॥

क्षिप्त्वा तस्य मुखं बध्वा स्वच्छवस्त्रेण बुद्धिमान् ।
गन्धकं धूर्तजैर्द्रावैर्दिनं भाव्यं विशोषयेत् ॥ २३ ॥

तच्चूर्णं पूर्वभाण्डस्य वस्त्रोपरि निधापयेत् ।
आच्छाद्य श्रावकेनैव पृष्ठे देयं पुटं लघु ॥ २४ ॥

द्रुतं गन्धं समादाय भाव्यं धुत्तूरजैर्द्रवैः ।
तद्वद्द्राव्यं पुनर्भाव्यं द्रावयेच्च पुनस्ततः ॥ २५ ॥

आदाय मत्स्यपित्तेन सप्तधा भाव्यमातपे ।
ततः कोशातकीबीजचूर्णेन सह पेषयेत् ॥ २६ ॥

भावयेद्भृङ्गजैर्द्रावैस्सप्ताहमातपे खरे ।
तोयेन क्षालितं शोष्यं ततो मृद्वग्निना क्षणम् ॥ २७ ॥

घृताक्ते लोहपात्रे तु द्रावितं ढालयेत्ततः ।
भृङ्गराजद्रवान्तस्थस्सम्यक् शुद्धस्स जायते ॥ २८ ॥

[पञ्चमः प्रकारः ।]

गन्धकं याममात्रं वा मर्द्यं ब्राह्म्यजगन्धयोः ।
भृङ्गधुत्तूरयोर्वाऽपि तिलपर्णीरसेन वा ॥ २९ ॥

तदादाय घृतोपेतं लोहपात्रे क्षणं पचेत् ।
लघ्वग्निना द्रुतं तच्च मेषीक्षीरे विनिक्षिपेत् ॥ ३० ॥

एवं कृतं सप्तवारं शुद्धं भवति गन्धकम् ।

**गन्धकतैलम् ॥**

[प्रथमः प्रकारः ।]

देवदाल्यम्लपर्णी वा नारङ्गं वाऽथ दाडिमम् ॥ ३१ ॥

मातुलुङ्गं यथालाभं द्रवमेकस्य चाऽऽहरेत् ।
गन्धकस्य तु पादांशं टङ्कणं द्रवसंयुतम् ॥ ३२ ॥

आतपे त्रिदिनं शुष्कं द्रवं देयं पुनः पुनः ।
धुत्तूरतुलसीकृष्णलशुनं देवदालिका ॥ ३३ ॥

शिग्रुमूलं काकमाची कर्पूरं शंखिनीद्वयम् ।
कृष्णागरु च कस्तूरी वन्ध्या कर्कोटकी समम् ॥ ३४ ॥

मातुलुङ्गरसैः पिष्ट्वा क्षिपेदेरण्डतैलके ।
अनेन लोहपात्रस्थं भावयेत्पूर्वगन्धकम् ॥ ३५ ॥

त्रिवारं क्षौद्रतुल्यं तज्जायते गन्धवर्जितम् ।
इदं गन्धकतैलं स्यात्सर्वयोगेषु योजयेत् ॥ ३६ ॥

[द्वितीयः प्रकारः ।]

अथवाऽर्कस्नुहीक्षीरैर्वस्त्रं लेप्यं तु सप्तधा ।
गन्धकं नवनीतेन पिष्ट्वा वस्त्रं लिपेत्तु ताम् ॥ ३७ ॥

तद्वर्तिं ज्वलितां दंशे धृतां कुर्यादधोमुखीम् ।
तैलं पतेदधो भाण्डे ग्राह्यं योगेषु योजयेत् ॥ ३८ ॥

**गन्धकसत्वपातनम् ॥**

[प्रथमः प्रकारः ।]

गन्धकस्तु कुबेराक्षीतैलेन चिरमर्दितः ।
दृढं प्रकटमूषायां ध्मातस्सत्वं विमुञ्चति ॥ ३९ ॥

[द्वितीयः प्रकारः]

यद्वा भाण्डोदरे क्षिप्त्वा गन्धकं पूर्वशोधितम् ।
पिधाय ताम्रपात्रेण तस्मिन्शीतोदकं क्षिपेत् ॥ ४० ॥

मन्दं प्रज्वाल्य तदधो वह्निमुष्णं जलं हरेत् ।
एवं पुनः पुनश्शीतजलमूर्ध्वं विनिक्षिपेत् ॥ ४१ ॥

गन्धकस्याग्नितस्सत्वं स्वर्णाभं सर्वकार्यकृत् ।
न चास्य सत्वमादद्यात्सत्वरूपो हि गन्धकः ॥ ४२ ॥

इति गन्धकतत्वज्ञाः केचिदन्ये प्रचक्षते ।

**गन्धकद्रुतिः ॥**

यद्वा सञ्चूर्णितं गन्धं कटुतैलसमन्वितम् ॥ ४३ ॥

वस्त्रे निक्षिप्य तद्वस्त्रं कारयेद्वर्तिकां दृढाम् ।
ततस्सूत्रेण संवेष्ट्य गोघृतेन परिप्लुताम् ॥ ४४ ॥

सन्दंशेनोद्धृतं कृत्वा वर्तिं चाऽधः प्रदीपयेत् ।
पक्काम्रफलसम्भूतरसवर्णा भवेद्द्रुतिः ॥ ४५ ॥

**गन्धकस्य गुणाः ॥**

गन्धकः कटुकः पाके वीर्योष्णो विमलस्सरः ।
विसर्पकुष्ठकण्डूतिक्रिमिगुल्मक्षयापहः ॥ ४६ ॥

अक्षिरोगप्रशमनो वृष्यो विषगदार्तिजित् ।
सर्वसिद्धिप्रदो बल्यस्त्रिदोषघ्नो रसायनः ॥ ४७ ॥

**हरितालम् ॥**

हरितालञ्च गोदन्ती तालकं नटमण्डनम् ।
गिरिजाललितं पीतमतिगन्धं बिडालकम् ॥ ४८ ॥

[हरितालभेदाः ।]

हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ।
स्वर्णवर्णं गुरु स्निग्धं तनुपत्रं च भासुरम् ॥ ४९ ॥

तत्पत्रतालकं प्रोक्तं बहुपत्रं रसायनम् ।
निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु ॥ ५० ॥

स्त्रीपुष्पहरणं तत्तु गुणाल्पं पिण्डतालकम् ।

[अशुद्धहरितालसेवने दोषाः ।]

वातश्लेष्मप्रमेहादिकरमायुर्निवर्हणम् ॥ ५१ ॥
तापस्फोटाङ्गसङ्कोचं हरितालमशोधितम् ।

**हरितालशुद्धिः ॥**

[प्रथमः प्रकारः ।]

तालकं कणशः कृत्वा दशांशेन तु टङ्कणम् ॥ ५२ ॥
जम्बीरोत्थद्रवैः क्षाल्यं काञ्जिकैः क्षालयेत्पुनः ।

वस्त्रे चतुर्गुणे बध्वा डोलायन्त्रे दिनं पचेत् ॥ ५३ ॥
सचूर्णनारनालेन दिनं कूश्माण्डजै रसैः ।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ॥५४॥

[द्वितीयः प्रकारः ।]

मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे ।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥ ५५ ॥
उत्पलैर्दशभिर्देयं पुटं कुर्यात्पुनः पुनः ।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ॥ ५६ ॥

[तृतीयः प्रकारः ।]

तालकं पोट्टलं बध्वा सचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैकं ततः कूश्माण्डजे रसे ॥ ५७ ॥
तिलतैले पचेद्यामं यामं च त्रिफलाजले ।
एवं यन्त्रे चतुर्यामं पाच्यं शुध्यति तालकम् ॥ ५८ ॥

**तालकसत्वपातनम् ॥**

[प्रथमः प्रकारः ।]

लाक्षा राजी तिलाशिग्रु टङ्कणं लवणं गुडम् ।
तालकार्द्धेण(?) सम्मर्द्य छिद्रमूषां निरोधयेत् ॥५९॥
पुटेत्पातालयन्त्रेण सत्वं पतति निश्चयम् ।

[द्वितीयः प्रकारः ।]

तालकं मर्दयेद्दुग्धैस्सर्पाक्ष्या वा कषायकैः ॥ ६० ॥
पूर्ववज्जनयेत्सत्वं छिद्रमूषानिरोधितम् ।

[तृतीयः प्रकारः ।]

लाक्षा राजी गुडं शिग्रु टङ्कणं लवणं तिलाः ॥ ६१ ॥

एभिस्तुल्यं सत्वतालं मर्दयेद्द्रविदुग्धकैः।
दिनं वा वज्रिणीदुग्धैः कूश्माण्डस्य द्रवैश्च वा ॥ ६२ ॥
तेन कल्केन लिप्त्वान्तश्छिद्रमूषां निरोधयेत।
पुटाद्वा धमनात्सत्वं ग्राह्यं पातालयन्त्रके ॥ ६३ ॥

[चतुर्थः प्रकारः।]

तालकादष्टमांशेन देयं सूतं च टङ्कणम्।
कूश्माण्डस्य रसैस्स्नुह्याः क्षीरैर्मर्घाद्दिनत्रयम् ॥ ६४ ॥
तद्गोलं छिद्रमूषायां ग्राह्यं सत्वं च पूर्ववत्।

[पञ्चमः प्रकारः।]

भागाष्षोडश तालस्य विषपारदटङ्कणाः ॥ ६५ ॥
श्वेताभ्रवज्रयोश्चूर्णं प्रतिभागं विमिश्रयेत्।
समं स्नुह्यर्कपयसा मर्दयेद्दिवसद्वयम् ॥ ६६ ॥
तद्गोलं काचकुप्यन्तः क्षिप्त्वा तां काचकूपिकाम्।
सर्वतोऽङ्गुलमानेन लिम्पेद्वस्त्रे मृदा दृढम् ॥ ६७ ॥
शुष्कां तां वालुकायन्त्रे शनैर्मन्दाग्निना पचेत्।
शुष्के द्रवे निरुध्याऽथ सम्यङ्मृल्लवणैर्मुखम् ॥ ६८ ॥
चण्डाग्निना पचेद्यावत्तावद्द्वादशयामकम्।
स्वाङ्गशीतं समुद्धृत्य भित्वा कूपीं समाहरेत् ॥ ६९ ॥
ऊर्ध्वलग्नं तालसत्वं स्फटिकोपलसन्निभम्।

[षष्ठः प्रकारः।]

भावितं स्नुक्पयस्सिक्तं स्नुहीद्रावैर्द्विसप्तधा ॥ ७० ॥
तिलसर्षपशिग्रूणि लवणं मित्रपञ्चकम्।
एभिस्तुल्यं शुद्धतालं दिनमेकं विमर्दयेत् ॥ ७१ ॥

मूधरे च्छिद्रमूषान्तर्ध्मातं सत्वं विमुञ्चति ।

तालकस्य गुणाः ॥

तालकं शोधितं श्रेष्ठं कुष्ठमृत्युजरापहम् ॥ ७२ ॥

सौभाग्यसौगन्ध्यकरं परमायुर्विवर्धनम् ।

मनःशिला ॥

मनःशिला स्यात्कुनटी नागास्या रक्तगन्धकः ॥ ७३ ॥

नेपालिका नागजिह्वा कल्याणी सप्तनामका ।

[मनःशिलाभेदाः ।]

मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका ॥ ७४ ॥

खण्डाख्या चैव तद्रूपं विविच्य परिकल्प्यते ।
श्यामा रक्ता खराङ्गा च भाराढ्या श्यामिका मता ॥

तेजस्विनी च निर्भारा ताम्राभा कणवीरका ।
चूर्णीभूताऽतिरक्ताङ्गी सभारा खण्डपूर्विका ॥ ७६ ॥

उत्तरोक्ता गुणैश्श्रेष्ठा भूरिसत्वा प्रकीर्तिता ।

[अशुद्धमनःशिलासेवायां दोषाः ।]

अश्मरीं मूत्रकृच्छ्रं च मन्दाग्निं मलबद्धताम् ॥ ७७ ॥

करोति कुष्ठं तापं च शुद्धिहीना मनःशिला ।

मनःशिलाशुद्धिः ॥

अजामूत्रैस्त्र्यहं पच्याद्दोलायन्त्रे मनःशिलाम् ॥ ७८ ॥

सप्तधा दध्यजापित्तैर्घर्मे ताप्यं विशुद्धये ।
जीवन्तीभृङ्गराड्रक्तागस्त्यद्रावैर्मनःशिलाम् ॥ ७९ ॥

दोलायन्त्रे पचेद्यामं यामं छागोत्थमूत्रकैः ।
क्षालयेदारनालेन सर्वयोगेषु योजयेत् ॥ ८० ॥

अगस्त्यस्य रसे भाव्या सप्ताहाच्छोधिता शिला ।

### मनःशिलासत्त्वपातनम् ॥

[प्रथमः प्रकारः ।]

तालवच्च शिलासत्त्वं पातनं शोधनं तथा ॥ ८१ ॥

गोमांसैर्मातुलुङ्गाम्लैर्दिनं भाव्या मनःशिला ।
तां रक्तपीतपुष्पाणां रसैः पीतैश्च भावयेत् ॥ ८२ ॥

दिनान्ते मर्दयेद्यामं मित्रपञ्चकसंयुतम् ।
गुलिकां काचकूप्यन्तः क्षिप्त्वा तां काचकूपिकाम् ॥

सर्वतोऽङ्गुलमानेन लिम्पेद्वस्त्रमृदा दृढम् ।
शुष्कां तां वालुकायन्त्रे शनैर्मन्दाग्निना पचेत् ॥८४॥

शुष्के द्रवे निरुध्याऽथ सम्यङ्मृल्लवणैर्मुखम् ।
चण्डाग्निना पचेद्यावत्तावद्‌द्वादशयामकम् ॥ ८५ ॥

स्वाङ्गशीतं समुद्धृत्य भित्वा कूपीं समाहरेत् ।
ऊर्ध्वलग्नं शिलासत्त्वं बालार्कसदृशोपमम् ॥ ८६ ॥

[द्वितीयः प्रकारः ।]

अगस्त्यशिग्रुजैस्तोयैस्त्र्यहं भाव्या मनःशिला ।
तालकौषधयोगेन सत्त्वं हेमनिभं भवेत् ॥ ८७ ॥

### मनःशिलाया गुणाः ॥

मनश्शिला कटूष्णा च सतिक्ता कफवातजित् ।
कण्डूतिक्षयकासघ्नी विषभूताग्निमान्द्यहृत् ॥ ८८ ॥

### माक्षिकम् ॥

माक्षिकं मधुधातु स्यान्माक्षीकं हेममाक्षिकम् ।
ताप्यञ्च ताविजं तार्क्ष्यं तापीदेशसमुद्भवम् ॥ ८९ ॥

[माक्षिकभेदाः ।]

माक्षीकं द्विविधं हेममाक्षिकं तारमाक्षिकम् ।
तत्राऽऽद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णसन्निभम् ॥

तपतीतीरसंभूतं पञ्चवर्णं सुवर्णवत् ।
पाषाणबहलः प्रोक्तस्ताप्याख्योऽसौ गुणात्मकः ॥ ९१ ॥

सुवर्णाकारभेदाच्च प्रत्येकं तत्पुनस्त्रिधा ।
कादम्बं कारवेल्लाख्यं तण्डुलीयकसंज्ञकम् ॥ ९२ ॥

[अशुद्धमाक्षिकसेवने दोषाः ।]

प्राणविष्टंभदौर्बल्यवह्निसादाक्षिरोगकृत् ।
माक्षिकं मारयत्येव शुद्धिहीनं सुरार्चिते ! ॥ ९३ ॥

### माक्षिकशुद्धिः ॥

[प्रथमः प्रकारः ।]

माक्षिकं नरमूत्रेण क्वाथैः कौलुत्थकोद्भवैः ।
वेतसेनाम्लवर्गेण टङ्कणेन कटुत्रिकैः ॥ ९४ ॥

डोलायन्त्रे दिनं पाच्यं सूरणस्यैव मध्यगम् ।
दिनं रम्भाद्रवैः पच्यादुद्धृतं पेषयेद्धृतैः ॥ ९५ ॥

एरण्डतैलसंयुक्तैः पुटे पच्यन्विशोधयेत् ।

[द्वितीयः प्रकारः]

माक्षिकस्य त्रयो भागा भागैकं टङ्कणस्य च ॥ ९६ ॥

मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत् ।

लोहपात्रे पचेत्तावद्यावत्पात्रं सुलोहितम् ॥ ९७ ॥
ताम्रवर्णमयो वाऽपि तावच्छुध्यति माक्षिकम् ।

[तृतीयः प्रकारः ।]

अगस्तिपुष्पनिर्यासैश्शिग्रुमूलं निघर्षयेत् ॥ ९८ ॥
द्रवैः पाषाणभेद्याश्च पेष्यमेभिश्च माक्षिकम् ।
तद्वटीं चाऽथ मूषायां दशभिरुत्पलैः पुटेत् ॥ ९९ ॥
पुनः पुनश्च पिष्ट्वाऽथ पुटैष्षड्भिर्विशुध्यति ।

[चतुर्थः प्रकारः ।]

क्षौद्रक्षीरारनालाश्च अष्टभागाः पृथक् पृथक् ॥ १०० ॥
गव्यं तक्रं चतुर्भागं भागः कौलुत्थजो रसः ।
सर्वं संपूरयेद्भाण्डे भागैकं माक्षिकं पचेत् ॥ १०१ ॥
डोलायन्त्रेण मृद्वग्नौ याममात्रं पुनः पचेत् ।
उद्धृत्य मातुलुङ्गाम्लैः पिष्ट्वा दशभिरुत्पलैः ॥ १०२ ॥
पुटे पुनः पुनः कुर्यादेवं द्वादशवासरम् ।
शुद्धं भवति माक्षीकं सर्वयोगेषु योजयेत् ॥ १०३ ॥

[पञ्चमः प्रकारः ।]

माक्षिकं कणशः कृत्वा ज्वालिनीमेघनादयोः ।
पिण्डे निक्षिप्य विपचेद्दोलायन्त्रे कुलुत्थजे ॥ १०४ ॥
क्वाथे तच्छुद्धतां याति प्रशस्तं लोहमारणे ।

[षष्ठः प्रकारः ।]

तैले तक्रे गवां मूत्रे कौलुत्थे वाऽम्लकाञ्जिके ॥१०५॥
माक्षिकं शोधयेत्प्राज्ञो गिरिदोषनिवृत्तये ।

[सप्तमः प्रकारः ।]

कुलुत्थकोद्रवक्काथनरमूत्राम्लवेतसैः ॥ १०६ ॥

टङ्कणेनाम्लवर्गेण कटुकत्रितयेन वा ।
डोलायन्त्रे दिनं पाच्यं सूरणकन्दमध्यगम् ॥ १०७ ॥

दिनं रम्भाद्रवैः पाच्यं ध्मातमुद्धृत्य पेषितम् ।
एरण्डतैलसर्पिर्भ्यां पुटैश्शुध्यति माक्षिकम् ॥ १०८ ॥

[अष्टमः प्रकारः ।]

सुवर्णवर्णविमलं ताप्यं वा कणशः कृतम् ।
पुनर्नवायाः कल्कस्थं कौलुत्थे स्वेदयेद्रसे ॥ १०९ ॥

सैन्धवैर्बीजपूराक्तैर्युक्तं वा पोट्टलीकृतम् ।
डोलायन्त्रे दिनं स्वेद्यं शुद्धिमायाति निश्चितम् ॥

माक्षिकसत्वपातनविधिः ॥

[प्रथमः प्रकारः ।]

गोदुग्धैश्च स्नुहीक्षीरैर्माव्यमेरण्डतैलकैः ।
माक्षिकं दिनमेकं तु मर्दितं वटकीकृतम् ॥ ११ ॥

अभ्रवद्धमने सत्वं सस्यकस्याऽप्ययं विधिः ।

[द्वितीयः प्रकारः ।]

दोलायन्त्रे सारनाले माक्षिकं स्वेदयेद्दिनम् ॥ ११२ ॥

चूर्णितं मधुसर्पिर्भ्यां लोहपात्रे पचेद्दिनम् ।
आदाय भावयेद्धर्मे वज्रीक्षीरैर्दिनावधि ॥ ११३ ॥

गृहधूमैर्घृतैः क्षौद्रैस्सयुक्तैर्मर्दयेद्दिनम् ।
अन्धमूषागतं ध्मातं सत्वं गुञ्जानिभं भवेत् ॥ ११४ ॥

[तृतीयः प्रकारः ।]

कदलीकन्दतोयेन माक्षिकं शतधाऽऽतपे ।
भावितं पाचयेद्यामं साज्यैर्वातारितैलकैः ॥ ११५ ॥
पूर्ववद्धमनात्सत्वमिन्द्रगोपसमं भवेत् ।

[चतुर्थः प्रकारः ।]

स्नुह्यर्कपयसा स्तन्यैर्माक्षिकं मर्दयेद्दिनम् ॥ ११६ ॥
कङ्कुष्ठं टङ्कणं चैव प्रतिपादांशमिश्रितम् ।
मूकमूषागतं ध्मातं सत्वं मणिनिभं भवेत् ॥ ११७ ॥

[पञ्चमः प्रकारः ।]

कदलीकन्दतुलसीजंबीराणां द्रवैः क्रमात् ।
भावयेन्माक्षिकं श्लक्ष्णं प्रतिद्रावेण सप्तधा ॥ ११८ ॥
रुध्वा ध्माते पतेत्सत्वं शुकतुण्डनिभं शुभम् ।

[षष्ठः प्रकारः ।]

मूत्रवर्गाम्लवर्गाभ्यां द्विसमाहं विभावयेत् ॥ ११९ ॥
माक्षीकं तीव्रघर्मेण दिनमम्लैश्च मर्दयेत् ।
मित्रपञ्चकसंयुक्तं वटीकृत्य धमेद्दृढम् ॥ १२० ॥
व्योमवद्बङ्कनालेन सत्वं शुल्वनिभं भवेत् ।

[सप्तमः प्रकारः ।]

स्नुहीक्षीरैर्गवां क्षीरैर्भाव्यमेरण्डतैलकैः ॥ १२१ ॥
माक्षिकं पञ्चमित्राक्तं सप्ताहान्ते वटीकृतम् ।
पूर्ववद्विधमेत्तेन सत्वं लाक्षानिभं भवेत् ॥ १२२ ॥

[अष्टमः प्रकारः ।]

स्तन्यैः कङ्कुष्ठकैश्चैव कदलीतोयसंयुतैः ।
मित्रपञ्चकसंयुक्तैर्माक्षिकं दिनसप्तकम् ॥ १२३ ॥

भावितं मर्दयेद्यामं दिनं वातारितैलकैः ।
मृद्वग्निना पचेत्तावद्यावद्द्रवति गोलकम् ॥ १२४ ॥

सत्त्वं किंशुकपुष्पाभं व्योमवद्धमनाद्भवेत् ।
विमलानां च सर्वेषां सस्यकस्याऽप्ययं विधिः ॥१२५॥

[नवमः प्रकारः]

संचूर्ण्य माक्षिकं शुद्धं मर्द्यमम्लेन केनचित् ।
क्षालयेदारनालेन ह्यधस्स्थं स्वर्णचूर्णवत् ॥ १२६ ॥

जारयेत्तत्समाहृत्य धमेत्सत्त्वं विमुञ्चति ।
योजयेद्द्रावणे चेदं बीजानां यत्र यत्र वै ॥ १२७ ॥

[दशमः प्रकारः ।]

कदलीपत्रजैर्नीरै र्माक्षिकं भावयेद्द्रुतम् ।
गन्धर्वतैलमध्वाज्यैः पक्वमेकदिनं ततः ॥ १२८ ॥

तत्ताप्यं वज्रमूषायां पक्वायां निक्षिपेत्ततः ।
लोहसन्धानकरणं तत्समं तत्र निक्षिपेत् ॥ १२९ ॥

दृढं प्रमूकमूषायां कोष्ठिकायां निवेशयेत् ।
अङ्गारैः खदिरोद्भूतैर्धमेद्भस्त्राद्वयेन वै ॥ १३० ॥

वङ्कनालयुजा सत्त्वं ताप्यस्य पतति ध्रुवम् ।

[एकादशः प्रकारः ।]

माणिबन्ध्यं(मन्थं) वैष्णवं च गृह्णीयात्समभागतः ॥
फलपूररसैः पिष्ट्वा सम्पुटे सुदृढं क्षिपेत् ।

सम्यग्लिप्त्वा वनोद्भूतैश्छाणकैः पुटयेत्ततः ॥ १३२ ॥

कुकुप्तोत्थं(?) तदाकृष्यं स्वांगशीतं प्रमर्दयेत् ।
फलपूररसैः पक्वैर्मर्दयित्वाऽथ पूर्ववत् ॥ १३३ ॥

पुटनं छगणेनैव तावत्कुर्याद्विचक्षणः ।
यावत्तत्पुटितं कल्कं फलपूराम्लमर्दितम् ॥ १३४ ॥

शाणोत्तेजितनिस्त्रिंशलिप्तं तत्ताम्रतामियात् ।
इत्थं शुद्धं च गरुडं टङ्कणं नीरजं रसम् ॥ १३५ ॥

घृतेन मधुना युक्तं सगुडं गुञ्जया समम् ।
प्राग्वन्मूषागतं कृत्वा धमेत्तत्खदिराग्निना ॥ १३६ ॥

मृदुसत्वं नागसममिन्द्रगोपकसन्निभम् ।
पतत्येव न सन्देहस्सर्वज्ञवचनं तथा ॥ १३७ ॥

शुक्लदीप्तिरशब्दश्च यदा वैश्वानरो भवेत् ।
तदा तु सत्वं पतितं जानीयान्नान्यथा क्वचित् ॥१३८॥

## माक्षिकस्य गुणाः ॥

कषायतिक्तमधुरं कटुकं माक्षिकद्वयम् ।
उष्णं रसायनं कुष्ठशोषहिध्मावमिप्रणुत् ॥ १३९ ॥

माक्षीकधातुस्सकलामयघ्नः
प्राणो रसेन्द्रस्य परं हि वृष्यः ।
दुर्मेललोहद्वयमेलकश्च
गुणोत्तरः पूर्वरसायनाश्रयः ॥ १४० ॥

## अभ्रकम् ॥

उत्पत्त्यादि घनस्याऽऽदौ कथितं तद्रसायने ।
अधुना सम्प्रवक्ष्यामि तत्क्रियास्तद्गुणानपि ॥ १४१ ॥

### अभ्रकभस्मविधिः ॥

[प्रथमः प्रकारः ।]

धान्याभ्रकं मेघनाददद्रवैस्सम्मर्दयेद् दिनम् ।
शतांशं टङ्कणं दत्वा ततो गजपुटे पचेत् ॥ १४२ ॥

मुस्तासूरणवर्षाभूरसैर्व्यस्तैः पुटं त्रिधा ।
कासमर्दरसैः पञ्च वरागोमूत्रकैरपि ॥ १४३ ॥

न्यग्रोधस्य जटाकाथैर्मर्द्यं दशपुटं पुनः ।
षट् च जम्बीरनीरेण गोक्षीरेण पुटत्रयम् ॥ १४४ ॥

पेषणं घर्मपाकं च स्थालीपाकं पुटं क्रमात् ।
कुर्याच्चत्वारि कर्माणि टङ्कणं च पुटे पुटे ॥ १४५ ॥

निश्चन्द्रं जायते ह्यभ्रं सर्वयोगेषु योजयेत् ।
अयं सामान्यसंस्कारो विशेषस्तु निगद्यते ॥ १४६ ॥

[भस्मीकरणे विशिष्टसंस्काराः ।]

निश्चन्द्रकं मृतव्योम सामान्यक्रमसंस्कृतम् ।
तत्तद्रोगहरद्रव्यकाथैः पिष्ट्वा पुटे पचेत् ॥ १४७ ॥

यन्त्रैस्त्रिस्सप्तधा कुर्यात्तत्तद्रोगहरं भवेत् ।
अयं विशेषसंस्कारस्तत्तद्रोगहरो भवेत् ॥ १४८ ॥

पूर्वाह्णे पेषणं कार्यं मध्याह्ने घर्मपाचनम् ।
सायाह्ने स्थालिकापाकं कुर्याद्रात्रौ पुटं क्रमात् ॥१४९॥

संस्कारः पञ्चधा प्रोक्तो घनस्य परमेश्वरि ! ।
धान्याभ्रकरणं सत्वपातनं निर्मलक्रिया ॥ १५० ॥

सुमृतीकरणं चैव त्वमृतीकरणं तथा ।
मारणे घनसत्वस्य घनपत्रस्य मारणे ॥ १५१ ॥

क्रमाच्छ्रेष्ठतमौ प्रोक्तौ शस्तौ दरदटङ्कणौ ।

[द्वितीयः प्रकारः]

मुस्ताक्वाथेन धान्याभ्रं पञ्चविंशत्पुटे पचेत् ॥१५२॥
गोमूत्रैश्च तथा क्वाथैस्त्रिफलाया सुरेश्वरि! ।
कासमर्दद्रवैरेकं गोक्षीरेण पुटं त्रिधा ॥ १५३ ॥
निश्चन्द्रं जायते ह्यभ्रं सर्वयोगेषु योजयेत् ।
विशेषसंस्कारयुतं तत्तद्रोगहरं भवेत् ॥ १५४ ॥

[तृतीयः प्रकारः ।]

धान्याभ्रकस्य भागैकं भागौ द्वौ टङ्कणस्य च ।
पिष्ट्वा तदन्धमूषायां रुध्वा तीव्राग्निना धमेत् ॥१५५॥
स्वभावशीतलं चूर्णं सर्वयोगेषु योजयेत् ।
विशेषसंस्कारयुतं तत्तद्रोगहरं भवेत् ॥ १५६ ॥

[चतुर्थः प्रकारः ।]

धान्याभ्रं मर्दयेदम्लैर्घर्मे संस्थापयेत्ततः ।
पुटं कुर्यात्ततोऽम्लेन सेचनं मर्दनं पुनः ॥ १५७ ॥
विंशद्वारं ततो दुग्धे पुटनिस्तब्धमभ्रकम् ।
क्षिपेत्तं मर्दयेद्दुग्धैर्दुग्धे क्षिप्त्वाऽऽतपे न्यसेत् ॥१५८॥
पुटं त्रिस्सप्तवाराणि कुर्यादेवं पुनः पुनः ।
तण्डुलं वज्रवल्ली च तालमूली पुनर्नवा ॥ १५९ ॥
शार्ङ्गेरी मरिचं चैव बला च पयसा सह ।
पूर्वाभ्रं पेषयेदेतैः प्रत्येकैश्च त्र्यहं त्र्यहम् ॥ १६० ॥
क्षिप्त्वाऽऽतपे पुटे पच्यात्प्रत्येकेन पुनः पुनः ।
एवं निश्चन्द्रकं व्योम कज्जलाभं मृतं भवेत् ॥ १६१ ॥

[पञ्चमः प्रकारः।]

धान्याभ्रकस्य शुष्क(द्ध)स्य दशांशं मरिचं क्षिपेत्।
पेषयेदम्लवर्गेण अम्लैर्भाव्यं दिनत्रयम् ॥ १६२ ॥

तच्छुष्कं सम्पुटे धाम्यं खदिराङ्गारकैर्दृढम्।
ऊर्ध्वपात्रे निवार्याऽथ सिञ्चेदम्लेन केन तम् ॥१६३॥

धान्यं तत्रैव षड्वारमम्लैस्सिञ्च्यात्पुनः पुनः।
अगस्त्यशिग्रुवर्षाभूमूलपत्रभवै रसैः ॥ १६४ ॥

पिष्ट्वाऽभ्रं सेचयेत्तेन षड्धा धाम्यं च सेचयेत्।
सितामध्वाज्यगोक्षीरैस्तद्धौतं पेष्यमभ्रकम् ॥ १६५ ॥

रुध्वा षड्भिः पुटैः पाच्यं पिष्ट्वा चैव पुनः पुनः।
मत्स्याक्ष्याश्चैकवीराया द्रवैः पिष्ट्वा त्रिधा पचेत् ॥

एवं गजपुटैः पाच्यं निश्चन्द्रमयतेऽभ्रकम्।
पलाभ्रकस्य सिन्दूरं सर्वयोगेषु योजयेत् ॥ १६७ ॥

[षष्ठः प्रकारः।]

धान्याभ्रं मर्दयेद्यामं मत्स्याक्षीस्वरसैस्ततः।
पचेद्गजपुटैरेवं सप्तधा तुलसीरसैः ॥ १६८ ॥

कोकिलाक्षरसैस्सप्त कुमारीस्वरसैस्तथा।
श्वेतदूर्वारसैस्तद्वद्व्याघ्रीकन्दरसैस्तथा ॥ १६९ ॥

पुनर्नवारसैस्सप्त तद्वत्पञ्चामृतैस्ततः।
निश्चन्द्रं जायते ह्यभ्रं सर्वयोगेषु योजयेत् ॥ १७० ॥

[सप्तमः प्रकारः।]

धान्याभ्रं टङ्कणं तुल्यं गोमूत्रैस्तुलसीद्रवैः।
वाकुच्या सूरणैर्नाल्या दिनं पिष्ट्वा पुटे पचेत् ॥१७१॥

द्रवैः पुनः पुनः पिष्ट्वा दिनान्तेषु पुटे पचेत् ॥१७०॥
रुध्वा रुध्वा पुटैस्त्वेवं निश्चन्द्रं चाभ्रकं भवेत् ।

[अष्टमः प्रकारः।]

पिष्ट्वा साम्लारनालेन पेटाली(री)मूलजत्वचम् ॥१७१॥
तद्द्रवैर्मर्दयेदभ्रं दिनं गजपुटे पचेत् ।
एवं सप्तपुटं कार्यं दध्ना च पुटसप्तकम् ॥ १७२ ॥
यवचिञ्चाद्रवैस्तद्वन्निश्चन्द्रं जायतेऽभ्रकम् ।

[नवमः प्रकारः]

धान्याभ्रकं रविक्षीरै रविमूलद्रवैश्च वा ॥ १७३ ॥
मर्द्यं मर्द्यं पुटे पच्यात्सप्तधा म्रियते ध्रुवम् ।

[दशमः प्रकारः।]

धान्याभ्रकं तुषाम्लान्तरातपे स्थापयेद्दिनम् ॥ १७४ ॥
यामं मर्द्यं तु तद्गोलं रुध्वा गजपुटे पचेत् ।
एवं कार्पासतोयान्तस्स्थाप्यं पाच्यं पुटे पचेत् ॥१७५॥
एवं गोक्षीरमध्यस्थं स्थाप्यं पेष्यं पुटे पचेत ।
पश्चादम्लैश्च गोक्षीरैः कार्पासैश्च पुनः पुनः ॥१७६॥
घर्मपाकं मर्दनं च स्थालीपाकं पुटं क्रमात् ।
एकविंशत्पुटे प्राप्ते निश्चन्द्रं जायतेऽभ्रकम् ॥ १७७ ॥
सर्वेषां घातिताभ्राणाममृतीकरणे विधिः ।

**अभ्रकस्य गुणाः ॥**

अभ्रकं गगनं भृङ्गं बहुपुत्रमुमाभवम् ॥ १७८ ॥
पत्राभ्रकस्य सिन्दूरममृतं परमं हितम् ।

त्रिदोषघ्नं बलकरं वृष्यमारोग्यदं शुचि ॥ १७९ ॥
सर्वरोगहरं सौम्यं विषघ्नं च रसायनम् ।

### हिङ्गुलः ॥

हिङ्गुलो दरदं चूर्णपारदश्च रसोद्भवः ॥ १८० ॥
रसगर्भस्सुरङ्गश्च लोहघ्नस्सिद्धिपारदः ।
हिङ्गुलस्त्रिविधो ज्ञेयश्चर्मारश्शुकतुण्डकः ॥ १८१ ॥
हंसपादश्च तत्राऽऽद्यं तारकर्मणि योजयेत् ।
अधमं तं विजानीयाच्छुकतुण्डं च मध्यमम् ॥ १८२ ॥
हेमतारक्रियामार्गे योजयेत्परमेश्वरि ! ।
हंसपादो महाश्रेष्ठः सर्वकर्मकरो हि सः ॥ १८३ ॥
तस्य सत्वं सूत एव दरदस्य त्रिभेदतः ।
हेमकिट्टस्य सदृशस्तद्रूपस्तीक्ष्णमारकः ॥ १८४ ॥
चर्मारस्तीक्ष्णरूपस्स्यात्सुप्रीतश्शुकतुण्डकः ।
जपाकुसुमसङ्काशो हंसपादो महोत्तमः ॥ १८५ ॥
रसायने सर्वसूतहरणे सर्वरञ्जने ।
लोहानां मारणे श्रेष्ठो वर्णोत्कर्षणकर्मणि ॥ १८६ ॥
रसकस्य तथा रागबन्धे धौरेयकस्स्मृतः ।
मलदोषादिकं नाऽस्ति सर्वकार्येषु पूज्यते ॥ १८७ ॥

### हिङ्गुलशुद्धिः ॥

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ १८८ ॥

### हिङ्गुलसत्वपातनम् ॥

दरदं पातनायन्त्रे पातितं च जलाशये ।

सत्वं सूतकसङ्काशं विमुञ्चति न संशयः ॥ १८९ ॥

### हिङ्गुलस्य गुणाः ॥

ये गुणाः पारदे प्रोक्तास्ते गुणास्सन्ति हिङ्गुले ।

नवज्वरहरः प्रोक्तः सम्पातज्वरनाशनः ॥ १९० ॥

### गैरिकम् ॥

गैरिकं गिरिधातुस्स्याद्रक्तधातुर्गवेधुकम् ।
गैरिकं द्विविधं प्रोक्तं तत्राऽऽद्यं स्वर्णगैरिकम् ॥१९१॥

पाषाणगैरिकं चान्यत्पूर्वं श्रेष्ठतमं गुणैः ।

### गैरिकस्य गुणाः ॥

शोणितं मसृणं स्निग्धं स्वादु वृष्यं हिमं लघु ॥१९२॥

चक्षुष्यं रक्तपित्तघ्नं विषहिध्मावमिप्रणुत् ।
तापज्वरहरं श्रेष्ठं हेमघ्नं रक्तगैरिकम् ॥ १९३ ॥

पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् ।

### चपलः ॥

देहवेधी लोहवेधी चपला रसबन्धिनी ॥ १९४ ॥

चपला बहुभेदा च सर्वलोहस्वरूपतः ।
हेमस्तारो रविमयस्सीसात्मा वङ्गरूपधृक् ॥ १९५ ॥

तीक्ष्णरूपः कांस्यरूपो रक्तो विषमयस्तथा ।

### [चपलस्वरूपम् ।]

सत्वलोहस्वरूपास्ते विषो हरितलोहभाक् ॥ १९६ ॥

विषाख्यं चपलं प्राप्य निर्जीवे तस्य दापयेत् ।
पुटेनारण्यजैश्छाणैस्सधूमं सर्वथा त्यजेत् ॥ १९७ ॥

नश्येत तस्य धूमं वै स्पर्शनं दूरतस्त्यजेत् ।
अशनात्तस्य संस्पर्शान्म्रियते सद्य एव हि ॥ १९८ ॥

धूमावलोकनाच्छीर्षपीडा सञ्जायते ज्वरः ।
एवं दत्तपुटे शान्ते गृह्णीयाच्चपलं ततः ॥ १९९ ॥

चपलस्य गुणाः ॥

तस्य संस्पर्शमात्रेण हीरको म्रियते क्षणात् ।
सर्वेषां चपलानां वै स्वभावस्समुदाहृतः ॥ २०० ॥

वङ्गस्तम्भे नागराजे क्रमे वाऽतीव शस्यते
सर्वलोहानि कुर्वन्ति सुवर्णं तारमेव च ॥ २०१ ॥

युक्त्याऽथ शोधितस्सूते विना बीजं च वा तथा ।
शतं वाऽपि सहस्रं वा लक्षं कोटिं च वेधयेत् ॥२०२॥

वज्रेण रसराजेन बीजेन च समाश्रिता ।
धूमतो वेधयेल्लोहान् रसजीर्णस्स्वयं गलेत् ॥ २०३ ॥

निष्पत्य तेन देहस्य चपलेन महात्मना ।

शिलाजतु ॥

अश्मजं गिरिजं शैलमश्मलाक्षा शिलाजतु ॥ २०४ ॥

शिलाधातुर्द्विधा प्रोक्तो गोमूत्राऽऽद्यो रसायनम् ।
कर्पूरपूर्वकश्चान्यस्तत्राऽऽद्यो द्विविधस्स्मृतः ॥ २०५ ॥

ससत्वश्चैव निःसत्वस्तयोः पूर्वो गुणाधिकः ।
ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः ॥२०६॥

स्वर्णरूप्याकगर्भेभ्यः शिलाधातुर्विनिस्सरेत् ।

शिलाजतोर्गुणाः ॥

स्वर्णगर्भगिरेर्जातं जपापुष्पनिभं गुरु ॥ २०७ ॥

ससत्वं स्वादु परमं परमं तद्रसायनम् ।
रूप्यगर्भगिरेर्जातं मधुरं पाण्डुरं गुरु ॥ २०८ ॥

शिलाजं पाण्डुरोगघ्नं विशेषात्पित्तरोगजित् ।
ताम्रगर्भगिरेर्जातं नीलवर्णं घनं गुरु ॥ २०९ ॥

शिलाजं कफवातघ्नं तीक्ष्णोष्णं दीपनं परम् ।
वह्नौ क्षिप्तं भवेद्यत्तल्लिङ्गाकारं ह्यधूमकम् ॥ २१० ॥

सलिलेऽप्यवलीनञ्च तत्सिद्धं हि शिलाजतु ।

गोमूत्रगन्धि कृष्णं
गुग्गुलुकाभं सशर्करं मृत्स्नम् ।
स्निग्धमनम्लकषायं
मृदु गुरु च शिलाजतु श्रेष्ठम् ॥ २११ ॥

सर्वं च तिक्तकटुकं स्वादु नात्युष्णशीतलम् ॥ २१२ ॥

वृष्यं त्रिदोषजिद्भेदि चक्षुष्यं च रसायनम् ।
क्षयशोफोदरार्शोघ्नं मेहमूत्रग्रहापहम् ॥ २१३ ॥

नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमान्द्यापहं
मेदश्छेदकरं च यक्ष्मशमनं मूलामयोन्मूलनम् ।
गुल्मप्लीहविनाशनं जठरहृच्छूलघ्नमामापहं
सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ॥

रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः ।
वसन्ति ते शिलाधातौ जरामृत्युजिगीषया ॥ २१५ ॥

## भूनागः ॥

भूनागः क्षितिनागश्च भूलता रक्तजन्तुकः ।
क्षितिजः क्षितिजन्तुश्च विषघ्नो रक्ततुण्डकः ॥२१६॥

यासां छेदे न रक्तं प्रभवति सततं प्रायशो रक्तभूमौ ।
सञ्जाद्या भूलतास्ता विषहरधनदं पातयेच्चाशु सत्वम् ।
तद्युक्त्या पारदेन्द्रश्चरति यदि समं सारणायन्त्रयोगैः
बद्धोऽयं कोटिवेधी समरविरजते(थ तं)योजयेद्भास्करे वा ॥

भूनागसत्वस्य गुणाः ॥

सत्वं भूनागजं क्ष्वेलयक्षराक्षसमृत्युजित् ।
सर्ववश्यकरं सर्वरोगघ्नं च रसायनम् ॥ २१८ ॥
रसेन्द्रे जारणाकर्मजारितं कोटिवेधकृत् ।
सुवर्णादीनि लोहानि रक्तानि ग्रसति क्षणात् ॥२१९॥

भूनागसत्वपातनम् ॥

[प्रथमः प्रकारः ।]

रक्तभूजातभूनागमृत्तिकां क्षालयेज्जलैः ।
यावत्सत्वावशेषं स्याद्धौतसत्वं तदेव हि ॥ २२० ॥
मित्रपञ्चकयुक्तं तन्मूषायां धमयेद्दृढम् ।
निर्भिद्य मूषां तत्सत्वं गृहीत्वा किट्टकं पुनः ॥२२१॥
एवं त्रिवारं धमनात्सत्वशेषं समाहरेत् ।

[द्वितीयः प्रकारः]

भूनागमृत्तिकां भाण्डे भूनागैस्सह निक्षिपेत् ॥२२२॥
षण्मासान्तं समान्तं वा जलैस्सिञ्चेन्मुहुर्मुहुः ।
अस्य सत्वं विधानेन गृह्णीयादभ्रसत्ववत् ॥ २२३ ॥

[तृतीयः प्रकारः ।]

रक्तभूमिजभूनागान्पञ्जरस्थेन बर्हिणा ।
भक्षयेत्तु शरत्काले नित्यं तन्मलमाहरेत् ॥ २२४ ॥

लाक्षासर्जरसस्सर्जी गुग्गुलुर्मितपञ्चकम् ।
ऊर्णा क्षाराश्च पटवो नीलसर्पे(र्षे)न्द्रगोपकौ ॥ २२५ ॥

मत्स्यश्च नीलसरटः कूर्मपृष्ठं शशास्थि च ।
माक्षीकं शिखि(शंख)तुत्थं च सर्वांशं बर्हिणो मलम् ॥

सर्वं निक्षिप्य मूषायां धमेत्तीव्राग्निना दृढम् ।
निर्भिद्य मूषां तत्सत्वं गृहीत्वा किट्टकं पुनः ॥

एवं त्रिवारधमनात्सत्वशेषं समाहरेत् ।

### हरिद्राश्मा ॥

हरिद्राश्मा निशाग्रावः पीताङ्गः पीतक(घ)र्षणः ॥

तत्सत्वकं सितं स्वर्णं श्रेष्ठं रसरसायने ।

### अग्निजारः ॥

अग्निजारोऽग्निनिर्यासोऽप्यग्निगर्भोऽग्निजस्स्मृतः ॥

बडवाग्निमलो ज्ञेयो जरायुश्चार्णवोद्भवः ।
अग्निज्वालोऽग्निजारश्च प्रोक्तस्सिन्धुप्लवो दश ॥

सामुद्रस्याग्निनक्रस्य जरायुर्बहिरुज्झितः ।
संशुष्को भानुतापेन सोऽग्निजार इति स्मृतः ॥२३१॥

जाराभं दहति स्पर्शोरिपिच्छिलं सागरोत्प्लवम् ।
जरायुस्तच्चतुर्वर्णं श्रेष्ठं तेषु सलोहितम् ॥ २३२ ॥

### अग्निजारस्य गुणाः ॥

स्यादग्निजारः कटुकोष्णवीर्यः
तुन्दामयघ्नः कफवातहारी ।
पित्तप्रदः शोणितसन्निपात-
शूलादिवातामयनाशकश्च ॥ २३३ ॥

अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत् ।
मर्दनो रसवीर्यस्य दीपनो जारणस्तथा ॥ २३४ ॥

खर्परी (रसकम्) ॥

खर्परी रसकं तुत्थखर्पर्यमृतसम्भवा ।
रसको द्विविधः प्रोक्तो दर्दुरः कारवेल्लकः ॥ २३५ ॥

सदंशो(दलो)दर्दुरः प्रोक्तो निर्दंशः(र्दलः)कारवेल्लकः ।
सत्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु ॥ २३६ ॥

घनसत्वनिभं बाह्ये शुभं हारिद्रवत्ततः ।
अच्छं खर्परवत्तुत्थं उत्तमं(स्यांत्सि) सतोदरम् ॥२३७॥

खर्पर्या गुणाः ॥

रसकस्सर्वदोषघ्नः कफपित्तविनाशनः ।
चक्षूरोगक्षयघ्नश्च लोहपारदरञ्जनः ॥ २३८ ॥

नागार्जुनेन निर्दिष्टौ रसस्य(श्च) रसकावुभौ ।
श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परौ ॥ २३९ ॥

रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ ।
देहलोहमयीं सिद्धिं दास्यतस्तु न संशयः ॥ २४० ॥

खर्परीसत्वपातनम् ॥

जयन्तीत्रिफलाचूर्णं हरिद्रागुडटङ्कणम् ।
पादांशं रसकस्येदं पिष्ट्वा मूषाः प्रलेपयेत् ॥ २४१ ॥

नलिकासम्पुटं बध्वा शोषयेदातपे खरे ।
ग्राह्यं पातालयन्त्रेण सत्वं ध्माते पुटेऽथ वा ॥२४२॥

खर्परीशुद्धिः ॥

रजस्वलारजोमूत्रे रसकं भावयेद्दिनम् ।

तैरेव दिनमेकं तु मर्दयेच्छुद्धिमाप्नुयात् ॥ २४३ ॥

मयूरतुत्थम् ॥

मयूरतुत्थं तुत्थं च नीलाश्मा ताम्रभस्म च ।
मयूरग्रीवकं क्ष्वेडनाशनं सस्यकं प्रिये ! ॥ २४४ ॥

मयूरग्रीवसङ्काशं घृष्टे गोक्षीरसन्निभम् ।
अप्सु च प्लवते क्षिप्तमेतन्मायूरतुत्थकम् ॥ २४५ ॥

अथवा शुकपिञ्छाभमन्तः काञ्चनबिन्दुभिः ।
अङ्कितं घर्षयेत्तुत्थमायसे चाम्लसंयुते ॥ २४६ ॥

भवेदयस्ताम्रनिभं एतन्मायूरतुत्थकम् ।

मयूरतुत्थशुद्धिः ॥

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः ॥ २४७ ॥

दशांशं टङ्कणं दत्वा पाच्यं मृदुपुटे ततः ।
पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ॥ २४८ ॥

मयूरतुत्थसत्वपातनम् ॥

तुत्थं च टङ्कणं चैव तुल्यं श्लक्ष्णं विमर्दयेत् ।
मूषायां तं विनिक्षिप्य रुध्वा तीव्राग्निना धमेत् ॥

इन्द्रगोपनिभं सत्वं पतत्येव न संशयः ।

मयूरतुत्थस्य गुणाः ॥

तुत्थं कटुकषायोष्णं श्वित्रनेत्रामयापहम् ॥ २५० ॥

विषदोषेषु सर्वेषु प्रशस्तं कान्तिकारकम् ।

कङ्कुष्ठम् ॥

कङ्कुष्ठं काककुष्ठं च रेचकं रागदायकम् ॥ २५१ ॥

कङ्कुष्ठं च द्विधा प्रोक्तं हेमतारात्मकं तथा ।
व्रणजन्तुज्वरघ्नं च शूलोदावर्तगुल्महृत् ॥ २५२ ॥

## गिरिसिन्दूरम् ॥

महागिरिषु चाल्लो(ल्ला)व(वी) पाषाणान्तस्थितो रसः ।
शुष्कः शोणस्स निर्दिष्टो गिरिसिन्दूरसंज्ञया ॥२५३॥

त्रिदोषशमनं भेदि रसबन्धनकारकम् ।
देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम् ॥ २५४ ॥

## टङ्कणम् ॥

टङ्कणं टङ्कणक्षारो रसक्षारो रसाधिकः ।
लोहद्रावी रसघ्नश्च सुभगो रङ्गदश्च सः ॥ २५५ ॥

मालतीतीरसम्भूतः क्षारश्रेष्ठो नवाह्वयः ।
अश्मरीमतिसारं च निहन्यात्स्थावरं विषम् ॥ २५६ ॥

रससिद्धिकरः प्रोक्तो नागार्जुनपुरस्सरैः ।

## कम्पिल्लकः ॥

इष्टचूर्णस्य सङ्काशश्चन्द्रिकाढ्योऽतिरेचकः ॥ २५७ ॥

सौराष्ट्रदेशखनिजस्स हि कंपिल्लको मतः ।

पित्तव्रणाध्मानविबन्धनघ्नः
श्लेष्मोदरार्तिक्रिमिगुल्महारी ।
मूलामशूलज्वरशोफहारी
कंपिल्लको रिच्य मलापहारी ॥ २५८ ॥

## वत्सनाभिः ॥

उत्पत्यादि विषस्याऽऽदौ कथितं हि रसायनम् ॥
अमृतं स्याद्वत्सनाभो विषमुग्रं महौषधम् ।

गरलं मरणं नागस्तोककं प्राणहारकम् ॥ २६० ॥

सर्वकुष्ठहरं प्रोक्तं सर्वव्याधिविनाशनम् ।
सन्निपातादिरोगाणां विनिवृत्तिकरं प्रिये ! ॥ २६१ ॥

**कासीसम् ॥**

कासीसं धातुकासीसं केसरं हंसलोमशम् ।
शोधनं पांशुकासीसं शुभ्रं सत्वाह्वयं मतम् ॥ २६२ ॥

कासीसं त्रिविधं शुभ्रं कृष्णं पीतनिति स्मृतम् ।
कासीसं पुष्पकासीसं हीरकासीसमित्यथ ॥ २६३ ॥

पीतं कृष्णं सितं रक्तं चतुर्धेति परे जगुः ।
कासीसमुष्णं सक्षारकषायाम्लं सतिक्तकम् ॥ २६४ ॥

वातश्लेष्मप्रशमनं चक्षुष्यं रञ्जकं परम् ।
मूत्रकृच्छ्राश्मरीकुष्ठकण्डूव्रणविषापहम् ॥ २६५ ॥

**गौरीपाषाणकः ॥**

गौरीपाषाणकः पीतो व्यक्तदेहश्च चूर्णकः ।
रसबन्धकरस्निग्धो दोषघ्नो रसवीर्यकृत् ॥ २६६ ॥

**तुवरी फटकी च ॥**

भूमिस्तुवरिका फुल्लतुवरी रञ्जिका क्षितिः ।
चित्रभूश्चीनकारश्च मञ्जिष्ठारागदायिनी ॥ २६७ ॥

खगस्तु फटकी दुग्धपाषाणो नेत्ररोगहा ।
कर्पूराख्यशिलाधातुर्मञ्जिष्ठारागरञ्जकः ॥ २६८ ॥

**पोदारश्रृङ्गी ॥**

सदलं पीतवर्णं च भवेद्गुर्जरमण्डले ।

अर्जुनस्य गिरेः पार्श्वे जातं पोदारशृङ्गिकम् ॥ २६९ ॥
सीससत्वं मरुच्छ्लेष्मशमनं पुञ्जदापहम् ।
रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम् ॥ २७० ॥

### सिन्दूरम् ॥

सिन्दूरनागगर्भे
सैमन्तिकवीरपांसु नागभवम् ।
रक्तं च नागरेणुः
गणपतिभूषा सुरङ्ग इत्याख्या ॥ २७१ ॥

सौभाग्यं चैव शृङ्गारं मङ्गल्यमरुणं रजः ।
सिन्दूरं कटुकं तिक्तमुष्णं व्रणविरोपणम् ॥ २७२ ॥
किलासविषकण्डूतिविसर्पशमनं परम् ।
हिङ्गुले ये गुणास्सन्ति ते गुणास्तिमुरौ प्रिये ॥२७३॥

### रसाञ्जनम् ॥

रसाञ्जनं रसोद्भूतं रसगर्भं रसाग्रजम् ।
रीत्यां तु धाम्यमानायां तत्किट्टं तु रसाञ्जनम् ॥२७४॥
तदभावे तु कर्तव्यं दार्वीकाथसमुद्भवम् ।
कृतकं बालभैषज्यं दार्वीकाथोद्भवं तथा ॥ २७५ ॥
दार्वीकाथभवं कण्ठ(ण्ठ्यं)विकासि क्षिप्तमक्षिण यत् ।
तद्रसाञ्जनमुद्दिष्टं कषायं कटु तिक्तकम् ॥ २७६ ॥
किञ्चिदुष्णं कफहरं छेदनं लेखनं लघु ।
रक्तपित्तप्रशमनं नेत्ररोगविनाशनम् ॥ २७७ ॥
रसाञ्जनं तार्क्ष्यशैलं ज्ञेयं वर्याञ्जनं तथा ।
रसनाभं चाग्निसारं द्वादशाह्वयकीर्तितम् ॥ २७८ ॥

## नीलाञ्जनम् ॥

नीलं नीलाञ्जनं चैव चक्षुष्यं वारिसम्भवम् ।
कपोतकं च कापोतं सम्प्रोक्तं शक्रभूमिजम् ॥ २७९ ॥

शीतं नीलाञ्जन प्रोक्तं कटुतिक्तकषायकम् ।
चक्षुष्यं कफवातघ्नं विषघ्नं च रसायनम् ॥ २८० ॥

## सौवीराञ्जनम् ॥

सौवीरमञ्जनं स्निग्धमवघृष्टं शिलातले ।
अञ्जनाभं शिलारूपमेतच्छ्रेष्ठमकृत्रिमम् ॥ २८१ ॥

सौवीरमञ्जनं चैव रक्तपित्तहरं हितम् ।
विषहिध्माक्षिरोगघ्नं व्रणशोधनरोपणम् ॥ २८२ ॥

## स्रोतोऽञ्जनम् ॥

स्रोतोद्भवं स्रोतनदीभवं च
स्रोतोऽञ्जनं वारिभवं तथाऽन्यम् ।
सौवीरसारं च कपोतसारं
वल्मीकशीर्षं मुनिसम्मिताह्वम् ॥ २८३ ॥

वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युतिः ।
घर्षणे गैरिकच्छायं स्रोतोऽञ्जनमिदं भवेत् ॥ २८४ ॥

स्रोतोऽञ्जनं शीतकटुकषायं क्रिमिनाशनम् ।
रसायनं रसे योज्यं स्तन्यवृद्धिकरं परम् ॥ २८५ ॥

स्रोतोऽञ्जनं हिमं स्निग्धं तृष्णाहृत्स्वादु लेखनम् ।
नेत्र्यं हिध्मावमिच्छर्दिकफपित्तास्रकोपनुत् ॥ २८६ ॥

## अहिफेनम् ॥

श्रान्तस्य मथनाक्षोभाद्वासुकेर्वदनोत्थिताः ।
द्वीपान्तरे पतन्ति स्म सविषास्स्वेदबिन्दवः ॥ २८७ ॥

यत्र यत्र पतन्ति स्म प्ररूढा गुल्मरूपतः ।
तेषु जातं तु निर्यासमफेनं ब्रुवते जनाः ॥ २८८ ॥

चतुर्विधमफेनं स्याज्जारणं मारणं तथा ।
धारणं सारणं चैव क्रमाद्वक्ष्यामि लक्षणम् ॥ २८९ ॥

श्वेतं तु जारणं प्रोक्तं कृष्णवर्णं तु मारणम् ।
धारणं पीतवर्णं च कर्बुरं सारणं तथा ॥ २९० ॥

जारणं जरयेदन्नं मारणं मृत्युदायकम् ।
धारणं च वयःस्तम्भं सारणं मलसारकम् ॥ २९१ ॥

अफेनं सन्निपातघ्नं वृष्यं बल्यं च मोहदम् ।
ग्रहणीमतिसारं च नाशयेत्षण्डतामपि ॥ २९२ ॥

## पुष्पाञ्जनम् ॥

पुष्पाञ्जनं पुष्पकेतुः कौस्तुभः कुसुमाञ्जनम् ।
रीतिकं रीतिकुसुमं रीतिपुष्पं च पुष्पकम् ॥ २९३ ॥

पुष्पाञ्जनं हितं प्रोक्तं पित्तहिक्काप्रदाहनुत् ।
नाशयेद्विषकासार्तिसर्वनेत्रामयापहम् ॥ २९४ ॥

## शङ्खः क्षुद्रशङ्खश्च ॥

शङ्खोऽर्णवभवः कंबुर्जलजः पावनध्वनिः ।
कुटिलोऽन्तर्महानादः श्वेतपीतस्सुनादकः ॥ २९५ ॥

सस्वनो दीर्घनादश्च बहुनादो हरप्रियः ।
क्षुल्लकः क्षुद्रशङ्खस्स्याच्छंबूको नखशङ्खकः ॥ २९६ ॥

शङ्खः कटुरसश्शीतः पुष्टिवीर्यबलप्रदः ।
गुल्मशूलकफश्वासनाशनो विषदोषहः ॥ २९७ ॥

क्षुल्लकः कटुकः स्निग्धश्शूलहारी च दीपनः ।

शुक्तिः ॥

शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्तिका ॥ २९८ ॥

मुक्तास्फोटस्तौतिकस्तु मौक्तिकप्रसवा च सा ।
ज्ञेया मौक्तिकसूश्चैव मुक्तामाता तथा स्मृता ॥२९९॥

मुक्ताशुक्तिः कटुस्स्निग्धा श्वासहृद्रोगहारिणी ।
शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥ ३०० ॥

जलशुक्तिः ॥

जलशुक्तिः क्षुद्रशुक्तिः क्रिमिसुस्फुटिका च सा ।
जलशुक्तिः कटुस्स्निग्धा दीपनी गुल्मशूलनुत् ॥३०१॥

तथा विषहरा रुच्या पाचनी बलदायिनी ।

कपर्दः ॥

कपर्दको वराटश्च कपर्दश्च वराटिका ॥ ३०२ ॥

चराचरश्चरो वर्यो बालक्रीडनकश्च सः ।
पीताभा ग्रन्थिला पृष्ठे दीर्घवृत्ता वराटिका ॥ ३०३ ॥

रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञका ।
सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ॥ ३०४॥

पादोननिष्कभारा च कनिष्ठा परिकीर्तिता ।
परिणामादिशूलघ्नी ग्रहणीक्षयनाशनी ॥ ३०५ ॥

कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ।
रसेन्द्रजारणे प्रोक्ता विडद्रव्येषु शस्यते ॥ ३०६ ॥

तदन्ये पुंवराटास्स्युर्गुरवश्श्लेष्मपित्तलाः ।
कपर्दः कटुतिक्तोष्णः कर्णशूलव्रणापहः ॥ ३०७ ॥

गुल्मशूलामयघ्नश्च नेत्रदोषनिकृन्तनः ।

सावुणिः (सर्वक्षारः) ॥

सर्वक्षारो बहुक्षारस्समूहक्षारसाबुणिः ॥ ३०८ ॥

स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः ।

सर्वक्षारमतिक्षारं चक्षुष्यं बस्तिशोधनम् ॥ ३०९ ॥

उदावर्तक्रिमिघ्नं च बिडवद्वस्त्रशोधनम् ।

नवसारः ॥

करीरपीलुकाष्ठेषु पच्यमानेष्टकोद्भवः ॥ ३१० ॥

क्षारोऽसौ नवसारस्स्याच्चूलिकालवणाभिधः ।

रसेन्द्रजारणं लोहद्रावणं जठराग्निकृत् ॥ ३११ ॥

गुल्मप्लीहास्यशोषघ्नं भुक्तमांसादिजारणम् ।

सौराष्ट्री ॥

गोपित्तेन शतं वारान्सौराष्ट्रीं भावयेत्ततः ॥ ३१२ ॥

धमित्वा पातयेत्सत्वं क्रामणं चातिगुह्यकम् ।

आखुपाषाणः ॥

मूषकस्याभिधा पूर्वं पाषाणस्याभिधा ततः ॥ ३१३ ॥

आखुपाषाणनामायं लोहसङ्करकारकः ।

आखुग्रावा सरो रूक्षो वमिशीतज्वरापहः ॥ ३१४ ॥

तारकर्मणि संपूज्यो मेदोदुर्मांसकृन्तनः ।

सर्जरसः ॥

रालस्सर्जरसश्चैव यक्षधूपोऽग्निवल्लभः ॥ ३१५ ॥

देवेष्टस्सालनिर्यासस्सुरभिर्धूपवल्लभः ।
रालस्तु पञ्चधा प्रोक्तो रक्तः पीतस्सितोऽसितः ॥
नानावर्णश्च विज्ञेयः कृष्णस्तेषु गुणोत्तरः ।
रालस्तु शिशिरस्स्निग्धः कषायस्तिक्तको रसे ॥३१७॥
वातपित्तहरस्स्फोटकण्डूतिव्रणनाशनः ।

### गुग्गुलुः ॥

दानवेन्द्रविजितान्पुरा सुरान्
भ्रष्टकान्तिधृतिधैर्यतेजसः ।
वीक्ष्य विष्णुरमृतं किलासृजत्
गुग्गुलुं बलवपुर्जयप्रदम् ॥ ३१८ ॥

मरुभूमिषु जायन्ते प्रायशः पुरपादपाः ॥ ३१९ ॥
भानोर्मयूखैस्सन्तप्ता ग्रीष्मे मुञ्चन्ति गुग्गुलुम् ।
गुग्गुलुः पञ्चधा प्रोक्तो महिषाक्षश्च नीलकः ॥ ३२० ॥
पद्मस्तु कुमुदश्चैव सुवर्णः पञ्चमः प्रिये! ।
महिषाक्षश्च नीलश्च दन्तिनां गुणदायकौ ॥ ३२१ ॥
वाजिनां कुमुदः पद्मो नराणां स्वर्णवर्णकः ।
एरण्डबीजतैले वा तिलतैलेऽथवा घृते ॥ ३२२ ॥
पञ्चतिक्तशृतैः क्वाथैः शुद्धिं कुर्यात्सुगुग्गुलुम् ।
दोलायन्त्रे पचेत्तावद्यावन्निर्मलता भवेत् ॥ ३२३ ॥
एवं विशुद्धं सङ्ग्राह्यं तत्तद्योगेषु योजयेत् ।
पिटकागण्डमालाद्या नश्यन्ति च मरुद्गदाः ॥ ३२४ ॥

### यवक्षारः ॥

यवक्षारोऽमृतः पाक्यो यवजो यवशूकजः ।

यवशूको यवाह्वश्च यवपाक्यो यवारु(ग्र)जः ॥ ३२५ ॥

यवक्षारः कटूष्णश्च कफवातोदरार्तिनुत् ।
आमशूलाश्मरीकृच्छ्रविषदोषहरः परः ॥ ३२६ ॥

### सर्जक्षारः ॥

सद्यःक्षारस्सर्जिकश्च क्षारस्सज्जी सुवर्जिकः ।
सर्जीकः कटुरूक्षश्च तीक्ष्णो वातकफार्तिनुत् ॥३२७॥

गुल्मानाहवमिघ्नश्च मेहजाठररोगहृत् ।

### लवणक्षारः ॥

लोणारं लवणोत्थं लवणासुरं च लवणमेदश्च ॥३२८॥

जतु(ल)जं लवणक्षारं लवणं च क्षारलवणं च ।
लोणकक्षारमत्युष्णं तीक्ष्णं पित्तप्रवृद्धिदम् ॥ ३२९ ॥

क्षारं लवणमीषच्च वातगुल्मादिशूलनुत् ।

### वज्रकक्षारः ॥

वज्रकं वज्रकक्षारं क्षारश्रेष्ठं विदारकम् ॥ ३३० ॥

सारं चन्दनसारं च धूमोत्थं धूमजं गजाः ।
वज्रकक्षारमत्युष्णं तीक्ष्णं क्षारं च रोधनम् ॥ ३३१ ॥

गुल्मोदरार्तिविष्टंभशूलप्रशमनं परम् ।

### सामुद्रलवणम् ॥

सामुद्रकं तु सामुद्रं सामुद्रलवणं शिवम् ॥ ३३२ ॥

सामुद्रं लघु हृद्यं च वारितासृजपित्तलम् ।
विदाहि कफवातघ्नं दीपनं रुचिकृत्प्रियम् ॥ ३३३ ॥

## सैन्धवम् ॥

सैन्धवं स्याच्छीतशिवं नादेयं सिन्धुजं शिवम् ।
शुद्धं शिवात्मकं पथ्यं माणिमन्थं नवाभिधम् ॥३३४॥

सैन्धवं लवणं वृष्यं चक्षुष्यं दीपनं रुचि ।
पूतं नस्यात्त्रिदोषघ्नं व्रणदोषविबन्धजित् ॥ ३३५ ॥

सैन्धवं द्विविधं ज्ञेयं सितं रक्तमिति क्रमात् ।
रसवीर्यविपाकेषु गुणाढ्यं पूतनं सितम् ॥ ३३६ ॥

## काचलवणम् ॥

नीलकाचोद्भवं काचति(नी) लकं चैव(काच)सम्भवम् ।
काकसौवर्चलं काचलवणं पाक्यजं स्मृतम् ॥ ३३७ ॥

काचोत्थं हृद्यगन्धं च तत्काललवणं तथा ।
कुरुविन्दं काचमलं कतिमं च चतुर्दश ॥ ३३८ ॥

काचाख्यं लवणं रुच्यमीषत्क्षारं सपित्तलम् ।
दाहदं कफवातघ्नं दीपनं गुल्मशूलहृत् ॥ ३३९ ॥

## विडलवणम् ॥

बिडं च बिडकं खण्डं कृतक्षारं च आसुरम् ।
सुपाक्यं लवणं खण्डं धूर्तं कृत्रिमकं दश ॥ ३४० ॥

बिडमुष्णं सलवणं दीपनं वातनाशनम् ।
रुच्यं चाजीर्णशूलघ्नं गुल्ममेहविनाशनम् ॥ ३४१ ॥

## सौवर्चललवणम् ॥

सौवर्चलं च रुचक तिलकं हृद्यगन्धकम् ।
अक्षं च कृष्णलवणं रुच्यं कोद्रविकं तथा ॥ ३४२ ॥

सौवर्चलं लघु क्षारं कटूष्णं गुल्मशूलनुत् ।
ऊर्ध्ववातामशूलार्तिविबन्धारोचकं जयेत् ॥ ३४३ ॥

अम्लवेतसः ॥

अम्लोऽम्लवेतसो वेधी रसाम्लो वीतवेतसः ।
वेतसारश्चाम्लसारश्शरवेधी च वेधकः ॥ ३४४ ॥

नीलश्च भेदनो भेदी राजाम्लश्चाम्लभेदनः ।
अम्लाङ्कुशो रक्तसारः फलाम्लश्चाम्लनायकः ॥

सहस्रवेधी वीराम्लो गुल्मकेतुर्धराक्षिधा ।
शङ्खमांसादिद्रावी स्याद्द्विधा चैवाम्लवेतसः ॥३४६॥

अम्लवेतसमत्यम्लं कषायोष्णामवातजित् ।
कफार्शस्समगुल्माममरोचकहरं परम् ॥ ३४७ ॥

काचः ॥

काचस्तुषारसारश्च रसखोटमलापहः ।
शृङ्गारी चाभ्रधारी च सर्वनेत्रामयापहा ॥ ३४८ ॥

छगणम् ॥

पिष्टकं छगणश्छाणमुत्पलं च वनोत्पलम् ।
करिण्डोपलशाठी च वरटी छगणाभिधा ॥ ३४९ ॥

रसलोहदोषहारि ख्यातं तद्रस दुरितसंहृतये ।

अङ्गाराः ॥

शिखित्राः पावकोच्छिष्टा अङ्गाराः कोलिशा मताः ॥

कोकिलाश्चेति चाङ्गारा निर्वाणाः पयसा विना ।

सिकता ॥

सिकता प्रवाहजनिता सिक्ता पानीयचूर्णका सूक्ष्मा ॥

सा वालुका श्रमघ्नी संसेकात्सन्निपातघ्नी ।

## उपरसानां शोधनम्

कासीसं भावयेद्धर्मे दिनं जम्बीरजैर्द्रवैः ॥ ३५२ ॥

शुध्यते टङ्कणं गै(गौ)री कङ्कुष्ठं च वराटिका ।
शङ्खं नीलाञ्जनं चैव पृथक् शोध्यं दिने दिने ॥

गोदुग्धैस्त्रिफलाक्वाथैर्भृङ्गद्रावैश्शिलाजतु ।
मर्दयेदायसे पात्रे दिनैकं तच्च शुध्यति ॥ ३५४ ॥

मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चयम् ॥ ३५५ ॥

सूर्यावर्तं वज्रकन्दं कदली देवदालिका ।
शिग्रुः कोशातकी वन्ध्या काकमाची च वालुका ॥

आसामेकरसेनैव त्रिक्षारैर्लवणैस्सह ।
भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः ॥ ३५७ ॥

सौवीरं कान्तपाषाणः शुद्धा भूनागमृत्तिका ।
सर्वे उपरसाश्चाथ पृथग्भाव्यं दिनं दिनम् ॥ ३५८ ॥

ततः पाच्यं च तद्द्रावैर्दोलायन्त्रे दिनं सुधीः ।
शुध्यन्ते नात्र सन्देहस्सर्वे उपरसाः पृथक् ॥ ३५९ ॥

पुनर्नवामेघनादकपिजम्बीरतिन्दुकैः ।
अगस्तिपुष्पकुमुदयवचिञ्चाम्लवेतसैः ॥ ३६० ॥

वनसूरणभूधात्रीमण्डूकीकरवीरकैः ।
कारवल्लीक्षीरकन्दरक्तोत्पलशमीघनैः ॥ ३६१ ॥

मेषशृङ्गीशशवसाशक्रवारुणिटङ्कणैः ।
तैलमत्स्यवसाव्योषद्रवैरेतैस्सकाञ्जिकैः ॥ ३६२ ॥

एतैस्समस्तैर्व्यस्तैर्वा डोलायन्त्रे दिनत्रयम् ।
अभ्रपत्राद्युपरसान्शुद्धिहेतोः प्रपाचयेत् ॥ ३६३ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ प्रथमोल्लासः

## ॥ द्वितीय उल्लासः ॥

### सुवर्णम् ॥

श्रीभैरवः—

स्वर्णादिसर्वलोहानामुत्पत्त्यादिक्रमं ब्रुवे ।

स्वर्णं सुवर्णकनकोज्ज्वलकाञ्चनानि
कल्याणहाटकहिरण्यमनोहराणि ।
गाङ्गेयगैरिकमहारजताग्निवीर्य-
रुक्मानि हेमतपनीयकभास्वराणि ॥ १ ॥

जाम्बूनदाष्टापदजातरूप-
पिञ्जानचामीकरकर्बुराणि ।
कार्तस्वरापिञ्जरवर्णभूरि-
तेजांसि दीप्तामलदीपि(पीत)कानि ॥ २ ॥

मङ्गल्यसौमेरवशातकुम्भ-
श्रृङ्गारचन्द्रारजजांबवानि ।
आग्नेयनिष्काग्निशिखानि चेति
नेत्राब्धिनिर्धारितहेमनाम ॥ ३ ॥

[सुवर्णभेदाः ।]

प्राकृतं सहजं वह्निसम्भूतं खनिसम्भवम् ॥ ४ ॥

रसेन्द्रवेधसञ्जातं स्वर्णं पञ्चविधं स्मृतम् ।
ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु ॥ ५ ॥

तत्प्राकृतमिति प्रोक्तं देवानामपि दुर्लभम् ।
ब्रह्मा येनाऽऽवृतो जातस्सुवर्णं सहजं हि तत् ॥ ६ ॥

विसृष्टमग्निना शैवं तेजः पीतं सुदुस्सहम् ।
अभूत्स्वर्णं तदुद्दिष्टं सुवर्णं वह्निसंभवम् ॥ ७ ॥

एतत्स्वर्णत्रयं दिव्यं वर्णैष्षोडशभिर्युतम् ।
धारणादेव तत्कुर्याच्छरीरमजरामयम् ॥ ८ ॥

गिरीणां खनिसम्भूतं तत्स्वर्णं खनिजं स्मृतम् ।
तच्चतुर्दशवर्णाऽऽढ्यं भक्षितं सर्वरोगहृत् ॥ ९ ॥

रसेन्द्रवेधसम्भूतं तद्वेधजमुदाहृतम् ।
रसायनं महाश्रेष्ठं पवित्रं वेधजं हि तत् ॥ १० ॥

रक्ताभं पीतवर्णं च द्विविधं काञ्चनं भवेत् ।

[ग्राह्याग्राह्यसुवर्णस्वरूपम् ।]

दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् ॥ ११ ॥

गुरु स्निग्धं मृदु स्वच्छं निर्दलं रक्तपीतकम् ।
हेम षोडशवर्णाऽऽढ्यं शस्यते देहलोहयोः ॥ १२ ॥

श्वेताङ्गं कठिनं रूक्षं विवर्णं समलं दलम् ।
दाहे श्वेतासितं श्वेतं निकषे लघु च त्रजेत् ॥ १३ ॥

न शुद्धं न मृतं स्वर्णं रोगवर्गं करोति च ।
सौख्यं वीर्यं बलं हन्ति तस्माच्छुद्धिरुदीर्यते ॥ १४ ॥

सुवर्णशुद्धिः ॥

वल्मीकमृत्तिका धूमं गैरिकं चेष्टका पटु ।

इत्येते मृत्तिकाः पञ्च जम्बीरैर्वाऽऽरनालकैः ॥ १५ ॥
पिष्ट्वा लिम्पेत्स्वर्णपत्रं भस्मच्छन्नं तु कर्परे ।
यावद्द्रवं पुटं तावत्कुर्यात्तेन विशुध्यति ॥ १६ ॥
मृत्तिकां मातुलुङ्गाम्लैः पञ्चवासरभाविताम् ।
सभस्मलवणं हेम शोधयेत्पुटपाकतः ॥ १७ ॥
भावयेन्मातुलुङ्गाम्लैस्त्रिदिनं पञ्चमृत्तिकाम् ।
सैन्धवं भूमि(धूम)भस्माभिः(पि)स्वर्णं शुध्यति पूर्ववत् ॥
तैले तक्रे गवां मूत्रे ह्यारनाले कुलुत्थके ।
क्रमान्निषेचयेत्तप्तं सप्तवारं द्रवैर्द्रवैः ॥ १९ ॥
स्वर्णादिलोहपत्राणां शुद्धिरेषा प्रशस्यते ।
द्रावितौ नागवङ्गौ च तद्रसिञ्चेद्विशुद्धये ॥ २० ॥
सुवर्णं ढा(क्षा)लयेत्पूर्वं काञ्चनारोद्भवे रसे ।
सप्तवारं ततः कर्मयोग्यं हेम भवेद्ध्रुवम् ॥ २१ ॥

## सुवर्णभस्म ॥

[प्रथमः प्रकारः ।]

नागचूर्णं शिलायुक्तं वज्रीक्षीरसमन्वितम् ।
लेपनात्पुटयोगाच्च हेमपत्राणि लेपयेत् ॥ २२ ॥
मृतं नागं स्नुहीक्षीरैरथवाऽम्लेन केनचित् ।
पिष्ट्वा लेप्यं स्वर्णपत्रं रुध्वा गजपुटे पचेत् ॥ २३ ॥
आदाय पेषयेदम्ले मृतनागं चाष्टमांशकम् ।
पचेद्गजपुटे रुध्वा पूर्ववन्नागसंयुतम् ॥ २४ ॥
एवं पुनः पुनः पाकादष्टधा म्रियते ध्रुवम् ।

[द्वितीयः प्रकारः।]

शुद्धसूतसमं गन्धं माक्षिकं च सहाम्लकैः॥ २५॥
अष्टभिश्च पुटैर्हेम म्रियते पूर्ववत्क्रिया।

[तृतीयः प्रकारः।]

शुद्धसूतसमं स्वर्णं खल्वे कुर्याच्च गोलकम्॥ २६॥
ऊर्ध्वाधो गन्धकं दत्वा सर्वतुल्यं निरुध्य च।
त्रिंशद्वनोत्पलैर्दद्यात्पुटानेवं चतुर्दश॥ २७॥
निरुत्थं जायते भस्म गन्धं देयं पुनः पुनः।

[चतुर्थः प्रकारः।]

स्वर्णमावर्त्य तोलैकं माषैकं शुद्धनागकम्॥ २८॥
क्षिप्त्वाऽऽदाय तु तच्चूर्णं तत्तुल्ये गन्धमाक्षिके।
अम्लेन मर्दयेद्यामं रुध्वा लघुपुटे पचेत्॥ २९॥
गन्धं पुनः पुनर्देयं म्रियते दशभिः पुटैः।

[रसादिभिः स्वर्णमारणम्।]

हेमपत्राणि कुर्वीत विलिंपेद्रसभस्मना॥ ३०॥
अम्लपिष्टेन पुटयेद्धेम निर्जीवतां व्रजेत्।
अथवा ताप्यपुटितं स्वर्णं गच्छति भस्मताम्॥ ३१॥
यद्वा मृतेन करिणा शिलायोगेन भस्मयेत्।
अथवा मृतवज्रेण योगिन्यंशविलेपितम्॥ ३२॥
भस्मतां यात्युपरसै रसैश्चैव महारसैः।
अम्लपिष्टैर्विलिप्तं च पुटितं याति भस्मताम्॥ ३३॥

[पञ्चमः प्रकारः ।]

स्वर्णस्य द्विगुणं सूतं याममम्लेन मर्दयेत् ।
आरोटं माक्षिकं क्षिप्त्वा मूषायां स्वर्णतुल्यकम् ॥३४॥

तत्पृष्ठे मर्दितं हेम तत्पृष्ठे शुद्धमाक्षिकम् ।
देयं स्वर्णसमं तच्च पृष्ठे गन्धं च तत्समम् ॥ ३५ ॥

सर्वं च चूर्णितं दद्याद्रुध्वा मूषां धमेद्दृढम् ।
स्वभावशीतलं ग्राह्यं भस्म तद्भागपञ्चकम् ॥ ३६ ॥

टङ्कणं श्वेतकाचं च भागैकैकं प्रपेषयेत् ।
त्रितयं मधुनाऽऽज्येन मेलकं गोलकीकृतम् ॥ ३७ ॥

धान्याभ्रस्य च भागैकमधश्चोर्ध्वं च दापयेत् ।
निरुध्य तद्धमेद्गाढं मूषायां घटिकाद्वयम् ॥ ३८ ॥

निरुत्थं जायते भस्म तत्तद्योगेषु योजयेत् ।

[षष्ठः प्रकारः ।]

हेम्नः पादं मृतं सूतं पिष्टमम्लेन केनचित् ॥ ३९ ॥
पत्रे लिप्त्वा पुटे पच्यादष्टभिर्म्रियते ध्रुवम् ।
शुद्धानां सर्वलोहानां मारणे रीतिरीदृशी ॥ ४० ॥

[सप्तमः प्रकारः ।]

शुद्धमाक्षीकभागैकं भागं चारोटमाक्षिकम् ।
द्विभागं सूतकं क्षिप्त्वा त्र्यमम्लेन मर्दयेत् ॥ ४१ ॥

भागैकं हेमपत्रं च लिप्त्वा चाम्लेन मर्दयेत् ।
तद्गोलं पातनायन्त्रे हठाद्यामलयं पचेत् ॥ ४२ ॥

इत्येवं म्रियते स्वर्णं निरुत्थं नात्र संशयः ।

[अष्टमः प्रकारः ।]

यवचिञ्चारजोवृक्षमल्लातैष्टङ्कणेन च ॥ ४३ ॥

लिप्त्वा स्वर्णस्य पत्राणि रुध्वा गजपुटे पचेत् ।
तैर्द्रवैः(कृतया) पिष्ट्या म्रियते सप्तधा पुटैः ॥ ४४ ॥

[नवमः प्रकारः]

पीलुकङ्कुष्ठबुक्काणसौवर्चलमपेषितम् ।
लिप्त्वा स्वर्णस्य पत्राणि म्रियते सप्तभिः पुटैः ॥ ४५॥

**सुवर्णस्य गुणाः ॥**

सुवर्णं बृंहणं स्निग्धं मधुरं रसपाकयोः ।
विषदोषहरं शीतं सकषायं सतिक्तकम् ॥ ४६ ॥

हृद्यं कान्तिप्रदं बल्यं स्रंसनं गुरु लेखनम् ।
बुद्धिमेधास्मृतिकरं व्रणघ्नं वाग्विशुद्धिदम् ॥ ४७ ॥

क्षयोन्मादप्रशमनं चक्षुष्यं च रसायनम् ।
त्रिदोषशमनं सौम्यमायुष्यं रुचिरं शुचि ॥ ४८ ॥

प्रज्ञावीर्यस्वरकरमैश्वर्यं धारणाद्भवेत् ।

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ द्वितीयोल्लासः ॥



## ॥ तृतीय उल्लासः ॥

### रजतम् ॥

श्रीभैरवः—

रौप्यं शुभ्रं वसुश्रेष्ठं रुचिरं चन्द्रलोहकम् ।
रजतं तप्तरूप्यं च चन्द्रभूतिस्तु रौप्यकम् ॥ १ ॥

कलधौतं च सौधं च चन्द्रहासं च तारकम्

### [रजतभेदाः ।]

सहजं खनिसञ्जातं कृत्रिमं च त्रिधा मतम् ॥ २ ॥

रजतं पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ।
कैलासाद्यद्रिसम्भूतं सहजं रजतं भवेत् ॥ ३ ॥

तत्स्पृष्टं हि महाव्याधिनाशनं देहिनां भवेत् ।
हिमाचलादिकूटेषु यद्रूप्यं जायते हि तत् ॥ ४ ॥

खनिजं कथ्यते तज्ज्ञैः परमं हि रसायनम् ।
श्रीरामपादुकान्यस्तं वङ्गं यद्रूप्यतां गतम् ॥

तत्पादरूप्यमित्युक्तं कृत्रिमं सर्वरोगनुत् ।

### [ग्राह्याग्राह्यरजतस्वरूपम् ।]

घनं स्निग्धं गुरु स्निग्धं दाहे छेदे सितं मृदु ॥ ६ ॥

वर्णाढ्यं चन्द्रवत्स्वच्छं दाहे छेदे समप्रभम् ।
शङ्खाभं मसृणं स्फोटरहितं रजतं शुभम् ॥ ७ ॥

दाहे रक्तं च पीतं च कृष्णं रूक्षं स्फुटं लघु ।
स्थूलाङ्गं कर्कशाङ्गं च रजतं त्याज्यमष्टधा ॥ ८ ॥

कठिनं कृत्रिमं रूक्षं विवर्णं समलं दलम् ।
दाहे छेदे घने नष्टं मध्यमं रजतं मतम् ॥ ९ ॥

करोति तापं विड्भेदं क्षयं शुक्रबलायुषाम् ।
न शुद्धं न मृतं तारं तस्माच्छुद्धं च मारयेत् ॥१०॥

रजतशुद्धिः ॥

नागेन टङ्कणेनैव द्रावितं शुद्धिमृच्छति ।
तारं त्रिवारं निक्षिप्तं तैले ज्योतिष्मतीभवे ॥ ११ ॥

तप्तं तप्तं तारपत्रं सेचयेच्छुद्धिमाप्नुयात् ।
पिशाचसंभवे यद्वा प्रक्षिप्तं शुद्धिमाप्नुयात् ॥ १२ ॥

रजतं दोषनिर्मुक्तं नागोत्तीर्णं समाहरेत् ।
श्वेतकुम्भोद्भवे नीरे ढालयेत्सप्तवारकान् ॥ १३ ॥

रजतभस्म ॥

[प्रथमः प्रकारः ।]

कुरण्डमुनिपुष्पोत्थसलिलैस्संप्रमर्दयेत् ।
तारपत्राणि लिप्तानि पुटयेच्च वनोत्पलैः ॥ १४ ॥
म्रियते नाऽत्र सन्देहः

[द्वितीयः प्रकारः ।]

लिप्तं वा रसभस्मना ।
अम्लवर्गप्रलिप्तेन पूर्ववत्पुटयोगतः ॥ १५ ॥

म्रियते

[तृतीयः प्रकारः ।]

तालकं सूतं वज्रमम्लेन पेषयेत् ।
तारपत्राणि संलिप्य पुटित्वा भस्मतां नयेत् ॥ १६ ॥

म्रियते गन्धयोगाद्यैर्वैष्णवेन विपद्यते(मर्द्य तत्) ।

[चतुर्थः प्रकारः ।]

स्नुहीक्षीरैः पचेत्ताप्यं तारपत्राणि लेपयेत् ॥ १७ ॥
रुध्वा गजपुटे पक्त्वा पूर्वोक्तैः पाचयेत्पुनः ।
चत्वारिंशत्पुटैरेवं पचेत्तारं मृतं भवेत् ॥ १८ ॥

[पञ्चमः प्रकारः ।]

भूधात्रीं माक्षिकं तुल्यं पिप्पलीं सैन्धवाम्लकैः ।
लिप्त्वा तारस्य पत्राणि रुध्वा सप्तपुटैः पचेत् ॥ १९ ॥
द्रवैः पुनः पुनः पिष्ट्वा म्रियते नाऽत्र संशयः ।

[षष्ठः प्रकारः ।]

लिकुचद्रवसूताभ्यां तारपिष्टीं प्रकल्पयेत् ॥ २० ॥
रुध्वाऽधो गन्धकं दत्वा मूषागर्भे निरुध्य च ।
स्वेदयेद्वालुकायन्त्रे दिनमेकं दृढाग्निना ॥ २१ ॥
स्वाङ्गशीतलतां पिष्टिं साम्लतालेन मर्दितम् ।
पुटेद्द्वादशवाराणि भस्मीभवति रूप्यकम् ॥ २२ ॥

[सप्तमः प्रकारः ।]

माक्षिकं चूर्णलुङ्गाम्लमर्दितं पुटितं शनैः ।
त्रिंशद्वारेण तत्तारं निरुत्थं भस्म जायते ॥ २३ ॥
रागस्स्यात्सर्वलोहानां पुटाधिक्ये न संशयः ।

[अष्टमः प्रकारः ।]

तारपत्रं चतुर्भागा भागैकं शुद्धतालकम् ॥ २४ ॥

मर्द्यं जम्बीरजैर्द्रावैस्तारपत्राणि लेपयेत्।
शोषयेदन्धयेत्तं च त्रिंशद्वनोत्पलैः पुटेत् ॥ २५ ॥
चतुर्दशपुटैरेवं निरुत्थं म्रियते ध्रुवम्।

[नवमः प्रकारः।]

रौप्यपत्रं चतुर्भागा भागैकं मृतवङ्गकम् ॥ २६ ॥
अथवा गन्धभागैकं लेप्यं जम्बीरपेषितैः।
रुध्वा त्रिभिः पुटैः पाच्यं पञ्चविंशद्वनोत्पलैः ॥ २७ ॥
म्रियते नाऽत्र सन्देहो गन्धो देयः पुनः पुनः।

[दशमः प्रकारः।]

रसगन्धौ समं कृत्वा काकतुण्डस्य मूलकम् ॥ २८ ॥
मर्दयेन्महिषीक्षीरैः पिष्टिं तां क्षालयेज्जलैः।
हरिद्रागोलके क्षिप्त्वा गोलं हयपुरीषके ॥ २९ ॥
क्षिप्त्वा दिनैकविंशच्च तद्गर्भादुद्धरेत्पुनः।
तत्पिष्ट्वा तारपत्राणि लेप्यमम्लेन केनचित् ॥ ३० ॥
पुटैर्विंशतिभिर्भस्म जायते नात्र संशयः।
भस्मना ह्यम्लपिष्टेन लिम्पेत्ताम्रमयं क्षुरम् ॥ ३१ ॥
जायते तं मृतं विद्याद्भस्म हाटकतारयोः।

[रजतस्य गुणाः।]

रौप्यं स्निग्धं कषायाम्लं विपाके मधुरं रसम् ॥ ३२ ॥
वयसस्थापनं शीतं लेखनं वातपित्तजित्।
वृष्यं रुचिकरं बल्यं जठराग्निप्रदीपनम् ॥ ३३ ॥

॥ इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ तृतीयोल्लासः ॥

## ॥ चतुर्थ उल्लासः ॥

### ताम्रम् ॥

श्रीभैरवः—

ताम्रं म्लेच्छमुखं शुल्बं तपनेष्टमुदुम्बरम् ।
त्र्यंबकं चारविन्दं च रविलोहं रविप्रियम् ॥ १ ॥

रक्तं नैपालकं चैव रक्तधातुः करेन्दुधा ।

[ताम्रभेदाः ।]

म्लेच्छं नेपालकं चेति तयोर्नैपालमुत्तमम् ॥ २ ॥

नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ।

[ग्राह्याग्राह्यताम्रस्वरूपम् ।]

सुस्निग्धं मृदुलं शोणं घनघातक्षमं गुरु ॥ ३ ॥

निर्विकारं गुरुश्रेष्ठं ताम्रं नेपालमुच्यते ।
सितकृष्णारुणच्छायं वामभेदि कठोरकम् ॥ ४ ॥

क्षालितं च पुनः कृष्णमेतन्म्लेच्छकताम्रकम् ।
पाण्डुरं कृष्णशोणं च लघु स्फुटनसंयुतम् ॥ ५ ॥

रूक्षाङ्गं सदलं ताम्रं नेष्यते रसकर्मणि ।

उत्क्लेदमोहभ्रमदाहभेदाः
ताम्रस्य दोषाः खलु दुर्धरास्ते ।
विशोधनात्तद्विगतस्वदोषं
सुधासमं स्याद्रसवीर्यपाके ॥ ६ ॥

वान्तिमूर्च्छाभ्रमोन्मादनानारुक्कुष्ठशूलकृत् ॥ ७ ॥

आयुःकान्तिबलभ्रंशकरं धातुप्रदूषणम् ।
न शुद्धं न मृतं ताम्रं तेन संशोध्य मारयेत् ॥ ८ ॥

## ताम्रशुद्धिः ॥

ताम्रं क्षाराम्लसंयुक्तं द्रावितं त(लि)प्तगैरिकम् ।
निक्षिप्तं महिषीतक्रछगणे सप्तवारकम् ॥ ९ ॥

पञ्चदोषविनिर्मुक्तं सप्तवारेण जायते ।
ताम्रनिर्द(र्म)लपत्राणि लिप्त्वा नि(नै)म्बवसिन्धुना ॥

ध्मात्वा सौवीरके क्षेपाद्विशुध्यत्यष्टवारतः ।
निंव्वंबुपट्टुलिप्तानि तापितान्यष्टवारकम् ॥ ११ ॥

विशुद्ध्यन्त्यर्कपत्राणि निर्गुण्डीरसमर्दनात् ।
कुमारीपत्रमध्ये तु शुल्बपत्रं निवेशितम् ॥ १२ ॥

पुटितं दोषनिर्मुक्तं पाण्डुरं च प्रजायते ।
इत्थं विशोधितं ताम्रं सर्वदोषविवर्जितम् ॥ १३ ॥

भवेद्रसायनकरं देहलोहकरं परम् ।
इमां शुद्धिं विजानीयाच्छिवो वा नन्दिकेश्वरः ॥ १४ ॥

बलिना निहतं ताम्रं सप्तवारं समुत्थितम् ।
सर्वदोषविनिर्मुक्तं भवेदमृतसन्निभम् ॥ १५ ॥

स्नुह्यर्कक्षीरलवणकाञ्जिकैस्ताम्रपत्रकम् ।
लिप्त्वा प्रताप्य निर्गुण्डीरसैस्सिञ्च्यात्पुनः पुनः ॥

वारान्द्वादशतश्शुद्धं लेपात्तापाच्च सेचनात् ।
खटिकां लवणं तक्रैरारनालैश्च पेषयेत् ॥ १७ ॥

तेन लिप्तं ताम्रपत्रं तप्तं तप्तं निषेचयेत् ।
षड्वारमम्लतक्रान्तर्निर्गुण्ड्याश्च विशुद्धये ॥ १८ ॥

तप्तानि ताम्रपत्राणि सेचयेत्तिक्तकारसैः ।
लिप्त्वाऽम्लतक्रलवणकाञ्जिकेन पुनः पुनः ॥ १९॥

तप्तं तप्तं त्रिधा सिञ्च्याच्छुद्धिमायाति निश्चयम् ।
गोमूत्रेण पचेद्यामं ताम्रपात्रं दृढाग्निना ॥ २० ॥

शुध्यते नाऽत्र सन्देहो मारणं चाप्यथोच्यते ।

**ताम्रभस्म ॥**

[प्रथमः प्रकारः ।]

गन्धेन ताम्रतुल्येन ह्यम्लपिष्टेन लेपयेत् ॥ २१ ॥

कण्टवेधीकृतं पत्रमन्धयित्वा पुटे पचेत् ।
उद्धृत्य चूर्णयेत्तस्मिन्पादांशं गन्धकं क्षिपेत् ॥ २२ ॥
जम्बीरैरारनालैर्वा मृगदूर्वाथवाद्रवैः ।
पिष्ट्वा पिष्ट्वा पचेद्रुद्धं सगन्धं च चतुष्पुटैः ॥ २३ ॥
मातुलुङ्गद्रवैः पिष्ट्वा पुटमेकं प्रदापयेत् ।
सितशर्करयाऽप्येकं पुटं देयं मृतं भवेत् ॥ २४ ॥

[द्वितीयः प्रकारः ।]

पाषाणभेदिमत्स्याक्षीद्रवैर्द्विगुणगन्धकम् ।
ताम्रस्य लेपयेत्पिष्टिं(त्पत्रं) रुध्वा गजपुटे पचेत् ॥

समांशेन पुनर्गन्धं दत्वा द्रावैश्च लोलयेत् ।
एवं सप्तपुटैः पक्वं ताम्रभस्म भवेद्ध्रुवम् ॥ २६ ॥

[तृतीयः प्रकारः ।]

ताम्रस्य त्रिगुणं सूतं जम्बीराम्लेन मर्दयेत् ।
आदौ मूषान्तरे क्षिप्त्वा धुत्तूरस्य तु पत्रकम् ॥ २७ ॥

तत्पृष्ठे ताम्रतुल्यं च गन्धकं चूर्णितं क्षिपेत् ।
तत्पृष्ठे मर्दितं ताम्रं पूर्वतुल्यं च गन्धकम् ॥ २८ ॥

आच्छाद्य धूर्तपत्रैस्तु रुध्वा गजपुटे पचेत् ।
स्वाङ्गशीतं ततश्चूर्णं मृतं भवति निश्चितम् ॥ २९ ॥

[चतुर्थः प्रकारः ।]

किञ्चिद्गन्धेन वाऽम्लेन क्षालयेत्ताम्रपत्रकम् ।
ताम्रपादेन सूतेन सार्द्रं(र्धं) पत्रं प्रलेपयेत् ॥ ३० ॥

ताम्रद्विगुणगन्धेन चाम्लपिष्टेन तत्पुनः ।
लिप्त्वा ह्यधोर्ध्वगं देया सुपिष्टा चाम्लपर्णिका ॥३१॥

तत्पिण्डं भाण्डगर्भे तु रुध्वा चुल्ल्यां विपाचयेत् ।
यामैकं ताम्रपाकेन भस्मीभवति निश्चितम् ॥ ३२ ॥

[पञ्चमः प्रकारः ।]

सूतमेकं द्विधा गन्धं यामं कन्याविमर्दयेत् ।
द्वयोस्तुल्ये(ल्यं) ताम्रपत्रे(त्रं) स्थाल्या गर्भे निरोधयेत् ॥

सम्यङ्मृल्लवणैस्सन्धिं पार्श्वे भस्म निधापयेत् ।
चतुर्यामं पचेच्चुल्यां पात्रपृष्ठे सगोमयम् ॥ ३४ ॥

जलं पुनः पुनर्देयं स्वाङ्गशीतं विचूर्णयेत् ।
म्रियते नाऽत्र सन्देहस्सर्वयोगेषु योजयेत् ॥ ३५ ॥

[षष्ठः प्रकारः ।]

जीर्णं ताम्रं समादाय तत्र चैतान्विनिक्षिपेत् ।
वङ्गं घोषं गजं तीक्ष्णमारं कान्तं च षट् समान् ॥३६॥

प्रत्येकं ताम्रमानेन सर्वानेकत्र धामयेत् ।

वङ्कनालेन तावत्तद्यावदर्कोऽवशिष्यते ॥ ३७ ॥

तमर्कं ढालयेत्पूर्वं निर्गुण्डीसलिलान्तरे ।
सप्तवारांश्च तन्मूलचूर्णमर्के प्रवापयेत् ॥ ३८ ॥

तेन ताम्रेण कुर्वीत वटिकामव्रणां शुभाम् ।
द्विगुणं गन्धकं लिप्त्वा बलेस्त्र्यंशं च पारदम् ॥३९॥

शुद्धं हिङ्गुलजं वाऽपि मर्दयेद्बीजपूरकैः ।
जम्बीरजैर्वा लिकुचनीरैस्सम्यक्प्रमर्दयेत् ॥ ४० ॥

त्रिदिनं तद्विशोष्याऽथ भाण्डान्तस्तन्निवेशयेत् ।
उपरिष्टात्ताम्रघटीमधोवक्त्रां निधाय च ॥ ४१ ॥

दृढं विलेपयेत्पश्चात्कटोरीं मृण्मयीं क्षिपेत् ।
अतिप्रयत्नाल्लिम्पेत्तां यथा वारा न भिद्यते ॥ ४२ ॥

अग्निचुल्लि ततो दत्वा पूरयित्वा जलैरधः ।
प्रज्वालयेद्दीप्तिहोत्रं मृदुमध्योत्तमक्रमात् ॥ ४३ ॥

दिनानि षट् समादाय स्वाङ्गशीतं तु पालकम् ।
निर्भिद्य शुल्बं गृह्णीत मृतं सूतेन यत्नतः ॥ ४४ ॥

ततः खल्वे विचूर्ण्यैतद्यथेष्टं विनियोजयेत् ।

[ताम्रभस्मशुद्धिः ।]

नानाविधं मृतं ताम्रं शुद्ध्यर्थं भागपञ्चकम् ॥ ४५ ॥

भागैकं श्वेतकाचं च भागं श्वेतं च टङ्कणम् ।
मूषायां मिश्रितं क्षिप्त्वा भागैकं चाभ्रपत्रकम् ॥ ४६ ॥

ऊर्ध्वं दत्वा निरुध्याऽथ ध्माते ग्राह्यं सुशीतलम् ।
निर्दोषं तु भवेत्ताम्रं सर्वरोगहरं भवेत् ॥ ४७ ॥

अथवा मारितं ताम्रमम्लेनैकेन मर्दयेत् ।

तद्गोलं सूरणस्यान्तः रुध्वा सर्वत्र लेपयेत् ॥ ४८ ॥

शुष्कं गजपुटे पच्यात्सर्वदोषहरं भवेत् ।
वान्ति भ्रान्ति विरेकं च न करोति कदाचन ॥४९॥

[सप्तमः प्रकारः ।]

विलिप्य लिकुचद्रावपिष्टगन्धाश्मपङ्कतः ।
ताम्रपत्राणि सञ्छाद्य स्थालीमध्ये निरुध्य च ॥ ५० ॥

याममात्रं पचेत्सम्यक् शीतान्याकृष्य चूर्णयेत् ।
तद्रस वल्लमात्रं हि ताम्बूलीदलवेष्टितम् ॥ ५१ ॥

भक्षितं वामयित्वाऽथ रेचयित्वा द्वियामतः ।
ज्वरं विनाशयेन्नृणां शूलाध्मानसमन्वितम् ॥ ५२ ॥

विषं गरं च वेगेन वामयत्येव निश्चितम् ।
पथ्यमत्र प्रदातव्यं गव्यं तक्रं च भक्तकम् ॥ ५३ ॥

अतिरेकेऽतिवान्तौ च समोहे चातिमात्रके ।
तत्तदौचित्ययोगेन कुर्याच्छीतां प्रतिक्रियाम् ॥ ५४ ॥

अतिवान्तौ भजेदभ्र(भृ)ष्टमिक्षुदण्डं सुशीतलम् ।
यद्वा बिल्वभवं क्वाथं सितया सह पाचयेत् ॥ ५५ ॥

बर्बूरत्वग्रसः पेयो विरेके तक्रसंयुतः ।

[अष्टमः प्रकारः ।]

शुल्बतुल्येन सूतेन बलिना तत्समेन च ॥ ५६ ॥

तदर्धांशेन तालेन शिलया च तदर्धया ।
विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसन्निभाम् ॥५७॥

यन्त्राध्यायविनिर्दिष्टगर्भयन्त्रोदरान्तरे ।
कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत् ॥ ५८ ॥

प्रपचेद्यामपर्यन्तं स्वाङ्गशीतं विचूर्णयेत् ।

[ताम्रस्य गुणाः ।]

तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं
सल्लीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरम् ।
गुल्मप्लीहयकृत्क्षयाग्निसदनं मेहं च मूलामयं
दुष्टां च ग्रहणीं हरेद्ध्रुवमिदं सर्वामयध्वंसनम् ॥

ताम्रं तिक्तकषायकं च मधुरं पाकेऽथ वीर्योष्णकं
कोष्णं पित्तकफापहं जठररुक्कुष्ठामजूर्त्यन्तकृत् ।
ऊर्ध्वाधःपरिशोधनं च विषहृत्स्थौल्यापहं क्षुत्करं
दुर्नामक्षयपाण्डुरोगशमनं नेत्र्यं परं लेखनम् ॥

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ चतुर्थोल्लासः ॥



# ॥ पञ्चम उल्लासः ॥

## कान्ततीक्ष्णमुण्डलोहाः ॥

### लोहोत्पत्तिः ॥

श्रीभैरवः—

कान्तायस्तीक्ष्णमुण्डाख्यलोहोत्पत्तिरथोच्यते ।
देवासुरसमूहेन मथ्यमाने महोदधौ ॥ १ ॥

समुत्पन्नं पुरा तस्मिन्नमृतं देवजीवनम् ।
पीयमानात्सुरैस्तस्मान्निपेतुः क्षुद्रबिन्दवः ॥ २ ॥

ज्ञात्वा तान्भूगतान्यन्ता गोपयामास धूर्जटिः ।
लोहपाषाणरूपेण कृत्वा तान्वसुधातले ॥ ३ ॥

ोगाभिभूता ये मानवा न भजन्त्वमून् ।
वं शिवगुप्ता ये सुधाया बिन्दवः पुरा ॥ ४ ॥

ं मया समासेन कथ्यते साधनं स्फुटम् ।
ादिरोगनाशार्थं यथाबुद्धयनुसारतः ॥ ५ ॥

तायस्तीक्ष्णमुण्डाख्यं लोहमेवमपि त्रिधा ।
यनेभ्यस्सर्वेभ्यो विद्याच्छतगुणाधिकम् ॥ ६ ॥

## कान्तलोहः ॥

स्कान्तं कान्तलोहं कान्तं स्यात्कृष्णलोहकम् ।
तायसं महालोहं काललोहं च सप्तधा ॥ ७ ॥

## [अशुद्धकान्तलोहसेवनजा दोषाः ।]

ाडां वह्निदौर्बल्यं महारोगान्मृतिं तथा ।
ति सेवनाल्लोहमशोधितममारितम् ॥ ८ ॥

ात्कान्तस्य संशुद्धिर्मारणं च विधीयते ।

## कान्तग्रहणविधिः ॥

न्मत्तगजस्सूतः कान्तमङ्कुशमुच्यते ॥ ९ ॥

ज्ञात्वा गृहीतव्यं तत्प्रयत्नेन भूयसा ।
तातपनिक्षिप्तं वर्जयेत्सुरसुन्दरि ! ॥ १० ॥

स्थितं च यत्कान्तं छागरक्तेन भावयेत् ।
रक्तप्रलिप्तेन चर्मणा तत्प्रवेष्टयेत् ॥ ११ ॥

चर्म परीवेष्ट्य विन्यसेत्पूर्ववत्क्षितौ ।
तं सप्तभिर्मासैस्तोयकुम्भे विनिक्षिपेत् ॥ १२ ॥

ुष्पैस्सदा पूज्यं रक्तगन्धानुलेपनैः ।
(जि)तं मद्यमांसैश्च योज्यं रसरसायने ॥ १३ ॥

संस्कृत छागरक्तेन भ्रामकं चुंबकं भवेत् ।
अनेन क्रमयोगेन द्रावकं भवति प्रिये ! ॥ १४ ॥

कान्तलोहं विना सूतो देहे न क्रामति क्वचित् ।
न कान्तेन विना सूतः कान्तस्सूतविवर्जितः ॥ १५ ॥

कान्तसूतसमायुक्तः प्रयोगो देहधारकः ।
पुरा प्रोक्तं मया सर्वं कान्तसत्वं यथाविधि ॥ १६ ॥

अधुना संप्रवक्ष्यामि कान्तसंस्कारतद्गुणान् ।

### कान्तशुद्धिः ॥

शशरक्तेन संलिप्तं कान्तपत्रं सुधामितम् ॥ १७ ॥

त्रिवारं चाग्निना देवि ! दोषं नैसर्गिकं त्यजेत् ।
त्रिफलाष्टगुणे तोये त्रिफला षोडशं पलम् ॥ १८ ॥

तत्क्वाथपादशेषं च कान्तस्य पलपञ्चकम् ।
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ॥ १९ ॥

एवं प्रलीयते दोषो गिरिजो लोहसंभवः ।
कान्तलोहमयं चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥ २० ॥

धान्याम्लैः क्षालितं भूयः शोषितं शुद्धिमाप्नुयात् ।
रत्न(नक्त)माला हंसपादी गोजिह्वा त्रिफलाऽमृता ॥

गोपाली तुंबुरुर्दन्ती गोमूत्रे पेषयेदिमाः ।
तत्कल्के कान्तपत्रं तु तप्तं तप्तं द्विसप्तधा ॥ २२ ॥

सेचयेत्कान्तलोहं तु सर्वदोषनिवृत्तये ।

### [कान्तसिद्धिक्रमः ।]

क्रमः कान्तस्य सिद्ध्यर्थं कर्तव्यो मन्त्रपूर्वकम् ॥ २३ ॥

उद्भवोद्भवशब्दस्स्याच्चतुर्थ्यन्तोऽमृतात्परम् ।
स्वाहान्तः प्रणवश्चाऽऽदौ मन्त्रोऽयं मर्दने स्थितः ॥

रक्षायै लोहरसयोरयमेवैकमुद्भवम् ।
विना स्वाहेति तस्यान्ते फडन्तं योजयेत्प्रिये ! ॥ २५ ॥

प्रणवोर्ध्वं नमश्चण्डं वज्रपाषाण इत्यपि ।
ततः परं महावज्रसेनाधिपतये नमः ॥ २६ ॥

द्विरुक्तस(ख)रुशब्दस्स्यान्महाविद्या(बाहो)बलाय च ।
ततस्स्वाहेति मन्त्रोऽयं बलिकर्मणि पूजितः ॥ २७ ॥

अनेनैव बलिं कृत्वा यथोक्तामाचरेत्क्रियाम् ।

## लोहभस्मविधिः ॥

### [प्रथमः प्रकारः ।]

स्तन्येन हिङ्गुलस्याथ पेषयेत्पलपञ्चकम् ॥ २८ ॥

तेनैव पत्रं कान्तस्य लिम्पेत्पञ्चपलोन्मितम् ।
रुध्वा गजपुटे पाच्यं कषायैस्त्रैफलैः पुनः ॥ २९ ॥

जम्बीरैरारनलैर्वा विंशत्यंशेन हिङ्गुलम् ।
पिष्ट्वाऽऽलिप्य पुटे रुध्वा तल्लोहे पाचयेत्पुनः ॥३०॥

रुद्धं पुटेत्पचेद्रात्रौ प्रातर्द्रावैश्च भावयेत् ।
एवमष्टदिनं कुर्यात्त्रिविधं म्रियते ह्ययः ॥ ३१ ॥

### [द्वितीयः प्रकारः ।]

चिञ्चापत्रनिभं कुर्यात्कान्तं तीक्ष्णं च मुण्डकम् ।
मृत्पात्रस्थं क्षिपेद्धर्मे दन्तीद्रावैः प्रपूरयेत् ॥ ३२ ॥

पत्रं पुनः पुनस्तावद्यावत्तरति तत्स्वयम् ।
म्रियते तीव्रघर्मेण तच्चूर्णीकृत्य योजयेत् ॥ ३३ ॥

[तृतीयः प्रकारः ।]

कान्तायस्तीक्ष्णमुण्डानां चूर्णं मत्स्याक्षिजैर्द्रवैः ।
आतपे त्रिदिनं भाव्यं त्रिदिनं चित्रकद्रवैः ॥ ३४ ॥

त्र्यहं त्रिकण्टकरसैस्सहदेवीद्रवैर्दिनम् ।
गोमूत्रैस्त्रिफलाक्वाथैर्भावयेच्च त्र्यहं त्र्यहम् ॥ ३५ ॥

उक्तद्रवैस्ततो मर्द्यं क्रमाद्देयं पुटं पुटम् ।
रुध्वा गजपुटैरेवं मृतं योगेषु योजयेत् ॥ ३६ ॥

[चतुर्थः प्रकारः ।]

स्थाल्यां वा लोहपात्रे वा लोहदर्व्या विचालयन् ।
पाचयेत्त्रिफलाक्वाथैर्दिनैकं लोहचूर्णकम् ॥ ३७ ॥

तत्पिण्डं त्रिफलातोयैः पिष्ट्वा रुध्वा पुटे पचेत् ।
षोडशाङ्गुलगर्तान्तर्निर्वातेऽहर्निशं पचेत् ॥ ३८ ॥

एवं त्रिधा प्रकर्तव्यं स्थालीपाकं पुटान्तकम् ।
भृङ्गार्द्रकं तालमूलं हस्तिकर्ण्याश्च मूलकम् ॥ ३९ ॥

शतावरीविदार्योश्च मूलं तत्त्रिफलाम्भसि ।
संपेष्य पूर्ववत्स्थाल्यां पाच्यं पेष्यं त्रिधा पुटैः ॥४०॥

पाच्यं ततः पुनर्नव्याः क्वाथैश्च दशमूलतः ।
बृहत्याश्च कषायेण बीजपूरस्य च द्रवैः ॥ ४१ ॥

ब्रह्मबीजरसैश्शिग्रुक्वाथैर्गोपयसाऽपि च ।
प्रत्येकं सम्प्रपेष्याऽऽदौ पूर्वगर्ते पुटे पचेत् ॥ ४२ ॥

भावयेत्तद्द्रवेणैव पुटान्ते याममात्रकम् ।
प्रत्येकमेवं सम्पेष्य पुटयेद्भावयेत्क्रमात् ॥ ४३ ॥

म्रियते नाऽत्र सन्देहः कान्तं तीक्ष्णं च मुण्डकम् ।

[पञ्चमः प्रकारः ।]

शुद्धसूतं द्विधा गन्धं खल्वे कृत्वा तु कज्जलीम् ॥
द्वयोस्समं कान्तचूर्णं मर्दयेत्कन्यकाद्रवैः ।
यामद्वयात्समुद्धृत्य तद्गोलं ताम्रपात्रके ॥ ४५ ॥
आच्छाद्यैरण्डपत्रैश्च यामार्धेऽत्युष्णतां गतम् ।
धान्यराशौ न्यसेत्पश्चात्त्रिदिनान्ते समुद्धरेत् ॥ ४६ ॥
सम्पेष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ।
कान्तं तीक्ष्णं च मुण्डं च निरुत्थं जायते मृतम् ॥
स्वर्णादीन्मारयेदेवं चूर्णीकुर्याच्च लोहवत् ।
सिद्धयोगमथाऽऽख्यातं सिद्धानां सम्मुखागतम् ॥४८॥
अनुभूतं मया देवि ! सर्वरोगापहारकम् ।
नायः पचेत्पञ्चपलप्रमाणा-
दधो न चोर्ध्वं त्रिदशप्रमाणात् ॥ ४९ ॥

[षष्ठः प्रकारः ।]

अर्जुनस्य त्वचः पेष्याः काञ्जिकेनातिलोलिताः ।
तन्मध्ये कान्तचूर्णं च कांस्यपात्रे विनिक्षिपेत् ॥ ५० ॥
दिनैकं धारयेद्धर्मे द्रवैः पूर्यं पुनः पुनः ।
अर्जुनैस्सारनालैर्वा त्रिविधं मारयेदयः ॥ ५१ ॥

[सप्तमः प्रकारः ।]

द्रवैः कुक्कुटपत्रोत्थैः कान्तचूर्णं विमर्दयेत् ।
दिनं च ह्यातपे तीव्रे द्रवैर्मर्द्यं त्रिकण्टजैः ॥ ५२ ॥
वन्ध्याभृङ्गपुनर्नव्यास्सगोमूत्रैर्दिनं पुनः ।
गोमूत्रैस्त्रिफला क्वाथ्या तत्कषायेण भावयेत् ॥ ५३ ॥

त्रिसप्ताहं प्रयत्नेन दिनैकं मर्दयेत्ततः ।
रुध्वा गजपुटे पच्याद्दिनं क्वाथेन मर्दयेत् ॥ ५४ ॥
दिवा मर्द्यं पुटेद्रात्रावेकविंशद्दिनावधि ।
एकविंशत्पुटैरेवं म्रियते त्रिविधं ह्ययः ॥ ५५ ॥

[अष्टमः प्रकारः ।]

माक्षिकं च शिला ह्यम्लैर्हरिद्रा मरिचांघ्रि च ।
पिष्ट्वा लेप्यं कान्तपत्रं तप्तं तप्तं निषेचयेत् ॥ ५६ ॥
सप्तधा त्रैफले क्वाथे जलेन क्षालयेत्पुनः ।
कुट्टयेल्लोहदण्डेन पेषयेत्त्रैफले जले ॥ ५७ ॥
षोडशांशेन लोहस्य दातव्यं माक्षिकं शिला ।
अम्लेन मर्दितं रुध्वा गजाख्यैकपुटे पचेत् ॥ ५८ ॥
निरुत्थं जायते भस्म कान्तं तीक्ष्णं च मुण्डकम् ।

[नवमः प्रकारः ।]

तिन्दूफलस्य मज्जायां खड्गं लिप्त्वाऽऽतपे खरे ॥
धारयेत्कांस्यपात्रान्तर्दिनैकेन स्फुटत्यलम् ।
लेपं पुनः पुनः कुर्याद्दिनान्ते तं प्रपेषयेत् ॥ ६० ॥
त्रिफलाक्वाथसंयुक्तं दिनैकेन मृतो भवेत् ।

[लोहभस्मनोऽमृतीकरणम् ।]

तोयाष्टभागशेषेण त्रिफला पलपञ्चकम् ॥ ६१ ॥
घृतं क्वाथस्य तुल्यं स्याद्घृततुल्यं मृताऽऽयसम् ।
पाचयेत्ताम्रपात्रे तु लोहदर्व्या विचालयन् ॥ ६२ ॥
मृद्वग्निना पचेद्यावत्तावज्जीर्यति तद्द्रवम् ।
लोहतुल्या सिता योज्या सुपक्वामवतारयेत् ॥ ६३ ॥

योगवाहमिदं ख्यातं मृतलोहं महाऽमृतम् ।
इत्थं कान्तस्य तीक्ष्णस्य मुण्डस्यापि ह्ययं विधिः ॥६४॥

घृततुल्यं मृतं लोहं लोहपात्रगतं पचेत् ।
जीर्णे घृते समादाय सर्वयोगेषु योजयेत् ॥ ६५ ॥

" ओं ओं अमृतेन्द्रं भक्षयामि नमः "

[कान्तलक्षणम् ।]

पात्रे यस्मिन्प्रविशति जले तैलबिन्दुर्न सर्पेत्
हिङ्गुर्गन्धं विसृजति निजां तिक्ततां निम्बकल्कः ।
पाके दुग्धं भवति शिखराकारतां नैव भूमौ
कान्तं लोहं तदिदमुदितं लक्षणोक्तं न चान्यत् ॥

[लोहपाकस्वरूपम् ।]

लोहपाकस्त्रिधा प्रोक्तो मृदुमध्यखरात्मकः ।
पङ्कोत्करसमः पूर्वः पिण्डपाकस्तु मध्यमः ॥ ६७ ॥

तृतीयः खरपाकस्स्याद्वालुकासदृशः प्रिये ! ।

[निरुत्थभस्मपरीक्षा ।]

पाकं वर्णं तथा गन्धं ज्ञात्वा लोहस्य वह्नितः ॥ ६८ ॥

उत्तार्याऽथ ततश्शुद्धं लोहपात्रान्तरे न्यसेत् ।
लोहमातङ्गपञ्चास्या गन्धमाक्षीकहिङ्गुलाः ॥ ६९ ॥

सर्वमेतन्मृतं लोहं ध्मातव्यं मित्रपञ्चकैः ।
यद्येवं स्यान्निरुत्थानं सेव्यं वारितरं हितम् ॥ ७० ॥

मध्वाऽऽज्येन समायुक्तं लोहं तारेण संयुतम् ।
अन्धमूषागतं ध्मातं गृह्णीयात्स्वाङ्गशीतलम् ॥ ७१ ॥

लोहमध्यगतं तारं पूर्वमानं भवेद्यदि ।
तदा लोहं निरुत्थं स्यादन्यथा साधयेत्पुनः ॥ ७२ ॥
गन्धकं चोत्थितं लोहं तुल्यं खल्वे विमर्दयेत् ।
दिनैकं कन्यकाद्रावै रुध्वा गजपुटे पचेत् ॥ ७३ ॥
इत्येवं सर्वलोहानां कर्तव्येत्थं निरुत्थितिः ।

**कान्तादिभस्मनां गुणाः ॥**

कान्तसिन्दूरमायुष्यमारोग्यं बलवीर्यदम् ॥ ७४ ॥
देहदार्ढ्यकरं श्रेष्ठं कुर्यादिन्द्रियपाटवम् ।
त्रिदोषशमनं राजयक्ष्मरोगविनाशनम् ॥ ७५ ॥
ज्वरासृक्पित्तपाण्ड्वादीन्हन्यादष्टमहागदान् ।
यद्यद्रोगहरैर्योगैस्तत्तद्रोगहरं भवेत् ॥ ७६ ॥
तीक्ष्णं शस्त्रायसं शस्त्रं पिण्डं पिण्डायसं शठम् ।
आयसं निशितं तीव्रं लोहखड्गं च मुण्डजम् ॥ ७७ ॥
अयश्चित्रायसं प्रोक्तं चीनजं च त्रिपञ्चधा ।
मुण्डं मुण्डायसं लोहं कृष्णलोहं शिलोद्भवम् ॥ ७८ ॥
कान्तलोहप्रकारेण मारणं तीक्ष्णमुण्डयोः ।
तीक्ष्णलोहं कषायाम्लं तिक्तकं कटुकं लघु ॥ ७९ ॥
शीतलं लेखनं रूक्षं कफपित्तास्रपाण्डुजित् ।
प्रमेहसर्वशूलघ्नं तीक्ष्णं मुण्डाधिकं गुणैः ॥ ८० ॥
चक्षुष्यं मुण्डलोहं तु कषायं स्वादु तिक्तकम् ।
लेखनं वातहृच्छीतं कृमिपित्तकफप्रणुत् ॥ ८१ ॥
श्वयथूदरशूलार्शःकुष्ठपाण्डुप्रमेहजित् ।

॥ इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ पञ्चमोल्लासः

## ॥ षष्ठ उल्लासः ॥

### वङ्गम् ॥

श्रीभैरवः—

खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते ।
खुरं तत्र गुणैश्श्रेष्ठं गुणहीनं तु मिश्रकम् ॥ १ ॥

धवलं मृदुलं स्निग्धं द्रुतद्रावं सगौरवम् ।
निश्शब्दं खुरवङ्गं स्यान्मिश्रकं श्यामशुभ्रकम् ॥ २ ॥

त्रपु त्रपुसमारूपं वङ्गं च कुटिलं हिमम् ।
कुरूप्यं विच्चटं रङ्गं पूतिगन्धं रसाह्वयम् ॥ ३ ॥

स्वच्छमुष्णासहं शीतं सूक्ष्मपत्रकरं लघु ।
रुङ्नाशे रूप्यकरणे तद्वङ्गं श्रेष्ठमुच्यते ॥ ४ ॥

### वङ्गशुद्धिः ॥

द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसैः ।
विशुध्यति त्रिवारेण खुरवङ्गं न संशयः ॥ ५ ॥

अम्लतक्रविनिष्पिष्टवर्षाभूवृ(वि)षसिन्धु(तिन्दु)भिः ।
कट्वलाबुगतं वङ्गं द्वितयं परिशुध्यति॥ ६ ॥

### वङ्गभस्म ॥

[प्रथमः प्रकारः ।]

सतालेनार्कदुग्धेन लिप्त्वा वङ्गदलान्यथ ।
बोधिचिञ्चात्वचः क्षारैर्दद्याल्लघुपुटानि च ॥ ७ ॥

मर्दयित्वा चरेद्भस्म तद्रसादिषु कीर्तितम् ।

[द्वितीयः प्रकारः ।]

नागवच्छोधयेद्वङ्गं तद्वदश्वत्थचिञ्चयोः ॥ ८ ॥

तद्भस्म हरितालं च तुल्यमम्लेन मर्दयेत् ।
पलाशोत्थद्रवैर्वाऽथ लोलयित्वाऽन्धयेत्पुटे ॥ ९ ॥

उद्धृत्य दशमांशेन तालेन सह मर्दयेत् ।

[तृतीयः प्रकारः ।]

पूर्वद्रावैस्सहालोड्य रुध्वा गजपुटे पचेत् ॥ १० ॥

एकविंशत्पुटैर्वङ्गो मृतो भवति रोगहा ।
शिरीषरजनीचूर्णैः कुमार्या युतगोलकम् ॥ ११ ॥

सूतलिप्तं वङ्गपत्रं गोलकं सममर्दितम् ।
रुध्वा लघुपुटैः पक्वं मृतं स्यात्पूर्वसंख्यया ॥ १२ ॥

अक्षभल्लातकीतोयैः पिष्ट्वा पत्राणि लेपयेत् ।
ततस्तिलखरीमध्ये क्षिप्त्वा रुध्वा पुटैः पचेत् ॥ १३ ॥

चत्वारिंशद्गजपुटैर्वङ्गकं भस्म जायते ।

**वङ्गस्य गुणाः ॥**

वङ्गं तीक्ष्णोष्णकटुकमीषद्वातप्रकोपनम् ॥ १४ ॥

मेदश्श्लेष्मामयघ्नं च क्रिमिघ्नं मेहनाशनम ।
हिमं कषायलवणं पाण्डुदाहहरं सरम् ॥ १५ ॥

लेखनं पित्तलं किञ्चित्त्रपु सीसं च तद्गुणम् ।

**सीसकम् ॥**

सीसकं तु जडं शीतं यवनेष्टं भुजङ्गमम् ॥ १६ ॥

योगीष्टं नागमुरगं कुवङ्गं परिपिष्टकम् ।

मृदु कृष्णायसं पक्ष्मतारशुद्धिकरं स्मृतम् ॥ १७ ॥

शिरावृत्तं च वङ्गं स्याच्चीनपिष्टं च षोडश ।
सीसं तु वङ्गसाम्यं स्याद्रसवीर्यविपाकतः ॥ १८ ॥

[अशुद्धवङ्गनागसेवने दोषाः ।]

पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुज्वरश्लेष्मवातपित्तप्रदौ स्मृतौ ॥ १९ ॥

[ग्राह्याग्राह्यनागस्वरूपम् ]

द्रुतद्रावं महाभारं छेदे कृष्णं समुज्ज्वलम् ।
पूतिगन्धं बहिः कृष्णं शुद्धं सीसमतोऽन्यथा ॥ २० ॥

नागशुद्धिः ॥

निर्गुण्डीमूलचूर्णेन सार्कदुग्धेन लेपयेत् ।
नागपत्रं ततश्शुष्कं द्रावयित्वा निषेचयेत् ॥ २१ ॥

लिप्त्वा द्राव्यं पुनस्सेच्यं सप्तवारं विशुद्धये ।
निशातुम्बुरुबीजानि कोकिलाक्षीकुबेरकम् ॥ २२ ॥

गौरीफलं मल्लिका च मोक्षो ब्रह्मा मयूरकम् ।
यथालाभं तु भस्मैषां वज्रीक्षीरेण भावयेत् ॥ २३ ॥

तन्मध्ये द्रावितं नागं शुद्धं सेच्यं तु सप्तधा ।
महिषस्यास्थिचूर्णेन सुपाकं मूत्रसेचनात् ॥ २४ ॥

वङ्गं शुद्धं भवेत्तद्वन्नागो नागास्थिमूत्रतः ।

नागभस्म ॥

[प्रथमः प्रकारः ।]

अश्वत्थचिञ्चात्वग्भस्म नागस्य चतुरंशतः ॥ २५ ॥

क्षिप्त्वा चुल्ल्यां पचेदग्नौ चालयेल्लोहचट्टुना ।
यावद्भस्म समुद्धृत्य भस्मतुल्यां मनःशिलाम् ॥ २६ ॥
जम्बीरैरारनालैर्वा पिष्ट्वा रुध्वा पुटे पचेत् ।
स्वाङ्गशीतं पुनः पिष्ट्वा विंशत्यंशे शिलाम्लके ॥ २७ ॥
एवं षष्टिपुटैः पक्त्वा नागस्स्यात्तु निरुत्थितः ।

[द्वितीयः प्रकारः ।]

अथवा नागपत्राणि चूर्णलिप्तानि खर्परे ॥ २८ ॥
अल्पाग्नौ पाचयेद्यामं भस्म तच्चिञ्चलकद्रवैः ।
भर्जयेल्लोहपात्रे तत्पार्थदण्डेन चालयन् ॥ २९ ॥
यामषोडशपर्यन्तं द्रवं देयं पुनः पुनः ।
दण्डेन मर्दयेद्गाढमुद्धृतं चित्रकद्रवैः ॥ ३० ॥
लोलयित्वा निरुद्ध्याऽथ षट्पुटैर्म्रियते लघु ।

[तृतीयः प्रकारः ।]

चिञ्चाक्षमिक्षुभल्लातवाशावज्रलताभवैः ॥ ३१ ॥
अपामार्गार्जुनाश्वत्थसमुद्भूतैश्च भस्मभिः ।
दृढं पालाशदण्डेन लोहपात्रे तु भर्जयेत् ॥ ३२ ॥
सप्तभिर्दिवसैरेवं म्रियते नात्र संशयः ।

[चतुर्थः प्रकारः ।]

पिष्ट्वाऽगस्त्यं च भूनागं लिप्त्वा भाण्डं विशोधयेत् ॥
तद्भाण्डे द्रावयेन्नागं द्रुते नागे विनिक्षिपेत् ।
वाशाचिञ्चवटयोः क्षारं वाशाकाष्ठेन घट्टयेत् ॥ ३४ ॥

यामैकं पाचयेच्चुल्ल्यां समुद्धृत्य विमिश्रयेत्।
सञ्चूर्ण्य च शिलाताप्ये वाशकक्षारसंयुतम् ॥ ३५ ॥

चतुस्तुल्यं पूर्वनागं विंशत्येकपुटैः पचेत्।
द्विपुटं चिञ्चिकक्षारैर्देयं वाशारसान्वितैः ॥ ३६ ॥

नागस्सिन्दूरवर्णाभो म्रियते सर्वकार्यकृत्।

[नागभस्मनो गुणाः।]

अत्युष्णं सीसकं स्निग्धं तिक्तं वातकफापहम् ॥ ३७ ॥

प्रमेहतोयदोषघ्न दीपनं चाऽऽमवातनुत्।

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ षष्ठोल्लासः ॥



# ॥ सप्तम उल्लासः ॥

## पित्तलम् ॥

भैरवः—

रीतिः क्षुद्रसुवर्णं
सितकनकं पिङ्गलं च पित्तलकम्।
लोहितकमारकूटं
पिङ्गललोहं च पीतकं नवधा ॥ १ ॥

रीतिका काकतुण्डीति द्विविधं पित्तलं भवेत्।
सन्तप्ता काञ्जिके क्षिप्ता ताम्राभा रीतिका मता ॥ २ ॥

एवं या जायते कृष्णा काकतुण्डीति सा मता।

[ग्राह्यग्राह्यपित्तलस्वरूपम् ।]

गुर्वी मृद्वी च पीता(कपोता)भा साराङ्गी ताडनक्षमा ॥

सुस्निग्धा मसृणाङ्गी च रीतिरेतादृशी शुभा ।
शुद्धा स्निग्धा मृदुश्शीता सुरङ्गा सूत्रपत्रिणी ॥ ४ ॥

हेमोपमा शुभाश्चत्था जात्या रीतिः प्रकीर्तिता ।
पाण्डुः पीता खरा रूक्षा बर्बरा घट्टनाक्षमा ॥ ५ ॥

पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ।
रीतिस्तिक्तरसा रूक्षा जन्तुघ्नी सास्रपित्तनुत् ॥ ६ ॥

कृष्णा कुष्ठहरा योगादुष्णवीर्या च शीतला ।
काकतुण्डी कु(ग)तस्नेहा राजरीतिगुणानुगा ॥ ७ ॥

राजरीतिस्तु निर्दिष्टा रीतिकासदृशी गुणैः ।

[पित्तलस्य गुणाः ।]

रीतिकायुगलं रूक्षं सतिक्तं लवणं सरम् ॥ ८ ॥

शोभनं पाण्डुवातघ्न बलवीर्यायुवर्धनम् ।
रीतिका कटुतिक्तोष्णा प्लीहानाहनिबर्हणी ॥ ९ ॥

रूक्षा कफास्रपित्तं च हन्यात्स्वादु प्रयोजिता ।
राजरीतिः काकतुण्डी राजपुत्री महेश्वरी ॥ १० ॥

ब्राह्मणी ब्रह्मरीतिश्च कपिला पिङ्गलाऽपि च ।

कांस्यम् ॥

कांस्यं सौराष्ट्रिकं घोषं कंसीयं वह्निलोहकम् ॥ ११ ॥

दीप्तलोहं घोषपु(घृ)ष्यं दीप्तकं च नवाह्वयम् ।
अष्टभागेन ताम्रेण द्विभागकुटिलेन च ॥ १२ ॥

विद्रुतेन भवेत्कांस्यं तत्सौराष्ट्रभवं शुभम् ।

[ग्राह्याग्राह्यकांस्यस्वरूपम् ]

तीक्ष्णशब्दं मृदु स्निग्धमीषच्छ्यामलशुभ्रकम् ॥ १३ ॥
निर्मलं दाहरक्तं च षोढा कांस्यं प्रशस्यते ।
श्वेतदीप्तं मृदुज्योति शब्दाढ्यं स्निग्धनिर्मलम् ॥
घनाग्निसहसूत्ताङ्गं कांस्यमुत्तममीरितम् ।
तत्पीतं दहने ताम्रं घनं रूक्षं घनासहम् ॥ १५ ॥
मन्दनादं गतज्योति सप्तधा कांस्यमुत्सृजेत् ।

कांस्यस्य गुणाः ॥

घृतमेकं विना चान्यत्सर्वं कांस्यगतं नृणाम् ॥ १६ ॥
भुक्तमारोग्यसुखदं हितं सात्म्यकरं तथा ।
कांस्यं तु लघुतिक्तोष्णं लेखनं दृक्प्रसादनम् ॥ १७ ॥
कृमिकोष्ठहरं वातपित्तघ्नं भोजने हितम् ।

वर्तलोहः ॥

वर्तलोहं वर्ततीक्ष्णं वर्तकं लोहसङ्करः ॥ १८ ॥
नीलिका नीललोहं च लोहकं वट्टलोहकम् ।
कांस्यार्करीतिलोहाहिजातं तद्वर्तलोहकम् ॥ १९ ॥
तदेव पञ्चलोहाख्यं लोहविद्भिरुदाहृतम् ।
तद्भाण्डसाधितं सर्वमन्यन्यञ्जनपूर्वकम् ॥ २० ॥
अम्लेन वर्जितं चातिदीपनं पाचनं शुभम् ।

वर्तलोहशुद्धिर्मारणं च ॥

द्रुतमश्वजले क्षिप्तं वर्तलोहं विशुध्यति ॥ २१ ॥

म्रियते गन्धतालाभ्यां पुटितं वर्तलोहकम् ।
तेषु तेषु विभागेषु योजनीयं यथाविधि ॥ २२ ॥

**वर्तलोहगुणाः ॥**

वर्तलोहं कटूष्णं च तिक्तं च शिशिरं तथा ।
कफजित्पित्तशमनं मधुरं दाहमेहनुत् ॥ २३ ॥
रूक्षं रुच्यं कृमिघ्नं च नेत्र्यं मलविशोधनम् ।

**पित्तलादीनां शोधनभस्मविधिः ॥**

त्रिक्षारं पञ्चलवणं सप्तधाऽम्लेन भावयेत् ॥ २४ ॥
कांस्यारघोषपत्राणि तेन कल्केन लेपयेत् ।
रुध्वा पुटेद्गजपुटे शुद्धिमायाति नान्यथा ॥ २५ ॥
ताम्रवन्मारणं तेषां कृत्वा सर्वत्र योजयेत् ।

मृतानि लोहान्यमृतीभवन्ति
निघ्नन्ति युक्तानि महामयांश्च ।
अभ्यासयोगाद्दृढदेहसिद्धिं
कुर्वन्ति रुग्जन्मजराविनाशम् ॥ २६ ॥
नागेन स्वर्णं रजतं च ताप्यैः
गन्धेन ताम्रं शिलया च नागम् ।
तालेन वङ्गं त्रिविधं तु लोहं
नारीपयो घ्नन्ति च हिङ्गुलेन ॥ २७ ॥
तथाऽभ्रसत्वं बलिनोपलोहं
वज्रेण सूतं विनिहन्ति सद्यः ॥ २८ ॥

**अभ्रकसत्वम् ॥**

वज्राभ्रकस्य सत्सत्वं वक्ष्यामि शृणु भैरवि ! ।

चतुर्धाऽभ्रकसत्वं स्यात्कठिनं मृदुलं द्रुतिः ॥ २९ ॥
बीजं च गुणवज्ज्ञेयं तत्क्रमादुत्तरोत्तरम् ।

सत्वपातनायाभ्रकसिद्धिः ॥

धान्याभ्रकं रविक्षीरे घर्मे स्थाप्यं दिनावधि ॥ ३० ॥
तच्छ्लक्ष्णं पेषयेत्पट्टे शरावे तं निरोधयेत् ।
सम्यक् पचेद्गजपुटे रविक्षीरे पचेत्पुनः ॥ ३१ ॥
मर्दनं पुटपाकं च कुर्यादेवं तु सप्तधा ।
तथा जम्बीरनीरे च निचुलस्य रसे तथा ॥ ३२ ॥
एतसिद्धघनं श्रेष्ठं निश्चन्द्रं सत्वपातने ।
घनमारकसारैर्वा व्यस्तैर्वाऽथ समस्तकैः ॥ ३३ ॥
पिष्ट्वा धान्याभ्रकं श्लक्ष्णं रुध्वा गजपुटे पचेत् ।

अभ्रककठिनसत्वम् ॥

लाक्षागुग्गुलुदग्धोर्णासर्जसर्जरसं पटु ॥ ३४ ॥
शशास्थि क्षुद्रमत्स्याश्च हरिद्रा मित्रपञ्चकम् ।
पञ्चमाहिषकञ्चापि भल्लातं च समं समम् ॥ ३५ ॥
सर्वतुल्यं सिद्धघनं निश्चन्द्रं पेषयेद्दिनम् ।
तत्सर्वं तेन वटकाः कार्यास्ते कर्षमात्रकाः ॥ ३६ ॥
कोष्ठीयन्त्रे धमेद्गाढमङ्गारैः खदिरोद्भवैः ।
त्रियामधमनादेव सत्वं पतति निर्मलम् ॥ ३७ ॥
कठिनं सूक्ष्मरवकं काचटङ्कणवर्जितम् ।
त्रिवारमेवं कुर्वीत तत्किट्टैः सत्वपातने ॥ ३८ ॥

अभ्रकमृदुसत्वम् ॥

[प्रथमः प्रकारः ।]

पुनरन्यं प्रवक्ष्यामि मृदुसत्वं सुरेश्वरि ! ।
गुग्गुलुं टङ्कणं गुञ्जां सर्जसर्जरसं गुडम् ॥ ३९ ॥

क्षुद्रमीनं यवक्षारं काचपिण्याकसूरणम् ।
भूलता त्रिफला वह्निः क्षीरकन्दं पुनर्नवम् ॥ ४० ॥

धुत्तूरं लाङ्गली पारा बला गन्धक(र)सेवकम् ।
गोक्षीरं पञ्चलवणं सर्वं च द्विगुणं मधु ॥ ४१ ॥

षड्बिन्दु क्षुद्रशंबूकमस्थीनि शशकस्य च ।
पारावतमलं त्र्यूषमिन्द्रगोपं सशिग्रुकम् ॥ ४२ ॥

गोधूमसर्षपं ताप्यं छागक्षीरेण मर्दयेत् ।
एवं व्यस्तं समस्तं वा याममात्रेण मर्दितम् ॥ ४३ ॥

अस्य पिण्डस्य भागैकं द्विभागं सिद्धमभ्रकम् ।
पञ्चमाहिषभागैकं सर्वमेकत्र लोडयेत् ॥ ४४ ॥

कर्षाभा वटिकाः कार्याः किञ्चिच्छायाविशोषिताः ।
खदिराङ्गारसन्तप्ते कोष्ठीयन्त्रे क्षिपेत्क्षिपेत् ॥ ४५ ॥

घुटीपञ्चकपञ्चैव वङ्कनाले धमेद्दृढम् ।
मृदुसत्व भवेच्छुभ्रं रुग्जरामृत्युनाशनम् ॥ ४६ ॥

त्रिवारमेवं कुर्वीत तत्किट्टं सत्वपातनम् ।
अनेन क्रमयोगेन कान्तसस्यकमाक्षिकम् ॥ ४७ ॥

कठिनोपरसाश्चान्यैः शुद्धा भूनागमृत्तिका ।
मुञ्चन्ति द्रुतिसङ्घातं गृह्णन्तीमं पृथक्पृथक् ॥ ४८ ॥

[द्वितीयः प्रकारः ।]

अभ्रसत्वं समादाय समांशं काचटङ्कणम् ।

दत्वा दत्वा त्रिवारं तद्वज्रमूषागतं धमेत् ॥ ४९ ॥

अम्लवर्गं स्नुहीपत्रं बिंबीबीजं सवल्कलम् ।
कल्कयेत्तत्र सन्तप्तं सप्तवारं निषेचयेत् ॥ ५० ॥

मृदु शुभ्रं भवेत्तस्य (सत्वं) रुग्जरामृत्युनाशनम् ।

[तृतीयः प्रकारः ।]

सिद्धाभ्रं दशभागं स्याच्छुद्धभागं त्रिभागकम् ॥ ५१ ॥

टङ्कणं माक्षिकं सूतं भागैकं च सुशोधितम् ।
ऊर्णासर्जयवक्षारं भागं भागं विमिश्रयेत् ॥ ५२ ॥

मर्द्यं मूत्राम्लवर्गाभ्यां यथा प्रोक्तं दिनावधि ।
अजापञ्चाङ्गसंयुक्तं पूर्ववत्सत्वपातनम् ॥ ५३ ॥

कृत्वाऽऽदाय मृतं साक्षान्निर्मलं मृदु जायते ।

**अभ्रकबीजपाकः ॥**

बीजपाकं प्रवक्ष्यामि घनस्यैतत्परं हितम् ॥ ५४ ॥

सिद्धाभ्रकं शतपलं स्वर्णरूप्यार्ककान्तकम् ।
रसत्रिगन्धमाक्षीकं विमलाभूलताद्रिजम् ॥ ५५ ॥

नीलाञ्जनं च कङ्कुष्ठं कासीसं दरदं तथा ।
प्रत्येकं दशनिष्कं स्यात्ततो गैरिकटङ्कणम् ॥ ५६ ॥

इन्द्रगोपं गुडं गुञ्जा मधु सर्पिश्च गुग्गुलुः ।
सर्जक्षारो यवक्षारो मत्कुणा नवपञ्चकम् ॥ ५७ ॥

क्षुद्रमीनशशास्थीनि माहिषं शृङ्गमा(मू)लकम् ।
पृथक्पृथक्पञ्चमूलं पञ्चमाहिषमर्दयेत् ॥ ५८ ॥

तेषां च(कर्षभा)वटिका कार्या किञ्चिच्छायाविशोषिता ।
पूर्ववत्पातयेत्सत्वं रुग्जरादैन्यमृत्युहृत् ॥ ५९ ॥

अयं सामान्यसंस्कारो विशेषस्तु निगद्यते ।
यद्यद्रोगहरैर्द्रव्यैस्तत्तद्रोगहरं भवेत् ॥ ८१ ॥

[चतुर्थः प्रकारः ।]

घनसत्त्वं सुविमलं लोहखल्वे विचूर्णयेत् ।
मुण्डीपत्ररसैर्मद्यं दिनं गजपुटे पचेत् ॥ ८२ ॥

एवं दशपुटं कार्यं निर्गुण्डीस्वरसैस्तथा ।
तथा वटजटाक्वाथैः पेटारीमूलजै रसैः ॥ ८३ ॥

ककुभस्य रसैस्तद्वज्जम्बूत्वक्स्वरसैस्तथा ।
एवं षष्टिपुटं कार्यं ततस्तस्मिन्विनिक्षिपेत् ॥ ८४ ॥

विंशत्यंशेन दरदं स्तन्यैस्सम्मर्दयेद्दिनम् ।
ततस्तत्सम्पुटे रुध्वा भूधरे तु पुटं लघु ॥ ८५ ॥

एवं विंशतिधा कुर्यात्सिन्दूराभं भवेद्ध्रुवम् ।

स्थालीपाकविधिः ॥

स्थालीपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरात्मकः ॥८६॥

पङ्कोत्करसमः पूर्वः पिण्डपाकस्तु मध्यमः ।
तृतीयः खरपाकस्स्याद्वालुकासदृशः प्रिये ! ॥ ८७ ॥

स्थालीपाको रसे युक्तः संयुक्तो दरदेन वा ।
मृदुमध्यमपाकाभ्यां कर्तव्यो भूधरे ततः ॥ ८८ ॥

क्षिप्त्वा लघुपुटे देयं रसहिङ्गुलवर्जितः ।
खरपाकः प्रकर्तव्यो विधिर्गजपुटे पचेत् ॥ ८९ ॥

[लोहभस्मनाममृतीकरणविधिः ।]

सर्वेषां मारितानां च लोहानामभ्रकस्य च ।

सेचयेदक्षपालान्तष्षड्वारं च पुनः पुनः ॥ १०० ॥

मण्डूरोऽयं समाख्यातश्शुद्धं श्लक्ष्णं नियोजयेत् ॥

गोमूत्रे त्रिफला क्वाथ्या तत्क्वाथे सेचयेच्छनैः ॥१०१॥

मण्डूरभस्म ॥

लोहकिट्टं सुतप्तं च यावच्छी(त्ती)र्यति तत्स्वयम् ।

तच्छी(त्ती)र्णं ग्राहयेत्पेष्यं मण्डूरं यं प्रयोजयेत् ॥

ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात्सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ १०३ ॥

किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शतोन्मितम् ।
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते गुणम् ॥ १०४ ॥

मण्डूरगुणाः ॥

मण्डूरं पाण्डुशोषार्शोग्रहणीकामलापहम् ।
सर्वशूलप्रमेहघ्नं दीपनं परमं हितम् ॥ १०५ ॥

शीतं तिक्तं कषायाम्लं हृद्रोगप्लीहनाशनम् ।

रसादिमारणाय द्रव्यमानम् ॥

रसेन्द्रं शोधयेद्देवि ! पलानां द्विसहस्रकम् ॥१०६॥

सहस्रं वा शतं वाऽपि पञ्चाशद्वा तदर्धकम् ।
न कुर्याद्रसकर्माणि हीनं वै पञ्चविंशतेः ॥ १०७ ॥

लोहस्य पचनं त्रिंशत्पलादूर्ध्वं न कारयेत् ।
अर्वाक् पञ्चपलाद्देवि ! घनसत्वं तथा पचेत् ॥१०८॥

स्वर्णं पञ्चपलादूर्ध्वं पलादर्वाङ्न शोधयेत् ।

तथा रूप्यं च ताम्रं च शोधयेन्मारयेत्प्रिये ! ॥१०९॥

लोहवद्घनसत्वं च घनपत्रं तथैव च ।
हीनं पञ्चपलादूर्ध्वं न कुर्यात्पलविंशतेः ॥ ११० ॥

द्रावणं शोधनं देवि ! मारणं नागवङ्गयोः ।
वज्रं निष्कादधश्चोर्ध्वं न कुर्याच्छोधनं मृतिम् ॥१११॥

पद्मरागादिरत्नानि तथा कुर्यात्सुरेश्वरि ! ।

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ सप्तमोल्लासः ॥



# ॥ अष्टम उल्लासः ॥



### रत्नान्युपरत्नानि च ॥

भैरवः—

महाम्बुराशौ सरिति पर्वते काननेऽपि वा ।
रत्नानामाकरं देवि ! स्थानमाधेयगौरवात् ॥ १ ॥

तेषु रक्षोविषव्यालव्याधिदोषहराणि च ।
प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च ॥ २ ॥

प्रदुष्टेनोपजातानि जन्तुनोपहतानि च ।
दोषैस्तान्युपचीयन्ते हीयन्ते गुणसंपदा ॥ ३ ॥

### माणिक्यम् ॥

माणिक्यं शोणरत्नं च रत्नराट् रविरत्नकम् ।
शृङ्गारि रङ्गमाणिक्यं तरलो रत्ननायकः ॥ ४ ॥

रागदृक् पद्मरागश्च रत्नं शोणोपलस्तथा ।
सौगन्धिकं लोहितकं कुरुविन्दं शरेन्दुकम् ॥ ५ ॥

माणिक्यं पद्मरागाख्यं द्वितीयं नीलगन्धि च ।
कुशेशयदलच्छायं स्वच्छं स्निग्धं गुरु स्फुटम् ॥ ६ ॥

वृत्तायतं समं गात्रं माणिक्यं श्रेष्ठमुच्यते ।
परीक्षापरिशुद्धानां रत्नानां पृथिवीभृता ॥ ७ ॥

धारणं सर्वदा कार्यं श्रेयःश्रीकीर्तिकाङ्क्षिणा ।
ततस्तु शास्त्रतस्तेषां परीक्षादिकमुच्यते ॥ ८ ॥

[माणिक्यभेदाः ।]

यतिसिह्मलं कालपुरमन्ध्रं तुम्बुरुसंस्थितम् ।
क्षेत्रं चतुर्विधं तस्य माणिक्यस्य समुद्भवे ॥ ९ ॥

सिह्मले तु भवेद्रक्तं पद्मरागमनुत्तमम् ।
पीतं कालपुरोद्भूतं कुरुविन्दमिति स्मृतम् ॥ १० ॥

अशोकपल्लवच्छायमन्ध्रं सौगन्धिकं प्रिये ! ।
तुम्बुरौ छायमानीलं नीलगन्धि च कीर्तितम् ॥ ११ ॥

मध्यमे मध्यमं ज्ञेयं माणिक्यं क्षेत्रभेदतः ।
माणिक्यस्य गुणाः प्रोक्ताश्चत्वारो मुनिपुङ्गवैः ॥ १२ ॥

स्निग्धच्छाया गुरुत्वं च नैर्मल्यमतिरक्तता ।

[माणिक्यस्य गुणाः ।]

माणिक्यं दीपनं वृष्यं कफवातक्षयार्तिहृत् ॥ १३ ॥

भूतवेतालपापघ्नं कर्मजव्याधिनाशनम् ।
माणिक्यं च महापुण्यं महाभाग्यकरं परम् ॥ १४ ॥

सर्वभूतग्रहोन्मादविषघ्नं दोषजित्परम् ।

मुक्ता ॥

मुक्ता सौम्या मौक्तिकं शौक्तिकेयं
तारं तारा शौक्तिकं तारका च।
अम्भस्सारं शीतलं नीरजं च
नक्षत्रं स्यादिन्दुरत्नं वलक्षम् ॥ १५ ॥

मुक्ताफलं बिन्दुफलं च मुक्ता
शौक्तेयकं शुक्तिमणिश्शशिप्रियम्।
स्वच्छं हिमं हैमवतं च शुभ्रं
सुधांशुरत्नं च भसंख्यकाह्वम् ॥ १६ ॥

[मुक्ताभेदाः।]

मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृ-
च्छुक्तीनामुदराच्च मौक्तिकमणिस्स्पष्टं भवेदष्टधा।
छायाः पाटलनीलपीतधवलास्तत्रापि सामान्यतः
सप्तानां बहुशो न लब्धिरितरच्छौक्तेयकं तूल्बणम् ॥

नक्षत्राभं शुद्धमत्यन्तमुक्तं
स्निग्धं स्थूलं निर्मलं निर्व्रणं च।
न्यस्तं धत्ते गौरवं यत्तुलायां
तन्निर्मौल्यं मौक्तिकं सौख्यदायि ॥ १८ ॥

[मुक्तागुणाः।]

मौक्तिकं च मधुरं सुशीतलं
दृष्टिरोगशमनं विषापहम्।
राजयक्ष्मपरिकोपनाशनं
क्षीणवीर्यबलपुष्टिवर्धकम् ॥ १९ ॥

मौक्तिकं शिशिरं स्निग्धं विशदं कान्तिवर्धनम् ॥२०॥

दाहतृड्भ्रममूर्च्छास्रक्पित्तज्वरविषापहम् ।

चक्षुष्यं पवनास्रपित्तविषजित्सर्वेन्द्रियाह्लादनं
तृड्दाहज्वरशोकमोहशमनं शीतं श्रमघ्नं हितम् ।
धन्यं मङ्गलमायुषः स्थितिकरं सौभाग्यकान्तिप्रदं
मुक्ता हारविभूषणं तदखिलं मूलं शशी प्रीयते ॥

## प्रवालः ॥

प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्भोधिपल्लवः ॥ २२ ॥

भौमरत्नं च रक्ताङ्गो रक्ताङ्कुरलतामणिः ।
सेतौ सागरमध्ये या जायते वल्लरी शुभा ॥ २३ ॥

विद्रुमाख्या सुरक्ता सा दुर्लभा दीप्तरूपिणी ।
पाषाणत्वं भजत्येषा पाकतः कठिना सती ॥ २४ ॥

प्रवालनाम तद्रक्तं वर्णसौभाग्यकान्तिदम् ।
सिद्धं स्वच्छं स्निग्धरूपं वृत्तं कान्तं समं गुरु ॥२५॥

रङ्गगात्रं दृढं पिण्डं प्रवालं श्रेष्ठमुच्यते ।
पक्वबिंबफलाभासं जपाकुसुमसन्निभम् ॥ २६ ॥

शुकतुण्डसमच्छायं प्रवालमतिशोभनम् ।
शारदाभं दलं सूक्ष्मं वक्रं रूक्षं सकोटरम् ॥ २७ ॥

विद्धं कृष्णं लघुतमं प्रवालं दोषकृद्भवेत् ।
गौररङ्गं जलाक्रान्तं प्रवालमशुभं त्यजेत् ॥ २८ ॥

प्रवालं कोमलं स्निग्धं सुरागं विद्रुमं हितम् ।

## [प्रवालगुणाः]

धनधान्यकरं मेध्यं विषाहिभयनाशनम ॥ २९ ॥

प्रवालो मधुराम्लश्च कफपित्तादिदोषनुत् ।
वीर्यकान्तिकरः स्त्रीणां धृतो मङ्गलदायकः ॥ ३० ॥

मरकतम् ॥

मरकतं रौहिणेयं गारुत्मन्तं हरिन्मणिः ।
सौपर्णं गरुडोद्गीर्णं बुधरत्नाश्मगर्भजे ॥ ३१ ॥

गरलारिर्वाय(कं)वीर्यं(यं) गारुडं रुद्रसम्मितम् ।
तुरुष्कविषयांभोधौ समीरारोहणाचले ॥ ३२ ॥

तच्छायाश्यामलो देशस्सोऽभून्मरतकाकरः ।
तद्विशेषान्मरकतं जातं दोषगुणान्वितम् ॥ ३३ ॥

दोषास्सप्तविधास्तस्य गुणाः पञ्चविधास्स्मृताः ।
भवेदष्टविधा छाया मणेर्मरकतस्य च ॥ ३४ ॥

अस्निग्धं रूक्षमित्युक्तं विस्फोटं पिट(पीठ)कं तथा ।
जठरं कान्तिहीनं च विच्छायं मलिनं तथा ॥ ३५ ॥

सशर्करं सपाषाणं कर्कशं सूलसंयुतम् ।
कल्माषवर्णं शबलं समस्तभयदायकम् ॥ ३६ ॥

निर्मलं कथितं स्वच्छं गुरु स्याद्गुरुदायुत(यक)म् ।
स्निग्धं रूक्षं विनिर्मुक्तमरजस्क(मरत्व)मरेणुकम् ॥

सुरागं रागबहुलमिति पञ्च गुणाः स्मृताः ।
एतैर्युक्तं मरकतं सर्वपापहरं परम् ॥ ३८ ॥

[मरकतगुणाः ।]

मरकतं विषघ्नं च शीतलं मधुरं रसे ।
आम(अम्ल)पित्तहरं रुच्यं पुष्टिदं भूतनाशनम् ॥३९॥

स्निग्धं मरकतं स्वच्छं सर्वदोषहरं शुभम् ।

कान्तिसौभाग्यदं मेध्यं भूतग्रहविषापहम् ॥ ४० ॥

### पुष्परागः ॥

पीतस्तु पुष्परागः
पीतस्फुटिकं च पीतरत्नं च ।
पीताश्मा गुरुरत्नं
पीतमणिः पुष्यरागश्च ॥ ४१ ॥

ईषत्पीतं पविच्छायं स्वच्छं कान्त्या मनोहरम् ।
पुष्यराग इति ख्यातं रत्नं रत्नपरीक्षकैः ॥ ४२ ॥

हेमच्छायं शिरोवृत्तं ज्योतिरङ्गारनिर्मलम् ।
पीतगात्रं गुरु स्निग्धं पुष्यरागं प्रशस्यते ॥ ४३ ॥

रूक्षं क्षतलघु श्वेतं कृष्णं गौरं सशर्करम् ।
मलिनं बिन्दुमद्रत्नं पुष्यरागं न शस्यते ॥ ४४ ॥

### [पुष्यरागगुणाः ।]

पुष्यरागोऽम्लशीतश्च वातजिद्दीपनः परम् ।
आयुः श्रियं च प्रज्ञां च धारणात्कुरुते नृणाम् ॥४५॥

पुष्यरागं शुभं मेध्यं वस्तुसौभाग्यकीर्तिदम् ।
वाक्पटुत्वकरं हृद्यं विषघ्नं दोषजित्परम् ॥ ४६ ॥

### वज्रम् ॥

वज्रमिन्द्रायुधं वीरं भिदुरं कुलिशं पविः ।
अभेद्यमसिरं रत्नं दृढं भार्गवकं स्मृतम् ॥ ४७ ॥

स्वच्छं विद्युत्प्रभं स्निग्धं सुन्दरं लघु लेखनम् ।
षडारं तीक्ष्णधारं च सुसौम्यारं श्रियं दिशेत् ॥ ४८ ॥

[वज्राकरा वज्रभेदाश्च ।]

पौण्ड्रमतङ्गहिमाचल-
सौराष्ट्रसुपारकोसलकलिङ्गाः ।
पेण्णा(पूर्णा)नदीतटश्चे-
त्यष्टौ वज्राकरा विनिर्दिष्टाः ॥ ४९ ॥

श्यामं प्रपौण्ड्रप्रभवं
किञ्चित्पीतं मतङ्गगिरिजातम् ।
हिमवत्सुराष्ट्रसंभव-
माताम्रं कृष्णकान्ति सौपारम् ॥ ५० ॥

फुल्लशिरीषच्छायं
कोसलजं कनककान्ति कालिङ्गम् ।
पेण्णानदीतटोद्भव
माहुर्वज्रं सुधांशुनिभम् ॥ ५१ ॥

कलिङ्गकोसलौ देशौ मतङ्गाद्रिहिमालयौ ।
सौराष्ट्रपौण्ड्कौबेरा(पेण्णा)करसूपारकौ तथा ॥ ५२ ॥

कृतादिषु युगेष्वेतौ वज्राणामाकरौ स्मृतौ ।
आकरेष्वेव वज्राणां खनिः स्रोतः प्रकीर्णकम् ॥ ५३ ॥

समुत्पत्तिस्थलं त्रेधा निर्दिष्टं सुरनायिके ! ।

[वज्रगता गुणा दोषाश्च ।]

कोट्यः पार्श्वानि धाराश्च षडष्टौ द्वादशैव च ॥ ५४ ॥

इत्यच्छतीक्ष्णधाराग्रा वज्रस्याहुरथो गुणान् ।
मलो बिन्दुश्च रेखा च त्रासः काकपदं तथा ॥ ५५ ॥

एते दोषास्समाख्याताः पञ्च वज्रेषु संस्थिताः ।
कुर्यादशोधितं वज्रं कुष्ठदाहाङ्गगौरवम् ॥ ५६ ॥

हृत्पार्श्वपीडां पाण्डुं च ततस्तच्छुद्धिरुच्यते ।

[वज्रशुद्धिः ।]

गृहीत्वाऽथ शुभं वज्रं व्याघ्रीकन्दोदरे क्षिपेत् ॥ ५७ ॥
महिषीशकृदाऽऽलिप्य करीषाग्नौ विपाचयेत् ।
अहोरात्रात्समुद्धृत्य हयमूत्रेण सेचयेत् ॥ ५८ ॥
एवं पुनः पुनः पक्वं सप्तरात्राद्विशुध्यति ।
मेघनादाशमीश्यामाश्रृङ्गीमदनकोद्रवैः ॥ ५९ ॥
कुलुत्थवेतसागस्त्यसिन्दुवाराखुकर्णिकाः ।
एतेषां हयमूत्रेण कषायं साधितं पुनः ॥ ६० ॥
जम्बीरे कुलिशं क्षिप्त्वा हयमूत्रैस्त्र्यहं पचेत् ।
डोलायन्त्रविधानेन ततश्शुद्धिमवाप्नुयात् ॥ ६१ ॥
कुलुत्थकोद्रवक्वाथैर्डोलायन्त्रे विपाचयेत् ।
व्याघ्रीकन्दगतं वज्रं सप्ताहाच्छुद्धिमाप्नुयात् ॥ ६२ ॥
कुलत्थकोद्रवक्वाथं हयमूत्रं स्नुहीपयः ।
क्षिप्त्वा भाण्डे पचेत्तस्मिन्व्याघ्रीकन्दगतं पविम् ॥ ६३ ॥
डोलायन्त्रे दिवारात्रं समुद्धृत्य पुनः क्षिपेत् ।
वज्रकन्दे मृदा कन्दं लिप्त्वा गजपुटे पचेत् ॥ ६४ ॥
तत्पक्वं पाचनद्रावैस्सेचितं शुद्धिमाप्नुयात् ।
व्याघ्रीकन्दगतं वज्रं मृदा लिप्तं पुटे पचेत् ॥ ६५ ॥
अहोरात्रात्समुद्धृत्य हयमूत्रेण सेचयेत् ।
वज्रीक्षीरेण वा सिंच्यादेवं शुद्धं तु मारयेत् ॥ ६६ ॥

**वज्रमारणविधिः ॥**

[विप्रजातीयवज्रमारणम् ।]

वक्ष्यते विप्रजात्यादेश्शुद्धवज्रस्य मारणम् ।

क्षेकं कर्कटास्थि च ॥ ६७ ॥

ा मूषामध्ये प्रलेपयेत् ।
ौषधैस्तैस्ततः परम् ॥ ६८ ॥

ततो मूषां निरोधयेत् ।
टेन महता पुनः ॥ ६९ ॥

टेनैकेन सिध्यति ।

प्रजातीयवज्रमारणम् ।]

रदं(वदरं)च ह्युदुम्बरम् ॥ ७० ॥

तत्कृते गोलके क्षिपेत् ।
पूर्ववन्मारयेद्ध्रुवम् ॥ ७१ ॥

जातीयवज्रमारणम् ।]

शिलायां(ह्वं) पेषयेत्समम् ।
कच्छपास्थि च पेषयेत् ॥ ७२ ॥

कृते गोलके क्षिपेत् ।
पूर्ववत्तन्मृतं भवेत् ॥ ७३ ॥

जातीयवज्रमारणम् ।]

शिलां संपेषयेत्समम् ।
गोलके पूर्ववत्पचेत् ॥ ७४ ॥

तेन सम्यग्भवेन्मृतम् ।

नपुंसकवज्रमारणम् ।]

र्म्रियते तत्तदौषधैः ॥ ७५ ॥

तिर्वज्रे नपुंसके ।

## सामान्येन वज्रमारणविधिः ॥

[प्रथमः प्रकारः ।]

सामान्यस्सर्ववज्राणां वक्ष्यते मारणक्रमः ॥ ७६ ॥

शुद्धं वज्रं मत्कुणानां रक्तैर्लिप्त्वा धमेत्पुनः ।
अग्निवर्णं क्षिपेन्मूत्रे गर्दभस्य पुनः पुनः ॥ ७७ ॥

लेपितं ध्मापितं तद्वदेवं कुर्यात्त्रिसप्तधा ।
तालकं मत्कुणैः पिष्ट्वा तस्मिन्गोले क्षिपेत्तु तम् ॥७८॥

रुध्वा मूषां धमेद्गाढं हयमूत्रे विनिक्षिपेत् ।
समुद्धृत्य पुनस्तद्वत्सप्तवारैर्मृतो भवेत् ॥ ७९ ॥

[द्वितीयः प्रकारः ।]

मेषशृङ्गं भुजङ्गास्थि कूर्मपृष्ठं शिलाजतु ।
गन्धकं कान्तपाषाणं मुनिपुष्पं सतालकम् ॥ ८० ॥

त्रिक्षारं पञ्चलवणं मेषशृङ्गीन्द्रवारुणी ।
वज्रवल्ली मूषकर्णी बदरी कुट्मलानि च ॥ ८१ ॥

मूषकस्य मलं स्तन्यं स्नुह्यर्कक्षीरमत्कुणम् ।
पञ्चाङ्गं शरपुंखस्य ह्यस्थिनी खरमेषयोः ॥ ८२ ॥

पेटारिबीजं स्त्रीपुष्पं पारावतमलं शिला ।
पुष्पाणि चैव बाकुच्याः पञ्चाङ्गं तिमिरस्य च ॥ ८३ ॥

धात्रीवृक्षस्य पञ्चाङ्गं गोरंभा वाजिमूत्रकम् ।
हंसपादी वज्रकन्दं बृहतीफलसूरणम् ॥ ८४ ॥

गोजिह्वा कर्कटं मांसं मूत्रवर्गं च मिश्रयेत् ।
एतत्समस्तं व्यस्तं वा यथालाभं सुपिण्डितम् ॥८५॥

तत्पिण्डे निक्षिपेद्वज्रमन्धमूषागतं पुटेत् ।

कुलुत्थकोद्रवं पिष्ट्वा हयमूत्रे विलोलयेत् ॥ ८६ ॥

तन्मध्ये सेचयेत्तप्तां मूषापुटविनिर्गताम्।
एवं पुनः पुनः कुर्यादेकविंशतिवारकम् ॥ ८७ ॥

आदाय तत्पुनर्वज्रं ताले मत्कुणपेषिते।
गोलके निक्षिपेद्रुध्वा मूषां तीव्रानले धमेत् ॥ ८८ ॥

इत्येवं सप्तधा ध्मातं हयमूत्रे निषेचयेत्।
अनेन क्रमयोगेन मृतो भवति निश्चितम् ॥ ८९ ॥

तन्मृतं चूर्णयेत्खल्वे सिद्धयोग उदाहृतः।

[तृतीयः प्रकारः।]

आमकं च मृतं ताप्यं पेटालीबीजटङ्कणम् ॥ ९० ॥

क्षीरं चोत्तरवारुण्या गन्धक तालकं शिला।
चिञ्चाबीजं मेषशृङ्गी स्त्रीपुष्पं चाम्लवेतसः ॥ ९१ ॥

पञ्चाङ्गं शरपुंखायाश्शशदन्तं शिलाजतु।
एतत्समस्तं व्यस्तं वा यथालाभं सुचूर्णयेत् ॥ ९२ ॥

स्नुह्यर्कोत्तरवारुण्याः क्षीरैस्स्तन्यैर्विमर्दयेत्।
तद्गोलके क्षिपेद्वज्रं रुध्वा चैतान्धमेद्दृढम् ॥ ९३ ॥

गुडूची सैन्धवं हिङ्गु समुस्तोतरवारुणी।
क्वाथैः कौलुत्थकैः पिष्ट्वा तस्मिन्क्वाथे विनिक्षिपेत् ॥

तं वज्रं पूर्ववद्गोले कृत्वा रुध्वा धमेत्तथा।
सेचनान्तं ततः कुर्यादेकविंशतिवारकम् ॥ ९५ ॥

तालकं मत्कुणायोगे सप्तवारं पुनर्धमेत्।
सेचयेदश्वमूत्रेण तद्वज्रं म्रियते ध्रुवम् ॥ ९६ ॥

[चतुर्थः प्रकारः ।]

त्रिवर्षीयोत्थकार्पासमूलमादाय पेषयेत् ।
त्रिवर्षनागवल्ल्या वा निजद्रावैः प्रपेषयेत् ॥ ९७ ॥

तद्गोलके क्षिपेद्वज्रं रुध्वा गजपुटे पचेत् ।
एवं सप्तपुटैः पक्वमेकैकेन कृतं भवेत् ॥ ९८ ॥

[पञ्चमः प्रकारः ।]

तालकासीससौराष्ट्रीमपामार्गस्य भस्म च ।
पिष्ट्वा कौलुत्थकैः क्वाथैस्तस्मिन्वज्रं सुतापितम् ॥९९ ॥

क्षिपेत्त्रिसप्तवाराणि म्रियते नाऽत्र संशयः ।

[षष्ठः प्रकारः ।]

वैक्रान्तभस्मना सार्धं पेषयेदम्लवेतसम् ॥ १०० ॥

तद्गोले निक्षिपेद्वज्रमन्धमूषागतं धमेत् ।
सेचयेदश्वमूत्रेण पूर्वगोले पुनः क्षिपेत् ॥ १०१ ॥

रुध्वा ध्मातः पुनस्सेच्यमेवंकुर्यात्त्रिसप्तधा ।
म्रियते नाऽत्र सन्देहस्सर्वयोगेषु योजयेत् ॥ १०२ ॥

[सप्तमः प्रकारः ।]

उत्तरावारुणीक्षीरैः कान्तपाषाणजं मुखम् ।
क्षणं पिष्ट्वा तु तद्गोलं क्षिप्त्वा तस्मिन्पचेद्दिनम् ॥

नृतैले गन्धतैलेन म्रियते नाऽत्र संशयः ।

[अष्टमः प्रकारः ।]

भूनागं गन्धकं चाऽथ नारीस्तन्येन पेषयेत् १०४ ॥

तद्गोलस्थं पचेद्वज्रं पूर्वतैले मृतं भवेत् ।

[नवमः प्रकारः]

स्नुहीक्षीरेण विमलां पिष्ट्वा तद्गोलके क्षिपेत् ॥१०५॥
वज्रं निरुध्य मूषां तु शुष्कां तीव्राग्निना धमेत्।
क्षिप्तामश्वस्य मूत्रे तु क्षिप्त्वा वज्रं समाहरेत् ॥१०६॥
इत्येवं सप्तधा कुर्यात्ततस्तालकमत्कुणैः।
पिष्ट्वा गोलं क्षिपेत्तस्मिन्वज्रमूषां निरुध्य च ॥१०७॥
ध्मापितं पूर्ववत्सेच्यं सप्तवारैर्मृतं भवेत्।।

[दशमः प्रकारः।]

वज्रं मत्कुणरक्तेन लिप्त्वा लिप्त्वाऽऽतपे क्षिपेत् ॥
शुष्कं लेप्यं पुनः शोष्यं यावत्सप्तदिनावधि।
विष्णुक्रान्तापेटकार्योर्द्रवैस्सिञ्चेत्पुनः पुनः ॥ १०९ ॥
तप्तं तप्तं च तद्वज्रं शतवारैर्मृतं भवेत्।

[एकादशः प्रकारः।]

गन्धकं चूर्णितं भाव्यं स्त्रीपुष्पेण तु सप्तधा ॥११०॥
पुनस्स्त्रीरजसाऽऽलोड्यं तस्मिन्वज्रं सुतापितम्।
सेचयेत्तापयेदेकविंशद्वारान्मृतं भवेत् ॥ १११ ॥

[द्वादशः प्रकारः।]

वज्रं नदीमहाशुक्तौ क्षिप्त्वा भाव्यं मुहुर्मुहुः।
स्नुह्यर्कोत्तमकन्यानां द्रवैणैकेन चातपे ॥ ११२ ॥
कृष्णक(म)र्कटमांसेन पेषितं वेष्टयेत्पुनः।
भूनागस्य मृदा सम्यग्धृतं भस्मत्वमाप्नुयात् ॥ ११३ ॥

[त्रयोदशः प्रकारः ।]

रक्तमूलस्य मूलैश्च मेघनादस्य कुट्मलैः ।
पेषितैर्वेष्टितं ध्मातं वज्रं भस्म भवत्यलम् ॥ ११४ ॥

[चतुर्दशः प्रकारः ।]

मातुलुङ्गगतं वज्रं रुध्वा लिम्पेन्मृदा बहिः ।
पुटे पचेत्समुद्धृत्य तद्वच्छतपुटे पचेत् ॥ ११५ ॥

**वज्रौदनम्–वज्रमृदूकरणं वा ॥**

[प्रथमः प्रकारः ।]

नागपर्णीद्रवैर्लिप्तं तत्पत्रेणैव वेष्टितम् ।
जानुमध्ये स्थितं यामं तद्वज्रं मृदुतां व्रजेत् ॥ ११६ ॥

[द्वितीयः प्रकारः ।]

मातृवाहकबीजस्य मध्ये वज्रं विनिक्षिपेत् ।
जम्बीरोदरगं वाऽथ दोलायन्त्रे दिनं पचेत् ॥ ११७ ॥

कुलुत्थकोद्रवक्काथे त्रैफले वा कषायके ।
अहोरात्रात्समुद्धृत्य जम्बीरान्तः पुनः क्षिपेत् ॥११८॥

मातृवाहकबीजे वा पचेत्प्रक्षिप्य पूर्ववत् ।
पुनः क्षेप्यं पुनः पाच्यं त्रिदिनान्ते समुद्धरेत् ॥११९॥

बदरीवटनिम्बानामङ्कुराणि समाहरेत् ।
पिष्ट्वा तद्गोलके वज्रं पूर्वपक्वं विनिक्षिपेत् ॥ १२० ॥

अश्वत्थपत्रके वेष्ट्य तद्गोलं जानुमध्यगम् ।
दिनं वा धारयेत्कक्षे मृदुर्भवति निश्चितम् ॥ १२१ ॥

[तृतीयः प्रकारः ।]

पारदं तीक्ष्णचूर्णं च दिनमम्लेन मर्दयेत् ।

तद्गोले निक्षिपेद्वज्रं सूत्रेणावेष्टयेद्बहिः ॥ १२२ ॥
नागवल्लीदलैश्चैव वेष्टितं धान्यराशिगम्।
मासान्ते तत्समुद्धृत्य लिंपेन्नागलताद्रवैः ॥ १२३ ॥
तद्दलैर्वेष्टितं जानुमध्यस्थं मृदुतां व्रजेत्।

[चतुर्थः प्रकारः।]

कान्तपाषाणवक्त्रं वा चूर्णं वा कान्तलोहजम् ॥१२४॥
ससूतमम्लयोगेन दिनमेकं विमर्दयेत्।
तद्गोले निक्षिपेद्वज्रं निम्बकार्पासकोद्रवैः ॥ १२५ ॥
पत्रैः पिष्टैस्सुसंपेष्य नागवल्लीदलैस्ततः।
वेष्टितं जानुमध्यस्थं दिनान्ते मृदुतां व्रजेत् ॥ १२६ ॥

[पञ्चमः प्रकारः।]

एरण्डवृक्षमध्ये तु तत्फले वा क्षिपेत्पविम्।
मासमात्रात्समुद्धृत्य जानुमध्ये च पूर्ववत् ॥ १२७ ॥
कोमलं जायते वज्रं दिनान्ते नाऽत्र संशयः।

[षष्ठः प्रकारः।]

वज्रं तित्तिरिमांसेन वेष्टितं निक्षिपेन्मुखे ॥ १२८ ॥
अतिस्थूलस्य भेकस्य मुखं सूत्रेण वेष्टयेत्।
निखनेद्धस्तमात्रायां क्षोण्यां मासात्समुद्धरेत् ॥१२९॥
मण्डूकं सम्पुटे रुध्वा सम्यग्गजपुटे पचेत्।
तद्वज्रं पूर्वगोलस्थं जानुमध्यगतं दिनम् ॥ १३० ॥
भवेद्वज्रौदनं साक्षात्पश्चादाहार्य योजयेत्।
सर्ववज्रौदनानां तु मारणं पूर्ववद्भवेत् ॥ १३१ ॥

### वज्रद्रुतिः ॥

क्षारत्रयं रामठं च चणकाम्लाम्लवेतसम् ।
ज्वालामुखीं चेक्षुरकं स्थलकुम्भीफलानि च ॥ १३२ ॥

स्नुह्यर्कपयसा श्लक्ष्णं पिष्ट्वा तद्गोलके क्षिपेत् ।
वज्रं विशोधितं सम्यग्वस्त्रे बध्वा हठात्पचेत् ॥ १३३ ॥

डोलायन्त्रेण धान्याम्ले द्रुतं मासाष्टकाद्भवेत् ।
वज्रवल्ल्यन्तरस्थं वा कृत्वा वज्रं निरोधितम् ॥ १३४ ॥

अम्लभाण्डगतं सेच्यं सप्ताहाद्द्रवतां व्रजेत् ।
भस्मौदनं द्रुतिश्चेति त्रिविधं वज्रमारणम् ॥ १३५ ॥

रसबन्धकरं प्रोक्तं नागार्जुनपुरस्सरैः ।

### वज्रगुणाः ॥

वज्रं च षड्रसोपेतं सर्वरोगापहारकम् ॥ १३६ ॥

सर्वाघशमनं सौख्यं देहदार्ढ्यं रसायनम् ।
वज्रं रत्नोत्तमं पुण्यं श्रीसौभाग्यविवर्धनम् ॥ १३७ ॥

आयुष्यं धन्यमोजस्यं यशस्यं सर्वपाप्मजित् ।
आयुर्बलं देहसौख्यं रूपं कान्तिं करोति च ॥१३८॥

सेवितं हन्ति रोगांश्च मृतं वज्रं न संशयः ।

### नीलम् ॥

नीलस्तु सौरिरत्नं स्यान्नीलाश्मा नीलरत्नकः ॥१३९॥

नीलोपलस्तृणग्राही महानीलस्सुनीलकः ।
इन्द्रनीलमणिस्तत्र चतुर्धा जातिभेदतः ॥ १४० ॥

सितच्छायो भवेद्विप्रो रक्तः क्षत्रियजातिकः ।

पीतस्तु वैश्यजातिर्यो वृषलः कृष्णदीधितिः ॥ १४१ ॥

[नीलस्य गुणा दोषाश्च ।]

नीलीरससमाभासा वैष्णवीपुष्पसन्निभा ।
लवलीपुष्पसङ्काशा नीलेन्दीवरसप्रभा ॥ १४२ ॥

अतसीपुष्पसङ्काशा चाष(भस्म)पक्षसमद्युतिः ।
कृष्णत्रिकर्णिकापुष्पसमानद्युतिधारिणी ॥ १४३ ॥

मयूरकण्ठसच्छाया शंभोः कण्ठनिभा तथा ।
विष्णुदेहसमाभासा भृङ्गपत्रसमप्रभा ॥ १४४ ॥

एताश्छायाश्शुभकरा इन्द्रनीलमहामणेः ।
गुरुत्वं स्निग्धकान्तित्वं सुरागं पार्श्वरञ्जनम् ॥ १४५ ॥

तृणग्राहित्वमित्येते गुणाः पञ्च प्रकीर्तिताः ।
न विम्लो(निम्नो)निर्मलो गात्रो मसृणो गुरुदीप्तिकः ॥

तृणग्राही मृदुर्नीलो दुर्लभो लक्षणान्वितः ।
इन्द्रनीलं शुभं वर्ण्यं सर्वपापनिवर्हणम् ॥ १४७ ॥

आयुर्यशो बलं लक्ष्मीमारोग्यं च प्रयच्छति ।
नीलस्सतिक्तकोष्णश्च कफपित्तानिलापहः ॥ १४८ ॥

यो दधाति शरीरेऽस्य सौरिर्मङ्गलदो भवेत् ।

**गोमेदकः ॥**

गोमेदकस्तु गोमेदो राहुरत्नं तमो मणिः ॥ १४९ ॥

स्वर्भानवष्षडाह्वोऽयं पिङ्गस्फटिक इत्यपि ।

गोमूत्राभं यन्मृदु स्निग्धमुष्णं
शुद्धच्छायं गौरवं यच्च धत्ते ।
हेमारक्तं श्रीमतां योग्यमेतत्
गोमेदाख्यं रत्नमाख्याति सन्तः ॥ १५० ॥

मधुबिन्दु(धूच्छिष्ट)समच्छायं गोमूत्राज्यसमप्रभम् ॥

हेमरक्तं गुरु स्वच्छं स्निग्धं गोमेदकं शुभम् ।
श्वेतं कृष्णं रङ्गहीनं त्रासरेखादिदूषितम् ॥ १५२ ॥

कर्कशं पाटलाकारं दुष्टं गोमेदकं त्यजेत् ।

[गोमेदकगुणाः ।]

मेध्यं गोमेदकं रत्नं यशस्यं श्रीविवर्धनम् ॥ १५३ ॥

मङ्गल्यं कान्तिजननं स्निग्धं सर्वविषापहम् ।
गोमेदकोऽम्लमुष्णं च वातकोपविकारजित् ॥ १५४ ॥

दीपनं पाचनं चैव धृतोऽयं पापनाशनः ।

वैडूर्यम् ॥

वैडूर्यं केतुरत्नं च खशब्दाङ्कुरजं तथा ॥ १५५ ॥

विडूरभूमिजं रत्नं प्रावृष्यं पञ्चनाम च ।

कल्पान्तकालक्षुभितांबुराशि-
निदाह(र्ह्राद)कल्पाद्दितिजेन्द्रनादात् ।
वैडूर्यमुत्पन्नमनेकवर्णं
शोभाभिरामद्युतिरत्नवर्यम् ॥ १५६ ॥

अविदूरे विडूरस्य गिरेरुत्तुङ्गरोधसः ॥ १५७ ॥

कोङ्कचोलकसीमान्ते मणेस्तस्याकरस्स्मृतः ।
तत्र दैत्येन्द्रनिनदं प्रति मेघसुगर्जितैः ॥ १५८ ॥

समुद्भवन्ति वैडूर्यमणयः प्रावृडागमे ।
सिताभ्रधूमसङ्काशमीषत्कृष्णं सितं तु यत् ॥ १५९ ॥

वैडूर्यं नाम तत्प्रोक्तं रत्नवर्णपरीक्षकैः ।
वेणुपत्रबिडालाक्षिशिखिकण्ठसमद्युति ॥ १६० ॥

स्निग्धगात्रं गुरु स्वच्छं वैडूर्यं गुणवन्मतम्।
रेखाभिन्नं लघु स्पष्टं शिलाङ्गारककर्दमम्॥ १६१॥
विवर्णं परुषं कृष्णं वैडूर्यं दोषवत्त्यजेत्।

[वैडूर्यस्य गुणाः।]

वैडूर्यं विशदं स्निग्धं प्रीत्यायुर्बलवर्धनम्॥ १६२॥
मङ्गल्यं धारणात्तद्धि सर्वग्रहविषापहम्।
वैडूर्यमम्लमुष्णं च कफमारुतनाशनम्॥ १६३॥
गुल्मशूलप्रशमनं भूषितं च शुभावहम्।

**पञ्चरत्नानि॥**

माणिक्यं मौक्तिकं वज्रं नीलं मरकतं तथा॥ १६४॥
पञ्चरत्नमिति प्रोक्तं पाप्मालक्ष्मीविषापहम्।

**नवरत्नानि॥**

गोमेदकं पुष्परागं वैडूर्यमपि विद्रुमम्॥ १६५॥
पञ्चरत्नैस्सहैतानि नवरत्नानि निर्दिशेत्।

**उपरत्नानि॥**
**सूर्यकान्तः॥**

अथ भवति सूर्यकान्तः
तपनमणिस्तापनश्च रविकान्तः।
दीप्तोपलोऽग्निगर्भो
ज्वलनाश्माऽर्कोपलश्च वसुनामा॥ १६६॥

श्वेताभ्रकसमं वर्णैर्हिमाद्रौ चन्द्रसन्निभम्॥ १६७॥
निर्मलं च प्रभायुक्तं स्फटिकं श्रेष्ठमुच्यते।
हिमालये सिंहले च विन्ध्ये रेवातटे तथा॥ १६८॥

पद्मरागोद्भवे स्थाने विविधं स्फटिकं भवेत् ।
सूर्यकान्तं च तत्रैकं चन्द्रकान्तं तथाऽपरम् ॥ १६९ ॥

सूर्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात् ।
सूर्यकान्तं तदाख्यातं स्फटिकं रत्नवेधितम् ॥ १७० ॥

[सूर्यकान्तस्य गुणाः ।]

सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायनम् ।
वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ १७१ ॥

चन्द्रकान्तः ॥

इन्दुकान्तश्चन्द्रकान्तश्चन्द्राश्मा संस्रवोपलः ।
शीताश्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥१७२॥

स्निग्धं श्वेतं पीतमलाऽऽसमन्ताद्-
धत्ते चित्तं स्वस्थतां यन्मुनीनाम् ।
यच्च द्रावं याति चन्द्रांशुसङ्गे
जात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥ १७३ ॥

[चन्द्रकान्तस्य गुणाः ।]

चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रदाहनुत् ।
शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविषापहः ॥ १७४ ॥

स्फटिकम् ॥

स्फटिकस्सितोपलस्स्या-
दमलमणिस्तारकोपलस्स्वच्छः ।
शीतोष्णवीर्यमक्ष्णः
पित्तं वातं निहन्ति शोफघ्नम् ॥ १७५ ॥

पुरा प्रोक्तं हि कान्तस्य मया ते लक्षणादिकम् ।

वैक्रान्तम् ॥

वैक्रान्तं चैव विक्रान्तं नीलवज्रं कुवज्रकम् ॥ १७६ ॥
गोनाशं क्षुद्रकुलिशं चूर्णवज्रं च गोनसम्।
श्वेतो रक्तश्च पीतश्च नीलः पारावतच्छविः ॥ १७७॥
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः।
वज्राभावे तु वैक्रान्तं रसवीर्यादिके समम् ॥ १७८ ॥
अष्टास्रश्चाष्टफलकष्षट्कोणो मसृणो गुरुः।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ १७९ ॥

[वैक्रान्तशुद्धिः।]

कुलुत्थक्वाथसंस्विन्नो वैक्रान्तः परिशुध्यति।
त्रिक्षारैः पञ्चलवणैर्वसामूत्राम्लकोद्रवैः ॥ १८० ॥
मत्स्यतैलघृतैस्तुल्यैः कुलुत्थैः काञ्जिकान्वितैः।
सप्ताहं डोलिकायन्त्रे व्याघ्रीकन्दगतं पचेत् ॥ १८१ ॥
तप्तवर्णं तु वैक्रान्तं शुद्धिमायाति निश्चितम्।

[वैक्रान्तभस्म।]

हयमूत्रेण तत्सेच्यं तप्तं तप्तं द्विसप्तधा ॥ १८२ ॥
ततश्चोत्तरवारुण्याः पञ्चाङ्गैर्गोलके क्षिपेत्।
रुध्वा मूषां पुटे पक्त्वा पुनरुद्धृत्य गोलके ॥ १८३ ॥
क्षिप्त्वा रुध्वा पुटेदेवं सप्तधा भस्मतां व्रजेत्।

वैक्रान्तसत्वम् ॥

[प्रथमः प्रकारः।]

वैक्रान्तस्य पलैकं तु पलैकं टङ्कणस्य च ॥ १८४ ॥
रविक्षीरे दिनं भाव्यं मर्द्यं शिग्रुद्रवैर्दिनम्।

पद्मरागोद्भवे स्थाने विविधं स्फटिकं भवेत् ।
सूर्यकान्तं च तत्रैकं चन्द्रकान्तं तथाऽपरम् ॥ १६९ ॥

सूर्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात् ।
सूर्यकान्तं तदाख्यातं स्फटिकं रत्नवेधितम् ॥ १७० ॥

[सूर्यकान्तस्य गुणाः ।]

सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायनम् ।
वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ १७१ ॥

चन्द्रकान्तः ॥

इन्दुकान्तश्चन्द्रकान्तश्चन्द्राश्मा संस्रवोपलः ।
शीताश्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥१७२॥

स्निग्धं श्वेतं पीतमलाऽऽसमन्ताद्-
धत्ते चित्तं स्वस्थतां यन्मुनीनाम् ।
यच्च द्रावं याति चन्द्रांशुसङ्गे
जात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥ १७३ ॥

[चन्द्रकान्तस्य गुणाः ।]

चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रदाहनुत् ।
शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविषापहः ॥ १७४ ॥

स्फटिकम् ॥

स्फटिकस्सितोपलस्स्या-
दमलमणिस्तारकोपलस्स्वच्छः ।
शीतोष्णवीर्यमक्ष्णः
पित्तं वातं निहन्ति शोफघ्नम् ॥ १७५ ॥

पुरा प्रोक्तं हि कान्तस्य मया ते लक्षणादिकम् ।

वैक्रान्तम् ॥

वैक्रान्तं चैव विक्रान्तं नीलवज्रं कुवज्रकम् ॥ १७६ ॥

गोनाशं क्षुद्रकुलिशं चूर्णवज्रं च गोनसम् ।
श्वेतो रक्तश्च पीतश्च नीलः पारावतच्छविः ॥ १७७ ॥

श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ।
वज्राभावे तु वैक्रान्तं रसवीर्यादिके समम् ॥ १७८ ॥

अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ १७९ ॥

[वैक्रान्तशुद्धिः ।]

कुलुत्थक्वाथसंस्विन्नो वैक्रान्तः परिशुध्यति ।
त्रिक्षारैः पञ्चलवणैर्वसामूत्राम्लकोद्रवैः ॥ १८० ॥

मत्स्यतैलघृतैस्तुल्यैः कुलुत्थैः काञ्जिकान्वितैः ।
सप्ताहं डोलिकायन्त्रे व्याघ्रीकन्दगतं पचेत् ॥ १८१ ॥

तप्तवर्णं तु वैक्रान्तं शुद्धिमायाति निश्चितम् ।

[वैक्रान्तभस्म ।]

हयमूत्रेण तत्सेच्यं तप्तं तप्तं द्विसप्तधा ॥ १८२ ॥

ततश्चोत्तरवारुण्याः पञ्चाङ्गैर्गोलके क्षिपेत् ।
रुध्वा मूषां पुटे पक्त्वा पुनरुद्धृत्य गोलके ॥ १८३ ॥

क्षिप्त्वा रुध्वा पुटेदेवं सप्तधा भस्मतां व्रजेत् ।

वैक्रान्तसत्वम् ॥

[प्रथमः प्रकारः ।]

वैक्रान्तस्य पलैकं तु पलैकं टङ्कणस्य च ॥ १८४ ॥

रविक्षीरे दिनं भाव्यं मर्द्यं शिग्रुद्रवैर्दिनम् ।

गुञ्जापिण्याकवह्नीनां प्रतिकर्षं वियोजयेत् ॥ १८५ ॥

अनेन गुलिकां कृत्वा कोष्ठीयन्त्रे धमेद्दृढम् ।
शङ्खकुन्देन्दुसङ्काशं सत्वं वैक्रान्तजं भवेत् ॥ १८६ ॥

[द्वितीयः प्रकारः ।]

वैक्रान्तं वज्रकन्दं च समं स्नुक्पयसा सह ।
महिषीनवनीतं च सक्षौद्रं मर्दयेद्दिनम् ॥ १८७ ॥

पूर्ववद्धमनात्सत्वमिन्द्रगोपनिभं भवेत् ।

[तृतीयः प्रकारः ।]

वन्ध्याचूर्णं सवैक्रान्तं छायायां मर्दयेत्समम् ॥ १८८ ॥

अजामूत्रैर्दिनैकं तु सत्वं रजतवद्भवेत् ।

[चतुर्थः प्रकारः ।]

म्रियतेऽष्टपुटैर्गन्धनिम्बुकद्रवसंयुतः ॥ १८९ ॥

सत्वपातनयोगेन मर्दितश्च वटीकृतः ।
मूषायां वटिकां ध्मातो वैक्रान्तस्सत्वमुत्सृजेत् ॥१९०॥

[वैक्रान्तद्रुतिः ।]

श्वेतवर्णं तु वैक्रान्तमम्लवेतसभावितम् ।
सप्ताहान्नात्र सन्देहः खरे घर्मे द्रवत्यलम् ॥ १९१ ॥

केतकीस्वरसं तुत्थं सैन्धवं स्वर्णपुष्पिकम् ।
इन्द्रगोपसमं युक्तं सर्वं भाण्डे विनिक्षिपेत् ॥ १९२ ॥

सप्ताहं स्वेदयेत्तस्मिन्वैक्रान्तं द्रवतां व्रजेत् ।

[वैक्रान्तगुणाः ।]

आयुःप्रदश्च बलवर्णकरोऽतिवृष्यः
प्रज्ञाप्रदः सकलदोषमदापहारी ।
दीप्ताग्निकृत्पविसमानगुणस्तरस्वी
वैक्रान्तकः खलु वपुर्बललोहकारी ॥ १९३ ॥

राजावर्तः ॥

आवर्तमणिरावर्तो राजावर्तोऽनलाह्वयः ॥ १९४ ॥

राजावर्तरसस्याथ लक्षणं कथयाम्यहम् ।
वर्णेन भ्रमराभस्स्याद्द्विःप्रकारः प्रकर्मतः ॥ १९५ ॥

एकश्चूर्णाकृतिर्ज्ञेयो द्वितीयो गोलकात्मकः ।
स्वर्णबिन्दुसमायुक्तः स्थिररागस्स्थिरत्वदः(व्यधः) ॥

रसदो(जतो)द्भवरागस्य(श्च) वर्णोत्कर्षेऽतिदक्षिणः ।
नागस्य रञ्जने श्रेष्ठस्तारे रञ्जनकर्मणि ॥ १९७ ॥

सर्वेषां चलरागाणां रागबन्धनकृन्मतः ।
राजावर्तोऽल्परक्तोरुनीलिकामिश्रितप्रभः ॥ १९८ ॥

गुरुश्च मसृणः श्रेष्ठस्तदन्यो मध्यमः स्मृतः ।

[राजावर्तादिशुद्धिः ।]

निम्बुद्रवैस्सगोमूत्रैस्सक्षारैस्स्वेदिताः खलु ॥ १९९ ॥

द्वित्रिवारेण शुध्यन्ति राजावर्तादिधातवः ।

[राजावर्तभस्म ।]

लुङ्गाम्बुगन्धकोपेतो राजावर्तो विचूर्णितः ॥ २०० ॥

पुटनात्सप्तवारेण राजावर्तो मृतो भवेत् ।

[राजावर्तसत्वम् ।]

राजावर्तमयःपात्रे पाचयेन्माहिषैर्घृतैः ॥ २०१ ॥

पयोभिश्च दिनं चैकं मित्रपञ्चकमिश्रितम् ।
रजन्या पञ्चरात्रेण पिण्डीभूतं तु कारयेत् ॥ २०२ ॥

खादिराङ्गारयोगेन कोष्ठ्यां सत्वं विमुञ्चति ।

[राजावर्तगुणाः ।]

प्रमेहक्षयदुर्नामपाण्डुश्लेष्मानिलापहः ॥ २०३ ॥

दीपनः पाचनो वृष्यो राजावर्तो रसायनः ।

गरुडोद्गारः ॥

सस्यको गरुडोद्गारः कालजिद्विषसा(मा)रकः ॥२०४॥

कालकूटविषं पीत्वा गरुडस्सोढुमक्षमः ।
तदा निर्गत्य तच्चंचोर्बहुधा सस्यकोऽभवत् ॥ २०५॥

महारसस्सस्यकस्स्यात्प्रभाभिः पञ्चभिर्युतः ।
धवलो मेचकः पीतो हरितश्चातिलोहितः ॥ २०६ ॥

अतिस्थितो वीतिहोत्रस्सर्वतस्सर्वरूपभाक् ।

[गरुडोद्गारगुणाः ।]

धवलो हरितश्चैव शस्यते तारकर्मणि ॥ २०७ ॥

लोहितो मेचकः पीतश्शस्यते हेमकर्मणि ।
सस्यकस्सर्वरोगघ्नो विषमृत्युभयापहः ॥ २०८ ॥

विमलः ॥

विमलो निर्मलस्स्वच्छो विमलस्स्वच्छधातुकः ।
बाणसंख्याभिधं शस्तं तारहेम द्विधाकृतः ॥ २०९ ॥

विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्विकः ।
तृतीयः कांस्यविमलस्तत्र कान्त्या स लक्ष्यते ॥२१०॥

वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः ।

[विमलगुणाः ।]

मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ॥ २११ ॥

पूर्वो हेमक्रियासूक्तो द्वितीयो वृष्यकर्मणि ।
तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तरः ॥ २१२ ॥

[विमलशुद्धिः ।]

आटरूषरसे स्विन्नो विमलो विमलो भवेत् ।
कन्दलीकन्दतोयेन विमलं प्रथमं पचेत् ॥ २१३ ॥

अम्लवेतसधान्याम्लमेषीमूत्रे ततः पचेत् ।
डोलायन्त्रे चतुर्यामं शुद्धिरेषां महोत्तमा ॥ २१४ ॥

कार्कोटीमेषशृङ्ग्युत्थैर्द्रवैर्जम्बीरजैर्दिनम् ।
भावयेदातपे तीव्रे विमला शुद्ध्यति ध्रुवम् ॥ २१५ ॥

[विमलसत्वम् ।]

विमलं शिग्रुतोयेन कांक्षीकासीसटङ्कणैः ।
वज्रकन्दसमायुक्तैर्भावयेत्कदलीरसैः ॥ २१६ ॥

मोक्षकक्षारसंयुक्तमन्धमूषागतं धमेत् ।
सत्वं चन्द्रार्कसङ्काशं पतत्यस्य न संशयः ॥ २१७ ॥

**पेरोजः– हरिताश्मा ॥**

हरिताश्मा च पेरोजो विषार्तिर्हरिन्मणिः ।
रसवीर्यविपाकेषु सस्यकस्य गुणानुगः ॥ २१८ ॥

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ अष्टमोल्लासः ॥

# ॥ नवम उल्लासः ॥

दिव्यौषधिमहौषधिप्रशंसा ॥

श्रीभैरवी—

कीदृशी ओषधी नाथ ! रसकर्मकरी शुभा ।
केन वा भस्म सूतश्च केन वा खोटबन्धनम् ॥ १ ॥

निर्जीवत्वं गतस्सूतः कथं जीवं ददाति सः ।
निर्जीवेन तु जीवत्वं कथं जीवति शङ्कर ! ॥ २ ॥

एतन्मे संशयं ब्रूहि यथा जानाम्यहं शिव ! ।

श्रीभैरवः—

शृणु भैरवि ! तत्सर्वमपूर्वं कथयामि ते ॥ ३ ॥

ब्रह्मविष्णुसुरेन्द्राद्यैर्न ज्ञातं वीरवन्दिते ! ।
वलीपलितरोगघ्ना मृत्युदारिद्र्यभञ्जनाः ॥ ४ ॥

रसकर्मकरा दिव्याः कुलौषध्यस्सुसिद्धिदाः ।
भ्रमन्ति पशवो मूढाः कुलौषधिविवर्जिताः ॥ ५ ॥

तृणौषधिरसानां च नैव सिद्धिः प्रजायते ।
तस्मात्सर्वप्रयत्नेन ज्ञातव्या तु कुलौषधिः ॥ ६ ॥

दिव्यौषध्यश्चतुष्षष्टिः कुलमध्ये व्यवस्थिताः ।
नैव जानन्ति मूढास्ताश्शिवमोहेन मोहिताः ॥ ७ ॥

अदिव्यास्तु तृणौषध्यो जायन्ते गिरिगह्वरे ।
तृणौषध्या रसे सूतं नैव बन्धं कदाचन ॥ ८ ॥

अक्षयं नैव तिष्ठेत्तु कुलौषधिविवर्जितम् ।
कुलौषध्या विहीनास्तु गगनं च न हन्ति ते ॥ ९ ॥

स रसस्तु वरारोहे वह्निमध्ये न तिष्ठति ।
न खोटो न च वा भस्म नैव द्रव्यं करोति सः ॥१०॥

किञ्चिदृद्रव्यं प्रकुर्वन्ति धाम्यमानं न तिष्ठति ।
पत्रे पाके कषे छेदे नैव तिष्ठति काञ्चनम् ॥ ११ ॥

नैव वेधं शतादूर्ध्वं करोति स रसः प्रिये! ।
यावन्न चाब्दमेकं तु विक्रीतं तत्तु काञ्चनम् ॥ १२ ॥

धर्मार्थकाममोक्षेषु नैव दद्यात्तु तत्प्रिये! ।
दिव्यौषध्या यदा देवि! रसेन्द्रो मर्दितो भवेत् ॥१३॥

कालिकारहितस्सूतस्सदा भवति पार्वति! ।
परस्य हरते कालं कालिकारहितो रसः ॥ १४ ॥

अष्टानां चैव लोहानां मलं शमयति क्षणात् ।
महामूर्च्छागतं सूतं को वाऽपि कथयेन्मृतम् ॥ १५ ॥

दिव्यौषध्या रसेनैव जायते नष्टचेतनः ।
पञ्चभूतात्मकस्सूतस्तिष्ठते च सदाशिवः ॥ १६ ॥

रसौषध्यो महौषध्यस्सिद्धौषध्यस्तथाऽपराः ।
दिव्यौषध्य इति प्रोक्ता मया प्रोक्ताश्चतुर्विधाः ॥१७॥

दिव्यौषध्यो निगद्यन्ते तासु ता गुणवत्तराः ।
वृक्षवल्लीलतागुल्मतृणवन्दानिका इति ॥ १८ ॥

रसबन्धकरौषध्यष्षड्विधा परिकीर्तिताः ।

## चतुष्षष्टिर्दिव्यौषध्यः ॥

### १. सोमवल्ली ।

सोमवल्ली महागुल्मा यक्ष(ज्ञ)श्रेष्ठा धनुर्लता ॥ १९ ॥

सोमाह्वा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ।

सोमक्षीरा च सोमा च यज्ञा दिव्यलता स्मृता ॥ २०॥

सोमवल्ली कटुश्शीता मधुरा पित्तदाहनुत् ।
तृष्णाविशेषशमनी पाचनी च रसायनी ॥ २१ ॥

पञ्चाङ्गका पञ्चदशच्छदाढ्या
सर्पाकृतिश्शोणितपर्वदेशा ।
सा सोमवल्ली रसबन्धकर्म
करोति राकादिवसोपनीता ॥ २२ ॥

कृष्णे पक्षे प्रगलति दलं प्रत्यहं चैकमेकं
शुक्ले पक्षे प्रभवति पुनर्लंबमाना लता स्यात् ।
तस्याः कन्दः कलयति तरां पूर्णिमायां गृहीतो
बध्वा सूतं कनकसहितं देहलोहं विधत्ते ॥

इयं सोमलता नाम वल्ली परमदुर्लभा ।
अनया बद्धसूतेन्द्रो लक्षवेधी प्रजायते ॥ २४ ॥

चतुर्विंशतिसोमानां लक्ष्म व्यक्तं रसायने ।

## २. सोमवृक्षः—महिषवल्ली च ।

करोति सोमवृक्षोऽपि रसबन्धवधादिकम् ॥ २५ ॥

पूर्णिमादिवसानीतस्तयोर्वल्ली गुणाधिका ।
प्रोक्ता महिषवल्ली च प्रतिसोमाऽन्लवल्लिका ॥२६॥

अपत्रवल्लिका प्रोक्ता काण्डशाखा पयस्विनी ।
रसवीर्यविपाकेषु सोमवल्ली समा स्मृता ॥ २७ ॥

## ३. स्थलपद्मिनी ।

अथातस्स्थलपद्मिन्या दिव्यौषध्या विधिं शृणु ।
पद्मिनीसदृशा पत्रैः पुष्पैरपि च तादृशी ॥ २८ ॥

भङ्गे चैव स्रवेत्क्षीरं रक्तवर्णं सुशोभनम् ।
आक्रम्य वामपादेन पश्येद्गगनमण्डलम् ॥ २९ ॥

पश्येच्च तारकायुक्तं ग्रहनक्षत्रमण्डलम् ।
लक्षयोजनतो देवि ! सा ज्ञेया स्थलपद्मिनी ॥ ३० ॥

४. गोनसा ।

गोनसाकारवल्ली स्याच्चित्रमण्डलमण्डिता ।
जरारुङ्मृत्युशमनी रसवन्धवधक्षमा ॥ ३१ ॥

५. उच्चटा ।

अथोच्चटां प्रवक्ष्यामि रसवन्धकरीं प्रिये ! ।
एकमेव भवेन्नालं तस्या रोमप्रवेष्टनम् ॥ ३२ ॥

तस्याग्रे च भवेत्पुष्पं शुकतुण्डस्य सन्निभम् ।
तत्पत्राणि च देवेशि ! शुकपिञ्छनिभानि च ॥ ३३ ॥

तत्कन्दं कूर्मसंस्थानं क्षीरं सिन्दूरसन्निभम् ।
जलं स्रवेन्मधूच्छिष्टे तत्समादाय पार्वति ! ॥ ३४ ॥

वेधयेत्सर्वलोहानि काञ्चनानि भवन्ति च ।

६. ईश्वरी ।

ईश्वरीत्युच्यते काचिदीश्वरीतुल्यरूपिणी ॥ ३५ ॥

भूरिक्षीरपरिस्रावा सबीजरसबन्धिनी ।

७. भूतकेशी ।

निम्बपत्रसदृक्पत्रा भूतकेशीति कथ्यते ॥ ३६ ॥

न व(ब)ध्यते यया सूतस्सूतोऽसौ भि(हि)निबन्धकः ।

८. कृष्णलता ।

भिन्नकज्जलसङ्काशा लता कृष्णलतेत्यसौ ॥ ३७ ॥

निर्बीजमपि बध्नाति रसं सर्वविषापहा ।

९. लशुनवल्ली ।

नाम्ना लशुनवल्ली च तद्दलैस्सदृशच्छदा ॥ ३८ ॥
क्षरत्क्षीरा सुकन्दा च रसं बध्नाति वेगतः ।

१०. रुदन्ती ।

चणपत्रोपमैः पत्रैः पुष्पैरपि च तादृशी ॥ ३९ ॥
रुदन्ती नाम विख्याता ह्यधस्ताज्जलवर्षिणी ।
रुदन्तीव जनान्दृष्ट्वा मृत्युदैन्यजराकुलान् ॥ ४० ॥
चतुर्विधा तु सा ज्ञेया पीता रक्ता सिताऽसिता ।
जारिताभ्रं रसं हन्याद्बध्नाति च रसायनी ॥ ४१ ॥

११. वाराही ।

मुसलीकन्दवत्कन्दा तद्दलाकारवद्दला ।
सुक्षीरा रोमशा सोक्ता वाराही रसबन्धनी ॥ ४२ ॥

१२. सप्तपत्री ।

सप्तपल्लवसंपूर्णा सप्तपत्रीत्यसौ मता ।
रसायनी जराघ्नी च बध्यते पारदस्तया ॥ ४३ ॥

१३. नागिनी ।

नागिनीत्युदिता वल्ली नागभोगसमाङ्गिका ।
सर्पादिकविषघ्नी च सा स्वच्छरसबन्धिनी ॥ ४४ ॥

१४. सर्पिणी ।

सर्पिणी लतिका चान्या सर्पवद्वक्रयष्टिका ।
सक्षीरा स्निग्धपत्रा च बालपारदबन्धिनी ॥ ४५ ॥

### १५. छत्रिणी।

छत्रवद्दण्डपत्ता या नातिनीचा न चोन्नता।
सुक्षीरा छत्रिणी नाम रसवन्धकरी मता॥ ४६॥

### १६. गोश्टङ्गी।

पर्वतेऽश्मसमुद्भूता गोकन्दाकृतिकन्दयुक्।
क्षता मुञ्चति सा क्षीरं गोश्टङ्गी रसबन्धिनी॥ ४७॥

### १७. ज्योतिर्लता।

ज्योतिर्नाम्नी त्रिधा प्रोक्ता वृक्षकन्दतृणात्मिका।
गिरौ ज्वलति सा रात्रौ लतापारदवन्धिनी॥४८॥

### १८. रक्तवल्ली।

रक्तक्षीरदलाङ्गा या नातिविस्तरवल्लिका।
रक्तवल्लीत्यसौ दिव्या निर्दिष्टा रसबन्धिनी॥ ४९॥

### १९. पद्मवल्ली।

या पद्मपत्राकृतिपत्रवल्ली
सा पद्मवल्लीत्युदिता रसज्ञैः।
सक्षीरकन्दा सलिलोद्भवा च
क्षितौ न तिष्ठेद्रसबन्धनी सा॥ ५०॥

### २०. काकिनी।

स्थूलकण्टकवर्णाढ्या सा प्रोक्ता काकिनी लता।
रसबन्धकरी सैषा जरामृत्युविनाशिनी॥ ५१॥

### २१. चाण्डाली।

चाण्डालीति विनिर्दिष्टा त्रिचतुःपत्रधारिणी।
सा च रक्ता क्षीरकन्दा तया सूतो निबध्यते॥ ५२॥

प्रोक्तश्चण्डालकन्दस्स्यादेकपत्रो द्विपत्रकः ।
त्रिपत्रोऽथ चतुःपत्रः पञ्चपत्रश्च भेदतः ॥ ५३ ॥

२२. ताम्रवल्ली ।

ताम्रवर्णलतापत्रपुष्पक्षीरसमन्विता ।
सा ताम्रवल्लिका प्रोक्ता रसलोहादिसाधनी ॥ ५४ ॥

२३. पीतवल्ली ।

पीतपत्रलतापुष्परसयुक्ताऽतिदुर्लभा ।
सा पीतवल्लिकेत्युक्ता रसबन्धविधौ हिता ॥ ५५ ॥

२४. विजया ।

सितक्षीराऽऽढकीपत्रच्छदना नाऽतिविस्तृता ।
विख्याता विजयेत्येषा रसबन्धविधौ हिता ॥ ५६ ॥

२५. महौषधी ।

त्रिकोणकन्दसंयुक्ता चिल्लकच्छदनच्छदा ।
महौषधीति सा प्रोक्ता रसबन्धे परं हिता ॥ ५७ ॥

२६. देवदाली ।

शिखिकण्ठाभपत्राऽऽढ्या चन्दनामोदमेदुरा ।
देवदालीत्यसौ दिव्या रसं बध्नाति सा क्षणात् ॥५८॥

२७. नवनीतकगन्धी ।

नवनीतकगन्धीति तिक्ता मूक्षणगन्धिनी ।
सक्षीरा रक्तपुष्पा च रसेन्द्रो बध्यते तया ॥ ५९ ॥

२८. गरुडवल्ली ।

सक्षीरा रक्तपुष्पा च बदरीदलवद्दला ।
उक्ता गारुडवल्लीति शीघ्रं बध्नाति पारदम् ॥ ६० ॥

## २९. तुंबिनी ।

तुम्बिनीत्युदिता वल्ली तत्पत्रकुसुमान्विता ।
तिक्तरक्तपयोयुक्ता तत्फला रसबन्धिनी ॥ ६१ ॥

## ३०. भूतुम्बिनी ।

या तुम्बिनीपत्रसमानपत्रा
भूतुम्बिनी नातिविसर्पिणी सा ।
निंबूसमानैश्च फलैरुपेता
सर्वामयघ्नी रसबन्धनी च ॥ ६२ ॥

## ३१. गन्धर्वा ।

एरण्डपत्रवत्पत्रा सक्षीरा नातिविस्तृता ।
गन्धर्वेत्युदिता सा हि तया बन्धं रसो व्रजेत् ॥६३॥

## ३२. व्याघ्रपादी ।

व्याघ्रांघ्रिसमपत्रा या रक्तपुष्पा पयस्विनी ।
व्याघ्रपादीति निर्दिष्टा रसं बध्नाति निश्चितम् ॥६४॥

## ३३. महौषधी ।

सप्तच्छदसदृक्पत्रा कृशाङ्गी नातिविस्तृता ।
महौषधीत्यसौ प्रोक्ता रसं बध्नाति हन्ति च ॥६५ ॥

## ३४. गोमारी ।

गोमारीनामिका वल्ली वेणुपत्रसमच्छदा ।
तस्या मूलं समासाद्य शस्तस्सूतो निबध्यते ॥ ६६ ॥

## ३५. त्रिशूली ।

त्रिशूलाकारपत्रा या शम्याकफलवत्फला ।
त्रिशूलीति समाख्याता विख्याता रसबन्धने ॥ ६७ ॥

३६. रुतसी ।

रुतसीपत्रवत्पत्रफला सा क्षीरकन्दयुक् ।
रुतसी वल्लिकेत्युक्ता गिरिजा रसबन्धनी ॥ ६८ ॥

३७. त्रिदण्डी ।

सुपुष्पा तिलकोपेता रक्तत्यत्रि(त्वक्त्रि)फलान्विता ।
रसबन्धविधौ प्रोक्ता त्रिदण्डीति कृताभिधा ॥ ६९ ॥

३८. भृङ्गवल्ली ।

भृङ्गवद्वर्णपत्राऽऽढ्या क्षीरिणी पीतपुष्पिका ।
भृङ्गवल्लीति सा प्रोक्ता प्रयुक्ता रसबन्धने ॥ ७० ॥

३९. चमरिका ।

चमराकारपत्राऽऽढ्या क्षीरयुक्चन्द्रधारिणी ।
लता चमरिका नाम सा च बध्नाति पारदम् ॥ ७१ ॥

४०. करवीरलता ।

हयमारसमाकारदलपुष्पवती लता ।
करवीरलतेत्युक्ता नितरां सूतबन्धिनी ॥ ७२ ॥

४१. वज्रवल्ली ।

कोरण्डपत्रच्छदनोपमान-
प्रसूनपत्रा च सदुग्धकन्दा ।
सा वज्रवल्ली कटुतिक्तसारा
वज्राङ्कपत्रा रसबन्धिनी च ॥ ७३ ॥

४२. वारवल्ली ।

रक्तक्षीरवती बिल्वदलोपमदलान्विता ।
वारवल्लीति सा सूतबन्धनी रोगनाशिनी ॥ ७४ ॥

## ४३. रोहिणी।

शणपुष्पदलाकारदशपुष्पा च दुग्धयुक्।
सा रोहिणीति निर्दिष्टा रसराजस्य बन्धनी ॥ ७५ ॥

## ४४. विल्विनी।

ज्योतिष्मतीदलाकारवर्णपर्णा यश(पय)स्विनी।
रसबन्धविधौ प्रोक्ता बिल्विनीति निगद्यते ॥ ७६ ॥

## ४५. गोरोचनलता।

गोरोचनप्रभायुक्तदलवल्लीसमन्विता।
गोरोचनलता भूतमोचनी रसबन्धनी ॥ ७७ ॥

## ४६. करीरी।

श्रीशैलशिखरोद्भूता मार्कण्डीसदृशौषधी।
रक्तं क्षीरं क्षता मुञ्चेत्करीरी रसबन्धिनी ॥ ७८ ॥

## ४७. अक्षरा।

पलसीसा(?) पलवत्पत्रा त्रिवर्षात्फलदायिनी।
अक्षरेति समाख्याता रसस्यातिनिबन्धिनी ॥ ७९ ॥

## ४७. अपत्रा।

सोमवल्लीव निष्पत्रा कज्जलाभरसान्विता।
अपत्राऽसौ भवेद्विन्ध्ये नात्युच्चा रसबन्धिनी ॥ ८० ॥

आद्ये वर्षे भवेदम्ला भवेत्तिक्ता द्वितीयके।
तृतीयेऽब्दे च मधुरैः फलैर्युक्ता प्रजायते ॥ ८१ ॥

पित्तज्वरहरा सद्यः सुपत्रफलसंयुता।

## ४९. कुटजवल्ली।

लता कुटजवल्लीति तत्फला तद्दलान्विता ॥ ८२ ॥

मधुरा रुधिरग्रन्थिस्सूतराजनिबन्धिनी ।

### ५०. मूलकन्दा ।

मूलकन्देति विख्याता मूलवत्फलपत्रिणी ॥ ८३ ॥
लता क्षीरान्विता सूतबन्धनं कुरुते ध्रुवम् ।

### ५१. ब्राह्मणी ।

पारिजाताद्रिजा वल्ली शतपुष्पदलच्छदा ॥ ८४ ॥
कृष्णक्षीरफला प्रोक्ता ब्राह्मणी रसबन्धिनी ।

### ५२. मुनिवल्ली- घृतगन्धा ।

अगस्तिपत्रतत्पत्रा तद्रूपाऽरुणपुष्पिणी ॥ ८५ ॥
घृतगन्धा रसघ्नी सा मुनिवल्लीति कथ्यते ।

### ५३. निंबवल्ली ।

दलैः पुष्पैः फलैर्वल्ली निंबवृक्षस्य सन्निभा ॥ ८६ ॥
तन्मूलैर्बध्यते सूतस्सा प्रोक्ता निम्बका लता ।

### ५४. तिलकन्दा ।

तिलकन्देति विख्याता मूलवत्फलपत्रिणी ॥ ८७ ॥
लता क्षीरवती सूतं निबध्नात्यातपे खरे ।

### ५५. अतसीवल्ली ।

अतस्य इव पुष्पाणि फलानि च दलानि च ॥ ८८ ॥
अतसीवल्लिका सा हि पारदस्य निबन्धिनी ।

### ५६. बोधिलता ।

उक्ता बोधिलता बोधिपत्रदुर्गंधेन संयुता ॥ ८९ ॥
बध्नाति रसराजं सा दानवेन्द्रमिवाच्युतः ।

### ५७. मद्यगन्धा।

मद्यगन्धेति विख्याता निष्पत्रा फलपत्रयुक् ॥ ९० ॥
तस्याः कन्दो रसं शीघ्रं बन्धनं नयति ध्रुवम्।

### ५८. कूर्मलता।

उक्ता कूर्मलता कूर्मरूपकन्दा पयोऽन्विता ॥ ९१ ॥
मल्लिकोपमतत्पत्रप्रसवा रसबन्धिनी।

### ५९. माधवी।

माधवीमूलवन्मूला नागवल्लीदलान्विता ॥ ९२ ॥
माधवीत्युदिता वल्ली तन्मूलैर्बध्यते रसः।

### ६०. विशाला।

श्वेतपत्रतया वल्ली श्वेतपुष्पफला तथा ॥ ९३ ॥
विशालेति विनिर्दिष्टा साऽपि पारदबन्धिनी।

### ६१. महानागा।

नागकुण्डलवत्कन्दा तत्फणासदृशच्छदा ॥ ९४ ॥
महानागेत्यसौ वल्ली विनिबध्नाति पारदम्।

### ६२. मण्डकलता।

मण्डूकाकारवत्कन्दा मण्डूकीदलवद्दला ॥ ९५ ॥
मण्डूकलतिकेत्येषा तन्मूलैर्बध्यते रसः।

### ६३. उदुम्बरलता।

उदुम्बरफलाकारफलवद्दलवद्दला ॥ ९६ ॥
सोदुम्बरलतेत्युक्ता सूतराजस्य बन्धिनी।

## ६४. चित्रवल्ली।

या दुग्धकंदा वटपत्रपत्रा
विचित्रपर्णोरुफला सुदीर्घा ।
सा चित्रवल्लीत्युदिता रसेन्द्रो
निबध्यते तत्फलमध्यसंस्थः ॥ ९७ ॥

### चतुष्षष्टिदिव्यौषधिनामसङ्ग्रहः॥

चतुष्षष्टिरिति प्रोक्ता दिव्यौषध्यो महाबलाः ॥ ९८ ॥

आभिर्बद्धो रसो नृणां देहलोहार्थसाधकः ।
सोमवल्ली सोमवृक्षः स्थलपद्मिनिका ततः ॥ ९९ ॥

गोनसाकारवल्ली च उच्चटा ईश्वरी ततः ।
भूतकेशी कृष्णलता ज्ञेया लशुनवल्लरी ॥ १०० ॥

रुदन्ती चैव वाराही सप्तपत्री च नागिनी ।
सर्पिणी छत्रिणी चैव गोशृङ्गी सर्वसिद्धिदा ॥ १०१ ॥

ज्योतिर्नाम्नी त्रिधा रक्तवल्लरी पत्रवल्लरी ।
काकिनी चैव चाण्डाली वल्लरी ताम्रवल्लरी ॥ १०२ ॥

पीतवल्ली च विजया विज्ञेया च महौषधी ।
ज्ञातव्या देवदाली च स्यान्नवानीतगन्धिनी ॥ १०३ ॥

ज्ञेया गरुडवल्ली च तुंबिनी भूमितुंबिनी ।
गन्धर्वा व्याघ्रपादी च विज्ञेया च महौषधी ॥ १०४ ॥

गोमारी च त्रिशूली च रुतसी च त्रिदण्डिका ।
भृङ्गवल्ली चमरिका करवीरलता ततः ॥ १०५ ॥

वज्रवल्ली वारवल्ली रोहिणी बिल्विनी तथा ।
गोरोचनलता चैव करीरी चाक्षरा तथा ॥ १०६ ॥

अपत्री कुटजा वल्ली मूलकन्दा च ब्राह्मणी।
घृतगन्धा निंबवल्ली तिलकन्दाऽतसी तथा ॥ १०८ ॥

बोधिवल्ली मद्यगन्धा कूर्मवल्ली च माधवी।
विशाला च महानागा ज्ञेया मण्डूकवल्लरी ॥ १०९ ॥

उदुम्बरलता चित्रवल्ली चैव सुरार्चिते !।
चतुष्षष्टिरिति प्रोक्ता दिव्यौषध्यो महाबलाः ॥११०॥

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ नवमोल्लासः ॥

# ॥ दशम उल्लासः ॥

## महौषध्यः ॥

श्रीभैरवः—

### १. हिमजा।

हिमजा काञ्चनक्षीरी यवचिञ्चा(ञ्चा) महाद्रिजा।
हिमावती पीतदुग्धा रेचनी पटुपर्णिका ॥ १ ॥

तद्दुग्धं हेमकङ्कुष्ठं पुलकं रेचनं तथा।

तेजोवती बहुरसा कनकप्रभाऽन्या
तीक्ष्णाग्निगर्भा सुरवल्लरी च ॥ २ ॥

हिमजा कटुका तिक्ता रेचनी सर्ववातनुत्।
कृमिशोषो(फो)दरघ्नी च पित्तज्वरहरा तु सा ॥ ३ ॥

### २. कारवी।

कारवी कारवल्ली च कषायोष्णा कफापहा।
कासश्वासहरा बल्या ज्ञेया रसनियामिका ॥ ४ ॥

### ३. कटुतुंबी।

कटुतुंबी कटुफला राजपुत्री महत्फला ।
कटुतुंबी कटुस्तिक्ता वान्तिकृच्छ्वासवान्तिजित् ॥ ५ ॥
कासघ्नी शोधनी शोफव्रणशूलविषापहा ।
तिक्ततुम्बी तु तिक्ता स्यात्कटुका कटुतुम्बिका ॥ ६ ॥
तुम्बी च कटुतिक्तादितुम्बीपर्यायगा स्मृता ।

### ४. ज्योतिष्मती।

ज्योतिष्मती नाम लताऽनलप्रभा
ज्योतिर्लता सा कटभी सुपिङ्गला ।
दीप्या च मेध्या मतिदा च दुर्जरा
सारस्वती स्यादमृतार्कसंख्या ॥ ७ ॥

### ५. लिङ्गिनी।

लिङ्गिनी बहुपुत्री स्यादीश्वरी शैववल्लरी ॥ ८ ॥
स्वयंभूर्लिङ्गसंभूता लैङ्गी चित्रफलान्विता ।
अयस्तम्भकरी लिङ्गबीजा च शिववल्लरी ॥ ९ ॥
लिङ्गिनी कटुरूक्षा च दुर्गन्धा च रसायनी ।
सर्वसिद्धिकरी दिव्या रसराजनियामिका ॥ १० ॥

### ६. पातालगरुडी।

पातालगरुडी तार्क्ष्यी सौवर्णी गरुडी तथा ।
वत्सादनी दीर्घकाण्डा दृढकाण्डा महाबला ॥ ११ ॥
दीर्घवल्ली दृढलता दशनामानि पार्वति! ।
सर्ववश्यकरी सैषा सर्पादिविषनाशनी ॥ १२ ॥

### ७. गिरिकर्णी ।

गिरिकर्णी च कटभी गर्दभी दधिपुष्पिका ।
सितपुष्पी विषघ्नी च श्वेताश्वखुरपुष्पिका ॥ १३ ॥

गिरिकर्णी हिमा तिक्ता पित्तोपद्रवनाशिनी ।
चक्षुष्या विषदोषघ्नी त्रिदोषशमनी च सा ॥ १४ ॥

नीलपुष्पा महानीला स्यान्नीलगिरिकर्णिका ।

नीलाद्रिकर्णी शिशिरा सतिक्ता
रक्तातिसारज्वरदाहहन्त्री ।
प्रतर्दिकोन्मादमदश्रमार्ति-
श्वासार्तिहा स्याद्विषहारिणी च ॥ १५ ॥

### ८. आखुकर्णी ।

आखुकर्णी भूमिचरा द्रवन्ती बहुपादिका ॥ १६ ॥

सुतश्रेणी द्रवन्ती च न्यग्रोधा माक्षिकाह्वया ।
चित्रा मूषकपुच्छी च प्रत्यक्श्रेणी च शंबरी ॥ १७ ॥

सुतश्रेणी च चक्षुष्या कटुकाऽऽखुविषापहा ।
व्रणदोषहरा चैव नेत्रामयविनाशिनी ॥ १८ ॥

कृष्णिका बहुपर्णी च प्रत्यक्शोणी च शंबरी ।
पूतिपर्णी शिवा चाखुकर्णवत्पर्व(र्ण)शालिनी॥ १९ ॥

आखुकर्णी कटूष्णा च कफपित्तहरा सरा ।
आनाहशूलजूत्यर्तिनाशनी पाचनी परा ॥ २० ॥

### ९. वाराही ।

वाराही स्यात्सूकरी क्रोडकन्या
गृष्टिर्विष्वक्सेनकान्ता कुमारी ।

कौमारी स्याद्ब्रह्मपत्री त्रिनेत्रा
क्रौडीकन्या गृष्टिका माधवेष्टा ॥ २१ ॥

वाराही तिक्तकटुका विषपित्तकफापहा ।
कुष्ठमेहकृमिहरा वृष्या बल्या रसायनी ॥ २२ ॥

१०. देवदाली ।

देवदाली त्रिधा प्रोक्ता श्वेता कृष्णा च पीतला ।
सा श्वेता व्याधिशमनी कृष्णा पीता रसायने ॥२३॥

देवदाली कोशफला दाली लोमशपत्रिका ।
कृष्णबीजा कटुफला वृत्तकोशाऽम्लवल्लरी ॥ २४ ॥

जीमूतं कण्टकफला वेणी चाखुविषापहा ।
तुरङ्गिका जालफला गरारिस्सारमूषिका ॥ २५ ॥

देवदाली तु तीक्ष्णोष्णा कटुः पाण्डुकफापहा ।
दुर्नामश्वासकासघ्नी कामिलालूतिकापहा ॥ २६ ॥

सर्वलोहद्रुतिकरा पीनसाहिविषापहा ।

११. ऐन्द्री ।

ऐन्द्रीन्द्रवारुण्यरुणा मृगादिनी
गवादनी क्षुद्रसहेन्द्रचिद्भटा ।
सूर्या विषघ्नी रु(गु)णकर्णिकाऽमरा
सुपर्णिका स्यात्फलतारका च ॥ २७ ॥

वृषभाक्षी गवाक्षी च पीतपुष्पेन्द्रवल्लरी ॥ २८ ॥

हेमपुष्पी क्षुद्रफला वारुणी बालकप्रिया ।
रक्तोर्वारुर्विषलता चक्रवल्ली विषापहा ॥ २९ ॥

अमृता च विशाला च ज्ञेयोनत्रिंशदाह्वया ।

इन्द्रवारुणिका तिक्ता कटुस्शीता च रेचनी ॥ ३० ॥

गुल्मपित्तोदरश्लेष्मकृमिकुष्ठज्वरापहा ।
महेन्द्रवारुणी रम्या चक्रवल्ली महाफला ॥ ३१ ॥

सा महेन्द्री वृत्तफला त्रपुसी तपुसा तथा ।
आत्मरक्षा विशाला च दीर्घवल्ली महाफला ॥ ३२ ॥

स्याद्बृहद्वारुणी सौम्या नामान्यस्याश्चतुर्दश ।
माहेन्द्रवारुणी ज्ञेया पूर्वोक्ता गुणवाहिनी ॥ ३३ ॥

रसे वीर्ये विपाके च किञ्चिदेषा गुणाधिका ।

### १२. गोजिह्वा।

गोजिह्वा क्षुरपत्त्री स्यादधोपुष्पा त्वधोमुखी ॥ ३४ ॥

गोजिह्वा कटुका तीव्रा शीतला पित्तनाशिनी ।
व्रणप्रशमनी चैव सप्तदन्तविषापनुत् ॥ ३५ ॥

### १३. काकतुण्डी।

काकतुण्डी काकनासा काकसिंही च रक्तला ।
काकदन्ती काकपीलुर्वृत्तरक्तफला तथा ॥ ३६ ॥

काकप्राणा वल्कशल्या कृष्णबीजा च रञ्जकी ।
काकतुण्डी च मधुरा शिशिरा पित्तहारिणी ॥ ३७ ॥

रसायनी दार्ढ्यकरी विशेषात्पलितापहा ।

### १४. रक्तपादी।

रक्तपादी शमीपत्रपला खदिरपत्रिका ॥ ३८ ॥

सङ्कोचनी समङ्गा च नमस्कारी प्रसारणी ।
लज्जालुस्सप्तपर्णी स्यात्खदिरी मण्डमालिका ॥ ३९ ॥

रक्तमूला ताम्रमूला स्वगुप्ताऽञ्जलिकारिका ।

१७. कर्कोटकी ।

कार्कोटकी द्विधा वन्ध्या श्रेष्ठाऽन्या फलमारिणी ।
मृदुकण्टकिनी वृत्तफला सा वनवासिनी ॥ ५१ ॥

वन्ध्या देवी वन्ध्यकार्कोटकी स्या-
न्नागारातिर्नागहन्त्री मनोज्ञा ।
पथ्या दिव्या पुत्रदात्री त्रिकन्दा
श्रीकन्दा सा कन्दवल्ली विषघ्नी ॥ ५२ ॥

योगीश्वरी व्याघ्रपादी कन्या स्यात्षोडशाह्वया ।
वन्ध्या कर्कोटकी तिक्ता कटूष्णा च कफापहा ॥५३॥

स्थावरादिविषघ्नी स्याद्रसबन्धे रसायने ।

१८. शरपुङ्खा ।

शराभिधानपुङ्खा स्याच्छरपुङ्खीति कथ्यते ॥ ५४ ॥

शरपुङ्खी त्रिधा श्वेता रक्ता कृष्णा च कण्टका ।
श्वेताऽप्येषा गुणाऽऽढ्या स्यात्प्रयोगे च रसायने ॥

अन्या तु कण्टपुंखा स्यात्कण्टसायकपुंखिका ।
कण्टस्पृशेव कुण्डी कण्टकशरपुङ्खमूलनिर्यूहः ॥ ५६ ॥

नूर्णमजीर्णविषूचीमहापरतिक्रशानुकार्श्यं च ।
सर्वाश्च शरपुङ्खास्तु कटूष्णाः कफवातहाः ॥ ५७ ॥

अजीर्णशूलकृमिहा ग्रहणीशमनाः परम् ।

१९. भृङ्गराजः ।

मार्कवो भृङ्गराजस्स्याद्भृङ्गाह्वः केशरञ्जकः ॥ ५८ ॥

पितृप्रियो ब्रह्मपत्री केश्यः कुन्तलवर्धनः ।
पीतोऽन्यः स्वर्णभृङ्गारो हरिवासो हरप्रियः ॥ ५९ ॥

लज्जालुश्च कटुश्शीता पित्तातीसारनाशिनी ॥ ४० ॥

शोफदाहज्वरश्वासव्रणकुष्ठकफार्तिनुत् ।
लज्जालुर्वैपरीत्याह्वः कटुरुष्णः कफामनुत् ॥ ४१ ॥

रसे नियामकेऽत्यन्तं नानाविज्ञानकारकः ।

## १५. पुनर्नवा ।

पुनर्नवा त्रिधा प्रोक्ता श्वेता रक्ता च मेचका ॥ ४२ ॥

पुनर्नवा विषहरा कठिल्ला नेत्ररोगहा ।
पृथ्वीका सितवर्षाभूर्दीर्घपत्रा सिताङ्गका ॥ ४३ ॥

श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा ।
कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत् ॥ ४४ ॥

पुनर्नवाऽन्या रक्ताख्या क्रूतमण्डलपत्रिका ।
वैशाखी रक्तसर्वाङ्गा शोफघ्नी विषहा परा ॥ ४५ ॥

पुनर्नवो नवो नव्या प्रावृषेण्या च सारिणी ।
रक्ता पुनर्नवा तिक्ता सारणी शोफनाशिनी ॥ ४६ ॥

रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दनी ।
श्यामाख्या नीलवर्षाभूर्दीर्घपत्रा पुनर्नवा ॥ ४७ ॥

नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी ।
हृद्रोगपाण्डुश्वयथुश्वासवातकफापहा ॥ ४८ ॥

## १६. अत्यम्लपर्णी ।

अत्यम्लपर्णी तीक्ष्णाम्ला कण्डूला वल्लिसारसा ।
वनस्थाऽरण्यवासी च कन्दाढ्या कर्कशच्छदा ॥ ४९ ॥

अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलविनाशिनी ।
वातहृद्दीपनी रुच्या गुल्मश्लेष्मामयापहा ॥ ५० ॥

### १७. कर्कोटकी।

कार्कोटकी द्विधा वन्ध्या श्रेष्ठाऽन्या फलमारिणी।
मृदुकण्टकिनी वृत्तफला सा वनवासिनी ॥ ५१ ॥

वन्ध्या देवी वन्ध्यकार्कोटकी स्या-
न्नागारातिर्नागहन्त्री मनोज्ञा।
पथ्या दिव्या पुत्रदात्री त्रिकन्दा
श्रीकन्दा सा कन्दवल्ली विषघ्नी ॥ ५२ ॥

योगीश्वरी व्याघ्रपादी कन्या स्यात्षोडशाह्वया।
वन्ध्या कर्कोटकी तिक्ता कटूष्णा च कफापहा ॥५३॥

स्थावरादिविषघ्नी स्याद्रसबन्धे रसायने।

### १८. शरपुङ्खा।

शराभिधानपुङ्खा स्याच्छरपुङ्खीति कथ्यते ॥ ५४ ॥

शरपुङ्खी त्रिधा श्वेता रक्ता कृष्णा च कण्टका।
श्वेताऽप्येषा गुणाऽऽढ्या स्यात्प्रयोगे च रसायने ॥

अन्या तु कण्टपुंखा स्यात्कण्टसायकपुंखिका।
कण्टम्पृशेव कुण्डी कण्टकशरपुङ्खमूलनिर्यूहः ॥ ५६ ॥

तूर्णमजीर्णविषूचीमहापरतिक्रशानुकार्श्यं च।
सर्वाश्च शरपुङ्खास्तु कटूष्णाः कफवातहाः ॥ ५७ ॥

अजीर्णशूलकृमिहा ग्रहणीशमनाः परम्।

### १९. भृङ्गराजः।

मार्कवो भृङ्गराजस्स्याद्भृङ्गाह्वः केशरञ्जकः ॥ ५८ ॥

पितृप्रियो ब्रह्मपत्री केश्यः कुन्तलवर्धनः।
पीतोऽन्यः स्वर्णभृङ्गारो हरिवासो हरप्रियः ॥ ५९ ॥

नीलस्तु भृङ्गराजोऽन्यो महानीलस्तु नीलकः ।
महाभृङ्गो नीलपुष्पश्श्यामलस्तु षडाह्वयः ॥ ६० ॥

भृङ्गराजास्तु चक्षुष्यास्तिक्तोष्णाः केशरञ्जकाः ।
कफशोफविषघ्न्यश्च तत्र नीलो रसायनः ॥ ६१ ॥

## २०. गुडूची ।

गुडूची द्विविधा प्रोक्ता कन्दाऽऽढ्या कन्दवर्जिता ।
पूर्वा श्रेष्ठा रसघ्नी सा रुग्वलीपलितापहा ॥ ६२ ॥

अपरा व्याधिशमनी तयोस्सामान्यलक्षणम् ।
कञ्चुकाढ्या स्निग्धपर्णी विशल्या भूरिवल्लरी ॥ ६३ ॥

कन्या कन्दगुडूची च पिण्डालुः कन्दरोहिणी ।
कन्दामृता बहुरुहा ज्ञेया पिण्डगुडूचिका ॥ ६४ ॥

कु(क)न्दोद्भवा गुडूची च कटूष्णा सन्निपातहा ।
ज्वरघ्नी विषभूतघ्नी वलीपलितनाशिनी ॥ ६५ ॥

छिन्नोद्भवा गुडूची स्यादकन्दाऽमृतवल्लरी ।

ज्ञेया गुडूचीद्वयमुष्णवीर्या
तिक्ता कषाया ज्वरनाशिनी च ।
दाहार्तितृष्णावमिरक्तवात-
प्रमेहपाण्डुभ्रमहारिणी च ॥ ६६ ॥

## २१. मूर्वा ।

मूर्वा च द्विविधा प्रोक्ता महती च कनीयसी ॥ ६७ ॥

मूर्वाऽमरा दिव्यलता गोकर्णी च त्रिकर्णिका ।
भिन्नच्छदा मधुरसा दाहनी दिव्यपर्णिका ॥ ६८ ॥

रक्तला गोपवल्ली च गुञ्जपुष्पा पयस्विनी ।

मूर्वा तिक्ता कषायोष्णा हृद्रोगकफवातहृत् ॥ ६९ ॥

वमिप्रमेहकुष्ठानि विषमज्वरनाशिनी।
रसकर्मणि सा श्रेष्ठा गर्भघ्नी वर्तियोगतः ॥ ७० ॥

### २२. शङ्खपुष्पी।

शङ्खपुष्पी सुपुष्पी च शङ्खाह्वा कम्बुमालिनी।
सितपुष्पी च भूलग्ना मेध्या वनविलासिनी ॥ ७१ ॥

शङ्खपुष्पी हिमा तिक्ता मेधाकृत्स्वरकारिणी।
भूतग्रहादिदोषघ्नी वशीकरणसिद्धिदा ॥ ७२ ॥

### २३. काकजङ्घा।

काकजङ्घा वायसी च पारावतपदी तथा।
काकजङ्घा तु तिक्तोष्णा कृमिव्रणकफापहा ॥ ७३ ॥

बाधिर्याजीर्णजीर्णादिविषमज्वरनाशिनी।

### २४. शतावरी।

शतावरी शतपदी शताह्वा सूक्ष्मपत्रिका ॥ ७४ ॥

बहुमूला जटामूला तैलवल्ली च वैष्णवी।
शस्त्रा च शतमूला च केशिका शतनेत्रिका ॥ ७५ ॥

महाशतावरी वीरा तुङ्गिनी बहुपत्रिका।
सहस्रवीर्या सुरसा महापुरुषदन्तिका ॥ ७६ ॥

दग्ध(ऊर्ध्व)कणा(ण्टा)महावीर्या फणिजिह्वा महाशना।
शतावरीद्वयं वृष्यं मधुरं पित्तजिद्धिमम् ॥ ७७ ॥

महती कफवातघ्नी तिक्ता श्रेष्ठा रसायनी।

### २५. गोक्षुरः।

गोकण्टकः कण्टफलो गोक्षुरो व्यालदंष्ट्रकः ॥ ७८ ॥

त्रिकण्टकश्चेक्षुरकः श्वदंष्ट्रो बहुकण्टकः ।
वनशृङ्गाटकश्चैव स्थलशृङ्गाटकस्तथा ॥ ७९ ॥

स्यातामुभौ गोक्षुरकौ सुशीतलौ
बलप्रदौ तौ मधुरौ च बृंहणौ ।
कृच्छ्राश्मरीमेहविदाहनाशनौ
रसायनौ तत्र बृहद्गुणोत्तरः ॥ ८० ॥

२६. काकमाची ।

काकमाची बहुफला वायस्यर्कफला च सा ।
काकमाता गुच्छफला स्वादुपाकरसायनी ॥ ८१ ॥

२७. आदित्यभक्ता ।

आदित्यभक्ता वरदा सूर्यकान्तार्कवल्लरी ।
आदित्यभक्ता शिशिरा सतिक्ता
कटुस्तथोग्रा कफहारिणी च ।
त्वग्दोषकण्डूव्रणकुष्ठभूत-
ग्रहोग्रशीतज्वरहारिणी च ॥ ८२ ॥

२८. नाकुली ।

नाकुली सर्पगन्धा च सुगन्धा रक्तपत्रिका ॥ ८३ ॥
ईश्वरी नागगन्धा च ह्यहिभुक्स्वरसा च सा ।
अन्या महासुगन्धा च सुवहा गन्धनाकुली ॥ ८४ ॥
सर्पाक्षी फणिहन्त्री च नकुलाख्याऽरिवल्लरी ।
सर्पाक्षी सर्वरोगघ्नी पुत्रोत्पादकरी च सा ॥ ८५ ॥

## २९. क्षीरकन्दः ।

क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः ।
विनालो रोगहन्ता स्याद्वयःस्तंभे सनालकः ॥ ८६ ॥

चतुर्वर्णं विषं तत्र रक्तकन्दं च शस्यते ।
भग्नात्तस्मात्स्रवेत्क्षीरं रक्तवर्णं सुशोभनम् ॥ ८७ ॥

मेघानां तु निनादेन सञ्जाते सुरशोभिते ! ।
स्नुहीपत्रसमैः पत्रैस्सप्तभिर्हेमसप्रभैः ॥ ८८ ॥

क्षीरकन्दस्तु सूतेन्द्रमारणे बन्धने हितः ।
गुल्मशोफोदरप्लीहनाशनस्तु विरेककृत् ॥ ८९ ॥

## ३०. सिन्दुवारः ।

सिन्दुवारश्श्वेतपुष्पस्सिद्धकश्चाध्वसिद्धिदः ।
सुगन्धाऽन्या शितसहा निर्गुण्डी नीलसिन्दुकः ॥९०॥

इन्द्राणी सूतकेशी च नीलपुष्पा च नीलिका ।
सिन्दुवारः कटुस्तिक्तः कफवातक्षयापहः ॥ ९१ ॥

कुष्ठकण्डूतिशमनश्शूलहृद्देहसिद्धिदः ।
कटूष्णा नीलनिर्गुण्डी तिक्ता रूक्षा च कासजित् ॥

श्लेष्मशोफसमीरार्तिप्रदराध्मानहारिणी ।

## ३१. अरण्यकार्पासी ।

वनजाऽरण्यकार्पासी भारद्वाजी तयाभिधा ॥ ९३ ॥

भारद्वाजी हिमा रुच्या व्रणशस्त्रक्षतापहा ।
तृतीया रक्तका स्तन्या वातपित्तकफापहा ॥ ९४ ॥

तृष्णादाहश्रमभ्रान्तिमूर्च्छाद्दबलकारिणी ।
तृतीया रक्तकार्पासी रक्तकार्पासकस्स्मृतः ॥ ९५ ॥

## ३२. कोकिलाक्षः।

किलाक्षश्शृङ्खली च शृङ्खलो वज्रकण्टकः ।
ुम्भपत्रो वज्रास्थि तिलपुष्पस्तु शोफहा ॥ ९६ ॥

ालकण्ठी क्षुरक इक्षुरः पविकण्टकः ।
किलाक्षस्तु मधुरश्शीतः पित्तातिसारजित् ॥ ९७ ॥

यश्शोफहरो वल्यो रुच्यस्सन्तर्पणः परः ।

## ३३. बृहती।

ृती बृहती सिंही वार्ताकी राष्ट्रकाकली ॥ ९८ ॥

क्ष्णकण्टकसर्वाङ्गा बहुपत्री च डोरली ।
ण्डकी वनवृन्ताकी गुद्रसंख्याभिधानका ॥ ९९ ॥

ती कटुतिक्तोष्णा वातजिज्ज्वरहारिणी ।
ोचकामकासघ्नी श्वासहृद्रोगनाशिनी ॥ १०० ॥

ादा श्वेतबृहती श्वेतपुष्पफला शुभा ।
ज्ञेया श्वेतबृहती वातश्लेष्मविनाशिनी ॥ १०१ ॥

ग्या चाञ्जनयोगे च नानानेत्रामयापहा ।
का द्रव्यविशेषेण पारदस्तम्भसिद्धिदा ॥ १०२ ॥

## ३४. कण्टकारी।

टकारी कण्टकिनी दुःस्पर्शा च निदिग्धिका ।
ा व्याघ्री चित्रफला ज्ञेया सर्वाङ्गकण्टका ॥१०३॥

टकारी कटुस्तिक्ता दीपनी श्वासकासजित् ।
श्यायत्रिदोषघ्नी कफवातज्वरार्तिनुत् ॥ १०४ ॥

ष्या दीपनी पुत्रप्रदा रसनियामिका ।

### ३५. गुञ्जा।

गुञ्जा च द्विविधा प्रोक्ता श्वेता रक्ता च कृष्णला ॥

गुञ्जा चूडामणिस्सेवा शिखण्डी कृष्णलाऽरुणा।
कृष्णचूडा रक्तिका च कांभोजी भिल्लभूषणा ॥१०६॥

गुञ्जात्रयं तु तिक्तोष्णं वान्तिकृद्रेचनी शिवा।
शूलघ्नं विषहृत्पत्रं तत्तैलं सर्वकुष्ठजित् ॥ १०७ ॥

द्रावणे सर्वलोहानां रक्ता पण्ये सिताऽपरा।

### ३६. वृद्धदारकः।

वृद्धदारुक आवेगी जुङ्गको दीर्घवालुकः ॥ १०८ ॥

वृद्धः कोटरपुष्पी स्यादजान्त्री क्षगलान्त्रिका।
जीर्णदारु द्वितीयं स्याज्जीर्णभञ्जी सुपुष्पिका ॥१०९॥

अजरा सूक्ष्मपर्णी च विज्ञेया च षडाह्वया।
वृद्धदारुद्वयं गौल्यं पिच्छिलं कफवातहृत् ॥ ११० ॥

बल्यं कासामदोषघ्नं द्वितीयं स्वल्पवीर्यदम्।

### ३७. बाकुची।

बाकुची सोमराजी च शशिरेखा च कुष्ठहा ॥ १११ ॥

कांभोजी पूतिगन्धा च कालमेषी तथैन्दवी।
बाकुची कटुतिक्तोष्णा कृमिकुष्ठकफापहा ॥ ११२ ॥

त्वग्दोषविषकण्डूतिखर्जूप्रशमनी च सा।

### ३८. अपामार्गः।

अपामार्गश्शेखरिको मर्कटी दुरभिग्रहः ॥ ११३ ॥

खरमञ्जरिका नन्दी खब्जो मर्कटपिप्पली।
अवाक्पुष्पी च वशिरः क्षवकः पङ्क्तिकण्टकः ॥११४॥

अपामार्गस्तु तिक्तोष्णः कटुश्च कफनाशनः ।
अर्शःकण्डूदरामघ्नो रक्तहृद्ग्राहि वान्तिकृत् ॥ ११५ ॥

रक्तापामार्गकः पीतः कटुकः कफवातनुत् ।
व्रणकण्डूविषघ्नश्च सङ्ग्राही वान्तिकृत्सरः ॥ ११६ ॥

### ३९. प्रपुन्नाटः ।

प्रपुन्नाटश्चक्रमर्दो दद्रुघ्नश्च कुलादनः ।
व्यावर्तकश्चैडगजः खर्जूघ्नो दृढबीजकः ॥ ११७ ॥

चक्रमर्दः कटुस्तीक्ष्णो मेदोवातकफापहः ।
व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत् ॥ ११८ ॥

### ४०. विषमुष्टिः ।

विषमुष्टिः केशमुष्टिस्सुमुष्टी रणमूषिका ।
विषमुष्टिः कटुस्तिक्तो दीपनः कफवातहृत् ॥ १२० ॥

कण्ठामयहरो रुच्यो रक्तपित्तार्तिदाहनुत् ।

### ४१. काण्डीरः ।

काण्डीरः काण्डकटुको नाम(सा)संवेदनः पटुः ॥१२१॥

उग्रकाण्डस्तोयवल्ली कारवल्ली सुकाण्डकः ।
काण्डीरः कटुतिक्तोष्णः सरदुष्टव्रणार्तिनुत् ॥ १२२ ॥

लूतागुल्मोदरप्लीहशूलमन्दाग्निनाशनः ।

### ४२. हस्तिकन्दः ।

हस्तिकन्दो हस्तिपलः स्थूलकन्दोऽतिकन्दकः ॥१२३॥

बृहत्पत्रोऽतिपत्रश्च हस्तिकर्णस्सुकर्णिकः ।
त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः ॥ १२४ ॥

हस्तिकन्दः कटूष्णस्यात्कफवातामयापहः।

### ४३. समुद्रशोषी।

समुद्रशोषी च महालता च
महाबला धूसरपत्रिका च।
स्यात्कामवृद्धिस्वरवृद्धिसंज्ञः
कन्दर्पजीवी च जितेन्द्रिया च ॥ १२५ ॥

कामवृद्धेस्तु बीजं स्यान्मधुरं बलवर्धनम् ॥ १२६ ॥

कामवृद्धिकरं रुच्यं बहलेन्द्रियवृद्धिदम्।

### ४४. गोरक्षदुग्धी।

गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी ॥ १२७ ॥

तिलक्षीरिणिका धन्या बहुपत्रा तिलांकिता।

गोरक्षदुग्धी मधुरा वृष्या च ग्राहिणी हिमा ॥१२८॥

सर्ववश्यकरी चैव व्रणसिद्धिगुणप्रदा।

### ४५. भूपाटली।

भूपाटली च कुम्भी च भूनाली रक्तपुष्पिका ॥१२९॥

भूपाटला कटूष्णा च पारदे सुप्रयोजिता।

### ४६—५३. अष्टवर्गः

द्विमेदोभयकाकोली वृद्ध्यृद्धिर्जीवकर्षभम् ॥ १३० ॥

अष्टवर्गमिदं वातपित्तजिद्बृंहणं परम्।

नखत्वग्दृष्टिकर्णाङ्घ्रिघ्राणजिह्वाङ्गुलीनिभाः ॥ १३१ ॥

समूलाश्च सतूलाश्च दुर्गन्धाश्चाष्टवर्गकाः।

अपामार्गस्तु तिक्तोष्णः कटुश्च कफनाशनः ।
अर्शःकण्डूदरामघ्नो रक्तहृद्ग्राहि वान्तिकृत् ॥ ११५ ॥

रक्तापामार्गकः पीतः कटुकः कफवातनुत् ।
व्रणकण्डूविषघ्नश्च सङ्ग्राही वान्तिकृत्सरः ॥ ११६ ॥

३९. प्रपुन्नाटः ।

प्रपुन्नाटश्चक्रमर्दो दद्रुघ्नश्च कुलादनः ।
व्यावर्तकश्चैडगजः खर्जूघ्नो दृढबीजकः ॥ ११७ ॥

चक्रमर्दः कटुस्तीक्ष्णो मेदोवातकफापहः ।
व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत् ॥ ११८ ॥

४०. विषमुष्टिः ।

विषमुष्टिः केशमुष्टिस्सुमुष्टी रणमूषिका ।
विषमुष्टिः कटुस्तिक्तो दीपनः कफवातहृत् ॥ १२० ॥

कण्ठामयहरो रुच्यो रक्तपित्तार्तिदाहनुत् ।

४१. काण्डीरः ।

काण्डीरः काण्डकटुको नाम(सा)संवेदनः पटुः ॥१२१॥

उग्रकाण्डस्तोयवल्ली कारवल्ली सुकाण्डकः ।
काण्डीरः कटुतिक्तोष्णः सरदुष्टव्रणार्तिनुत् ॥ १२२ ॥

लूतागुल्मोदरप्लीहशूलमन्दाग्निनाशनः ।

४२. हस्तिकन्दः ।

हस्तिकन्दो हस्तिपलः स्थूलकन्दोऽतिकन्दकः ॥१२३॥

बृहत्पत्रोऽतिपत्रश्च हस्तिकर्णस्सुकर्णिकः ।
त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः ॥ १२४ ॥

हस्तिकन्दः कटूष्णस्यात्कफवातामयापहः।

### ४३. समुद्रशोषी।

समुद्रशोषी च महालता च
महाबला धूसरपत्रिका च।
स्यात्कामवृद्धिस्वरवृद्धिसंज्ञः
कन्दर्पजीवी च जितेन्द्रिया च॥ १२५॥

कामवृद्धेस्तु बीजं स्यान्मधुरं बलवर्धनम्॥ १२६॥
कामवृद्धिकरं रुच्यं बहलेन्द्रियवृद्धिदम्।

### ४४. गोरक्षदुग्धी।

गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी॥ १२७॥
तिलक्षीरिणिका धन्या बहुपत्रा तिलांकिता।
गोरक्षदुग्धी मधुरा वृष्या च ग्राहिणी हिमा॥१२८॥
सर्ववश्यकरी चैव व्रणसिद्धिगुणप्रदा।

### ४५. भूपाटली।

भूपाटली च कुम्भी च भूनाली रक्तपुष्पिका॥१२९॥
भूपाटला कटूष्णा च पारदे सुप्रयोजिता।

### ४६—५३. अष्टवर्गः

द्विमेदोभयकाकोली वृद्ध्यद्धिर्जीवकर्षभम्॥ १३०॥
अष्टवर्गमिदं वातपित्तजिद्बृंहणं परम्।
नखत्वग्दृष्टिकर्णाङ्घ्रिघ्राणजिह्वाङ्गुलीनिभाः॥ १३१॥
समूलाश्च सतूलाश्च दुर्गन्धाश्चाष्टवर्गकाः।

[मेदा ।]

मेदा वसा मणिश्छिद्रा जीवनी शल्यपर्णिका ॥१३२॥

मेदस्सारा स्नेहवर्ती नखी पुरुषदन्तिका ।
मेदा तु मधुरा शीता पित्तदाहार्तिकासनुत् ॥ १३३ ॥

[महामेदा ।]

महामेदा वसुश्छिद्रा जीवनीया च रागिणी ।
देवेष्ट्यसुरमेदा च दिव्या त्वग्रूपिणी तथा ॥ १३४ ॥

देवगन्धा देवमणिर्वृक्षहारि(रु)द्रसम्मिता ।
महामेदा हिमा रुच्या कफशुक्रविवर्धनी ॥ १३५ ॥

[काकोली ।]

काकोली दीर्घसदृशा क्षीरशुक्रा च मेदुरा ।
कालिका च वयस्था च जीवनी च नवाह्वया ॥१३६॥

काकोली शीतमधुरा क्षयपित्तानिलार्तिनुत् ।
रक्तदाहज्वरघ्नी च कफशुक्रविवर्धनी ॥ १३७ ॥

[क्षीरकाकोली ।]

द्वितीया क्षीरकाकोली क्षीरशुक्रा पयस्विनी ।
वयस्था कर्णसदृशा क्षीरवल्ली विषाणिका ॥ १३८ ॥

रसवीर्यविपाकेषु काकोलीसदृशा च सा ।

[वृद्धिः ऋद्धिश्च ।]

वृद्धिस्तुष्टिः पुष्टिदा तुष्टिदात्री
मङ्गल्या स्यादंभिरूपा च भद्रा ।
ऋद्धिस्सिद्धिः प्राणदा जीवदात्री
प्राणाकारा चेतनीया रथाङ्गी ॥ १३९ ॥

वृद्धिर्ऋद्धिश्च मधुरा सुस्निग्धा रक्तदा हिमा ॥१४०॥
रुचिमेधाकरी श्लेष्मकुष्ठकृमिहरा परा।

[जीवकः।]

जीवको जीवनो जीव्यः प्राणदश्चिरजीविकः ॥१४१॥
ह्रस्वाङ्गः कूर्चशीर्षश्च जिह्वाकारः सुमङ्गलः।
जीवको मधुरश्शीतो रक्तपित्तानिलार्तिहृत् ॥ १४२ ॥
दाहज्वरक्षयं हन्ति शुक्रश्लेष्मविवर्धनः।

[ऋषभः।]

गोपतेस्तु यथा नाम ऋषभश्चाङ्गुलीनिभः ॥ १४३ ॥
ओषधी वनवासी च दुर्गन्धः प्राणदश्शुभः।
जीवके ये गुणास्सन्ति ते गुणास्सन्ति गोपतेः ॥

५४. आदित्यपुत्रः।

आदित्यपुत्रः कुष्ठानि सुपुत्रश्चार्कपत्रकः।

आदित्यपुत्रः कटुरुष्णवीर्यः
कफापहा वातरुजापहश्च।
सन्दीपको जाठरगुल्महारी
ज्ञेयस्स चारोचकनाशनश्च ॥ १४५ ॥

५५. हस्तिकर्णी।

हस्तिकर्णी हस्तिकर्णच्छदनो दीर्घकन्दकः ॥ १४६ ॥
बृहन्नालो दण्डपुष्पः कण्डूलोद्यानभूषणः।
हस्तिकर्णी प्लीहगुल्मशोफज्वरविनाशनः ॥ १४७ ॥

५६. कपिकच्छूः।

कपिकच्छूरात्मगुप्ता मर्कट्यङ्गारवल्लरी।

कपिरोमफला चण्डा दुःस्पर्शा दूरविग्रहा ॥ १४८ ॥

कच्छूरश्शूकशिंबी च शिंबिबीजा महाफला ।
कपिकच्छूस्स्वादुरसा वृष्या वातक्षयापहा ॥ १४९ ॥

शीतपित्तास्रहन्त्री च विकृतव्रणनाशनी ।

### ५७. कर्णस्फोटा ।

कर्णस्फोटा कटुस्तिक्ता हिमा सर्वविषापहा ॥ १५० ॥

ग्रहभूतादिदोषघ्नी सर्वव्याधिनिकृन्तनी ।

### ५८. रुद्रजटा ।

रुद्रा रुद्रजटा सौम्या सुगन्धा सुवहा घना ॥ १५१ ॥

घलवल्ली जटावल्ली रुद्राणी पिङ्गला जटा ।
जटा कटुरसा श्वासकासहृद्रोगनाशनी ॥ १५२ ॥

भूतविद्रावणी चैव रक्षसां च निबर्हणी ।

### ५९. नीलिका ।

नीलिका भृङ्गपत्री स्यान्नीलिपुष्पी च रञ्जनी ॥१५३॥

कालिका हारवाही च रङ्गपुष्पी महाफला ।
नीली कटुकतिक्तोष्णा केश्या कासकफामनुत् ॥१५४॥

मरुद्विषोदरव्याधिगुल्मागन्तुज्वरापहा ।
अन्या चैव महानीली अमला राजनीलिका ॥ १५५॥

महानीली गुणाढ्या स्याद्रङ्गश्रेष्ठा सुवीर्यदा ।

### ६०. कोशातकी ।

कोशातकी कृतच्छिद्रा जालिनी कृतवेधनी ॥ १५६ ॥

घोढा(क्ष्वेडा)सुतिक्ता घण्टाली मृदङ्गफलिनी तथा ।

कर्कशच्छदना पीतपुष्पा बहुवितानका ॥ १५७ ॥

कोशातकी तु शिशिरा कटुकाऽल्पकषायका।
वातपित्तकफघ्नी च मलाध्मानविनाशिनी ॥ १५८ ॥

दुर्नामविषभूतघ्नी श्वासकासहरा शुभा।
तिक्तकोशातकी पीतपुष्पा धूसरपत्रिका ॥ १५९ ॥

कटुकोशातकी तिक्ता दुर्नामविषभूतहा।
पीनसश्वासकासार्शोलूतादिव्रणनाशिनी ॥ १६० ॥

### ६१. जीवन्ती।

जीवन्ती स्याज्जीवनी जीवनीया
जीवा जीव्या जीवदा जीवदात्री।
शाकश्रेष्ठा जीवभद्रा च भद्रा
मङ्गल्या च क्षुद्रजीवा यशाख्या ॥ १६१ ॥

सुजीवन्ती बृहत्पूर्वा पत्रभद्रा प्रियङ्करी।
मधुरी जीववृक्षश्च ब्रह्मजन्मा यशस्करी ॥ १६२ ॥

जीवन्ती मधुरा शीता रक्तपित्तानिलापहा।
क्षयदाहज्वरान्हन्ति कफवीर्यविवर्धनी ॥ १६३ ॥

एवमेव महत्पूर्वा जीवन्ती बहुवीर्यदा।
सूतविद्राविणी ज्ञेया वेगाद्रसनियामिका ॥ १६४ ॥

हेम हैमवती सौम्या तृणगन्धा हिमप्रिया।
स्वर्णवन्ती सुजीवन्ती स्वर्णजीवा सुपर्णिका ॥ १६५ ॥

हेमपुष्पा स्वर्णलता स्वर्णजीवन्तिका च सा।
स्वर्णजीवन्तिका वृष्या चक्षुष्या मधुरा तथा ॥ १६६ ॥

शिशिरा वातपित्तास्रदाहजिद्बलवर्धनी।

६२. जतुका।

जतुका जन्तुकारी च जीमूता चक्रवर्तिनी ॥ १६७ ॥
तिर्यक्फला विषा(निशा)न्धा च बहुपत्रा सुपत्रिका।
राजकृष्णा दिनेष्टा च कपिकच्छुफलोपमा ॥ १६८ ॥

राजनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका।
तरुवल्ली दिव्यफला विज्ञेया षोडशाभिधा ॥ १६९ ॥

जतुका शिशिरा पित्तरक्तपित्तकफापहा।
दाहतृष्णावमिघ्नी च रुचिकृद्दीपनी परा ॥ १७० ॥

६३. मुण्डी।

श्वेता रक्ता च पीता च कृष्णा मुण्डी चतुर्विधा।
सावर्णी स्यन्मुण्डिनिका भिक्षुः श्रवणशीर्षिकः ॥१७१॥

श्रावणी च प्रजविका परिव्राजी तपोधना।
स्रावणी तु कषाया स्यात्कटूष्णा कफपित्तनुत् ॥१७२॥

अर्शोविकारकासघ्नी विषच्छर्दिविनाशिनी।
महास्रावणिकाऽन्या स्यान्महामुण्डी च लोचनी ॥१७३॥

कदंबपुष्पी विकचाऽलंबुषा लोहिनी तथा।
महामुण्डी च तिक्तोष्णा ईषद्गौल्या मरुच्छदा ॥

स्वरकृद्रेचनी चैव मेहकृच्च रसायनी।

६४. विष्णुक्रान्ता।

विष्णुक्रान्ता नीलपुष्पा नीलक्रान्ताऽपराजिता ॥१७५॥

विष्णुक्रान्ता कटुस्तिक्ता कफवातामयापहा।

६५. कुमारी।

नदीतीरेऽथवा ग्रामे नगरेऽद्रितटेऽथवा ॥ १७६ ॥

मृदुकण्टकपत्राणि पीतान्यहिसमानि च ।
प्रवालसमपुष्पाणि सक्लेदहरितानि च ॥ १७७ ॥

यस्याः पत्राणि तिष्ठन्ति सा कुमारीति कथ्यते ।
गृहकन्या कुमारी च दीर्घपत्रा जरामरा ॥ १७८ ॥

गृहकन्या हिमा तिक्ता मदगन्धिः कफापहा ।
पित्तकासविषश्वासकुष्ठघ्नी च रसायनी ॥ १७९ ॥

### ६६. भूम्यामली ।

भूम्यामली तमाली च भूधात्री दृढपादिका ।
भूधात्री तु कषायाम्ला पित्तमेहविनाशिनी ॥ १८० ॥

शिशिरा मूत्ररोगार्तिशमनी विषनाशिनी ।

### ६७. बर्हिचूडा ।

बर्हिचूडा शिखिशिखा मयूराद्याभिधा शिखा ॥१८१॥

बर्हिचूडा शिवा स्वादुर्मूत्रकृच्छ्रविनाशिनी ।
बालग्रहादिशोफघ्नी विषकर्मणि शस्यते ॥ १८२ ॥

### ६८. ब्राह्मी ।

ब्रह्मा सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला ।
कपोतवेधा वैधात्री दिव्यतेजा महौषधी ॥ १८३ ॥

स्वायंभुवी सोमलता सुरेज्या गृहकन्यका ।
मण्डूकी सुरसा मेधा विज्ञेया षोडशाह्वया ॥ १८४ ॥

ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित् ।
बुद्धिं मेधां च प्रज्ञां च कुर्यादायुष्यवर्धनी ॥ १८५ ॥

ब्राह्मी तु सूक्ष्मपत्राऽन्या लघुब्राह्मी जलोद्भवा ।
ब्राह्मी तिक्ता मदोष्णा च रसो वातामशोफहा ॥१८६

### ६९. तण्डुलीयकः ।

तण्डुलीयस्तु भण्डीरो ग्रन्थिलो बहुवीर्यकः ।
मेघनादस्तुशाखश्च पथ्यशाकश्च सप्तधा ॥ १८७ ॥
तण्डुलीयस्तु शिशिरो मधुरो विषनाशनः ।
रुचिकृद्दीपनः पथ्यः पित्तदाहश्रमापहः ॥ १८८ ॥

### ७०. पाषाणभेदनः ।

पाषाणभेदनोऽश्मघ्नो नगजिच्छैलगर्भजः ।
पाषाणभेदी मधुरस्तिक्तो वातविनाशनः ॥ १८९ ॥
सदाहमूत्रकृच्छ्रघ्नो शीतलश्चाश्मरीहरः ।

### ७१. हस्तिशुण्डी ।

हस्तिशुण्डी नागशुण्डी शुण्डी धूसरपत्रिका ॥ १९० ॥
हस्तिशुण्डी कषाया स्यात्सन्निपातज्वरापहा ।

### ७२. क्षुद्राम्लिका ।

क्षुद्राम्लिका तु शार्ङ्गेरी चुक्राम्ला चुक्रिका च सा ॥
क्षुद्राम्ली च रसे चाम्ला सोष्णा वह्निप्रवर्धनी ।
रुचिकृद्ग्रहणी दोषदुर्नामघ्नी कफापहा ॥ १९२ ॥

### ७३. ब्रह्मदण्डी ।

ब्रह्मदण्ड्यजदण्डी च कण्टपत्रफला च सा ।
ब्रह्मदण्डी कटूष्णा स्यात्कफशोफानिलापहा ॥ १९३ ॥

### ७४. ताली।

ताली तमाली ताम्रा च ताम्रवल्ली तमालिका।
सूक्ष्मवल्ली सुलोमा च शोधनी तालिका नव ॥१९४॥

ताम्रवल्ली कषाया स्यात्कफदोषविनाशनी।
मुखकर्णाऽऽस्यरोगघ्नी श्लेष्मशुद्धिकरा परा ॥१९५॥

### ७५. खवल्ली।

खवल्ली वासवल्ली स्याद्दुस्पर्शा व्योमवल्लरी।
आकाशनामपूर्वा स्याद्वल्लिपर्यायगा स्मृता ॥ १९६ ॥

आकाशवल्ली कटुका मधुरा पित्तनाशनी।
वृष्या रसायनी बल्या दिव्यौषधिवरा स्मृता ॥१९७॥

### ७६. सहदेवी।

सहदेवी देवसहा देवी दण्डोत्पलाह्वया।
सहदेवी ज्वरहरा रक्तपित्तप्रसादनी ॥ १९८ ॥

### ७७. लक्ष्मणा।

लक्ष्मणा पुत्रिकन्दा च पुत्रदा नागिनी तथा।
नागाह्वा नागपर्णी च कुलिनी मल्लिका च सा ॥

अस्रबिन्दुच्छदा चैव पुंस्कन्धा दशदाह्वया।
वृष्या रसायनी बल्या नारीबन्धविनाशिनी ॥ २०० ॥

### ७८. भूकदम्बः।

भूकदंबस्त्रिधा प्रोक्तश्श्वेतो रक्तश्च मेचकः।
कदम्बपल्लवत्पत्रः पञ्चषड्दलसंयुतः ॥ २०१ ॥

भूलग्नश्च जटामध्ये तिक्तस्सूक्ष्मैकदण्डकः।
भूकदंब इति प्रोक्तः सूक्ष्मगन्धोग्रगन्धवान् ॥ २०२ ॥

भूकदम्बोऽहिविषहा वीर्यवृद्धिकरः परः ।

### ७९. तैलकन्दः ।

अथ तैलकन्द उक्तो
द्रावककन्दस्तिलांकितदलश्च ।
करवीरकन्दसंज्ञो
लोहद्रावी विषापहारी च ॥ २०३ ॥

अश्वारिपत्रसङ्काशस्तिलबिन्दुसमन्वितः ॥ २०४ ॥

सस्निग्धा चैव भूमिश्च तैलकन्दो हि विश्रुतः ।
शोफापस्मारहा सूतबन्धनो देहसिद्धिदः ॥ २०५ ॥

### ८०. विष्णुकन्दः ।

विष्णुकन्दो विष्णुगुप्तस्सुपुटो बहुसंपुटः ।
जलवासी बृहत्कन्दो दीर्घपत्रो हरिप्रियः ॥ २०६ ॥

सर्पादिविषहारी स्याद्रसबन्धकरो हिताः ।

### ८१. त्रिकर्णिका ।

त्रिकर्णिका बृहत्पत्रा छन्नग्रन्थिनिका च सा ॥२०७॥

विश्वगन्धा कीटमारी हंसांघ्रिस्सूतरञ्जनी ।

### ८२. नागदन्ती ।

नागदन्ती श्वेतकणा मधुपुष्पा विशोधनी ॥ २०८ ॥

नागस्फोटा विशालाक्षी नागच्छत्री विचक्षणा ।
सर्पपुष्पी शुक्लपुष्पी स्वादुका सा च दन्तिका ॥

नागदन्ती कटुस्तिक्ता रूक्षा वातकफापहा ।
मेधाकृद्विषदोषघ्नी भावि(पाच)नी शुभदायिका ॥

### ८३. द्रोणपुष्पी।

द्रोणपुष्पी दीर्घपत्रा चिलपत्रा कुतुंबिका।
द्रोणपुष्पी कटुस्सोष्णा रुच्या वातकफापहा ॥ २११ ॥
अग्निमान्द्यहरा चैव पथ्या वातापहारिणी।
अन्या चैव महाद्रोणी कुतुम्बादेव पूर्वकः ॥ २१२ ॥
दिव्यपुष्पी महाद्रोणी देवी काञ्जी षडाह्वया।
देवद्रोणी कटुस्तिक्ता मेध्या वातार्तिभूतनुत् ॥२१३॥
कफवृद्ध्यपहा चैव युक्त्या पारदशोधनी।

### ८४. अमृतस्रवा।

ज्ञेयाऽमृतस्रवा वृक्षरुहाख्या तोयवल्लिका ॥ २१४ ॥
घनवल्ली सितलता नामभिश्शरसम्मिता।
उक्ताऽमृतस्रवा पथ्या ईषत्तिक्ता रसायनी ॥ २१५ ॥
विषघ्नी व्रणकुष्ठामकामिलाश्वयथूञ्जयेत्।

### ८५. पुत्रदात्री।

पुत्रदात्री तु वातारिर्भ्रमरी श्वेतपुष्पिका ॥ २१६ ॥
वृत्तपत्रा तु गन्धालुर्वेशी जाता सुवल्लिनी।
पुत्रदात्री तु वातघ्नी कटुरूक्षा कफापहा ॥ २१७ ॥
सुरभिः सर्वदा पथ्या वन्ध्यादोषविनाशनी।

### ८६. शाल्मलीकन्दः।

शाल्मलीकन्दकश्चाऽथ विजुलो वनवासकः ॥ २१८ ॥
वनवासी मलघ्नश्च मलहन्ता षडाह्वयः।
मधुरः शाल्मलीकन्दो मलसङ्गहरोघजित् ॥ २१९ ॥

शिशिरः पित्तदाहार्तिशोषसन्तापनाशनः ।

८७. आवर्तकी ।

आवर्तकी तिन्दुकिनी विभाण्डी
विषाणिका रङ्गलता मनोज्ञा ।
सा रक्तपुष्पी महदादिजाली
सा पीतकीलाऽपि च पीतरङ्गा ॥ २२० ॥

वामावर्ता च संप्रोक्ता रुद्रसंख्याऽभिधानका ॥ २२१ ॥

आवर्तकी कषायाम्ला शीतला पित्तनाशिनी ।

८८. अम्लपत्री ।

अम्लपत्री दीर्घपत्री रसाम्ला चाम्लिका रसा ॥२२२॥

आम्रातकी काञ्जिका च पर्णवल्ली पलाशिका ।
पलाशी वल्लपत्री च दीर्घवल्ली विषादनी ॥ २२३ ॥

सरपत्री सुवर्णी च स्याच्चतुर्दशधाभिधा ।
अरोचकहरा पथ्या पित्तकोपकरी च सा ॥ २२४ ॥

अष्टाशीतिमहौषधीनां नामसङ्ग्रहणम् ॥

हिमजा कारवी चैव कटुतिक्तादितुंबिका ।
ज्योतिष्मती लिङ्गिनी च पातालगरुडी खरी ॥ २२५ ॥

आखुकर्णी नीलपुष्पी वाराही देवदालिका ।
इन्द्रवारुणिका चैव हैन्द्रवारुणिका तथा ॥ २२६ ॥

गोजिह्वा काकतुण्डी च लज्जालुश्च पुनर्नवा ।
अम्लवल्ली वन्ध्या च शरपुंखी च भृङ्गराट् ॥ २२७ ॥

गुडूची चाथ मूर्वा च काकजङ्घा शतावरी ।

गोक्षुरः काकमाची चादित्यभक्ता च नाकुली ॥२२८॥

क्षीरकन्दस्तु निर्गुण्डी कार्पासी कोकिलाक्षकः।
बृहती क्षुद्रिका गुञ्जा वृद्धदारुश्च बाकुची ॥ २२९ ॥

अपामार्गश्चक्रमर्दो विषमुष्ट्यंबुवल्लरी।
हस्तिकन्दश्चाब्धिशोषी गोरक्षी भूमिपाटली ॥ २३० ॥

अष्टवर्गश्चार्कपुत्री हस्तिकर्ण्यग्निवल्लरी।
कर्णस्फोता रुद्रजटा नीली कोशातकी तथा ॥ २३१ ॥

जीवन्ती जतुका मुण्डी विष्णुक्रान्ता कुमारिका।
भूम्यामली बर्हिचूडा ब्राह्मी स्यात्तण्डुलीयकः ॥२३२॥

पाषाणभिद्धस्तिशुण्डी शार्ङ्गेरी ब्रह्मदण्डिका।
ताम्रवल्ली खवल्ली च सहदेवी च लक्ष्मणा ॥२३३॥

भूकदम्बस्तैलकन्दो विष्णुकन्दस्तिलकर्णिका।
हंसपादी नागदन्ती द्रोणपुष्प्यमृतस्रवा ॥ २३४ ॥

पुत्रदा शाल्मलीकन्द आवर्तन्यम्लपत्रिका।
अष्टाशीतिमहौषध्यो रसकर्मणि पूजिताः ॥ २३५ ॥

इति श्रीभैरवोक्ते आनन्दकन्दे क्रियाकरणविश्रान्तौ दशमोल्लासः ॥

॥ इति आनन्दकन्दः समाप्तः ॥



# ॥ परिशिष्टम् ॥

## १. परिभाषाः[1] ॥

**रसनियामिका ओषध्यः ।**

सर्पाक्षी वह्नि(वन्ध्य)कर्कोटी कञ्चुकी जलबिन्दुना(जम्बुका) ।
शतावरी भृङ्गराजः शरपुङ्खा पुनर्नवा ॥ १ ॥

मण्डूकपर्णी मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी ।
अनन्ता काकजङ्घा च काकमाची कपोतिका ॥ २ ॥

विष्णुक्रान्ता सहचरा सहादेवी महाबला ।
बला नागबला कृष्णा चक्रमर्दः कुरु(तुर)ङ्गिणी ॥ ३ ॥
पाठा चामलकी नीली ज्वालिनी पद्मचारिणी ।
गोजिह्वा फणिजिह्वा च कोकिलाक्षो घनध्वनिः ॥ ४ ॥

आखुपर्णी त्रिपर्णी च द्विपर्णी चैकपर्णिका ।
तित्तिडी क्षीरिणी रास्ना मेषशृङ्गी च कुक्कुटी ॥ ५ ॥

कृष्णपर्णी च तुलसी श्वेता च गिरिकर्णिका ।
एता नियामकौषध्यः पुष्पमूलदलान्विताः ॥ ६ ॥

दोलास्वेदः प्रकर्तव्यो मूलेनानेन सुव्रते ! ।

**रसनिर्जीवकर्य ओषध्यः[2] ।**

चाण्डाली राक्षसी व्याघ्री खड्गारी गजकर्णिका ॥ ७ ॥

---

1. अस्मिन्परिशिष्टे एतद्ग्रन्थोद्धृतानां पारिभाषिकपदानां परिभाषोल्लासे यन्त्रादिवर्णनपर उल्लासे चाव्याकृतानां विवरणं रसार्णव-रसरत्नसमुच्चय-रसहृदय-रसरत्नाकर-रसचूडामण्यादिभ्य उद्धृत्य दीयते ।

2. रसार्णवादुद्धृताः ।

A—168

शङ्खपुष्प्यग्निधमनी लाङ्गली बालमोचका ।
रक्तस्नुही रक्तशृङ्गी रक्तिका नीलचित्रकः ॥ ८ ॥
शृगालजिह्वा बृहती वज्री चक्री च (प)राजिका(ता) ।
एकवीरा नरकसा रुदन्ती ब्रह्मचारिणी ॥ ९ ॥
उच्चटा मानि(नागि)नीकन्दा कुमारी रक्तचित्रकः ।
लक्ष्मीः शाखोटकश्चैव कञ्चुकी मेषशृङ्गिका ॥ १० ॥
हिमावती सोमलता मोदा व्याघ्रनखी शमी ।
काञ्चनी वनराजी च काकमाची च केशिनी ॥ ११ ॥
अजमारी कोटराक्षी हनूमत्यञ्जनायिका ।
नरजीवा हेमपुष्पी काकमुण्डी च कालिका ॥ १२ ॥
तोयवल्ली गजारी च हंसांघ्री कटुतुंबिका ।
तांबूली सूर्यभक्ता च रसनिर्जीवकारिकाः ॥ १३ ॥

**रसमारिका ओषध्यो दिव्यौषधिबीजानि च[1] ।**

कटुतुम्बी च गोसन्धी देवदालीन्द्रवारुणी ।
बाकुची ब्रह्मबीजानि कार्पासं कृष्णजीरकम् ॥ १४ ॥
कञ्चुकी कृष्णकनकं श्वेतार्कं च पिपीलुकम् ।
दन्तिनी यवचिञ्चा च कर्कोटी कारवल्लिका ॥ १५ ॥
गोजिह्वा काकजङ्घा च महाकाली च शंबरी ।
श्वेतगुञ्जा सिताङ्कोलः पटोली बिल्वमेव च ॥ १६ ॥
एकैकमौषधीबीजं मारयेद्रसभैरवम् ।

**रसबन्धकर्य ओषध्यः[1] ।**

रक्तस्नुही सोमलता रुदन्ती रक्तचित्रकम् ॥ १७ ॥

---

1. रसार्णवादुद्धृताः ।

शाखोटकी दग्धरुहा मोदिनी वृद्धदारुकः ।
त्रिशूली कृष्णमार्जारी चक्रिका क्षीरकुक्कुटी ॥ १८ ॥

देवदाली शङ्खपुष्पी काकमाची हनूमती ।
नीलज्योतिस्तृणज्योतिरुत्कटा हेमवल्लरी ॥ १९ ॥

त्रिदण्डी ब्रह्मदण्डी च चक्राङ्की स्थलपद्मिनी ।
नागजिह्वा नागपर्णी वीरा वर्तुलपर्णिका ॥ २० ॥

अर्कपत्री वंशपत्री ताम्रपर्णी तथेश्वरी ।
इन्दुरी देवदेवेशि ! रसबन्धकराः प्रिये ! ॥ २१ ॥

**रसद्राविका ओषध्यः[1] ।**

सूर्यावर्तश्च कदली वन्ध्या कोशातकी तथा ।
वज्रकन्दोदककणा काकमाची च शिग्रुकः ॥ २२ ॥

देवदाली च देवेशि ! द्राविकाः परिकीर्तिताः ।
दोषान्हरन्ति योगेन धातूनां पारदस्य च ॥ २३ ॥

**रसक्रामिका ओषध्यः[1] ।**

काकमाची घनरवः कासमर्दः कृताञ्जलिः ।
वराहकर्णी सटिरी हंसपादी शतावरी ॥ २४ ॥

तांबूली नागिनी ब्रह्मी हंसपादी च लक्ष्मणा ।
अर्जुनी क्षीरनाली च कारवेल्लोऽर्कपत्रिका ॥ २५ ॥

व्याघ्री चवी कुरवका क्रामिकाः सुरवन्दिते ! ।

**रासायनिकाः ओषध्यः[1] ।**

ब्रह्मदण्डस्सुदण्डश्च लोहदण्डस्तृतीयकः ॥ २६ ॥

एते रसायने योग्याः ब्रह्मविष्णुमहेश्वराः ।

---

1. रसार्णवादुद्धृतः ।

**पञ्चरत्नम्**[1] ।

मन्त्रसिद्धासना देवी तथा कङ्कालखेचरी ॥ २७ ॥

इन्दिरा च क्षमापाली पञ्चमी तु निशाचरी ।
पञ्चरत्नमिदं देवि ! रसशोधनजारणे ॥ २८ ॥

**क्षीरवर्गः**[2] ।

न्यग्रोधोदुंबराश्वत्थस्नुहीतिल्वकभास्करः ।
दुग्धमुत्तमकन्याश्च क्षीरवर्ग उदाहृतः ॥ २९ ॥

उदुंबरवटाश्वत्थन्यग्रोधार्कस्नुहीद्रुमाः ।
कुरूटका क्षीरकर्णी कण्टकी च सुगन्धिका ॥ ३० ॥

एतेषां क्षीरवृक्षाणां क्षीरवर्ग उदाहृतः ।

**क्षारवर्गः**[2] ।

क्षारत्रयं समाख्यातं यवस्वर्जिकटङ्कणम् ॥ ३१ ॥

पलाशो मुष्ककक्षारो यवक्षारस्सुवर्चलः ।
तिलानामुद्भवः क्षारस्तदुक्तं क्षारपञ्चकम् ॥ ३२ ॥

तिलापामार्गकदलीचित्रकार्द्रकमूलकम् ।
शिग्रुमोक्षपलाशश्च केतकी च स्नुहीत्रयम् ॥ ३३ ॥

चिञ्चात्वगर्कनिष्पावदेवदारुरधोमुखी ।
चलपत्रं लाङ्गली च तालमेघरवं तथा ॥ ३४ ॥

ये चान्ये क्षारवृक्षाश्च सर्वमन्तःपुटे दहेत् ।
तमालोड्य जलैर्वस्त्रैर्बध्वा ग्राह्यमधोजलम् ॥ ३५ ॥

---

1. रसार्णवदुद्धृतः ।

2. सरस्वतीमहालयगतरसरत्नसमुच्चयत उद्धृतः । अयं सरस्वतीमहालये उपलभ्यमानोऽन्यत्र मुद्रितादुपलभ्यमानात् क्वचन कि कुत्रचित्समानश्च विद्यते । (ग्र. सं. 10731.)

शोषयेत्पाचयेदग्नौ मृद्भाण्डेन तु तज्जलम् ।
ग्राह्यं क्षारावशेषं तद्वृक्षक्षारोऽयमीरितः ॥ ३६ ॥

**तैलवर्गः[1] ।**

कङ्गुणीतुम्बिनीघोषाकरञ्जश्रीफलोद्भवम् ।
कटुवातारिसिद्धार्थसोमराजीविभीतजम् ॥ ३७ ॥

अतसीजं महाकालनिम्बजं तिलजं तथा ।
अपामार्गदेवदालीदन्तितुम्बुरुबीजकात् ॥ ३८ ॥

अङ्कोलोन्मत्तभल्लातपलाशेभ्यस्तथैव च ।
एतेभ्यस्तैलमादाय रसकर्मणि योजयेत् ॥ ३९ ॥

**अम्लवर्गः[1] ।**

अम्लवेतसजंबीरं निंबुकं बीजपूरकम् ।
शाङ्गेरी चणकाम्लं च साम्लकं कोलदाडिमम् ॥ ४० ॥

अम्बष्ठा तिन्तिणीकं च नारं पारावताङ्घ्रिका ।
करमर्दं च मद्यं च अम्लवर्गः प्रकीर्तितः ॥ ४१ ॥

चणकाम्लं च सर्वेषां एकमेव प्रशस्यते ।
रसानां च विशुद्ध्यर्थं जारणाद्रावणे हितः ॥ ४२ ॥

अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम् ।

**अम्लवेतससन्धानक्रमः[1] ।**

तद्बीजरहितं चिञ्चाफलं काञ्जिकसंयुतम् ॥ ४३ ॥

पक्त्वा कुर्याद्वस्त्रपूतं जम्बीराम्लं च तत्समम् ।
शाङ्गेरीमातुलुङ्गाम्लं यथाप्रोक्तं समाहरेत् ॥ ४४ ॥

वस्त्रपूतं तु तत्सर्वं पचेत्पादावशेषितम् ।

---

1. सरस्वतीमहालयगतरसरत्नसमुच्चयत उद्धृतः ।

सौराष्ट्री तुत्थकासीसं त्रिक्षारं पटुपञ्चकम् ॥ ४५ ॥
धूमसारं च तुल्यांशं सर्वं सञ्चूर्ण्य निक्षिपेत् ।
पूर्वपूर्वे तु पादांशं पुनर्मृद्वाग्निना पचेत् ॥ ४६ ॥
घनीभूतं भवेद्यावच्चट्टुनैकेन चालयन् ।
अम्लवेतस इत्येतज्जायतेऽम्लतरं परम् ॥ ४७ ॥

अथवा—

चिञ्चाफलं काञ्जिकेन सम्यगालोड्य गालितम् ।
नारङ्गलुङ्गलिकुचधात्रीवृक्षाम्लसंयुतः ॥ ४८ ॥
शतावर्यैरावताभ्यां सर्वतस्सदृशो भवेत् ।
एतत्सर्वं समालोड्य शनैर्मृद्वग्निना पचेत् ॥ ४९ ॥
पादावशिष्टे तस्मिंस्तु तत्पादं पटुपञ्चकम् ।
सौराष्ट्री तुत्थकासीसं त्रिक्षारगृहधूमकम् ॥ ५० ॥
एतत्सर्वं समावाप्य तद्यावच्चूर्णतां व्रजेत् ।
द्रवेऽवलोड्य पक्त्वैनं योजयेद्रसकर्मणि ॥ ५१ ॥
अम्लवेतसनामाऽयं रसशास्त्रेषु कीर्तितः ।

**मलवर्गः[1] ।**

कपोतछागगृध्राणां शिखिकुक्कुटयोश्च विट् ॥ ५२ ॥
गोखराश्वाजनागानां शकृद्वर्गः प्रकीर्तितः ।

**मूत्रवर्गः[1] ।**

नरोष्ट्रहस्तिकरभमहिषीखरवाजिनाम ॥ ५३ ॥
गोजाविकानां मूत्राणि मूत्रवर्ग इतीरितः ।

---

1. सरस्वतीमहालयगतरसरत्नसमुच्चयादुद्धृतः ।

**रक्तवर्गः[1] ।**

मञ्जिष्ठा कुङ्कुमं लाक्षा दाडिमं रक्तचन्दनम् ॥ ५४ ॥

बन्धूककरवीराक्षि किंशुकं रक्तवर्गकः ।

**श्वेतवर्गः[1] ।**

तगरः कुटजः कुन्दो गुञ्जा जीवन्तिका तथा ॥५५ ॥

सितांभोरुहकन्दश्च श्वेतवर्ग उदाहृतः ।

**पीतवर्गः[1] ।**

वरानिलाग्निकासीसं कदली कारवल्लिका ॥ ५६ ॥

अतः परं निशाद्वन्द्वं कर्णिकारेन्द्रवारुणी ।

मूलकं चापि कौसुम्भं अक्षनारङ्गकिंशुकम् ॥ ५७ ॥

मदयन्ती पुण्डरीकं पीतवर्गं वदन्ति वै ।

**कृष्णवर्गः ।**

कदली कारवल्ली च त्रिफला नीलिकानला ॥ ५८ ॥

पङ्कः कासीसबालाम्रं कृष्णवर्ग उदाहृतः ।

**वसावर्गः[1] ।**

जलूकाकालमण्डूककरिप्लाविनराहिजाः ॥ ५९ ॥

शिंशुमारमेषशिखिकर्कटीमीनगोभवाः ।

शूकरस्य वसावर्गो रसकर्मणि कीर्तितः ॥ ६० ॥

**पित्तवर्गः ।**

महिषीक्रोडमत्स्याक्षिशिखिमार्जालगोनृणाम् ।

नकुलस्य च पित्तेन पित्तवर्ग उदाहृतः ॥ ६१ ॥

---

1. सरस्वतीमहालयगतरसरत्नसमुच्चयादुद्धृताः ।

**शोधनत्रयम्**[1] ।

सौवीरं टङ्कणं काचमित्युक्तं शोधनत्रयम् ।

**मधुरत्रयम्**[1] ।

घृतं गुडं माक्षिकं च विज्ञेयं मधुरत्रयम् ॥ ६२ ॥

**मित्रपञ्चकम्**[1] ।

मध्वाज्यटङ्कणं गुञ्जा गुडं स्यान्मित्रपञ्चकम् ।

**लोहपर्पटी**[2] ।

लोहस्य कुट्यमानस्य सुततस्य दलानि वै ॥ ६३ ॥
पतन्ति तानि स्वीकृत्य ख्यातोऽयं लोहपर्पटः ।

**तुलायन्त्रम्**[3] (मूषायन्त्रं वा) ।

तुलायन्त्रं तुलाऽऽकारं मूषायन्त्रं तदुच्यते ॥ ६४ ॥
लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ।
ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम् ॥ ६५ ॥
मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत् ।
तोयं स्यात्सूतकस्याधो गन्धाधो वह्निदीपनम्[4] ॥ ६६ ॥

**नियामकं यन्त्रम्**[3] ।

भूगे पूरितपूर्ववारिणि रसं निक्षिप्य वस्त्रावृतं
भाण्डे योजितलोहखर्परमुखे चोर्ध्वं पुटे रोधयेत्[5] ।

---

1. सरस्वतामहालयगतरसरत्नसमुच्चयादुद्धृताः ।
2. रसरत्नाकरतः ऋद्धिखण्डात् । 3. रसपद्धतेः ।
4. इदमेव जारणायन्त्रमिति रसरत्नसमुच्चये ।
5. पूरितयवचिञ्चाद्यालोडितारनाले भूम्यन्तर्गते भाण्डे रसं वस्त्र निक्षिप्य लोहखर्परं मुखे दत्वा ऊर्ध्वं करीषाग्निं दद्यादित्यर्थः ।

**विद्याधरयन्त्रम्**[1] ।

यन्त्रं विद्याधरं ज्ञेयं स्थालीद्वितयसंपुटात् ।
चुल्लीं चतुर्मुखीं कृत्वा यन्त्रभाण्डं निवेशयेत् ॥ ६८ ॥

तत्रौषधं विनिक्षिप्य निरुद्ध्याद्भाण्डकाननम् ।
यन्त्रं विद्याधरं नाम तन्त्रज्ञैः परिकीर्तितम् ॥ ६९ ॥

**सारणायन्त्रम्**[2] ।

धूर्तपुष्पसमाकारा मूषाऽष्टाङ्गुलदीर्घिका ।
मुखे सुविस्तृता कार्या चतुरङ्गुलसम्मिता ॥ ७० ॥

मृन्मया साऽपि शुष्का च मध्येऽतिमसृणीकृता ।
अन्या पिधानिका मूषा सुनिम्ना छिद्रसंयुता ॥ ७१ ॥

**आवर्तितलोहादिस्वरूपम्**[3] ।

आवर्तमाने कनके पीता तारे सिता प्रभा ।
शुल्बे नीलनिभा तीक्ष्णे कृष्णवर्णा सुरेश्वरि ! ॥ ७२ ॥

वङ्गे ज्वाला कपोताभा नागे मलिनधूमका ।
शैले तु धूसरा देवि ! आयसे कपिलप्रभा ॥ ७३ ॥

अयस्कान्ते धूम्रवर्णा सस्यके लोहिता भवेत् ।
वज्रे नानाविधा ज्वाला खसत्वे पाण्डुरप्रभा ॥ ७४ ॥

**आवर्तितलोहविशुद्धिलक्षणम्**[3] ।

न विस्फुलिङ्गो न च बुद्बुदश्च
यदा न रेखा पटलं न शब्दः ।
मूषागतं रत्नसमं स्थिरञ्च
तदा विशुद्धं प्रवदन्ति लोहम् ॥ ७५ ॥

---

1. रसरत्नसमुच्चयतः । 2. रसप्रकाशसुधाकरतः ।
3. रसार्णवतः ।

**प्रतीवाप-निषेकाभिषेकसमयनिर्देशः[1] ।**

प्रतीवापः पुरा योज्यो निषेकस्तदनन्तरम् ।
छादनं तु प्रतीवापो निषेकं मज्जनं विदुः ॥ ७६ ॥

अभिषेकं तदिच्छन्ति स्नपनं क्रियते तु यत् ।
वापो निषेकस्नपनं द्रुते निर्मलतां गते ॥ ७७ ॥

उष्णेनैव हि वाञ्छन्ति शीतलं न च वाञ्छति ।

**मृतरसपरीक्षा[2] ।**

अतेजा अगुरुश्शुभ्रो लोहहा चाचलो रसः ॥ ७८ ॥

यदा नावर्तते वह्नौ नोर्ध्वं गच्छेत्तदा मृतः ।

**रसबन्धप्रकाराः[3] ।**

पञ्चविंशतिसंख्याकान्रसबन्धान्प्रचक्ष्महे ॥ ७९ ॥

येन येन हि चाञ्चल्यं दुर्ग्रहत्वं च नश्यति ।
रसराजस्य संप्रोक्तो बन्धनार्थो हि वार्तिकैः ॥ ८० ॥

हठारोटौ तथाऽऽभासः क्रियाहीनश्च पिष्टिका ।
क्षारः खोटश्च पोटश्च कल्कबन्धश्च कज्जलिः ॥ ८१ ॥

सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः ।
शृङ्खलाद्रुतिबन्धौ च बालकश्च कुमारकः ॥ ८२ ॥

तरुणश्च तथा वृद्धो मूर्तिबद्धस्तथाऽपरः ।
जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः ॥ ८३ ॥

महाबन्धाभिधश्चेति पञ्चविंशतिरीरिताः ।
केचिद्वदन्ति षड्विंशो जलौकाबन्धसंज्ञकः ॥ ८४ ॥

स तावन्नेष्यते देहे स्त्रीणां द्रावेऽतिशस्यते ।

---

1. रसार्णवतः । 2. रससङ्केतकलिकातः 3. रसरत्नसमुच्चयतः ।

हठबन्धः ।

हठो रसस्स विज्ञेयस्सम्यक्शुद्धिविवर्जितः ॥ ८५ ॥

स सेवितो नृणां कुर्यान्मृत्युं वा व्याधिमुद्धतम् ।

आरोटबन्धः ।

सुशोधितो रसस्सम्यगारोट इति कथ्यते ॥ ८६ ॥

स क्षेत्रीकरणे श्रेष्ठश्शनैर्व्याधिविनाशनः ।

आभासबन्धः ।

पुटितो यो रसो याति योगं मुक्त्वा स्वभावताम् ॥ ८७ ॥

भावितो धातुमूलाद्यैराभासो गुणवैकृतेः ।

क्रियाहीनबन्धः ।

असंशोधितलोहाद्यैस्साधितो यो रसोत्तमः ॥ ८८ ॥

क्रियाहीनस्स विज्ञेयो विक्रियां यात्यरथ्यतः ।

पिष्टिकाबन्धः ।

तीव्रातपे गाठतरावमर्दात्
पिष्टीभवेत्सा नवनीतरूपा ।
स्यातस्स सूतः किल पिष्टिबन्धः
स्सन्दीपनः पाचनकृद्विशेषात् ॥ ८९ ॥

क्षारबन्धः ।

शङ्खशुक्तिवराटाद्यैर्योऽसौ संसाधितो रसः ॥ ९० ॥

क्षारबन्धः परं दीप्तिपुष्टिकृच्छूलनाशनः ।

खोटबन्धः ।

बन्धो यः खोटतां याति ध्मातो ध्मातः क्षयं व्रजेत् ॥९१ ॥

खोटबन्धस्स विज्ञेयः शीघ्रं सर्वगदापहः[1] ।

**पोटबन्धः ।**

द्रुतकज्जलिका मोचापत्रके चिपिटीकृता ॥ ९२ ॥

स पोटः पर्पटी सैव बालाद्यखिलरोगनुत् ।

**कल्कवन्धः ।**

स्वेदाद्यैस्साधितः सूतः पङ्कत्वं समुपागतः ॥ ९३ ॥

कल्कबद्धस्स विज्ञेयो योगोक्तफलदायकः ।

**कज्जलीवन्धः ।**

कज्जली रसगन्धोत्था सुश्लक्ष्णा कज्जलोपमा ॥ ९४ ॥

तत्तद्योगेन संयुक्ता कज्जलीबन्ध उच्यते ।

**सजीवबन्धः ।**

भस्मीकृतो गच्छति वह्नियोगात्
रसस्सजीवस्स खलु प्रदिष्टः ।
संसेवितोऽसौ न करोति भस्म-
कार्यं जरारोगविनाशनं च ॥ ९५ ॥

**निर्जीवबन्धः ।**

जीर्णाभ्रको वा परिजीर्णगन्धो
भस्मीकृतश्चाखिललोहमौलिः ।
निर्जीवनामा हि स भस्मसूतो
निश्शेषरोगान्विनिहन्ति सद्यः ॥ ९६ ॥

---

1. "पिष्टीस्तम्भस्तु खोटकः । ध्मातो द्रुतो भवेत्खोटस्त्वाहतश्चूर्णतां व्रजेत् । पुनर्ध्मातो द्रुतः खोट इति खोटस्य लक्षणम् ।" इति रससङ्केतकलिकायाम् ।

**निर्वीजबन्धः ।**

रसस्तु पादांशसुवर्णजीर्णः
पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुटितः क्रमेण
निर्बीजनामा सकलामयघ्नः ॥ ९७ ॥

**सबीजबन्धः ।**

[1]पिष्टीकृतैरभ्रकसत्वहेम-
तारार्ककान्तैः परिजारितो यः ।
हतस्ततष्षड्गुणगन्धकेन
सबीजबद्धो विपुलप्रभावः ॥ ९८ ॥

**श्रृङ्खलाबन्धः[2] ।**

वज्रादिनिहतस्सूतो हतस्सूतस्समोऽपरः ॥ ९९ ॥

श्रृङ्खलाबद्धसूतस्तु देहलोहविधायकः ।
चित्रप्रभावां वेगेन व्याप्तिं जानाति शङ्करः ॥१००॥

**द्रुतिबन्धः ।**

युक्तोऽपि बाह्यद्रुतिभिश्च सूतो
बन्धं गतो वा भसितस्वरूपः ।
स राजिकापादमितो निहन्ति
दुस्साध्यरोगान्द्रुतिबद्धनामा ॥ १०१ ॥

**बालकबन्धः ।**

समाभ्रजीर्णश्शिवजस्तु बालः
संसेवितो योगयुतो जवेन ।

---

1. बीजीकृतैः इति रसमञ्जर्यां आयुर्वेदप्रकाशे च पाठः ।

2. अयं बन्धप्रकारः आनन्दकन्दे वज्रबन्धप्रकरणे (पृ. ४४५) दश-सङ्क(श्रृङ्ख)लिकाविधिनिरूपणावसरे मूल एव प्रपञ्चितः ।

रसायनो भाविगदापहश्च
सोपद्रवारिष्टगदान्निहन्ति ॥ १०२ ॥

कुमारबन्धः ।

हरोद्भवो यो द्विगुणाभ्रजीर्णः
स स्यात्कुमारो मिततण्डुलोऽसौ ।
त्रिस्सप्तरात्रैः खलु पापरोग-
सङ्घातघाती च रसायनं च ॥ १०३ ॥

तरुणबन्धः ।

चतुर्गुणव्योमकृताशनोऽसौ
रसायनाग्र्यस्तरुणाभिधानः ।
स सप्तरात्रात्सकलामयघ्नो
रसायनो वीर्यबलप्रदाता ॥ १०४ ॥

वृद्धबन्धः ।

यस्याभ्रकष्षड्गुणितो हि जीर्णः
प्राप्ताग्निसख्यः स हि वृद्धनामा ।
देहे च लोहे च नियोजनीयः
शिवादृते कोऽस्य गुणान्प्रवक्ति ॥ १०५ ॥

मूर्तिबन्धः ।

यो दिव्यमूलिकाभिश्च कृतोऽत्यग्निसहो रसः ।
विनाऽभ्रजारणात्स स्यान्मूर्तिबन्धो महारसः ॥ १०६ ॥
अयं हि जार्यमाणस्तु नाग्निना क्षीयते रसः ।
योजितस्सर्वयोगेषु निरौपम्यफलप्रदः ॥ १०७ ॥

जलबन्धः ।

शिलातोयमुखैस्तोयैर्बद्धोऽसौ जलबन्धवान् ।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः ॥ १०८ ॥

**अग्निबन्धः ।**

केवलो लोहयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः ।
अक्षीणश्चाग्निबद्धोऽसौ खेचरत्वादिकृत्स हि ॥ १०९ ॥

**संस्कृतबन्धः ।**

विष्णुक्रान्ताशशिलताकुंभीकनकमूलकैः ।
विशालानागिनीकन्दव्याघ्रपादीकुरण्टकैः ॥ ११० ॥

वृश्चिकालीभशुण्डीभ्यां हंसपादीसहासुरैः ।
अप्रसूतगवां मूत्रैः पिष्टं बाकुलके पचेत् ॥ १११ ॥

पक्वमेवं मृतैर्लोहैर्मर्दितं विपचेद्रसम् ।
यन्त्रेषु मूर्च्छा सूतानामेष कल्पः सुसंस्कृतः ॥ ११२ ॥

**महाबन्धः ।**

हेम्ना वा रजतेन वा सहचरो ध्मातो व्रजत्येकतां
अक्षीणो निबिडो गुरुश्च गुटिकाकारोऽतिदीर्घोज्ज्वलः ।
चूर्णत्वं पटुवत्प्रयाति निहतो घृष्टो न मुञ्चेन्मलं
निर्गन्धो द्रवति क्षणात्स हि महाबन्धाभिधानो रसः ॥ ११३ ॥

**सृष्टिः ।**

गोऽजाविनरनारीणां मूत्रं शुक्रं च शोणितम् ।
सृष्टिरेषा समाख्याता षण्डदोषविनाशिनी[1] ॥ ११४ ॥

स्त्रीपुंसोः शुक्रयुगलमप्रसूतारजस्तथा ।
एतत्सृष्टित्रयं प्रोक्तं गुह्यमेतद्वरानने[2] ! ॥ ११५ ॥

**वासनामुखचारणप्रकारः[3] ।**

अथ शुद्धस्य सूतस्य जारयेत्पूर्वभावितम् ।
गन्धकं तु तुलायन्त्रे पश्चात्सर्वं पलं पलम् ॥ ११६ ॥

---

1. शक्त्यवतारात् । 2. रसावतारात् । 3. रसरत्नाकरतः ।

मूषा नालान्विता ऊर्ध्ववक्त्रा स्याद्द्वादशाङ्गुला ।
दृढा लोहमयी कार्या त्वनया सदृशी परा ॥ ११७ ॥

एकस्यां निक्षिपेत्सूतमन्यस्यां गन्धकं समम् ।
एकस्या मुखमध्ये तु ह्यपरस्या मुखं क्षिपेत् ॥ ११८ ॥

लिप्त्वा मृल्लवणैस्सार्धं गन्धकोर्ध्वं पुटेल्लघु ।
रसस्याधो जलं स्थाप्यं धूमं गन्धं पिबत्यलम् ॥ ११९ ॥

जीर्णे गन्धे समुद्धात्य तुल्यगन्धं च दापयेत् ।
इत्येवं षोडशगुणं गन्धं जार्यं पुनः पुनः ॥ १२० ॥

जायते सूतराजोऽयं वासनामुखितो भवेत् ।

**ग्राह्याग्राह्यरसलक्षणम्**[1] ।

अन्तस्सुनीलो बहिरुज्ज्वलो यो
मध्याह्नसूर्यप्रतिमप्रकाशः ।
शस्तोऽथ धूम्रः परिपाण्डुरश्च
चित्रो न योज्यो रसकर्मसिद्धौ ॥ १२१ ॥

## २. प्रकीर्णकम्[2] ॥

**सिद्धसारयन्त्रम्**[3] ।

चुल्ल्यामारोपयेत्पात्र गंभीरं कल्कपूरितम् ।
तत्पार्श्वनलिकामार्गाद्द्रुतसत्वस्य विप्रुषाः ॥ १ ॥

पतन्ति येन तद्यन्त्रं सिद्धसाराख्यमीरितम् ।

**गर्भसारयन्त्रम्**[3] ।

तथैव पात्रं गंभीरं सच्छिद्रकपिधानकम् ॥ २ ॥

---

1. रसमञ्जर्याः ।
2. इतः परं रससंस्कारोपयुक्तानामन्येषामपि विषयाणामत्र विवरणं दीयते ।
3. रसकामधेनुतः ।

पिधाय पात्रान्तरतो मध्ये स्वल्पकचोलके।
पातने बाष्पबिन्दूनां गर्भसारं प्रचक्षते ॥ ३ ॥

मानन्दमूर्तियन्त्रम्[1]।

तथैव पार्श्वनाली तु दीर्घा पात्रान्तरं गता।
द्रवपातो यतः प्रोक्तं परमानन्दमूर्ति तत् ॥ ४ ॥

(अत्राम्लक्षारकाञ्जिकद्रवसत्वपातनम्।)

तालयन्त्रम्[1]।

स्निग्धद्रव्यभृतं पात्रं सच्छिद्रमन्यपात्रके।
गर्ते निधायोपर्यग्निर्यन्त्रं पातालसंज्ञकम् ॥ ५ ॥

आकाशयन्त्रम्[1]।

उपर्यग्निर्घटस्यार्धं खर्परं सम्मुखस्थितम्।
न्युब्जमुच्चैर्वस्त्रबद्धमुखं मल्लपिधानकम् ॥ ६ ॥
वस्त्रान्तस्स्थं द्रव्यचूर्णं द्रवीभूय पतेदधः।
अन्यपात्रे काचजादौ यन्त्रमाकाशसंज्ञितम् ॥ ७ ॥
तन्मुखे काचकूपी वा साऽधश्छिद्रा सवस्त्रभृत्।

अथवा—

मृत्तिकादिकूपीवालुकायन्त्रे स्थिता उपरि लम्बमानसकल्कघटाऽधश्छिद्राद्द्रवबिन्दुपरिपतद्रसादिद्रव्या यदि च स्यात्तदाऽप्याकाशयन्त्रमुक्तम्।

रञ्जकयन्त्रम्[1]।

रञ्जकद्रवपूर्णायां स्थालिकायां तु विन्यसेत् ॥ ८ ॥
मृत्तिकाकाचजं पात्रं गंभीरोच्चं मनोहरम्।

---

1. रसकामधेनुतः।

सूक्ष्मच्छिद्रान्वितां तत्र समारोप्य त्रिपादिकाम् ॥ ९ ॥

तत्र क्षिप्त्वा गन्धचूर्णं तप्ततीक्ष्णशलाकया ।
सन्दह्य सद्यस्तत्पात्रोपरि पात्रं च तद्विधम् ॥ १० ॥

तथा पिदध्यात्तत्पात्रधानं मज्जेद्द्रवान्तरे ।
तत्तलान्तर्धूमसत्वं लग्नं स्याच्च तथा चरेत् ॥ ११ ॥

छिद्रान्तराद्द्रुतं तैलं मध्यपात्रे पतेदपि ।
इदं श्रीरञ्जकं यन्त्रं सर्वतन्त्रेषु गोपितम् ॥ १२ ॥

**करुणाकरयन्त्रम्**[1] ।

सकल्कपात्रं गम्भीरं चुल्लीस्थं च तिरोहितम् ।
स्थाल्यां तत्प्रान्तस्थरसैश्च्युतस्स्यात्करुणाकरम् ॥ १३ ॥

**वारुणीयन्त्रम्**[1] ।

कूपीद्वयमुखं तिर्यक्कृत्वैकाधोऽग्निदीपनम् ।
ततः क्षारद्रवोऽन्यस्यां पतेद्वारुणिकं च तत् ॥ १४ ॥

**ज्योतिर्यन्त्रम्**[1] ।

हण्डिकाधस्तु दीपाग्निरूर्ध्वच्छिद्रस्थकूपके ।
तालादिसत्वपातार्थं ज्योतिर्यन्त्रमिदं स्मृतम् ॥ १५ ॥

**साध्ययन्त्रम्**[1] ।

चुल्लीसंस्थेष्टिकागर्तेऽन्यपात्रेण तिरोहिते ।
तालादिसत्वं निपतेत्साध्ययन्त्रं तदुच्यते ॥ १६ ॥

**स्थलकूर्मयन्त्रम्**[2] ।

खर्परं पृथुलं सम्यग्विस्तारे तस्य मध्यमे ।

---

1. रसकामधेनुतः । 2. रसदर्पणतः ।

आलवालं मृदा कृत्वा तन्मध्ये पारदं न्यसेत् ॥ १७ ॥

जारणार्थं रसस्योक्तं गन्धादीनामशेषतः ।

**जलकूर्मयन्त्रम्[1] ।**

दैर्घ्यादधस्स्थालिकाया मानं स्याद्द्वादशाङ्गुलम् ॥१८॥

षोडशाङ्गुलविस्तारां चतुःकीलयुतां मुखे ।
जलेनापूर्य तां स्थालीं निखनेद्भूमिमध्यतः ॥ १९ ॥

उपरिष्टाच्छरावं तु मुखं कीलेषु निक्षिपेत् ।
अधो भाण्डे जले मग्नं शरावं च तथा भवेत् ॥ २० ॥

जलकूर्ममिदं यन्त्रं शस्तं जारणकर्मणि ।

**पञ्चमृत्तिकाः[2] ।**

वल्मीकमृत्तिका धूमो गैरिकं खटिका पटु ॥ २१ ॥

इत्येते मृत्तिकाः पञ्च संप्रोक्ता रसकर्मणि ।

**लेपाद्यर्थं मृत्तिकासाधनम्[3] ।**

मृत्कार्पासककिट्टैश्च मृत्तिका साधिताऽपरा ॥ २२ ॥

लाक्षामृच्चूर्णतृणतो मेषीक्षीरेण मर्दयेत् ।
कार्पासजीर्णतृणतो मेषीक्षीरेण मर्दयेत् ॥ २३ ॥

कुक्कुटाण्डरसेनापि मृत्तिकाऽन्या विमर्दिता ।
काचकूपीविलेपार्थमेते द्वे मृत्तिके वरे ॥ २४ ॥

कासीसचूर्णमण्डूरं टङ्कणं नवसादरम् ।
पटूनि पञ्च निम्बूकरसैस्संमर्दयेन्मृदम् ॥ २५ ॥

---

1. देवीयामलतः । इदमेव सोमानलं यन्त्रमिति यन्त्राध्याये विनिर्दिष्टपूर्वम् ।

2. रसेन्द्रचूडामणितः 3 रसकामधेनुतः ।

फेनतुल्यं च डमरुयन्त्रलेपे मृदुच्यते ।
कुलालकरमृत्कृष्णा पीतमृच्च करंभकम् ॥ २६ ॥

नरकेशाः कागदं च तुषा एतद्विमर्दयेत् ।
द्राक्षागुडादिशुक्तेन वज्रमूषामृदुच्यते ॥ २७ ॥

तुषं भागद्वयं ग्राह्यं भागैकं वस्त्रखण्डकम् ।
मृदं च त्रिगुणीकृत्य जलं दत्वा विमर्दयेत् ॥ २८ ॥

नरकेशं समं कृत्वा किञ्चित्तावत्प्रकुट्टयेत् ।
यावत्सिक्थसमाभासं मृत्पिण्डं जायते तथा ॥ २९ ॥

यथा न शुष्कतामेति तथा यत्नं समाचरेत् ।
एवं सप्तदिनादूर्ध्वं मृदं योगे प्रयोजयेत् ॥ ३० ॥

कूपिकादिविलेपार्थं यन्त्रादेश्च भिषक्क्रमात् ।
जलं बब्बूलनिर्यासं समितां तत्समं कुरु ॥ ३१ ॥

तयोस्तुल्यं लोहकिट्टं शुद्धमञ्जनसन्निभम् ।
मुद्रां वै वारियन्त्रस्य सिद्ध्यर्थं दुर्लभां कुरु ॥ ३२ ॥

जलाग्नियोगतो नैव भिद्यतेऽत्र कदाचन ।
सूतकस्तु न सङ्गच्छेत्प्रलयाग्निजवेन वै ॥ ३३ ॥

[1]रत्नपुष्पाभवं तैलं कुडवे द्वे जलेन वै ।
प्रस्थेन मिश्रितं वह्नौ तैलशेषं तु कारयेत् ॥ ३४ ॥

तन्मध्ये भूर्जपत्रं तु कुट्टितं चाञ्जनोपमम् ।
पांशुशूकादिरहितं पलमेकं प्रयोजयेत् ॥ ३५ ॥

पलैकं लोहकिट्टं च शुद्धाञ्जनसमप्रभम् ।
विमर्द्य निम्बुनीरेण लेपयेद्वा तदर्थकृत् ॥ ३६ ॥

---

1. अतसी ।

काचभागो भवेदेको द्विगुणं मृतभास्करम् ।
रसकात्पञ्चभागास्स्युष्षड्भागा धौतमृत्तिका ॥ ३७ ॥

आटरूषजलैः पिष्ट्वा संपुटं तेन कारयेत् ।
मूषां विरचयेत्सत्यं रसस्य निगडो भवेत् ॥ ३८ ॥

वह्निमध्याच्च गच्छेद्धि पक्षच्छेदी च तिष्ठति ।
काचकूपी द्वितीया च तृतीयो लोहसंपुटः ॥ ३९ ॥

हठमुद्रा ।

चुबुकं लोहचूर्णं च क्रोडरक्तेन संयुतम् ।
तत्र सर्वं प्रदातव्यं घनघातेन ताडयेत् ॥ ४० ॥

सन्ध्यारभ्योदयो यावत्सूर्यबिंबं च दृश्यते ।
हठमुद्रेति विख्याता सर्वसिद्धैर्नमस्कृता ॥ ४१ ॥

अथवा—

त्रिटङ्कं चुंबकं देयं नवटङ्कमयोरजः ।
नररक्तेन संयुक्तं मेलयित्वा सकृत्सकृत् ॥ ४२ ॥

घनेन कुट्टितं सर्वं चतुर्यामं च मर्दितम् ।
हठमुद्रेति विख्याता सर्वसिद्धैर्नमस्कृता ॥ ४३ ॥

अथवा—

लोहकिट्टं समानीय चूर्णयेद्वै पलानि षट् ।
गालयेद्वस्त्रमध्ये तु खल्वमध्ये निधाय च ॥ ४४ ॥

अजैडकहृदिस्थं च मांसं संमिश्रितं नयेत् ।
कुट्टयेद्दृढहस्तेन मध्ये निक्षिप्य चूर्णकम् ॥ ४५ ॥

सिक्थतुल्यं तु तद्यावत्सिद्धा भवति मृत्तिका ।

अथवा—

काचटङ्कणमण्डूरेष्टकासंसाधिता भृशम् ॥ ४६ ॥

वटार्कोदुम्बरक्षीरैर्दिनमेकं हठा भवेत् ।

मदनमुद्रा ।

औदुंबराख्यवटदुग्धपलं पलं च
लाक्षा पलमृषिपलं त्वथ चुम्बकस्य ।
सङ्कुट्यमानमतसीफलतैलमिश्रं
सूतस्य जारणविधौ मदनाख्यमुद्रा ॥ ४७ ॥

अथवा—

चतुर्षु लोहकुण्डेषु क्रमतस्तप्ततोयतः ॥ ४८ ॥

उत्तरोत्तरतः क्षेपात्कटाहे क्वाथयेद्भृशम् ।
यावत्तलस्थितं सिक्थं तावत्तोये भृतं भवेत् ॥ ४९ ॥

तत्सिक्थं जलयन्त्रादौ लेपे प्रवरमीरितम् ।

कूपिकापाकविधिः ।

जीर्णसूक्ष्मस्य वस्त्रस्य कुर्यात्खण्डद्वयं बुधः ॥ ५० ॥

चतुरस्रकाचकूप्यामध्यार्धप्रमाणतः ।
पक्वपादांशतो मध्ये द्विधा कुर्वीत विस्तृतम् ॥ ५१ ॥

मग्नं तन्मृत्तिकापङ्के काचकूप्यां नियोजयेत् ।
यवप्रमाणलिप्तायां दृढमृत्तिकया पुनः ॥ ५२ ॥

खण्डमेकं तु वस्त्रस्य मध्ये छिद्रसमन्वितम् ।
निवेश्य कूपिकानालात्समीकुर्यान्मृदाऽभितः ॥ ५३ ॥

खण्डमन्यमधस्तद्वत्काचकूप्यां नियोजयेत् ।
आतपे तां विशोष्याथ मृदा तद्वद्विलेपयेत् ॥ ५४ ॥

पुनस्तथा वस्त्रखण्डद्वयेन विनियोजयेत्।
एवं विशोष्य संयोज्य मृत्तिका कर्पटत्रयम्॥ ५५॥

रसादिपिष्टिं प्रक्षिप्य मुद्रां कुर्यात्प्रयत्नतः।
पिधाय भस्मना कूपीं कण्ठनालविवर्जितम्॥ ५६॥

कण्ठे कोकिलकान्दत्वा पञ्चषाञ्ज्वलितान्भृशम्।
लोहवंशादिनालीभिर्धमेन्मुखसमीरणैः॥ ५७॥

काचकूपीकण्ठगतं यावद्भिर्गलितं भवेत्।
सन्दंशेन समीकृत्य सन्धिरोधं प्रयत्नतः॥ ५८॥

मुद्रां गलितकाचस्य कुर्याद्गोरक्षनिर्मिताम्।
शनैश्शनैः कोकिलकान्सन्दंशेनापसारयेत्॥ ५९॥

शीतीभूतविभूत्यास्तु गृह्णीयात्कूपिकां ततः।
मृत्कर्पटचतुष्केण पूर्ववद्विनियोजयेत्॥ ६०॥

छिद्रवर्ज्यं केशतुषमृद्भिर्लिप्त्वा विशोषयेत्।
यन्त्रे चक्रादिके धृत्वा जारणादिक्रियां चरेत्॥ ६१॥

एवं निर्धूमपाकेन सिद्धिः कोटिगुणोत्तरा।

**चुल्लीविधानम्।**

भवेदेकमुखी चुल्ली पातनादिक्रियाकरी॥ ६२॥

चुल्ली च द्विमुखी प्रोक्ता स्वेदनादिषु कर्मसु।
महास्वेदादिषु तथा चुल्ली तु त्रिमुखी स्मृता॥ ६३॥

चतुर्मुखी जारणादौ सत्वपाते च कीर्तिता।
श्रीनाथाख्या तथा चुल्ली जारणे बहुभिर्मुखैः॥ ६४॥

**भावनामाला।**

औषधादीनां रसैर्यावत्कर्दमाभो भवेद्रसः।
संप्लावितः परं मानं भावनायाः प्रकीर्तितम्॥ ६५॥

**बिडमात्रा ।**

ऊर्ध्वाधश्च बिडं दद्याद्रसेन्द्रादष्टमांशतः ।
न न्यूनाधिकमादद्यादन्यथा दोषकृद्भवेत् ॥ ६६ ॥

औषधं शोधनार्थं यदूर्ध्वाधो दीयते बुधैः ।
बिडसंज्ञां तु लभते तदिति प्रतिबोधितम् ॥ ६७ ॥

**स्नेहाम्लादीनां गुणाः ।**

सर्वे मृदुकराः स्नेहाः सर्वे चाम्लाः प्रबोधकाः ।
सर्वे मलहराः क्षाराः सर्वे रक्ताश्च रञ्जकाः ॥ ६८ ॥

द्रावकाम्ला हि तीक्ष्णाश्च पाचना ह्यामयापहाः ।
रोचको द्रावयेल्लोहान्क्षीरिणो रसबन्धकाः ॥ ६९ ॥

**तैलपातनविधिः**[1] **।**

तैलानां पातनं वक्ष्ये सूर्यपाकेन चानलात् ।
जलयोगेन तत्तैलं ग्राह्यं योगेषु योजयेत् ॥ ७० ॥

धत्तूरबीजचूर्णानि वस्त्रपूतानि कारयेत् ।
समूलोत्तरवारुण्याः कषायेण विलोडयेत् ॥ ७१ ॥

आलिप्य कांस्यपात्रे तु धारयेदातपे खरे ।
सन्तप्ते स्वच्छवस्त्रेण पीडयेत्तैलमाहरेत् ॥ ७२ ॥

शिग्रुपुष्पार्ककार्पासबीजानामपमार्जनात् ।
ग्राह्यं धत्तूरवत्तैलमेकैकस्य पृथक्पृथक् ॥ ७३ ॥

काकतुण्ड्यास्समूलाया बाकुचीतैलमाहरेत् ।
देवदाल्याश्च जालिन्यास्तिक्तकाकोलितो भवेत् ॥ ७४ ॥

अपामार्गकषायेण तैलं स्याद्विषमुष्टिजम् ।
मूलक्वाथैः कुमार्यास्तु जैपालजं भवेत् ॥ ७५ ॥

---

1. रसरत्नाकरतः ।

रक्तापामार्गक्वाथेन बाकुचीतैलमाहरेत्।
क्वाथेन चेन्द्रवारुण्यास्तैलमारग्वधं भवेत्॥ ७६॥

कटुतुंबी देवदाली पटोली चेन्द्रवारुणी।
तिक्तकोशातकी चैषां शुष्कबीजानि कारयेत्॥ ७७॥

काकतुण्ड्या अपामार्गक्वाथे तैलं समाहरेत्।
बीजानि कटुतुंब्याश्च गोमयेन विलोडयेत्॥ ७८॥

शुष्कधान्यतुषैस्सार्धं कुट्टयेच्च ह्युलूखले।
निस्त्वगक्षान्विचूर्ण्याथ भृङ्गराजरसैस्सह॥ ७९॥

मर्दयित्वाऽऽतपे तैलं गृह्णीयात्पीडने सति।
महाकालस्य बीजानि चूर्णितानि विभावयेत्॥ ८०॥

धात्रीफलरसेनैव सप्तवारं पुनः पुनः।
सोष्णं कृत्वा तु तच्चूर्णं तैलयन्त्रेण पीडयेत्॥ ८१॥

कृष्णायाः कटुतुंब्याश्च बीजचूर्णानि कारयेत्।
कान्तपाषाणचूर्णं च ह्येकीकृत्य विचूर्णयेत्॥ ८२॥

धान्यराशिगतं पक्षादुद्धृत्य तैलमाहरेत्।
चूर्णं करञ्जबीजोत्थं भृङ्गराजरसैस्सह॥ ८३॥

समालोड्यातपे तप्तं पीडनात्तैलमाहरेत्।
धात्रीफलरसैर्भाव्यं चूर्णं पालाशबीजजम्॥ ८४॥

दिनैकं वर्तते यन्त्रे तैलं ग्राह्यं च तैलके।
गुडत्वग्बीजजं चूर्णं नरमूत्रेण भावयेत्॥ ८५॥

सप्तवारं ततो घर्मे लेपयेत्कांस्यभाजने।
उद्धृतं ढालयेत्तं च तैलं पतति नान्यथा॥ ८६॥

रत्नानामारनालेन पिष्ट्वा चूर्णं विभावयेत्।

ज्योतिष्मत्याश्च बीजानि चातपे तैलमाहरेत् ॥ ८७ ॥

चूर्णं वरुणबीजोत्थं चिञ्चाबीजत्वगन्वितम् ।
नालिकेराम्बुनाऽऽलोड्य ह्यातपे तैलमाहरेत् ॥ ८८ ॥

गुञ्जाभल्लातबीजोत्थं चूर्णं चित्रकमूलजम् ।
नारिकेलाम्बुनाऽऽलोड्य घर्मे तच्चालयेत्क्षणम् ॥ ८९ ॥

पीडयेत्तं च पट्टाभ्यां तैलं पतति तद्गतम् ।
आम्रातबीजचूर्णस्य दशांशे चित्रमूलकम् ॥ ९० ॥

नारिकेलाम्बुना पिष्टं घर्मे तैलं समाहरेत् ।
पुत्रजीवस्य बीजानि चूर्णं वा तिन्दुबीजजम् ॥ ९१ ॥

आम्रातवत्सकर्तव्यं तेषां तैलं पृथक्पृथक् ।
नारिकेलाम्बुना भाव्यं बिल्वबीजस्य चूर्णकम् ॥९२॥

दिनैकं तैलयन्त्रेण तैलमाहृत्य योजयेत् ।
निस्तुषाङ्कोलबीजानां मुखं किञ्चिद्विघर्षयेत् ॥ ९३ ॥

प्ररोहयेत्कांस्यपात्रे पिष्ट्वा चणकलेपितम् ।
तन्मध्ये टङ्कणं स्विन्नं किञ्चित्किञ्चित्प्रलेपयेत् ॥ ९४ ॥

धारयेदातपे तीव्रे मुखात्तैलं समाहरेत् ।
अथवा कांस्यपात्रे तद्धर्मे धार्यमधोमुखम् ॥ ९५ ॥

अधःस्थे कांस्यपात्रे च तैलं पतितमाहरेत् ।
स्वर्जीयुतं समं पिष्ट्वा छिद्रभाण्डे निवेशयेत् ॥ ९६ ॥

तत्क्षणाद्द्रवरूपं च केशतैलमिदं भवेत् ।
अथवोत्तरवारुण्याः कषायेण समाहरेत् ॥ ९७ ॥

तैलं समस्तबीजानां ग्राहयेदातपे खरे ।
पक्वभाण्डानुमात्राणां रसमादाय भावयेत् ॥ ९८ ॥

समस्तं बीजचूर्णं तु ह्युक्तानुक्तं पृथक्पृथक् ।

आतपे मुच्यते तैलं साध्यासाध्यं न संशयः ॥ ९९ ॥

गर्भबीजास्थिबीजाद्यं शुकविष्ठासनादिकम् ।
सर्वबीजेषु वा तैलं ग्राह्यं पातालयन्त्रके ॥ १०० ॥

**शुक्तं सूक्तं वा[1] ।**

गुडमधुकाञ्जिकमस्तु-
प्रविभागास्स्युर्यथोत्तरं द्विगुणाः ।
त्रिदिनानि धान्यराशौ
स्थापितमिदमुच्यते शुक्तम् ॥ १०१ ॥

**अम्लकाञ्जिकवर्गः[2] ।**

वारिणा काञ्जिकं रक्षोहरं स्यात्कुण्डगोलकम् ।
काञ्जिकोन्नाहधातुघ्नकुञ्जलानि महारसम् ॥ १०२ ॥

श्लक्ष्णं सोमशुक्लाख्यं कुल्माषाभिषुतं च तत् ।
अवन्तिसोमसंज्ञं तच्चेत्तण्डुलकृतं भवेत् ॥ १०३ ॥

धान्यैर्धान्याम्लकैः शूकक्षुद्रैः स्याच्च युगन्धरम् ।
दलैः पक्वैर्निस्तुषैस्तु सौवीरं यवजैर्मतम् ॥ १०४ ॥

तुषोदकं तदामैस्स्याद्गोधूमैरारनालकम् ।
बाह्लीकनिर्वृतं शिम्बैस्सुतं कन्दफलादिभिः ॥ १०५ ॥

तत्कर्त(र्च)रीभिः पिण्याकी शाण्डाकी मूलसर्षपैः ।
मधुद्राक्षागुडाद्यैस्तु सूक्तमिक्षुरसेन च ॥ १०६ ॥

कुल्माषधान्यमण्डाद्यैर्गोहांबुकमिति स्मृतम् ।
कलाम्लं वटकाद्यैस्स्याच्चुक्रं नद्याम्लसन्धितम् ॥१०७॥

---

1. अजीर्णमञ्जरीतः। 2. अभिधानकामधेनुतः।

**लवणवर्गः**[1] ।

सिन्धुसामुद्ररुचकैः प्रदिष्टं लवणत्रयम् ।
तदुद्भिदबिडाभ्यां च प्रोक्तं लवणपञ्चकम् ॥ १०८ ॥

पांशुपाक्यबिडाख्यैश्च पटुषट्कं प्रचक्षते ।

सिन्धूत्थगन्धगुटिकं गडकं बिडाह्वं
शाकंभरं रुचककाचरजो जलोत्थम् ।
भौमोषकादिलवणानि तथा द्विभेदाः
क्षाराश्च लावणिकवर्ग इति प्रदिष्टः ॥ १०९ ॥

**त्रिगन्धकम्**[1] ।

गन्धतालशिलाभिस्तु त्रिगन्धकमितीरितम् ॥ ११० ॥

**रङ्गाकृष्टिः**[2] ।

रङ्गाकृष्टिं प्रवक्ष्यामि यथाज्ञातं तु तत्वतः ।
न कुत्रचित्प्रयोगोऽस्ति शास्त्रे वाऽपि न दृश्यते ॥ १११ ॥

रसोपरसधातूनां रङ्गद्रावं तु शोभनम् ।
एतद्बौद्धा विजानन्ति भोटदेशनिवासिनः ॥ ११२ ॥

मणैकं लोहचूर्णस्य स्वर्जिकाया मणद्वयम् ।
त्रिभागं चूर्णकं दत्वा ह्येकस्थमतिमर्दयेत् ॥ ११३ ॥

क्षिप्त्वा चूर्णं तु मृद्भाण्डे ह्यजामूत्रेण पूरयेत् ।
चुल्लिकोपरि संस्थाप्य वह्निं प्रज्वालयेत्ततः ॥ ११४ ॥

यदा फेनस्समागच्छेच्छुक्लवर्णस्तदूर्ध्वतः ।
अन्यपात्रे तदा स्थाप्यं यावद्बध्नाति रक्तताम् ॥ ११५ ॥

पश्चात्तं रक्तफेनं च क्षिपेत्पात्रान्तरे पुनः ।
क्षीणे मूत्रजलं दद्यावद्रक्तं च दृश्यते ॥ ११६ ॥

---

1. रसकामधेनुतः । 2. रससारतः ।

तावद्रक्तं तु गृह्णीयात्पुनः पात्रे निधापयेत् ।
यदा रक्तं न दृश्येत तदा वह्निं निवारयेत् ॥ ११७ ॥

रक्तं वस्त्रेण संगाल्य मलशेषं विवर्जयेत् ।
श्वेतफेनेन संयुक्तं तस्यैव जलशोषणम् ॥ ११८ ॥

काचसारितघट्यां च तद्धार्यं तदनन्तरम् ।
बृहद्भाण्डं समादाय कुक्षौ च छिद्रसंयुतम् ॥ ११९ ॥

भाण्डमध्ये घटीं क्षिप्त्वा मुखं छिद्रेण योजयेत् ।
[1]घटी चैका च न्युब्जा स्यात्तस्या नालमधोमुखम् ॥ १२० ॥

रुध्वा तदा तयोस्सन्धिं मध्ये चिल्लाणकं भवेत् ।
भाण्डं वालुकयाऽऽपूर्य तस्य द्वारं निरुन्धयेत् ॥ १२१ ॥

वह्निप्रज्वालनं तावद्यावच्चिल्लाणको द्रवेत् ।
शीतं यन्त्रं समुत्तार्य घटीं प्रक्षालयेत्ततः ॥ १२२ ॥

द्रावं क्षिप्त्वा पुनर्दद्यात्पुनः पाको विधीयते ।
एवं रङ्गद्रुतिः प्रोक्ता द्रेगयन्त्रेऽतिशोभना ॥ १२३ ॥

तालो नागः शिला चौरश्शुल्वं हंसश्च गन्धकः ।
एते रङ्गं विमुञ्चन्ति विद्रुमं गैरिकं तथा ॥ १२४ ॥

वालुकाद्रेगयन्त्रेण पिच्छाः केशा द्रवन्ति च ।
अम्लादिद्रावणं कार्यं यन्त्रेणानेन यत्नतः ॥ १२५ ॥

## तारारिष्टम् ।

तारारिष्टं रञ्जितं तु कपाल्यादिकरञ्जकैः ।
नाशयेत्तारकं क्षिप्रं सर्वलोहस्य कालिकाम् ॥ १२६ ॥

---

1. तदास्ये काचनालं च तच्च नालमधोमुखम् । इति पाठभेदः ।

**कपालीयोगाः**[1] ।

शुल्बपत्रपलैकं तु पलार्धं गन्धकस्य च ।
टङ्कणं कर्षमेकं तु कर्षैका रसकज्जली ॥ १२७ ॥

माक्षिकं कर्षमेकं तु सर्वमेकत्र कारयेत् ।
अन्धमूषागतं ध्मातं खोटो भवति तत्क्षणात् ॥ १२८ ॥

तं खोटं सूक्ष्मचूर्णं तु [2]दनुजाम्लेन मर्दयेत् ।
आरण्यगोमयेनैव पुटान्दद्याच्चतुर्दश ॥ १२९ ॥

इन्द्रगोपकसङ्काशं जायते नात्र संशयः ।
तच्चूर्णं मधुना युक्तं शुद्धतारं तु रञ्जयेत् ॥ १३० ॥

रञ्जयेत्त्रीणि वाराणि शोभनं हेम जायते ।
एष कापालिकायोगस्सर्वलोहानि रञ्जयेत् ॥ १३१ ॥

रञ्जयेद्बद्धसूतं च वज्रबद्धं च रञ्जयेत् ।
आरचूर्णपलैकं च मृतनागं पलं तथा ॥ १३२ ॥

वङ्गाभ्रकं पलैकं च तीक्ष्णचूर्णं पलं तथा ।
त्रिशुल्बं नागवङ्गौ च शतैकांशे समन्वितम् ॥ १३३ ॥

त्रिशुल्बं गैरिकैकैकमथवा तीक्ष्णमाक्षिकम् ।
अथवा तीक्ष्णभागौ द्वौ तयो घोषान्नवोरगात् ॥ १३४ ॥

ताम्रस्य नव भागास्स्युस्तारभागचतुष्टयम् ।
अथवा देवदेवेशि! माक्षिकस्य पलद्वयम् ॥ १३५ ॥

मयूरग्रीवतुत्थैकं मृतनागपलं तथा ।
अथवा वङ्गनागाभ्रमेकैकं सुरवन्दिते! ॥ १३६ ॥

तीक्ष्णद्वयं त्रिशुल्बं च हेमताप्यचतुष्टयम् ।
यद्वा विमलवैक्रान्तं वङ्गं नागस्तृतीयकम् ॥ १३७ ॥

---

1. रसार्णवतः । 2. चणकाम्लेन इति पाठः ।

